आनन्दाश्रमसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः ३५।

# संगीतरत्नाकरः ।

तस्यायमाद्याध्यायमारभ्य पञ्चमान्तः प्रथमो भागः ( भा. १ )

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ३५

श्रीनिःशङ्कशार्ङ्गदेवप्रणीतः

# संगीतरत्नाकरः ।

चतुरकल्लिनाथविरचितकलानिध्याख्यटीकासंवलितः ।
( स्वरप्रस्तारादिपरिशिष्टसनाथीकृतश्च ) ।

तस्यायमाद्याध्यायमारभ्य पञ्चमाध्यायान्तः प्रथमो भागः ।

एतत्पुस्तकं
"मङ्गेश रामकृष्ण तेलङ्ग" इत्येतैः संशोधितम् ।
तच्च
बी. ए. इत्युपपदधारिभिः
विनायक गणेश आपटे
इत्येतैः
पुण्याख्यपत्तने
श्रीमन् ' महादेव चिमणाजी आपटे ' इत्यभिधेय-
महाभागप्रतिष्ठापिते
आनन्दाश्रममुद्रणालये
आयसाक्षरैर्मुद्रयित्वा
प्रकाशितम् ।
शालिवाहनशकाब्दाः १८६४ ।
खिस्ताब्दाः १९४२ ।
द्वितीयेयमङ्कनावृत्तिः ।

---

ॐ तत्सद्ब्रह्मणे नमः ।

श्रीनिःशङ्कशार्ङ्गदेवप्रणीतः

# संगीतरत्नाकरः ।

चतुरकल्लिनाथविरचितकलानिध्याख्यटीकासमेतः ।

## प्रथमः स्वराध्यायः ।

तत्राऽऽदिमं पदार्थसंग्रहाख्यं प्रकरणम् ।

कर्णालम्बितकम्बलाश्वतरयोर्गीतामृतास्वादना-
दान्दोलीकृतमौलिनिर्झरनदीतारङ्गपाटश्रियः ।
नृत्यच्चन्द्रकलाकलापरिलसद्ब्रह्माण्डखण्डान्तरं
तं तूर्यत्रयपोषरूपवपुषं वन्दे भवानीपतिम् ॥ १ ॥

विघ्नौघहारिणं सर्वभक्ताभिमतकारिणम् ।
वारणास्यमहं वन्दे मौलावर्धेन्दुधारिणम् ॥ २ ॥

वाणि वीणालसद्वाणि पञ्चाशद्वर्णरूपिणि ।
पादानतसुरश्रेणि निवासं कुरु मन्मुखे ॥ ३ ॥

वन्दे वेदार्थतत्त्वज्ञं भुक्तिमुक्तिप्रदर्शकम् ।
सर्वागमविदं नित्यं चन्द्रभूषणदेशिकम् ॥ ४ ॥

आस्ते कर्णाटदेशः सुविमलयशसा पूरिताशः पृथिव्यां
कावेरीकृष्णवेणीतरलतरतरङ्गार्द्रदक्षोत्तरांसः ।
हृष्टः संश्लिष्टपूर्वापरनिजवपुषा प्राच्यपाश्चात्यवेले
पाथोनाथप्रसत्तिप्रवलितनिखिलस्वाङ्गसौभाग्यलक्ष्मीः ॥ ५ ॥

भोगिस्थिता भोगवती च नित्यं सुपर्वरम्या दिविजस्थलीव ।
पुरीह विद्यानगरी चकास्ति तुङ्गातरङ्गैरभितः पवित्रा ॥ ६ ॥

एतां शास्ति प्रशस्तप्रतिभटमुकुटप्रोतनिर्यत्नानिर्य-
द्रत्नज्योतिःप्रवालावनमनचटुलाटोपतापप्रतापः ।
कर्णाटाघाटलक्ष्मीचरणपरिलसत्पौरुषोत्कर्षशाली
प्रौढः श्रीदेवराजो विजयनृपसुतो यादवानां वरेण्यः ॥ ७ ॥

---

१ ग. °निर्भर° । २ ग. °ज्ञं मुक्तिमार्गप्र° । ३ क. कर्नाट° । ४ संश्लिष्य (?) ।

विश्वंभराभाग्यकृतावतारस्तस्यास्ति पुत्रो यशसा पवित्रः।
संगीतसाहित्यकलास्वभिज्ञः प्रतापवानिम्मडिदेव एषः ॥ ८ ॥
सुधर्मेव सभा यस्य समुल्लासिकलाधरा।
गान्धर्वगुणगम्भीरा विद्याधरविनोदिनी ॥ ९ ॥
वाचा गेयेन नित्यं समुचितकुसुमैस्तोषितार्धाङ्गयोषः
कीर्त्या व्याप्तत्रिलोकीमभिनवभरताचार्यलक्ष्मप्रपूर्ण्या।
पादाग्रे वीरभूषामणिगणविलसत्सर्ववाग्गेयकार-
स्तस्यामस्ति प्रशस्तश्रुतिगणचतुरः कल्लिनाथार्यवर्यः ॥ १० ॥
तुंत्तालेश्वरदेवो हि यस्य साक्षात्पितामहः।
असौ किं वर्ण्यते ज्ञानवैराग्यैश्वर्यसंपदा ॥ ११ ॥
माता नारायणी यस्य पिता लक्ष्मीधरः स्वयम्।
शाण्डिल्यगोत्रजः सोऽयं साक्षात्संगीतदेवता ॥ १२ ॥
तमाह कल्लिनाथार्यं स राजा बहुमानतः।
रत्नाकरं व्याकुरुष्व लक्ष्यलक्षणकोविदः ॥ १३ ॥
अतः स कल्लिनाथार्यो रत्नाकरनिबन्धनम्।
कलानिधिं निबध्नाति लक्ष्मलक्ष्य(क्ष्या)विरोधतः ॥ १४ ॥

इह चिकीर्षितविषयनिबन्धनप्रतिपाद्यप्रधानांशं समासोक्त्या सूचयञ्शिष्टाचार-परिप्राप्तं दृष्टादृष्टफलं विशिष्टेष्टदेवतानमस्कारमादौ करोति—

**ब्रह्मग्रन्थिजमारुतानुगतिना चित्तेन हृत्पङ्कजे**
**सूरीणामनु रञ्जकः श्रुतिपदं योऽयं स्वयं राजते।**
**यस्माद्ग्रामविभागवर्णरचनालंकारजातिक्रमो**
**वन्दे नादतनुं तमुद्धुरजगद्गीतं मुदे शंकरम् ॥ १ ॥**

**ब्रह्मग्रन्थीत्यादिना**। तत्र प्रस्तुतवाच्यं(च्य)शंकरपक्षे सूरीणां हृत्पङ्कजे हृदयस्थानस्थितानाहताश्रये द्वादशदलचक्रे ब्रह्मग्रन्थिजमारुतानुगतिना ब्रह्मग्रन्थिर्नाम देहस्य गुदलिङ्गयोर्मध्ये स्थिता(तं) चतुर्दलादाधाराख्यचक्राद्द्व्यङ्गुलान्तरादथ एकान्तरं तप्तकाञ्चनप्रभं सूक्ष्माग्निशिखाश्रयो देहमूर्ध्वनामचक्रमस्ति तस्मान्नवाङ्गुलादुपरि चतुरङ्गुलोत्सेधायामे नाभिकन्दः, तत्र जातो मारुतो नाभिहृदयनासास्यस्थानेषु चरञ्शब्दोच्चारणादिकारणं प्राणो वायुः। तस्यानुगतिर्यस्य तेन। श्रुतिपदं श्रुतीनां वेदानां पदमुत्पत्तिस्थानं प्रणव इत्यर्थः। तत्रानु,

१ ग. °वराय: ॥ ८ ॥ २ क. °द्याधार°। ३ क. °वपर°। ४ क. सकलेश्वरदेवो। ५ ग. °प्रासद्ग°। ६ घ. ङ. श्रुतिपथं। ७ ख. °गबद्धर°। ८ ग. °रादूर्ध्वमिहनाद्व्यङ्गुलान्तराद्°।

अनन्तरम् । अत्र 'अनुर्लक्षणे' इत्यनोः कर्मप्रवचनीयत्वे 'कर्मप्रवचनीययुक्ते द्वितीया' इति श्रुतिपदमिति द्वितीया । रञ्जकः स्वव्यतिरिक्तं स्वात्मन्यन्तर्भावयन्महारजतादिवत्तथोक्तः । अथवा श्रुतिपदं श्रुतयोऽवान्तरवाक्यानि तासां पदं स्थानम् । उपक्रमादिना लिङ्गेन 'सदेव सोम्येदमग्र आसीत्' इत्यादितत्त्वमसीत्यन्तः संदर्भो महावाक्यम् । अन्विति यस्य श्रवणानन्तरं शाब्द्यादिप्रतिपत्तिक्रमेण भेदनिरासात्तत्त्वंपदार्थयोरैक्याभ्यासे सति । योऽयमित्यत्र यच्छब्देनाऽऽगमवेद्यत्वमुक्तम् । अयमितीदमा निर्देशेन तु श्रवणानन्तरं मनने कृते मानसप्रत्यक्षः स्वयं राजते स्वेनैव प्रकाशते । साक्षात्कारे सति वृत्त्युपाध्युच्छेदे स्वस्वरूपेण नित्यं प्रकाशत इत्यर्थः । यथोक्तं **योगयाज्ञवल्क्ये**—

> "धारयन्मनसा वायुं व्याहरन्प्रणवाक्षरम् ।
> आसनेऽनन्यधीरास्ते रहस्ये विजितेन्द्रियः ॥
> संप्राप्ते मारुते तस्मिन्सुषुम्नायां वरानने ।
> मन्त्रमुच्चार्य मनसा हृन्मध्ये धारयेत्सुधीः ॥
> वायुना पूरिते व्योम्नि साङ्गोपाङ्गकलेवरे ।
> तदात्मा राजते तत्र यथा व्योम्नि विकर्तनः ॥
> यद्यत्पश्यति तत्सर्वं पश्येदात्मानमात्मनि" इति ।

ग्रामविभागवर्णरचनालंकारजातिक्रमः । ग्रामशब्देन लोका लक्ष्यन्ते । तेषां विभागवर्णा ब्राह्मणादयः । तेषां रचना वर्णानामानुलोम्येन प्रातिलोम्येन चोत्पन्ना या जातयस्ता वर्णोपस्कारकत्वेनालंकारजातय उच्यन्ते । तेषां ग्रामविभागादीनां क्रमो यस्माद्भवतीत्यध्याहारः । 'यत्र क्रियापदान्तराभावस्तत्रास्तिर्भवन्तीपरः' इति न्यायात् । एतेनेश्वरं प्रति नमतस्तटस्थलक्षणत्वं दर्शितम् । यथा 'जन्मादि' इत्यादिसूत्रे 'यतो वा' इति वाक्यं विषयीकृत्य प्रतिपादितं 'ब्राह्मणोऽस्य मुखमासीत्' इत्यादिश्रुतौ च । नादतनुं नादविग्रहम् । 'तत्सृष्ट्वा तदेवानु प्राविशत्' इति श्रुतेः । उद्धुरजगद्गीतम् । उद्धुरमुद्भटं यथा भवति तथा जगता गीतं स्तुतं शंकरं मुदे निरतिशयसुखावाप्त्यै वन्दे प्रणमामि । अप्रस्तुतप्रतीयमानस्वरपक्षे तु सूरीणां तद्विदां हृत्पङ्कजे मन्द्रस्थाने । ब्रह्मग्रन्थीतिपदस्य स एवार्थः । चित्तेन विवक्ष्यमाणात्मप्रेरितेन मनसा । श्रुतिपदं श्रुतयः षड्जादिस्वराणामभिव्यञ्जकाश्छन्दोवत्यादयस्तासां पदम् । पदमिति जातावेकवचनम् । पदं स्थानानीति । ऊर्ध्वनाडीसंज्ञास्तिरश्च्यो नाड्यः । तासु चित्ताकृष्टमारुताहतेरुत्पन्नो नादः पदशब्देन लक्ष्यते । तत्स्थे तदुपचारात् । तदनु तदविच्छेदेन रञ्जकः ।

१ क. °त्यक्षत्वं स्व° ।

स्वकारणभूतेः स्वस्वरूपापादकत्वाच्छ्रोतृप्रीतिजनकत्वाच्च । योऽयमिति शास्त्रप्रसिद्धत्वेनानुभूयमानः । स्वयं राजत इति प्रयोगे सहकारणानपेक्षः प्रकाशत इत्यर्थः । एतेनाक्षरसाम्यात्स्वरशब्दनिरुक्तिर्दर्शिता । ग्रामेत्यादि । ग्रामाः षड्जग्रामादयस्तेषां विभागः । वर्णाः स्थाय्यादयस्तेषां रचना । अलंकाराः प्रसन्नाद्यादयः । जातयः षड्जादयः । एतेषां वक्ष्यमाणलक्षणानां ग्रामविभागादीनां क्रमो यस्मात्कारणभूतात्स्वराद्भवति । नादतनुं नादात्मकम् । उद्धुरजगद्गीतम् । विशिष्टस्वरसंदर्भो गीतम् । जगति गीतं जगद्गीतम् । उद्धुरं जगद्गीतं यस्मादिति तथोक्तः । तं शंकरं सुखकरं मुद आनन्दाविर्भावाय वन्दे स्तौमि ॥ १ ॥

अस्ति स्वस्तिगृहं वंशः श्रीमान्काश्मीरसंभवः[1] ।
ऋषेर्वर्षगणाज्जातः[2] कीर्तिक्षालितदिङ्मुखः ॥ २ ॥

अथ ग्रन्थकारः शार्ङ्गदेवः स्वदेशवृत्तप्रशंसापूर्वकं ग्रन्थस्य प्रयोजनविषयौ निर्दिशति—अस्ति स्वस्तिगृहमित्यारभ्य संगीतरत्नाकरमुदारधीरित्यन्तेन ग्रन्थसंदर्भेण ॥ २ ॥

यज्वभिर्धर्मधीधुर्यैर्वेदसागरपारगैः ॥
यो द्विजेन्द्रैरलंचक्रे ब्रह्मभिर्भूगतैरिव ॥ ३ ॥
तत्राभूद्भास्करप्रख्यो भास्करस्तेजसां निधिः ।
अलंकर्तुं दक्षिणाशां यश्चक्रे दक्षिणायनम् ॥ ४ ॥

तस्याभूत्तनयः प्रभूतविनयः श्रीसोढलः प्रौढधी-
र्येन श्रीकरणप्रबुद्धविभवं भूवल्लभं भिल्लमम् ।
आराध्याखिललोकशोकशमनी कीर्तिः समासादिता
जैत्रे जैत्रपदं न्यधायि महती श्रीसिङ्घणे श्रीरपि ॥५॥
एकः क्ष्मावलये क्षितीश्वरमिलन्मौलीन्द्रनीलावलि-
प्रादश्चद्द्युतिचित्रिताङ्घ्रिनखरश्रेणिर्नृपालाग्रणीः ।
श्रीमत्सिङ्घणदेव एव विजयी यस्य प्रतापानलो
विश्वव्याप्यपि दंदहीति हृदयान्येव द्विषामुद्धुरः ॥ ६ ॥
तं प्रसाद्य सुधीधुर्यो गुणिनं गुणरागिणम् ॥
गुणग्रामेण यो विप्रानुपकारैरतीतृपत् ॥ ७ ॥

१ क. °सिद्धेनानुस्तूय° । २ क. °षड्जातयः । ३ घ. ङ. श्रीमत्काश्मी° । ४ घ. ङ. °र्षेर्वृषग° । ५ क. ख. ग. °दिक्तटः ॥ २ ॥ ६ क. °ह्मभिः स्वर्गतै° । ७ ङ. °लंकुर्वन्दक्षि° । ८ घ. भिल्लिमम् । ९ क. ख. ग. व्यधायि । १० घ. ङ. °रज्योतिर्नृ° । ११ क. ङ. °मुद्धरः । १२ घ. ङ. यो विश्वमुप° ।

दद‍ौ न किं न किं जज्ञौ न दधौ कां च संपदम् ।
कं धर्मं विदधौ नैष न बभौ कैर्गुणैरयम् ॥ ८ ॥

तस्माद्दुग्धाम्बुधेर्जातः साक्षादेव सुधाकरः ।
उपर्युपरि[2] सर्वान्यः सदोदारः स्फुरत्करः ॥ ९ ॥

कृतगुरुपदसेवः प्रीणिताशेषदेवः
कलितसकलशास्त्रः पूजिताशेषपात्रः ।
जगति विततकीर्तिर्मन्मथोदारमूर्तिः
प्रचुरतरविवेकः शार्ङ्गदेवोऽयमेकः ॥ १० ॥

नानास्थानेषु संभ्रान्ता परिश्रान्ता सरस्वती ।
सहवासप्रिया शश्वद्विश्राम्यति तदालये ॥ ११ ॥

स विनोदैकरसिको भाग्यवैदग्ध्यभाजनम् ।
धनदानेन विप्राणामार्तिं संहृत्य शाश्वतीम् ॥ १२ ॥

जिज्ञासूनां च विद्याभिर्गदिनां च रसायनैः ।
अधुनाऽखिललोकानां तापत्रयजिहीर्षया ॥ १३ ॥

शाश्वताय च धर्माय कीर्त्यै निःश्रेयसाय च ।
आविष्करोति संगीतरत्नाकरमुदारधीः ॥ १४ ॥

॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३॥ १४ ॥

इह शास्त्रे प्रेक्षावत्प्रवृत्तये सदाशिवाद्यनेकप्रामाणिकपरिग्रहं दर्शयित्वा तन्मतसारसंग्रहत्वेन स्वकीयस्य ग्रन्थस्यातिशयितत्वं द्योतयति—

सदाशिवः शिवा ब्रह्मा भरतः कश्यपो मुनिः ।
मतङ्गो याष्टिको दुर्गा शक्तिः शार्दूलकोहलौ ॥ १५ ॥

सदाशिवः शिवेत्यादिना सारोद्धारमिमं व्यधादित्यन्तेन ॥ १५ ॥

विशाखिलो दन्तिलश्च कम्बलोऽश्वतरस्तथा ॥
वायुर्विश्वावसू रम्भार्जुननारदतुम्बराः ॥ १६ ॥

---

१ ग. घ. ङ. शार्ङ्गदेवः । २ घ. °रि लोकान्यः । ३ क. ख. ग. °रमतिवि° । ४ क ख. शास्त्रदेशेऽय° । ५ ङ. °सधिया । ६ घ. ङ. °भिर्गदार्तानां र° । ७ क. ख. च तस्मात्करो° । ८ ङ. °म्बलाश्वतरौ तथा । ९ ग. °र्जुनो नारदतुम्बरौ ॥ १६ ॥ ङ. °र्जुनो नारद तुम्बरू ॥ १६ ॥

आञ्जनेयो मातृगुप्तो रावणो नन्दिकेश्वरः ।
स्वातिर्गुणो बिन्दुराजः क्षेत्रराजश्च राहलः ॥ १७ ॥
रुद्रटो नान्यभूपालो भोजभूवल्लभस्तथा ।
परमर्दी च सोमेशो जगदेकमहिपतिः ॥ १८ ॥
व्याख्यातारो भारतीये लोल्लटोद्भटशङ्कुकाः ॥
भट्टाभिनवगुप्तश्च श्रीमत्कीर्तिधरोऽपरः ॥ १९ ॥
॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥

अन्ये च बहवः पूर्वे ये संगीतविशारदाः ।
अगाधबोधमन्थेन तेषां मतपयोनिधिम् ॥
निर्मथ्य श्रीशार्ङ्गदेवः सारोद्धारमिमं व्यधात् ॥ २० ॥

सारोद्धारो नवनीतमिति व्यक्तरूपणम् । सारो(रस्यो)द्धारो यस्मिन्कर्मणीति क्रियाविशेषणं वा ॥ २० ॥

ननु 'आविष्करोति संगीतरत्नाकरमुदारधीः' इति प्रतिज्ञायां संगीतशब्देन लोकप्रसिद्ध्या गीतस्यैव ग्रन्थप्रतिपाद्यत्वं प्रतीयते न तु वाद्यनृत्ययोरित्याशङ्कां परिजिहीर्षुः संगीतशब्दार्थमाह—

गीतं वाद्यं तथा नृत्यं त्रयं संगीतमुच्यते ॥ २१ ॥

गीतं वाद्यमिति । यदि गीतमेव प्रतिपाद्यते तदा केवलं गीतशब्दं प्रयुञ्जीत न तु समुपसर्गयुक्तम् । गीतस्यैव सम्यक्त्वद्योतनार्थं समुपसर्ग इति चेन्न । 'रञ्जकः स्वरसंदर्भो गीतमित्यभिधीयते' इति विशिष्टवचनादनुपसर्गेष्टत्वादेव तस्य गीतस्य सम्यक्त्वसिद्धेः । समित्युपसर्गस्तु गीतशब्देन सह प्रयुज्यमानो गीते स्वेनाऽऽधेयातिशयाभावाद्गीतस्यान्ययोगं द्योतयञ्शब्दत्वसामान्येन वाच्यस्य तदुभयाभिव्यञ्जकत्वेन नृत्तस्य च गीतेन संबन्धं विशिनष्टि । तस्माद्यत्र संगीतशब्दस्य प्रयोगस्तत्र तौर्यत्रिकं विवक्षितमिति मन्तव्यम् । क्वचिद्गीतमात्रे संगीतशब्दप्रयोगस्त्ववयवेऽवयव्युपचारात् । खण्डपटे पटव्यवहारवत् ॥ २१ ॥

तस्य संगीतस्य मार्गदेशीभेदेन द्वैविध्यं प्रतिज्ञाय तयोर्निरुक्तिपूर्वकं लक्षणमाह—

मार्गो देशीति तद्द्वेधा तत्र मार्गः स उच्यते ।
यो मार्गितो विरिञ्च्याद्यैः प्रयुक्तो भरतादिभिः ॥ २२ ॥
देवस्य पुरतः शंभोर्नियताभ्युदयप्रदः ।
देशे देशे जनानां यद्रुच्या हृदयरञ्जकम् ।
गानं च वादनं नृत्यं तद्देशीत्यभिधीयते ॥ २३ ॥

---

१ घ. स्वादिर्गु° । २ क. ङ. °णो देवरा° । ३ क. °जस्तथैव च ॥ १७ ॥ ४ ङ. रुद्रसेनश्च भू° । ५ ङ. °लो भाजो भू° । ६ घ. लोलटो° । ७ ङ. पूर्वे । ८ क. ग. °नानुपसर्गेष्टदेवताऽस्य गी° । ९ घ. °र्नियतोऽभ्यु° । ङ. °र्निमित्ताभ्यु° ।

नृत्यं वाद्यानुगं प्रोक्तं वाद्यं गीतानुवृत्ति च ।
अतो गीतं प्रधानत्वादत्राऽऽदावभिधीयते ॥ २४ ॥

**मार्गो देशीत्यादिना** । मार्गितत्वान्मार्गः । मार्गितत्वं च विरिञ्च्याद्यै-र्ब्रह्मादिभिः 'नाटचसंज्ञामिमं वन्दे सेतिहासं करोम्यहम्' इति प्रतिज्ञाय चतुर्षु वेदेष्वन्विष्य कृतत्वात् । **मार्गित इति** । 'मार्ग अन्वेषणे' इत्यस्माद्धातोः कर्मणि निष्ठायां रूपम् । मार्ग इति तु तस्मादेव धातोः कर्मणि घञन्तः । **देशीति** । देशशब्देन तत्रत्या जना लक्ष्यन्ते । तैर्यथेच्छक्रियमाणायां गीतादि-क्रियायामाचार्यकृता संज्ञा संगीतपदाभिधेयत्वेन वाद्यप्रत्यङ्गभावना च त्रयाणाम-प्यविशेषेण प्रतिपादने प्राथम्यप्रसक्तौ तत्र 'गीतवाद्यप्रमाणेन कुर्याच्चाङ्गविचेष्टि-तम्' इति गीतचतुर्विधाद्वाद्याज्जायते चोपरज्यते नीयते चेति गीतस्य स्वेतर-द्वयापेक्षितत्वेन प्राधान्यं प्रसाध्य प्राथम्यं प्रतिजानीते—**नृत्यं वाद्यानुगमिति** ॥ २२ ॥ २३ ॥ २४ ॥

गीतस्य सामवेदसंग्रहरूपत्वेन वैदिकत्वादुपादेयत्वं दर्शयति—

सामवेदादिदं गीतं संजग्राह पितामहः ॥ २५ ॥

**सामवेदादिदमिति** । तत्संग्रहरूपत्वं च गीतस्यापि सप्तस्वरात्मकत्वात् । सामनि क्रुष्टप्रथमद्वितीयतृतीयचतुर्थमण्डादिस्वार्थाख्याः सप्त स्वराः । इह तु त एव यथायोगं षड्जादिव्यपदेशभाज इति ब्रह्मणाऽपि वेदादुद्धृत्य संग्रहे सावर्णिकत्वं प्रयोजनमिति भावः (?) ॥ २५ ॥

गीतेन प्रीयते देवः सर्वज्ञः पार्वतीपतिः ।
गोपीपतिरनन्तोऽपि वंशध्वनिवशंगतः ॥ २६ ॥
सामगीतिरतो ब्रह्मा वीणासक्ता सरस्वती ।
किमन्ये यक्षगन्धर्वदेवदानवमानवाः ॥ २७ ॥
अज्ञातविषयास्वादो बालः पर्यङ्किकागतः ।
रुदन्गीतामृतं पीत्वा हर्षोत्कर्षं प्रपद्यते ॥ २८ ॥
वनेचरस्तृणाहारश्चित्रं मृगशिशुः पशुः ।
लुब्धो लुब्धकसंगीते गीते त्यजति जीवितम् ॥ २९ ॥

एतच्च न केवलं वैदिकमित्युपादेयं किंत्वासर्वज्ञपार्वतीपत्यामूढपशुविगलितवे-द्यान्तरतयाऽऽनन्दाविर्भावकत्वेन हृद्यत्वाच्चेत्याह—**गीतेनेत्यादिना** ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥

---

१ क. ख. ग. °नुवृत्तितः । अ° । ङ. °नुवर्ति च । अ° । २ क. ख. गीतप्र° । ३ क. ग. °त्वाद्गीत एवाभि° । ४ क. ग. °दितद्गीतं । ५ घ. °तं स ज° । ६ ग. °गीतर° । ७ क. ख. ग. °न्धर्वा दे° । ८ ख. ङ. °कातले । रु° । ९ घ. °गीतगी° ।

प्रतिनियतसाधनानामपि धर्मार्थकाममोक्षाणामिदमेकमेव च रमणीयं साधनं यतस्तस्मादस्य माहात्म्यं वर्णयितुं न केचन शक्ता इत्याह—

**तस्य गीतस्य माहात्म्यं के प्रशंसितुमीशते ।**
**धर्मार्थकाममोक्षाणामिदमेवैकसाधनम् ॥ ३० ॥**

**तस्येति** । गीतस्य धर्मसाधनत्वं तावदश्वमेधप्रकरणे 'ब्राह्मणौ वीणागायिनौ गायतो ब्राह्मणोऽन्यो गायेत्' इति श्रुतेः । देवार्चनादिषु गीतादेस्तदङ्गत्वेन परिग्रहाच्चार्थसाधनत्वं लोकतो दृष्टम् । कामसाधनत्वं तु 'तस्माद्गायन्तं स्त्रियः कामयन्ते' इति वेदतो लोकतश्च सिद्धम् । मोक्षसाधनत्वं च—

"वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः ।
तालज्ञश्चाप्रयासेन मोक्षमार्गं च गच्छति" ॥

इति याज्ञवल्क्यस्मृतेः । प्रकरणाच्च मन्द्रकादिगीतेषु 'शिवस्तुतौ प्रयोज्यानि मोक्षाय विदधे विधिः' इत्युक्तत्वाच्च ॥ ३० ॥

सप्ताध्याये रत्नाकरे प्रत्यध्यायं वस्तूनि संजिघ्र( घृक्ष )न्नादौ स्वरगताध्याये शरीरादीन्पदार्थान्संगृह्य प्रतिपादयितुं प्रतिजानीते—

**तत्र स्वरगताध्याये प्रथमे प्रतिपाद्यते ।**
**शरीरं नादसंभूतिः स्थानानि श्रुतयस्तथा ॥ ३१ ॥**
**ततः शुद्धाः स्वराः सप्त विकृता द्वादशाप्यमी + ।**
**कुलानि जातयो वर्णा द्वीपान्यार्षं च दैवतम् ॥ ३२ ॥**
**छन्दांसि विनियोगाश्च स्वराणां श्रुतिजातयः ।**
**ग्रामाश्च मूर्छनास्तानाः शुद्धाः कूटाश्च संख्यया ॥ ३३ ॥**
**प्रस्ताराः खण्डमेरुश्च नष्टोद्दिष्टप्रबोधकः ।**
**स्वरसाधारणं जातिसाधारणमतः परम् ॥ ३४ ॥**
**काकल्यन्तरयोः सम्यक्प्रयोगो वर्णलक्षणम् ।**
**त्रिषष्टिरप्यलंकारास्त्रयोदशविधं ततः ॥ ३५ ॥**
**जातिलक्ष्म ग्रहांशादि कपालानि च कम्बलम् ।**
**नानाविधा गीतयश्चेत्येतावान्वस्तुसंग्रहः ॥ ३६ ॥**

---

+ 'वाद्यादिभेदाश्चत्वारो रागोत्पादनहेतवः' इत्येतच्छ्लोकार्धं ङ. पुस्तकेऽत्राधिकं विद्यते ।

---

१ ग. तस्य । २ ङ. शारीरं । ३ °टास्त सं° । ४ ग. घ. ङ. °स्ताराः ख° ।

**तत्र स्वरगताध्याय इत्यादिना** । एतावान्वस्तुसंग्रहः प्रतिपाद्यत इति योजना । **स्वरगताध्याय इति** । स्वराननुगताः स्वरगताः श्रुतिग्राममूर्च्छनातानवर्णालंकारजातिगीत्यादयो विषयस्तेषामध्याय इति भावे घञन्तः । अधीयतेऽनेनाभिप्रेतोऽर्थो यस्मिन्वेत्यध्याय इति 'अकर्तरि च' इति करणाधिकरणयोर्वा । यद्वा । अधीत्यधिकारे । अयनमायः । आयोऽर्थावगतिः । अर्थावगतिमधिकृत्य प्रवृत्तो ग्रन्थोऽध्यायः । अथवा, ईयते गम्यत इत्यायोऽर्थः । तमधिकृत्य प्रवृत्तो ग्रन्थोऽध्यायः । ननु पूर्वत्र गीतस्य प्रतिपादने प्राथम्यं प्रतिज्ञातमिदानीं प्रथमे स्वरगताध्याय इत्यधिकृत्य शरीरादिप्रतिपादनस्य प्राथम्यमुच्यते । अतः प्रतिज्ञाप्रतिपादनयोर्भिन्नविषयत्वाद्वैयधिकरण्यमिति चेन्नैष दोषः । स्वरगते शरीरादेः परम्परया गीतं प्रत्युपकारकत्वात्स्वरगतप्रतिपादनं प्रकारान्तरेण गीतप्रतिपादनमेवेत्यविरोधात् । तत्र शरीरादित्रिंशत्पदार्थानां मध्ये केषांचित्कार्यकारणाभावादिसंगतिवशादुद्देशक्रमो विवक्षितः । केषांचित्तदभावेनाविवक्षितः । उत्तरत्रायमर्थः प्रकाश्यते ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥

ततो द्वितीयेऽध्याये ग्रामरागादयो दशविधरागाः प्रतिपाद्यन्त इत्याह—

> **अथ रागविवेकाख्येऽध्याये वक्ष्यामहे क्रमात् ।**
> **ग्रामरागांश्चोपरागान्रागान्भाषाविभाषिकाः ॥ ३७ ॥**
> **ततोऽप्यन्तरभाषाख्या रागाङ्गान्यखिलान्यपि ।**
> **भाषाङ्गान्यप्युपाङ्गानि क्रियाङ्गाणि च तत्त्वतः ॥३८॥**

**अथेति** । **रागविवेकाख्य इति** । रागाणां शुद्धकैशिकमध्यमादीनां विवेको विवेचनमसंकीर्णतया स्वरूपनिरूपणमस्मिन्निति तथोक्तः ॥ ३७ ॥ ३८ ॥

तृतीये वाग्गेयकारादयो द्वादश पदार्था लक्ष्यन्त इत्याह—

> **ततः प्रकीर्णकाध्याये तृतीये कथयिष्यते ।**
> **वाग्गेयकारो गान्धर्वः स्वरादिर्गायनस्तथा ॥ ३९ ॥**
> **गायनीगुणदोषाश्च तयोः शब्दभिदस्तथा ।**
> **गुणदोषाश्च शब्दस्य शारीरं तद्गुणास्तथा ।**
> **तद्दोषा गमकाश्छाया आलप्तिर्वृन्दलक्षणम् ॥ ४० ॥**

**ततः प्रकीर्णेति** । प्रकीर्णाः शास्त्रेषु तत्र तत्र विक्षिप्ताः पदार्था अत्रैकत्र समुच्चीयन्तेऽधिक्रियन्त इति प्रकीर्णकः ॥ ३९ ॥ ४० ॥

चतुर्थे धातुप्रभृतीनि द्वादश वस्तूनि विस्तार्यन्त इत्याह—

> **ततः प्रबन्धाध्याये तु धातवोऽङ्गानि जातयः ॥ ४१ ॥**

---

१ ङ. °विकान् ॥ ३७ ॥ २ ङ. °यने गु° । ३ घ. ङ. °भिदास्त° । ४ ख. °स्य शरी° ।

प्रबन्धानां द्विधा सूडः शुद्धच्छा(श्छा)यालगस्तथा ।
आलिक्रमः प्रबन्धाश्च सूडस्था आलिसंश्रयाः ॥ ४२ ॥
विप्रकीर्णास्ततश्छायालगसूडसमाश्रिताः ।
गीतिस्था गुणदोषाश्च वक्ष्यन्ते शार्ङ्गसूरिणा ॥ ४३ ॥

ततः प्रबन्धाय इति । प्रबन्धानां मेलादीनामध्यायः ॥ ४१ ॥ ४२ ॥ ४३ ॥

तालाध्याये पञ्चमे तु मार्गतालाः क्रमास्तथा ।
पाता मार्गाश्च चत्वारस्तथा मार्गकलाष्टकम् ॥ ४४ ॥

पञ्चमे मार्गतालादय एकविंशतिरर्थाः प्रपञ्च्यन्त इत्याह—तालाध्याय इति ॥ ४४ ॥

गुरुलघ्वादिमानं चैककलत्वादयो भिदाः ।
पादभागास्तथा मात्रास्तालपातकलाविधिः ॥ ४५ ॥
अङ्गुलीनां च नियमो भेदा युग्मादयस्तथा ।
परिवर्ता लयास्तेषां यतयो गीतकानि च ॥ ४६ ॥
+गीताङ्गानि च वक्ष्यन्ते देशीतालाश्च तत्त्वतः ।
निःशङ्कशार्ङ्गदेवेन तालानां प्रत्ययास्तथा ॥
छन्दकादीनि गीतानि तालाङ्गानि चयस्तथा ॥ ४७ ॥

॥ ४५ ॥ ४६ ॥ ४७ ॥

षष्ठे ततादिचतुर्विधवाद्यानामवान्तरभेदेनानेकप्रकारं वाद्यं निगद्यत इत्याह—

षष्ठे नानाविधं वाद्यमध्याये कथयिष्यते ।
सप्तमे नर्तनं नानारसभावाः क्रमेण च ॥ ४८ ॥

**षष्ठे नानाविधमिति** । सप्तमे प्रतिपाद्यानाह—**सप्तम इति** । नर्तनमिति नाट्यनृत्यनृत्तानां गात्रविक्षेपरूपाणां सामान्यवचनम् । **नानारसभावा इति** । शृङ्गारादयो नव रसाः । विभावादयः पञ्चविधा भावाः । **क्रमेणेति** । उद्देशक्रमेणेत्यर्थः ॥ ४८ ॥

इति प्रथमे स्वराध्याये पदार्थसंग्रहाख्यमादिमं प्रकरणम् ॥ १ ॥

---

+ ख. पुस्तकेऽयं श्लोको न विद्यते ।

१ घ. ङ. °तस्य गु° । २ ग. ङ. सूरिशार्ङ्गिणा । ३ घ. ङ. °लाः कलास्त° । ४ घ. पातो । ५ घ. °स्तती मा° । ६ क. ग. ब. °त्रास्तोल° । ७ क. ग. °वर्तो ल° । ८. क. ग. भट्टाभिनवगुप्तेन । ९ ङ. °नि लय° ।

अथ द्वितीयं पिण्डोत्पत्तिप्रकरणम् ।

ननु गीतनिदानत्वेन स्वरगते नादस्य प्रथमं प्रतिपाद्यत्वमस्तु किं शरीरनिरूपणेनेत्याशङ्क्य नादमात्रस्यशरीरस्य ( नादमात्रस्य ) शरीरमन्तरेण प्रकाशाभावादिति परिहरञ्शरीरं निरूपयितुमाह—

गीतं नादात्मकं वाद्यं नादव्यक्त्या प्रशस्यते ।
तद्द्वयानुगतं नृत्तं नादाधीनमतस्त्रयम् ॥ १ ॥
नादेन व्यज्यते वर्णः पदं वर्णात्पदाद्वचः ।
वचसो व्यवहारोऽयं नादाधीनमतो जगत् ॥ २ ॥
आहतोऽनाहतश्चेति द्विधा नादो निगद्यते ।
सोऽयं प्रकाशते पिण्डे तस्मात्पिण्डोऽभिधीयते ॥ ३ ॥

**गीतं नादात्मकमिति** । अयमर्थः । न केवलं गीतादित्रयस्य नादाधीनत्वं वाङ्मूलस्य सर्वलोकव्यवहारस्यापि नादाधीनत्वात्तदाधारः शरीरमादौ सुतरां निरूपणीयमेवेति ॥ १ ॥ २ ॥ ३ ॥

तच्च शरीरं जीवकर्मायत्तम् । स च जीवो जिज्ञास्यमानः स्वांशे ब्रह्मापेक्षत इति तस्मिञ्जिज्ञासिते तत्स्वरूपं निरूपयति—

अस्ति ब्रह्म चिदानन्दं स्वयंज्योतिर्निरञ्जनम् ।
ईश्वरोऽलिङ्गमित्युक्तमद्वितीयमजं विभु ॥ ४ ॥
निर्विकारं निराकारं सर्वेश्वरमनश्वरम् ।
सर्वशक्ति च सर्वज्ञं तदंशा जीवसंज्ञकाः ॥ ५ ॥

**अस्ति ब्रह्मेति** । चिदानन्दं ज्ञानसुखरूपं स्वयंज्योतिः स्वयंप्रकाशमानं निरञ्जनं निर्लेपम् । ईश्वरं स्वतन्त्रं मपञ्चयन्नालिङ्गमद्वितीयं स्वसदृशवस्त्वन्तररहितम् । अजं जन्मरहितं विभु व्यापकम् । निर्विकारं जायतेऽस्ति वर्धते विपरिणमते परिक्षीयते विनश्यतीति षड्भावविकारास्तै रहितम् । निराकार[माकार]शून्यं सर्वेश्वरं सकलजगत्कर्तृ । अनश्वरं विनाशरहितम् । सर्वशक्ति, इच्छाज्ञानक्रियाभोगयुक्तं सर्वज्ञमतीतानागतवर्तमानसकलपदार्थवेदित्रित्युपनिषदुक्तम् । ब्रह्मास्ति । ब्रह्मस्वरूपमुक्त्वा तत्तादात्म्येन जीवा(वां)स्तेषां देहसंबन्धं च निरूपयति—**तदंशा इति** । तस्य ब्रह्मणोऽशा मात्राः ॥ ४ ॥ ५ ॥

अनाद्यविद्योपहिता यथाऽग्नेर्विस्फुलिङ्गकाः ।
दार्वाद्युपाधिसंभिन्नास्ते कर्मभिरनादिभिः ॥ ६ ॥

---

१ क. घ नृत्यं । २ क. ख. ग. घ. °मनीश्व° । ३ घ. °संज्ञिकाः । ४ क. ख. ग. घ. ङ. °पहता ।

सुखदुःखप्रदैः पापपुण्यरूपैर्नियन्त्रिताः ।
तत्तज्जातियुतं देहमायुर्भोगं च कर्मजम् ॥ ७ ॥
प्रतिजन्म प्रपद्यन्ते तेषामस्त्यपरं पुनः ।
सूक्ष्मं लिङ्गं शरीरं तदा मोक्षादक्षयं मतम् ॥ ८ ॥

अनाद्यविद्योपहिताः । अनाद्यविद्या मूलाविद्या । अधिष्ठानस्य याथात्म्यज्ञानमिति यावत् । तयाऽविद्ययोपहिता अवि(व)च्छिन्ना जीवसंज्ञका भवन्ति । सच्चिदानन्दविभुस्वभावस्य वस्तुनोऽविद्योपाधिवशादसत्त्वासर्वज्ञत्वदुःखित्वपरिच्छिन्नत्वादिधर्मारोपे जीवव्यपदेश आविद्यक इत्यर्थः । तत्र दृष्टान्तमाह—**यथाऽग्नेरिति** । अंशा इति शेषः । तेजोरूपस्याग्नेरंशा दारुतृणपर्णाद्यवच्छिन्नाः स्फुलिङ्गा इति व्यपदिश्यन्ते तद्वदिति । ते **कर्मभिरिति** । ते जीवाः क्रमेण सुखदुःखप्रदैः पुण्यपापरूपैः कर्मभिः । पुण्यकर्मणां सुखप्रदत्वं च—'एष उ एवासाधु कर्म कारयति यमधो निनीषते' इति श्रुतेः । **अनादिभिरिति** । कर्तृत्वाभिमानिन आत्मनो जीवत्वोपाधेरविद्याया अनादित्वाज्जीवकर्तृकाणां कर्मणामपि 'तदाकृत्युपरक्तानां व्यक्तानामेकया विना' इत्यादिन्यायेन प्रवाहरूपविवक्षयाऽनादित्वम् । नियन्त्रिता बद्धाः । ततस्तत्तज्जातिर्मनुष्यत्वादिजातियुक्तं(र्युतं) देहमायुः कर्मजं भोगं च प्रतिजन्म जन्मनि जन्मनि प्रपद्यन्ते प्राप्नुवन्ति । कर्मभिर्यन्त्रिता इत्यनेनैव जीवानां देहादिप्राप्तेर्देहादीनामप्यविशेषेण कर्मजत्वे सिद्धे भोगस्य पुनः कर्मजमिति विशेषणमिह जन्मनि क्रियमाणानादृष्टफलकानि कृष्यादिकर्माणि प्रतिजीवानकर्तृत्वमपि(?) नियतमेवेति वक्तुम् । **तेषामस्तीति** । तेषां स्थूलशरीरावच्छिन्नानां जीवानाम् । अपरं स्थूलशरीरादन्यत्सूक्ष्ममव्यक्तं लिङ्गशरीरमस्ति "अङ्गुष्ठमात्रः पुरुषः" इत्यादिश्रुतेः सिद्धमित्यर्थः । तच्चाऽऽमोक्षाच्चरमस्वरूपसाक्षात्कारपर्यन्तमक्षयं स्वाविद्यावासनानुच्छेदादविनाशि मतं शास्त्रसिद्धम् ॥ ६ ॥ ७ ॥ ८ ॥

सूक्ष्मभूतेन्द्रियप्राणावस्थात्मकमिदं विदुः ।
जीवानामुपभोगाय जगदेतत्सृजत्यजः ॥ ९ ॥

इदं च लिङ्गशरीरं सूक्ष्मभूतेन्द्रियप्राणावस्थात्मकम् । भूतानि पृथिव्यादीनि । इन्द्रियाणि चक्षुरादीनि । प्राणाः प्राणादिपञ्चवायवः सूक्ष्माणामव्यक्तरूपाणामेतेषामन्तरिन्द्रियेण मनसा संघातत्वेनावस्थानमात्मा स्वरूपं यस्य त[त्त]थोक्तम् । केचित् 'न कदाचिदनीदृशं जगत्' इति जगत एव प्रवाहरूपेण नित्यत्वमङ्गी कुर्वन्ति । तन्मतनिरासार्थं जगत्सृष्टिसंहारयोः सप्रयोजनमात्मक( कृत )त्वमाह—**जीवानामिति** । जीवानामुक्तदेहद्वयाभिमानिनामुपभोगाय सुखदुःखानुभवाय जगद्भूतभौतिकात्मकमजः परमात्मा । स आत्मेत्यन्वयः । परत्वमप्यात्मनो निकृष्टजीवापेक्षयेश्वरत्वमापन्न इत्यर्थः ॥ ९ ॥

---

१ ख. वपुः । २ ग. °दत्वं यावत्—' ए° ।

स आत्मा परमात्मा च विश्रान्त्यै संहरत्यथ ।
तदेतत्सृष्टिसंहार(रं)प्रवाहानादि संमतम् ॥ १० ॥

स आत्मेति पूर्वोक्तं ब्रह्म परामृश्यते । चकारो भिन्नक्रमः । संहरति चेत्य-न्वयः । अथ सृष्टस्य जगतः स्थित्यनन्तरम् । विश्रान्त्यै बीजानामित्यनुषञ्जनीयम् । सृष्टिसंहारयो[ रु ]करीत्या जीवार्थत्वाज्जीवानादित्वद्योतनीयप्रवाहानादित्व आ( मा )ह—तदेतदिति । सृष्टिश्च संहारश्च सृष्टिसंहारमिति द्वंद्वैकवद्भावे नपुंसकत्वम् । प्रवाहानादीति व्यक्तिविवक्षयाऽनादित्वं संतानरूपेणानादित्वमित्यर्थः ॥ १० ॥

अंशांशिभावेनाऽऽत्मनो जीवानामभेदमभिदधत्कार्यकारणभावेनाऽऽत्मनो जगतश्चा( श्च )भेदमतानुसारेण सदृष्टान्तमाह—

ते जीवा नाऽऽत्मनो भिन्ना भिन्नं वा नाऽऽत्मनो जगत् ।
शक्त्या सृजन्नभिन्नोऽसौ सुवर्णं कुण्डलादिवत् ।
सृजत्यविद्ययेत्यन्ये यथा रज्जुर्भुजंगमम् ॥ ११ ॥

ते जीवा इति । असावात्मा सत्त्वगतक्रियाशक्त्या जगत्सृजंस्तस्मादभिन्नः। विभक्तिपरिणामेन जगत्पदस्यानुषङ्गः कर्तव्यः । यथा सुवर्णकुण्डलयोस्तादात्म्यं तद्वदित्यर्थः ।

यथाऽऽहुः—" कार्यरूपेण नानात्वमभेदः कारणात्मना ।
हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा " ।

इति मुख्यवेदान्तिमततत्त्वं दर्शितम् ॥ ११ ॥

भूतादिसृष्टिक्रमेण भौतिकं पिण्डं सप्रभेदं निरूपयति—

आत्मनः पूर्वमाकाशस्ततो वायुस्ततोऽनलः ॥ १२ ॥
अनलाज्जलमेतस्मात्पृथिवी समजायत ।
महाभूतान्यमून्येषा विराजो ब्रह्मणस्तनुः ॥ १३ ॥

आत्मनः पूर्वमित्यादिना । आत्मनः कारणभूतात्पूर्वं वाय्वादिभ्यः प्रथममाकाश उत्पन्न इत्यर्थः । तत इति । तच्छब्देनाऽऽकाशः परामृश्यते । तस्मादाकाशात्कारणभूताद्वायुरुत्पद्यत इत्यर्थः । ततोऽनल इत्यत्रापि वायोरनलः समजायतेत्यर्थः । तथा च श्रुतिः—" आत्मन आकाशः संभूत आकाशाद्वायुः " इत्यादि । अमून्याकाशादीनि महाभूतानि। विराजो ब्रह्मणो महाभूतस्योपहितस्य ब्रह्मण एषा तनुरिति संबन्धः। एषेति पुरोवर्तितया निर्देशो भूतसंघातस्य सकललोकप्रत्यक्षत्वेन । विराज इत्यात्मा महाभूतानि सृष्ट्वा तान्यनुप्रविश्य तदभिमानित्वेन विराडित्युच्यते तस्य । अमून्येषा तनुः ' इत्युद्दिश्यमानप्रतिनिर्दिश्यमानयोरैक्यं प्रतिपादयन्ति सर्वनामानि पर्यायेण त[ त्त ]ल्लिङ्गभाञ्जि भवन्ति ' इति भिन्नलिङ्गतोपपत्तिः ॥ १२ ॥ १३ ॥

**ब्रह्म ब्रह्माणमसृजत्तस्मै वेदान्प्रदाय च ।**
**भौतिकं वेदशब्देभ्यः सर्जयामास तेन तत् ॥ १४ ॥**

**ब्रह्म ब्रह्माणमिति** । ब्रह्म विराड्रूपं ब्रह्माणं चतुर्मुखमसृजत् । पुनस्तद्ब्रह्म तस्मै चतुर्मुखाय वेदानृग्वेदादीन्प्रदाय तेन प्रयोज्येन कर्त्रा प्रयोजकं वेदशब्देभ्यो वेद्यतेऽनेन धर्माधर्माविति वेदस्तस्मिञ्शब्दा आकृत्यादिवाचकास्तेभ्यः । कल्पान्तरातीतपदार्थस्मारककर्तृषा( रकत्वात् ) ॥ १४ ॥

भौतिकसृष्टिक्रममाह—

**तदाज्ञयाऽसृजद्ब्रह्मा मनसैव प्रजापतीन् ।**
**तेभ्यस्तु रैतसी सृष्टिः शरीराणां निरूप्यते ॥ १५ ॥**

**तदाज्ञयेति** । तस्य विराज आज्ञया । तेभ्यः प्रजापतिभ्यो रैतसी रेतोविकाररूपा । रेतःशब्देन शोणितमुपलक्ष्यते ॥ १५ ॥

**स्वेदोद्भिदजराय्वण्डहेतुभेदाच्चतुर्विधम् ।**
**देहं यूकादिनः स्वेदादुद्भेदात्तु लतादिनः ।**
**जरायोर्मानुषादीनामण्डात्तु विहगादिनः ॥ १६ ॥**

**स्वेदोद्भेदेति** । स्पष्टार्थः । यूकादिन इत्यादौ यूका आदिर्यस्येति तद्गुणसंविज्ञानो बहुव्रीहिः ॥ १६ ॥

**तत्र नादोपयोगित्वान्मानुषं देहमुच्यते ॥ १७ ॥**

उक्तचतुर्विधदेहमध्ये त्रिविधयूकादिदेहेषु लतादेरचेतनत्वाद्यूकादेरतिसूक्ष्मत्वाद्विहगादेः संपूर्णधातुनाड्याद्यभावाज्जरायुजेष्वपि पश्वादिदेहस्य धातुनाड्यादिसंपूर्णतासद्भावेऽपि तिर्यक्त्वेनोच्चारणाशक्तेश्च पारिशेष्यान्मानुषदेहमेव नादोपयोगि । ततस्तस्यैवोत्पत्तिर्निरूप्यत इत्याह—**तत्रेति** ।

तस्य मानुषशरीरस्य रैतस्यां सृष्टौ जीवस्याऽऽकाशादिपरम्परया गर्भसंक्रमणमाह—

**क्षेत्रज्ञः स्थित आकाश आकाशाद्वायुमागतः ।**
**वायोर्धूमं ततश्चाभ्रमभ्रान्मेघेऽवतिष्ठते ॥ १८ ॥**

**क्षेत्रज्ञ** इत्यादिना **गर्भाशयगतं भवेदित्यन्तेन** । क्षेत्रं शरीरं तज्जानातीति । अहमिति वा ममेदमिति वेत्तीति क्षेत्रज्ञो जीवः । यदुक्तं **भगवता**—

"इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः" इति ।

धूमज्योतिर्मरुतां संघातोऽभ्रं जलवत्तदेव मेघः ॥ १८ ॥

---

१ घ. °णां विरू° । २ क. ख. ग. °त्र ज्ञानोप° ।

आहुत्याप्यायितो ग्रस्तरसो ग्रीष्मे च भानुभिः ।
भानुर्मेघे घनरसं निधत्ते तं बलाहकः ॥ १९ ॥
यदा वर्षति वर्षेण सह जीवस्तदा भुवः ।
वनस्पत्योषधीर्जाताः संक्रामत्यविलक्षितः ॥ २० ॥
ताभ्योऽन्नं जातमन्नं च पु(तत्पु)रुषे(षः) शुक्रतां गतम् ।
शुद्धार्तवाया योषाया निषिक्तं स्मरमन्दिरे ।
सहाऽऽर्तवेन शुद्धं चेद्गर्भाशयगतं भवत् ॥ २१ ॥

**आहुत्येति** । यजमानैर्मन्त्रपूर्वकं देवतोद्देशेनाग्नौ प्रक्षिप्यमाणं समिदन्नाज्यादिद्रव्यमाहुतिः । तयाऽऽप्यायितः संतर्पितो ग्रीष्मे भानुभिः किरणैर्ग्रस्तरसो भूमेरात्तसारो भानुः सूर्यो घनरसं जलम् । भुवो जाता वनस्पत्यौषधीरित्यन्वयः । अचाक्षुषत्वादविलक्षितः । ताभ्य ओषधीभ्यः । अन्नमद्यत इत्यन्नमोदनादि । पुरुषैरन्नं भुक्तं तदोदनादि । शुद्धार्तवायाः । आर्तवं शोणितम् । 'लाक्षारसशशासाभं धौतं यच्च विरज्यते' इत्युक्तलक्षणं शुद्धमार्तवं यस्यास्तस्याः । **शुद्धं चेदिति** । शुक्रमपि 'शुक्रं शुक्लं गुरु स्निग्धं मधुरं बहुलं बहु । घृतमाक्षिकतैलाभं सद्गर्भाय' इत्युपक्रम्य शुद्धं शुद्धार्तवमित्युक्तत्वाच्छुद्धम् ॥ १९ ॥ २० ॥ २१ ॥

तच्च शुक्रमाशयगतत्वमात्रेण गर्भं नाऽऽरभेत किंतु जीवकर्मप्रेरितं सञ्जीवस्योत्पश्यमानदेहाभिमानिनः कर्मभिः प्रारब्धकर्मभिः प्रेरितं देहभावानुकूलक्रियया योजितं सदेव गर्भमारभत इत्याह—

जीवकर्मप्रेरितं तद्गर्भमारभते तदा ॥ २२ ॥

**जीवकर्मेति** । अत्र गर्भशब्देन देहोपादानमाशयं गतः शुक्रशोणितसंघात उच्यते ॥ २२ ॥

द्रवत्वं प्रथमे मासे कललाख्यं प्रजायते ।
द्वितीये तु घनः पिण्डः पेशीषद्घनमर्बुदम् ॥ २३ ॥
स्त्रीपुंनपुंसकानां स्युः प्रागवस्थाः क्रमादिमाः ।
तृतीये त्वङ्कुराः पञ्च कराङ्घ्रिशिरसो मताः ॥ २४ ॥

एवमुक्तप्रकारेणाऽऽशयगतस्य गर्भस्य तत आरभ्य प्रथमादिनवमासपर्यन्तं प्रतिमासगतसंघातस्य द्रवीभाव एव । **द्वितीये त्विति** । घनः काठिन्ययुक्तः । पेशी चतुरस्रा मांसप्राया । ईषद्घनं घनपेश्युभयसाधारणत्वात्तथोक्तम् । अर्बुदं शाल्मलीमुकुलाकारम् ।

१ क. संक्रम° । २ क. ख. ग. °तं सद° । ३ क. ग. °शीवद्घन° । ख. घ. ङ. °शीबन्धन° ।

यथाऽऽहुः—"चतुरस्रा स्मृता पेशी वृत्तः पिण्डो घनः स्मृतः ।
शाल्मलीमुकुलाकारमर्बुदं भिषजो विदुः" इति ॥

तृतीये त्विति । पूर्वोक्तघनपिण्डात्कराङ्घ्रिशिरसः । करौ चाङ्घ्री च शिरश्च कराङ्घ्रिशिरः । प्राण्यङ्गत्वाद्द्वंद्वैकवद्भावस्तस्य । कराङ्घ्रिशिरसामङ्कुरा इति येऽङ्कुरा जायमाना एव कराङ्घ्रिशिरांसि भवन्तीति भाव्यवयवविवक्षयाऽयं व्यपदेशः सूत्रशाटकन्यायेन युगपदङ्कुरावस्थायामेषः ॥२३॥२४॥

**अङ्गप्रत्यङ्गभागाश्च सूक्ष्माः स्युर्युगपत्तदा ।**
**विहाय श्मश्रुदन्तादीञ्जन्मानन्तरसंभवान् ॥ २५ ॥**

**अङ्गप्रत्यङ्गभागा इति** । शिरोङ्कुरे ग्रीवानयननासिकाकर्णादिभागाः । कराङ्कुरयोरंसकूर्परमणिबन्धाङ्गुल्यादिभागाः । अङ्घ्र्यङ्कुरयोरूरुजानुजङ्घागुल्फाङ्गुल्यादिभागाः । सूक्ष्मा अव्यक्तरूपाः ॥ २५ ॥

**एषा प्रकृतिरन्या तु विकृतिः संमता सताम् ।**
**चतुर्थे व्यक्तता तेषां भावानामपि जायते ॥ २६ ॥**
**पुंसां शौर्यादयो भावा भीरुत्वाद्यास्तु योषिताम् ।**
**नपुंसकानां संकीर्णा भवन्तीति प्रचक्षते ॥ २७ ॥**

**एषा प्रकृतिरिति** । जन्मानन्तरसंभवाञ्श्मश्रुदन्तादीन्विहायाङ्कुराद्यवस्थायामेव सूक्ष्मरूपाङ्गप्रत्यङ्गभागोत्पत्तिः प्रकृतिः । जरायुजादीनां साधारणस्वभाव इति यावत् । **अन्या तु विकृतिरिति** । जन्मानन्तरभाविनां श्मश्रुदन्तादीनामङ्गादिसमकालमेवोत्पत्तिः । अङ्गादिषु केषांचिदनुत्पत्तिः स्थानव्यत्यासेनोत्पत्तिरङ्गुल्यादिसंख्याया न्यूनाधिकभावश्च । **चतुर्थ इति** । तेषामङ्गप्रत्यङ्गभागानां व्यक्तता पृथगात्मता । भावानामपि शौर्यादीनामात्मधर्माणां लीनानां व्यक्तता ॥ २६ ॥ २७ ॥

**मातृजं चास्य हृदयं विषयानभिकाङ्क्षति ।**
**अतो मातुर्मनोभीष्टं कुर्याद्गर्भसमृद्धये ॥ २८ ॥**

**मातृजं चेति** । अस्य गर्भस्य मातृजं मातुर्जातं हृदयम् । चकारान्मातुर्हृदयं च । तदुभयं यतो विषयानभिकाङ्क्षति । अत इति संबन्धः । अयमर्थः । मातृहृदयसंबन्धस्य गर्भहृदयस्यैव विषयाभिलाषित्वात्तदा मातुरभीष्टमवश्यं कर्तव्यं गर्भसमृद्धिकामेनेति ॥ २८ ॥

**तां च द्विहृदयां नारीमाहुर्दौर्हृदिनीं बुधाः ।**
**अदानाद्दोहदानां स्युर्गर्भस्य व्यङ्गतादयः ॥ २९ ॥**

१ क. ख. ग. °तृकं चा° । २ ग. °न्मातृहृद° । ३ ख. ग. हुर्दोहदि°

मातुर्यद्विषये लोभस्तदार्तो जायते सुतः ।
गर्भः स्यादर्थवान्भोगी दोहदाद्राजदर्शने ॥ ३० ॥
अलंकारेषु ललितो धर्मिष्ठस्तापसाश्रमे ।
देवतादर्शने भक्तो हिंस्रो भुजगदर्शने ॥ ३१ ॥
गोधाशने तु निद्रालुर्बली गोमांसभक्षणे ।
माहिषे शूररक्ताक्षं लोमशं सूयते सुतम् ॥ ३२ ॥

दौहृदिनीमिति । द्वयोर्हृदययोः समाहारो द्विहृदयम् । तस्य भावो दौहृदमिति पृषोदरादित्वात्साधु । तत्संबन्धाद्गर्भोऽपि दौहृदमित्युच्यते । तद्दौहृदमस्या अस्तीति दौहृदिनी । तदभीष्टाकरणे दोषमाह—अदानादिति । दोहादानाम् । दोहदं गर्भिणीमनोरथः । तद्विषया अपि दोहदानि । तेषां तत्तद्दोहदाभिलाषाद्गर्भ उत्पत्स्यमानोऽर्थवान्भोगी च भवति । एवमुत्तरत्रापि द्रष्टव्यम् ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

प्रबुद्धं पञ्चमे चित्तं मांसशोणितपुष्टता ।
षष्ठेऽस्थिस्नायुनखरकेशरोमविविक्तता ॥ ३३ ॥

पञ्चम इति । प्रबुद्धं पूर्वं लीनमन्तःकरणम् । तदाऽस्य स्वेदोन्मुखहृदयवशादुत्पत्स्यमानस्वोत्कर्षाय कर्षावाहगर्भः(?) स्यादिति गर्भिण्या राजदर्शने दोहदो भवति(?) । षष्ठ इति । स्नायवः सूक्ष्मशिराः । केशाः शिरोजाः । रोमाण्यङ्गरुहाणि ॥ ३३ ॥

बलवर्णौ चोपचितौ सप्तमे त्वङ्गपूर्णता ।
पाल्यन्तरितहस्ताभ्यां श्रोत्ररन्ध्रे पिधाय सः ॥ ३४ ॥

बलं सत्त्वं वर्णो गौरतादिः । सप्तमे त्विति । पाल्यन्तरितहस्ताभ्यां पालिरूरुः 'पालिः स्त्र्यश्र्यङ्कपङ्क्तिषु' इत्यभिधानात्पालिभ्यामूरुभ्यामन्तरितावाच्छादितौ हस्तौ ताभ्यां श्रोत्ररन्ध्रे पिधायेत्यनेनाधोमुखतया संकुचद्गात्रत्वमुक्तम् ॥ ३४ ॥

उद्विग्नो गर्भसंवासादास्ते गर्भाशयान्वितः ।
स्मरन्पूर्वानभूताः स नानाजातीश्च यातनाः ।
मोक्षोपायमभिध्यायन्वर्ततेऽभ्यासतत्परः ॥ ३५ ॥

उद्विग्नो भीतः । गर्भाशयान्वितो जरायुग्रस्तदेहः । अभ्यासतत्पर इति । अभ्यासो नामात्र संसारजिहासया पौनःपुन्येनाऽऽत्मचिन्तनम् ॥ ३५ ॥

अष्टमे त्वक्स्मृती स्यातामोजश्चे(श्चै)तश्च(च) हृद्भवम् ।
शुद्धमापीतरक्तं च निमित्तं जीविते मतम् ॥ ३६ ॥

---

१ क. ग. ङ. °षयालाभ° । २ क. घ. °शलोम° । ३ ख. °भूतिः स । घ. °भूतांस्ताञ्ज्ञाना° । ४ क. ख. ग. ङ. हृद्भयम् । ५ क. ग. गतम् ।

**अष्टम** इति । **त्वक्स्मृती स्यातामिति** । यद्यपि त्वक्स्मृती सप्तमेऽपि स्तस्तथाऽप्यत्र त्वचः सान्द्रत्वं स्मृतेश्च विकल्पविषयत्वं भवतीत्यर्थः । ओजश्च स्यादित्यूहः । ओजः शुक्रसारः । एतदोजश्च हृद्रवं हृन्निवासं शुद्धं दुष्टवाताद्यनुपहतम् । आपीतरक्तमीषत्पीतरक्तवर्णम् । जीविते प्राणधारणे निमित्तं कारणमित्यन्वयार्थः ॥ ३६ ॥

**पुनरम्बां पुनर्गर्भं चञ्चलं तत्प्रधावति ।**
**अतो जातोऽष्टमे मासे न जीवत्योजसोज्झितः ॥ ३७ ॥**

तदोजश्चञ्चलमेकत्रानवस्थितं सदम्बां गर्भं च मुहुर्धावति । तदुक्तं **वाग्भटाचार्येण**—" ओजोऽष्टमे संचरति मातापुत्रौ पितुः क्रमात् " इति । यतोऽष्टमेऽनवस्थितमोजोऽत इत्यर्थः । अतोऽष्टमे मासे जातो न जीवतीति न माससाकल्यार्थः, अपि तु यदौजो गर्भं विहायाम्बां संक्रामेत्तदा जात ओजसोज्झितत्वान्न जीवतीत्यर्थः । यदा पुनरोजोऽम्बां विहाय गर्भं संक्रमेत्तदा तु प्रसवेऽम्बा न जीवति । यदा पुनरोजसः प्रधावनसमय एव प्रसवस्तदा तस्यैकत्राप्यनवस्थानादुभावपि न जीवत इति भावः ॥ ३७ ॥

ननु लोके क्वचिदोजसोज्झितस्यापि गर्भस्य जन्मानन्तरं कंचित्कालं जीवतोऽवस्थानं दृश्यते । तत्कथमित्याशङ्क्य सदृष्टान्तामुपपत्तिमाह—

**कंचित्कालमवस्थानं संस्कारात्खण्डिताङ्गवत् ॥ ३८ ॥**

**कंचित्कालमिति** । संस्कारादोजःसंचारसंस्कारात् । खण्डिताङ्गवत्खण्डितं च तदङ्गमिति कर्मधारयः । खण्डितमङ्गं यथोत्तरक्षणे प्राणसंचारसंस्काराच्चेष्टमानं दृश्यते तद्वदित्यर्थः ॥ ३८ ॥

**समयः प्रसवस्य स्यान्मासेषु नवमादिषु ।**
**मातू रसवहां नाडीमनु बद्धा पराभिधा ॥ ३९ ॥**
**नाभिस्था नाडी गर्भस्य मात्राहाररसावहा ।**
**कृताञ्जलिर्ललाटेऽसौ मातृपृष्ठमभिस्थितः ॥ ४० ॥**
**अध्यास्ते संकुचद्गात्रो गर्भो दक्षिणपार्श्वगः ।**
**वामपार्श्वस्थिता नारी क्लीबं मध्यस्थितं मतम् ॥ ४१ ॥**

**नवमादिष्विति** । क्वचिन्नवमे मासे प्रसवः स्यात्क्वचिद्दशमे क्वचिदेकादशेऽपीति दर्शयितुमादिशब्दग्रहणम् ॥ ३९ ॥ ४० ॥ ४१ ॥

**क्रियतेऽधःशिराः सूतिमारुतैः प्रबलैस्ततः ।**
**निःसार्यते रुजद्गात्रो यन्त्रच्छिद्रेण बालकः ॥ ४२ ॥**

सूतिमारुतैर्यन्त्रच्छिद्रेण योनिरन्ध्रेण ॥ ४२ ॥

---

१ ङ. °लं विप्रधा° । २ क. ग. ।किंचि° । घ. क्वचि° । ३ घ. कृत्वाऽञ्जलिं लला° । ४ घ. ङ. °पार्श्वाश्रिता । ५ घ. ङ. मध्याश्रितं ।

जातमात्रस्य तस्याथ प्रवृत्तिः स्तन्यगोचरा ।
प्राग्जन्मबोधसंस्कारादिति जीवस्य सत्यता ॥ ४३ ॥
भावाः स्युः षड्विधास्तस्य मातृजाः पितृजास्तथा ।
रजसा आत्मजाः सत्त्वसंभवाः सात्म्यगोचराः ॥ ४४ ॥

तस्य जातस्य ॥ ४३ ॥ ४४ ॥

मृदवः शोणितं मेदो मज्जा प्लीहा यकृद्गुदम् ।
हृन्नाभीत्येवमाद्यास्तु भावा मातृभवा मताः ॥ ४५ ॥

**मृदव** इति । मृदुत्वयुक्ताः । **प्लीहेति** । जीवाधिष्ठानभूतवामपार्श्वस्थितमांसविशेषवाचकः प्लीहाशब्दः । **यकृदिति** । दक्षिणपार्श्वस्थितस्तादृशो मांसविशेषः ॥ ४५ ॥

श्मश्रुलोमकचाः स्नायुशिराधमनयो नखाः ।
दशनाः शुक्रमित्यादि स्थिराः पितृसमुद्भवाः ॥ ४६ ॥

स्नायुशिराधमनयः । स्नायवः सूक्ष्मनाड्यः । शिरास्ततोऽपि स्थूलाः । धमनय एरण्डकाण्डवत्स्थूलाः शिराः कठिनाः ॥ ४६ ॥

शरीरोपचयो वर्णवृद्धिस्तृप्तिर्बलं स्थितिः ।
अलोलुपत्वमुत्साह इत्यादीन्रसजान्विदुः ॥ ४७ ॥

**शरीरोपचय इत्यादि ग्रन्थविस्तरकातरा** इत्यन्तो ग्रन्थो निगदव्याख्यातः ॥ ४७ ॥

इच्छा द्वेषः सुखं दुःखं धर्माधर्मौ च भावना ।
प्रयत्नो ज्ञानमायुश्चेन्द्रियाणीत्यात्मजा मताः ॥४८॥
ज्ञानेन्द्रियाणि श्रवणं स्पर्शनं दर्शनं तथा ।
रसनं घ्राणमित्याहुः पञ्च तेषां तु गोचराः ॥ ४९ ॥
शब्दः स्पर्शस्तथा रूपं रसो गन्ध इति क्रमात् ।
वाक्कराङ्घ्रिगुदोपस्थानाहुः कर्मेन्द्रियाणि तु ॥५० ॥
वचनादानगमनविसर्गरतयः क्रमात् ।
क्रियास्तेषां मनो बुद्धिरित्यन्तःकरणद्वयम् ॥ ५१ ॥
सुखं दुःखं च विषयौ विज्ञेयौ मनसः क्रिया ।
स्मृतिभीतिविकल्पाद्या धियोऽध्यवसितिर्मता ॥ ५२ ॥
ब्रह्मयोनीनीन्द्रियाणि भौतिकान्यपरे जगुः ।
सत्त्वाख्यमन्तःकरणं गुणभेदात्त्रिधा मतम् ॥ ५३ ॥

---

१ ख. ग. °स्यापि प्र° । २ घ. ङ. °स्य नित्य° । ३ घ. ङ. °त्म्यजास्तथा ॥ ४४ ॥ ४ ङ. °द्यास्ते भा° । ५ ग. घ. °द्धिः सुप्ति° । ६ क. ख. ग. च ।

सत्त्वं रजस्तम इति गुणाः सत्त्वात्तु सात्त्विकाः ।
आस्तिक्यंशुद्धधर्मैकरुचिप्रभृतयो मताः ॥ ५४ ॥
रजसो राजसा भावाः कामक्रोधमदादयः ।
निद्रालस्यप्रमादार्तिवञ्चनाद्यास्तु तामसाः ॥ ५५ ॥
प्रसन्नेन्द्रियतारोग्यानालस्याद्यास्तु सात्म्यजाः ।
देहो भूतात्मकस्तस्मादादत्ते तद्गुणानिमान् ॥ ५६ ॥
शब्दं श्रोत्रं सुषिरतां वैविक्त्यं सूक्ष्मबोद्धृताम् ।
बलं च गगनाद्वायोः स्पर्शं च स्पर्शनेन्द्रियम् ॥ ५७ ॥
उत्क्षेपणमवक्षेपाकुञ्चने गमनं तथा ।
प्रसारणमितीमानि पञ्च कर्माणि रूक्षताम् ॥ ५८ ॥
प्राणापानौ तथा व्यानसमानोदानसंज्ञकान् ।
नागं कूर्मं च कृकरं देवदत्तं धनंजयम् ॥ ५९ ॥
दशेति वायुविकृतीस्तथा गृह्णाति लाघवम् ।
तेषां मुख्यतमः प्राणो नाभिकन्दादधः स्थितः ॥ ६० ॥
चरत्यास्ये नासिकयोर्नाभौ हृदयपङ्कजे ।
शब्दोच्चारणनिःश्वासोच्छ्वासकासादिकारणम् ॥ ६१ ॥
अपानस्तु गुदे मेढ्रे कटिजङ्घोदरेषु च ।
नाभिकन्दे वङ्क्षणयोरूरुजानुषु तिष्ठति ॥ ६२ ॥
अस्य मूत्रपुरीषादिविसर्गः कर्म कीर्तितम् ।
व्यानोऽक्षिश्रोत्रगुल्फेषु कट्यां घ्राणेषु तिष्ठति ॥ ६३ ॥
प्राणापानधृतित्यागग्रहणाद्यस्य कर्म च ।
समानो व्याप्य निखिलं शरीरं वह्निना सह ॥ ६४ ॥
द्विसप्ततिसहस्रेषु नाडीरन्ध्रेषु संचरन् ।
भुक्तपीतरसान्सम्यगानयन्देहपुष्टिकृत् ॥ ६५ ॥
उदानः पादयोरास्ते हस्तयोरङ्गसंधिषु ।
कर्मास्य देहोन्नमनोत्क्रमणादि प्रकीर्तितम् ॥ ६६ ॥
त्वगादिधातूनाश्रित्य पञ्च नागादयः स्थिताः ।
उद्गारादि निमेषादि क्षुतप्रभृति च क्रमात् ॥ ६७ ॥
तन्द्राप्रभृति शोफादि तेषां कर्म प्रकीर्तितम् ।
अग्नेस्तु लोचनं रूपं पित्तं पाकं प्रकाशताम् ॥ ६८ ॥

---

१ घ. ङ. °क्यशुद्धध° । २ ङ. °पञ्चके । श° । ३ घ. °रूर्वोर्जानुनि ति° । ४ क. ख. ग. °होन्नयनो° ।

अमर्षं तैक्ष्ण्यमूष्माणमोजस्तेजश्च शूरताम् ।
मेधावितां तथाऽऽदत्ते जलात्तु रसनं रसम् ॥ ६९ ॥
शैत्यं स्नेहं द्रवस्वेदमूत्रादि मृदुतामपि ।
भूमेर्घ्राणेन्द्रियं गन्धं स्थैर्यधैर्ये च गौरवम् ॥ ७० ॥
श्मश्रुकेशनखं दन्तानस्थ्याद्यन्यच्च कर्कशम् ।
वातादिधातुप्रकृतिर्व्योमादिप्रकृतिस्तथा ॥ ७१ ॥
सप्तधा सात्त्विको यश्च ब्रह्मेन्द्रयमविग्रहः ।
वारुणश्चाथ कौबेर आर्षो गान्धर्वविग्रहः ॥ ७२ ॥
राजसः षड्विधो यश्च पैशाचो राक्षसस्तथा ।
आसुरः शाकुनः सार्पः प्रेतदेहस्तथा परः ॥ ७३ ॥
तामसस्त्रिविधो यश्च पशुमत्स्याङ्घ्रिपाकृतिः ।
तेषां लक्ष्माणि न ब्रूमो ग्रन्थविस्तरकातराः ॥ ७४ ॥

॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥

जातस्य मातृजादिषड्विधान्भावान्भौतिकस्य देहस्य तत्तद्भूतगुणोपादानं प्रोक्त्वा तस्य देहस्याङ्गप्रत्यङ्गधातुधमनीचक्रादिप्रपञ्चमाह—

पिण्डस्याऽऽहुः षडङ्गानि शिरः पादौ करौ तथा ।
मध्यं चेत्यथ वक्ष्यन्ते प्रत्यङ्गान्यखिलान्यपि ॥ ७५ ॥

**पिण्डस्याऽऽहुरित्यादिना** । प्रत्यङ्गानि त्वक्कलादीनि वक्ष्यन्ते समनन्तरमेवेत्यर्थः ॥ ७५ ॥

त्वचः सप्त कलाः सप्त स्नायुश्लेष्मजरायुभिः ।
छन्नाः कोशाग्निभिः पक्वास्ता धातून्तराऽन्तरा ।
सीमभूताश्च धातूनां काष्ठसारोपमा मताः ॥ ७६ ॥

**त्वचः सप्तेति** । पच्यमानादसृजो जायमाना भासिन्यादयः सप्त त्वचः । **यथोक्तमायुर्वेदे**—“ इति भूतमयो देहस्तत्र सप्त त्वचोऽसृजः ।
पच्यमानात्प्रजायन्ते जीवाः सांताति(नि)का इव ॥
भासिनी लोहिता श्वेता त्वक्ताम्रा वेदिनी तथा ।
स्याद्रोहिणी मांसधरा सप्तधा परिकीर्तिता ” इति ॥

१ क. ख. ग. तदाद॰ । २ घ. ॰यक्षपै॰ । ३ घ. ॰तरात ॥ ७४ ॥

**कलाः समेति** । रसक्लेदो धातुसारशेषः पूर्वोत्तरधात्वन्यस्नायुश्लेष्मजरायुच्छन्नः कोशाग्निपक्वः स्वस्वमूष्मणा श्लेष्मस्नायुजरायुच्छन्नः कलाख्यः । काष्ठसारवदिति स्नाय्वादिच्छन्नत्वापादकं विशेषणं त्वक्कलोभयसाधारणं वेदितव्यम् । तास्त्वचः कलाश्च धातूनन्तराऽन्तरा त्वगादिसप्तधातूनां मध्ये सीमभूतास्तेषामेव धातूनामसंकीर्णतापादका इत्यर्थः ॥ ७६ ॥

**आद्या मांसधरा मांसे शिराधमनयस्तथा ।**
**स्नायुस्रोतांसि रोहन्ति पङ्के पङ्कजकन्दवत् ।**
**असृङ्मेदः श्लेष्मशकृत्पित्तशुक्रधराः पराः ॥ ७७ ॥**

**आद्येति** । आद्या च त्वक्कला मांसधरा नाम । पराः षट् त्वचः कलाश्चासृगादिधराः ॥ ७७ ॥

**त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः ।**
**सप्त स्युस्तत्र चोक्ता त्वग्रक्तं जाठरवह्निना ॥ ७८ ॥**
**पक्वाद्भवेदन्नरसादेवं रक्तादिभिः परे ।**
**स्वस्वकोशादिना पक्वैर्जन्यन्ते धातवः क्रमात् ॥ ७९ ॥**
**रक्तश्लेष्मामपित्तानां पक्वस्य मरुतस्तथा ।**
**मूत्रस्य चाऽऽश्रयाः सप्त क्रमादाशयसंज्ञकाः ॥ ८० ॥**

धातूनुद्दिश्य तेषामुत्पत्तिं दर्शयति—**त्वगसृगित्यादिना** । **तत्र चोक्ता त्वगिति** । चकारो भिन्नक्रमः । त्वक्चेति । अयमर्थः । अत्र धातुत्वेन परिगणिता बाह्या त्वगपि धातुसीमभूतत्वग्लक्षणेनैवोक्तलक्षणेति । रक्तश्लेष्मेत्यत्र रक्तशब्देन धातुव्यतिरिक्तं रक्तं विवक्षितम् ॥ ७८ ॥ ७९ ॥ ८० ॥

**गर्भाशयोऽष्टमः स्त्रीणां पित्तपक्वाशयान्तरे ।**
**प्रसन्नाभ्यां कफासृग्भ्यां हृदयं पङ्कजाकृति ।**
**सुषिरं स्यादधोवक्त्रं यकृत्प्लीहान्तरस्थितम् ॥ ८१ ॥**

॥ ८१ ॥

**एतच्च चेतनस्थानं तदस्मिंस्तमसाऽऽवृते ।**
**निमीलति स्वपित्यात्मा जागर्ति विकसत्यपि ॥ ८२ ॥**
**द्विधा स्वप्नसुषुप्तिभ्यां स्वापो बाह्येन्द्रियाणि चेत् ।**
**लीयन्ते हृदि जागर्ति चित्तं स्वप्नस्तदोच्यते ॥ ८३ ॥**

**एतच्च चेतनस्थानमिति** । एतत्पङ्कजाकृत्यधोवक्त्रं सुषिरं हृत्पङ्कजमि-

---

१ ख. ङ. °कं जठ° । २ क. ख. ग. °तनास्था° ।

त्यर्थः । अत्र चशब्दश्चेतनाभिव्यक्तिभूतस्थानान्तरसमुच्चयार्थः । स्थानान्तराणि तु 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इत्यादिश्रुत्युक्तादीनि प्राणादीनि । चेतनस्थानं चेतनस्य कूटस्थब्रह्मणः स्थानमभिव्यक्तिस्थानम् । अत्र चेतनशब्दो न जीवपरः । कुतः । श्रुतिविरोधात् । अथ यदिदं ब्रह्म पुरुष(?)म्' इत्यादिश्रुतिर्हि 'पुण्डरीकस्य संनिवेशम्' इत्यत्र पुण्डरीकस्य ब्रह्मस्थानत्वमाह । तथा हि भामत्यां दहराधिकरणे—"अथ यदिदमस्मिन्ब्रह्मपुरं दहरं सूक्ष्मगुहाप्रायं पुण्डरीकसंनिवेशं वेश्म दहरम्' इत्युपक्रम्य 'इमाः सर्वाः प्रजा अहरहर्ब्रह्म गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति' इति श्रुतिमुदाहृत्य स्वापकाले हि सर्व एवायं विद्वानविद्वांश्च जीवलोको हृत्पुण्डरीकाश्रयं दहराकाशाख्यं ब्रह्मलोकं प्राप्तोऽप्यनाद्यविद्यातमःपटलपिहितदृष्टितया ब्रह्मभूयमापन्नोऽहमस्मीति न वेद" इत्यादिना महता संदर्भेण दहरशब्दस्याकारो(?)जीवपरत्वदूषणपूर्वकं ब्रह्मपरत्वप्रतिपादनादत्रापि हृत्पङ्कजाधिष्ठातृत्वेन चेतनं ब्रह्मैवेत्यवगन्तव्यम् । तदस्मिन्नित्यादि । अस्मिंश्चेतने ब्रह्मणि तमसाऽनाद्यविद्ययाऽऽवृत्ते पिहिते सति तद्धृदयपङ्कजं यदा निमीलति मुकुली भवति तदाऽऽत्मा जीवः स्वपिति निद्राति । तत्पङ्कजं यदा विकसति तदा जीवो जागर्त्यहमिति बुध्यते ॥ ८२ ॥ ८३ ॥

मनश्चेल्लीयते प्राणे सुषुप्तिः स्यात्तदाऽऽत्मनः ॥ ८४ ॥

मनश्चेल्लीयत इत्याद्यस्मद्विरचितेऽध्यात्मविवेके वीक्ष्यतां बुधैरित्यन्तः स्पष्टार्थः ॥ ८४ ॥

स्वमपीतः परात्मानं स्वपित्यात्मेत्यतो मतः ।
श्रवणे नयने नासे वदनं गुदशेफसी ॥ ८५ ॥
बहिर्मलवहानि स्युर्नव स्रोतांसि देहिनाम् ।
स्त्रीणां त्रीण्यधिकानि स्युः स्तनयोर्द्वे भगेऽसृजः ॥८६॥
अस्थिस्नायुशिरामांसस्थानि जालानि षोडश ।
षट्कूर्चाः करयोरङ्घ्र्योः कंधरायां च मेहने ॥८७॥
पार्श्वयोः पृष्ठवंशस्य चतस्रो मांसरज्जवः ।
सेवन्यः पञ्च शिरसि द्वे जिह्वालिङ्गयोर्मते ॥ ८८ ॥
चतुर्दशाष्टादश वा संमता अस्थिराशयः ।
अस्थ्यां शरीरे संख्या स्यात्षष्टियुक्तं शतत्रयम् ॥८९॥
वलयानि कपालानि रुचकास्तरुणानि च ।
नलकानीति तान्याहुः पञ्चधाऽस्थीनि सूरयः ॥ ९० ॥

१ छ. °पीतं प° ।

त्रीण्येवास्थिशतान्यत्र धन्वन्तरिरभाषत ।
द्वे शते त्वस्थिसंधीनां स्यातामत्र दशोत्तरे ॥ ९१ ॥
कोरकाः प्रतरास्तुन्नाः सेवनाः स्युरुलूखलाः ।
सामुद्रा मण्डलाः शङ्खावर्ता वायसतुण्डकाः ॥ ९२ ॥
इत्यष्टधा समुद्दिष्टा मुनीन्द्रैरस्थिसंधयः ।
पेशीस्नायुशिरासंधिसहस्राद्वितयं मतम् ॥ ९३ ॥
नव स्नायुशतानि स्युश्चतुर्धा स्नायवो मताः ।
प्रतानवत्यः सुषिराः कण्डराः पृथुलास्तथा ॥ ९४ ॥
बन्धनैर्बहुभिर्बद्धा भूरिभारक्षमा भवेत् ।
नौरम्भसि यथा स्नायुशतबद्धा तनुस्तथा ॥ ९५ ॥
पञ्च पेशीशतान्याहुः शरीरस्थानि सूरयः ।
अधिका विंशतिः स्त्रीणां तत्र स्युस्तनयोर्दश ॥ ९६ ॥
यौवने ताः प्रवर्धन्ते दश योनौ तु तत्र च ।
द्वे अन्तः प्रसृते बाह्ये द्वे तिस्रो गर्भमार्गगाः ॥ ९७ ॥
शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्ताऽत्र तृतीयके ।
आवर्ते गर्भशय्याऽस्ति पित्तपक्वाशयान्तरे ॥ ९८ ॥
रोहिताभिधमत्स्यस्य सदृशी तत्र पेशिका ।
शुक्रार्तवप्रवेशिन्यास्तिस्रः प्रच्छादिका मताः ॥ ९९ ॥
शिराधमनिकानां तु लक्षाणि नव विंशतिः ।
सार्धानि स्युर्नवशती षट्पञ्चाशद्युता तथा ॥ १०० ॥
दश मूलशिरा ओजोवाहिन्यो हृदयाश्रिताः ।
द्व्यङ्गुलं चाङ्गुलदलं यवं यवदलं तथा ॥ १०१ ॥
गत्वा द्रुमदलस्येव सेवन्यः प्रतता यदा ।
भिद्यन्ते तास्तदा सप्त शतानि परिसंख्यया ॥ १०२ ॥
तासु जिह्वास्थिते द्वे द्वे वाग्रसज्ञानकारणे ।
घ्राणे गन्धवहे द्वे द्वे मेषोन्मेषकृतौ दृशोः ॥ १०३ ॥
श्रोत्रयोः शब्दग्राहिण्यौ तासु द्वे शार्ङ्गिणोदिते ।
धमन्यो रसवाहिन्यश्चतुर्विंशतिरीरिताः ॥ १०४ ॥
कुल्याभिरिव केदारस्ताभिर्देहोऽभिवर्धते ।
एताः प्रतिष्ठिता नाभ्यां चक्रनाभावरा इव ॥ १०५ ॥

१ घ. प्रचुरा° । २ घ. ङ. °याश्रयाः । द्व्य° ।

ऊर्ध्वं दश दशाधस्ताच्चतस्रस्तिर्यगायताः ।
ऊर्ध्वगा हृदयप्राप्ताः प्रतायन्ते पृथक्त्रिधा ॥ १०६ ॥
वातं पित्तं कफं रक्तं रसं द्वे द्वे विमुञ्चतः ।
शब्दं रूपं रसं गन्धं द्वे द्वे तत्रावगच्छतः ॥ १०७ ॥
द्वे द्वे च भाषणं घोषं स्वापं बोधं च रोदनम् ।
कुर्वाते द्वे नरे शुक्रं स्तन्यं तु स्रवतः स्त्रियाम् ॥ १०८ ॥
अधोगता अपि त्रेधा पृथक्पक्वाशयस्थिताः ।
प्रवर्तयन्ति तत्राऽऽद्या दश वातादि पूर्ववत् ॥ १०९ ॥
अन्नं भुक्तं धमन्यौ द्वे वहतोऽत्र समाश्रयात् ।
तोयं मूत्रं बलं द्वे द्वे नारीणामार्तवं त्विमे ॥ ११० ॥
विमुञ्चतो द्वे स्रोतांसि द्वे स्थूलान्त्रान्विते शकृत् ।
स्वेदं समर्पयन्त्यष्टौ तिरश्च्यो बहुधा मताः ॥ १११ ॥
रोमकूपेषु सन्त्यासां मुखानि स्वेदमुक्तये ।
प्रवेशयन्ति चाभ्यङ्गलेपादिप्रभवान्रसान् ॥ ११२ ॥
जीवस्थानानि मर्माणि शतं सप्तोत्तरं विदुः ।
सार्धकोटित्रयं रोम्णां श्मश्रुकेशाखिलक्षकाः ॥ ११३ ॥
स्रोतःशिराश्मश्रुकेशैः सह रोम्णां तु कोटयः ।
चतुष्पञ्चाशदाख्याताः सप्तषष्ट्या च सार्धया ॥ ११४ ॥
लक्षाणां सहिता मानं जलादेरधुनोच्यते ।
दशाञ्जलि जलं ज्ञेयं रसस्याञ्जलयो नव ॥ ११५ ॥
रक्तस्याष्टौ पुरीषस्य सप्त स्युः श्लेष्मणश्च षट् ।
पित्तस्य पञ्च चत्वारो मूत्रस्याञ्जलयस्त्रयः ॥ ११६ ॥
वसाया मेदसो द्वौ तु मज्जा त्वञ्जलिसंमिता ।
अर्धाञ्जलिः शिरोमज्जा श्लेष्मसारो बलं तथा ॥ ११७ ॥
इति प्रत्यङ्गसंक्षेपो विस्तरस्त्विह तत्त्वतः ।
अस्मद्विरचितेऽध्यात्मविवेके वीक्ष्यतां बुधैः ॥ ११८ ॥

॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ १०० ॥ १०१ ॥ १०२ ॥ १०३ ॥ १०४ ॥ १०५ ॥ १०६ ॥ १०७ ॥ १०८ ॥ १०९ ॥ ११० ॥ १११ ॥ ११२ ॥ ११३ ॥ ११४ ॥ ११५ ॥ ११६ ॥ ११७ ॥ ११८ ॥

---

१ ङ. °भ्यङ्गे ले° । २ घ. ङ. °णस्तु ष° ।

गुदालिङ्गान्तरे चक्रमाधाराख्यं चतुर्दलम् ।
परमः सहजस्तद्वदानन्दो वीरपूर्वकः ॥ ११९ ॥
योगानन्दश्च तत्र स्यादैशानादिदले फलम् ।
अस्ति कुण्डलिनी ब्रह्मशक्तिराधारपङ्कजे ।
आब्रह्मरन्ध्रमृजुतां नीतेयममृतप्रदा ॥ १२० ॥

**गुदालिङ्गान्तर** इति । गुदलिङ्गयोर्मध्ये तस्याऽऽधारचक्रस्यैशानादिदले(ल)-चतुष्टये जीवस्थित्या परमानन्दादयः पटलान्याधारपङ्कजे । तस्मिन्नेवाऽऽधारपङ्कजे कुण्डलिनीत्यन्वर्थतया सर्वरूपिणी ब्रह्मशक्तिर्ब्रह्मणोऽसङ्गोदासीनस्य परमात्मनः कर्तृत्वाद्युपहिताकारिण्यविद्याशक्तिः । सैव मूर्तिमती कुटिलाकारतया कुण्डलिनीत्युच्यते । आब्रह्मरन्ध्रं ब्रह्मरन्ध्रं नाम सुषुम्नाया अग्रं शिरसि सहस्रदलचक्रमध्यगं तत्पर्यन्तम् । **ऋजुतां नीतेति** । गुरूपदिष्टप्रकारेण यमनियमादिक्रमेण वायोरिडापिङ्गलयोः संचारं निरुध्य तेन वायुना सवायुना(?) ब्रह्मग्रन्थो(न्थौ) सुषुम्नामूलरन्ध्राच्छाद(दि)नीं फणामपसार्य तत्र प्रवेशितेन तेन ब्रह्मविष्णुग्रन्थीनां क्रमाद्विभेदे सति कुण्डलिनी चाष्टवक्रतां विहाय यदा ऋजुतां प्राप्यते । **अमृतप्रदेति** । तदा कुण्डलिनी स्वार्जवाद्ब्रह्मरन्ध्राविनिर्गतेन स्ववालाग्रेण सुधाधरं सहस्रदलं चक्रं विभिद्यते । ततोऽमृतं द्रावयतीति तथोक्ता ॥ ११९ ॥१२०॥

स्वाधिष्ठानं लिङ्गमूले षड्दलं चक्रमस्य च ।
पूर्वादिषु दलेष्वाहुः फलान्येतान्यनुक्रमात् ॥ १२१ ॥

आधारचक्रादूर्ध्वं लिङ्गमूले स्वाधिष्ठानाख्यं षड्दलं द्वितीयं चक्रम् । तस्य पूर्वादिदलेषु क्रमात्प्रश्रयादीनि फलान्याह—**स्वाधिष्ठानमिति** ॥ १२१ ॥

प्रश्रयः क्रूरता गर्वनाशो मूर्छा ततः परम् ।
अवज्ञा स्यादविश्वासः कामशक्तेरिदं गृहम् ॥ १२२ ॥

**अवज्ञा स्यादिति** । धर्मिपरोऽयं निर्देशः ॥ १२२ ॥

नाभौ दशदलं चक्रं मणिपूरकसंज्ञकम् ॥ १२३ ॥
सुषुप्तिरत्र तृष्णा स्यादीर्ष्या पिशुनता तथा ।
लज्जा भयं घृणा मोहः कषायोऽप्यविषादिता ॥ १२२४ ॥
क्रमात्पूर्वादिपत्रेषु स्याद्भानुभवनं च तत् ।
हृदयेऽनाहतं चक्रं शिवस्य प्रणवाकृतेः ॥ १२५ ॥

---

१ क. ग. घ. तस्य । २ क. ग. घ. ङ. षट्पत्रं । ३ घ. अविश्वस्या° । ४ क. °र्मियोगेऽयं ।

पूजास्थानं तदिच्छन्ति दलैर्द्वादशभिर्युतम् ।
लौल्यं प्रणाशः कपटं वितर्कोऽप्यनुतापिता ॥ १२६ ॥
आशाप्रकाशश्चिन्ता च समीहा समता ततः ।
क्रमेण दम्भो वैकल्यं विवेकोऽहंकृतिस्तथा ॥ १२७ ॥
फलान्येतानि पूर्वादिदलस्थस्याऽऽत्मनो जगुः ।
कण्ठेऽस्ति भारतीस्थानं विशुद्धिः षोडशच्छदम् ॥ १२८ ॥

तत ऊर्ध्वं नाभिहृदयकण्ठघण्टिकाभ्रूमध्यललाटकेशमूलब्रह्मरन्ध्रेष्वष्टसु स्थानेषु क्रमेण मणिपूरकानाहतविशुद्धिललनाज्ञामनःसोमसहस्रपत्राख्यानामष्टानां चक्राणां तत्तच्चक्रगणितदलसंख्यया प्रागाद्यारम्भक्रमेण प्रतिदलं पृथक्फलान्याह—**नाभौ दशदलमित्यादिना** ॥१२३॥१२४॥ १२५ ॥१२६॥ १२७ ॥१२८॥

तत्र प्रणव उद्गीथो हुंफड्वषडथ स्वधा ।
स्वाहा नमोऽमृतं सप्त स्वराः षड्जादयो विषम् ॥ १२९ ॥

उद्गीथ इति साम्नो द्वितीयो भागः । साम्नो हि पञ्च भागाः । प्रणवः प्रथम उद्गीथो द्वितीयः प्रतिहारस्तृतीय उपद्रवश्चतुर्थो निधनः पञ्चम इति । प्रणव इत्युद्गीथस्याऽऽदौ प्रयोज्य ओंकारः ॥ १२९ ॥

इति पूर्वादिपत्रस्थे फलान्यात्मनि षोडश ।
ललनाख्यं घण्टिकायां चक्रं द्वादशपत्रकम् ॥ १३० ॥

घण्टिकायां जिह्वामूले ॥ १३० ॥

म(म)दो मानस्ततः स्नेहः शोकः स्वेदश्च लुब्धता ।
अरतिः संभ्रमश्चोर्मिः श्रद्धा तोषोपरोधिता ॥ १३१ ॥
फलानि ललनाचक्रे स्युः पूर्वादिदलेष्विति ।
भ्रूमध्ये द्विदलं चक्रमाज्ञासंज्ञं फलानि तु ॥ १३२ ॥
आविर्भावाः सत्त्वरजस्तमसां क्रमतो मताः ।
अतोऽप्यस्ति मनश्चक्रं षड्दलं तत्फलानि तु ॥ १३३ ॥
स्वप्नो रसोपभोगश्च घ्राणं रूपोपलम्भनम् ।
स्पर्शनं शब्दबोधश्च पूर्वादिषु दलेष्विति ॥ १३४ ॥
ततोऽपि षोडशदलं सोमचक्रमितीरितम् ।
दलेषु षोडशेष्वस्य कलाः षोडश संस्थिताः ॥ १३५ ॥

ऊर्मयोऽशनापिपासाशोकमोहजरामरणानि षडूर्मयः ॥ १३१ ॥ १३२ ॥ १३३ ॥ १३४ ॥ १३५ ॥

---

१ घ. °प्रणाश° । २ क. घ. ङ. °ध्ये त्रिद° । ३ घ. ङ. ततोऽप्य° । ४ क. ग. ङ. °पयोग° ।

कृपा क्षमाऽऽर्जवं धैर्यं वैराग्यधृतिसंमदाः ।
हास्यं रोमाञ्चनिचयो ध्यानाश्रुस्थिरता ततः ॥ १३६ ॥
गाम्भीर्यमुद्यमोच्छ्र(मोऽच्छ)त्वमौदार्यैकाग्रते क्रमात् ॥१३७॥
फलान्युद्यन्ति जीवस्य पूर्वादिदलगामिनः ।
चक्रं सहस्रपत्रं तु ब्रह्मरन्ध्रे सुधाधरम् ॥ १३८ ॥
तत्सुधासारधाराभिरभिवर्धयते तनुम् ।
अनाहतदले पूर्वेऽष्टमे चैकादशे तथा ॥ १३९ ॥
द्वादशेऽवस्थितो जीवो गीतादेः सिद्धिमृच्छति ।
चतुर्थषष्ठदशमैर्दलैर्गीतादि नश्यति ॥ १४० ॥
विशुद्धेरष्टमादीनि दलान्यष्टौ श्रितानि तु ।
दद्युर्गीतादिसंसिद्धिं षोडशं तद्विनाशकम् ॥ १४१ ॥
दशमैकादशे पत्रे ललनायां सुसिद्धिदे ।
नाशकं प्रथमं तुर्यं पञ्चमं च दलं विदुः ॥ १४२ ॥
ब्रह्मरन्ध्रास्थितो जीवः सुधया संप्लुतो यदा ।
तुष्टो गीतादिकार्याणि सप्रकर्षाणि कारयेत् ॥ १४३ ॥
एषां शेषेषु पत्रेषु चक्रेष्वन्येषु च स्थितः ।
जीवो गीतादिसंसिद्धिं न कदाचिदवाप्नुयात् ॥ १४४ ॥

ध्यानाज्जातमश्रु ध्यानाश्रु । देहविधारकनाडीसंदोहमूलभूतस्य ब्रह्मग्रन्थेः स्थानं स्वरूपं वा ॥ १३६ ॥ १३७ ॥ १३८ ॥ १३९ ॥ १४० ॥ १४१ ॥ १४२ ॥ १४३ ॥ १४४ ॥

आधाराद्द्व्यङ्गुलादूर्ध्वं मेहनाद्द्व्यङ्गुलादधः ।
एकाङ्गुलं देहमध्यं तप्तजाम्बूनदप्रभम् ॥ १४५ ॥

आधाराद्द्व्यङ्गुलादिति । आधारादित्याधारचक्रादवधिभूतात् । देहमध्यमिति । देहस्योर्ध्वाधोभागयोर्मध्ये स्थितत्वाद्देहमध्यम् ॥ १४५ ॥

तत्राऽऽस्तेऽग्निशिखा तन्वी चक्रात्तस्मान्नवाङ्गुले ।
देहस्य कन्दोऽस्त्युत्सेधायामाभ्यां चतुरङ्गुलः ॥ १४६ ॥

चक्रात्तस्मादिति । देहमध्यचक्रादवधेर्ब्रह्माधिष्ठितत्वात् ॥ १४६ ॥

ब्रह्मग्रन्थिरिति प्रोक्तं तस्य नाम पुरातनैः ।
तन्मध्ये नाभिचक्रं तु द्वादशारमवस्थितम् ॥ १४७ ॥

---

१ ङ. ध्यानसुस्थि° । २ घ. सुधाधरे । ३ क. ख. ग. ङ. यथा । ४ घ. ङ. साधयेत् ।

**ब्रह्मग्रन्थिरिति** । तन्मध्ये ब्रह्मग्रन्थि[मध्ये] नाभिचक्रं नाभिरेव चक्रम् । द्वादशारं द्वादशाराणि यस्य तत्तथोक्तम् ॥ १४७ ॥

**लूतेव तन्तुजालस्था तत्र जीवो भ्रमत्ययम् ।**
***सुषुम्नया ब्रह्मरन्ध्रमारोहत्यवरोहति ॥ १४८ ॥**
**जीवः प्राणसमारूढो रज्ज्वां कोद्दलाटिको यथा ॥ १४९॥**

आतानवितानात्मकनाडीसंघातरूपत्वान्नाभिकन्दस्य तन्तुजालं दृष्टान्तः ॥ १४८ ॥ १४९ ॥

**सुषुम्नां परितो नाड्यः कन्दादाब्रह्मरन्ध्रतः ।**
**कन्दीकृत्य स्थिताः कन्दं शाखाभिस्तन्वते तनुम् ।**
**ताश्च भूरितरास्तासु मुख्याः प्रोक्ताश्चतुर्दश ॥ १५० ॥**

कन्दीकृत्याकन्दं कन्दं कृत्वा । अभूततद्भावे च्विः । ताश्च नाड्यः स्वशाखाभिः कन्दीकृतं कन्दं तनुं देहाकारं तन्वते ॥ १५० ॥

**सुषुम्नेडा पिङ्गला च कुहूरथ सरस्वती ।**
**गान्धारी हस्तिजिह्वा च वारणा च यशस्विनी ।**
**विश्वोदरा शङ्खिनी च ततः पूषा पयस्विनी ॥ १५१ ॥**
**अलम्बुषेति[1] तत्राऽऽद्यास्तिस्रो मुख्यतमा मताः ।**
**सुषुम्ना तिसृषु श्रेष्ठा वैष्णवी मुक्तिमार्गगा[2] ॥ १५२ ॥**
**कन्दमध्यास्थिता[3] तस्या इडा सव्येऽथ[4] दक्षिणे ।**
**पिङ्गलेडापिङ्गलयोश्चरतश्चन्द्रभास्करौ ॥ १५३ ॥**

॥ १५१ ॥ १५२ ॥ १५३ ॥

**कस्मात्कालगतेर्हेतुः सुषुम्ना कालशोषिणी ।**
**सरस्वती कुहूश्चाऽऽस्ते सुषुम्नायास्तु पार्श्वयोः ॥ १५४ ॥**

**कालगतेरिति** । अत्र कालशब्देन जीवस्य पिण्डावस्थानिमित्तभूताः स्वपनपरिस्पन्दक्षणा उच्यन्ते । त एव हेतुरिति यावत् । तस्य गतेः क्षयस्येत्यर्थः । **कालशोषिणीति** । इह कालशब्देन मृत्युरुच्यते तस्य शोषिणी प्रतिबन्धिनी ॥ ५४ ॥

**इडायाः पृष्ठपूर्वस्थे गान्धारीहस्तिजिह्विके ।**
**क्रमात्पूषायशस्विन्यौ पिङ्गलापृष्ठपूर्वयोः ॥ १५५ ॥**

---

* घ. पुस्तकेऽयं श्लोको नास्ति ।

---

१ ख. ग. ङ. °म्बुसेति । घ. म्बुशेति । २ घ. मुक्तिमार्गदा । ३ घ. ङ. °मध्ये स्थि° । ४ ङ. °व्ये तु द° ।

विश्वोदरा मध्यदेशे स्यात्कुहूहस्तिजिह्वयोः ।
मध्ये कुहूयशस्विन्यो वा(न्योर्वा)रणा संस्थिता मता ॥१५६॥
पूषासरस्वतीमध्यमधिशेते पयस्विनी ।
गान्धारिकासरस्वत्योर्मध्ये वसति शङ्खिनी ॥ १५७ ॥
अलम्बुषा कन्दमध्ये तत्रेडापिङ्गले क्रमात् ।
सव्यदक्षिणनासान्तं कुहूरामेहनं पुरः ॥ १५८ ॥
सरस्वत्यूर्ध्वमाजिह्वं गान्धारी पृष्ठतः स्थिता ।
आवामनेत्रमासाद्य पादाङ्गुष्ठं तु संस्थिता ॥ १५९ ॥

॥ १५५ ॥ १५६ ॥ १५७ ॥ १५८ ॥ १५९ ॥

हस्तिजिह्वा सर्वगा तु वारणाऽथ यशस्विनी ।
अङ्गुष्ठाद्दक्षिणाङ्घ्रिस्थाद्देहे विश्वोदरेऽखिले ॥ १६० ॥
शङ्खिनी सव्यकर्णान्तं पूषा त्वायाम्यनेत्रतः ।
पयस्विनी तु वितता दक्षिणश्रवणावधि ॥ १६१ ॥
अलम्बुषा पायुमूलमवलम्ब्य व्यवस्थिता ।
एवंविधे तु देहेऽस्मिन्मलसंचयसंवृत्ते ॥ १६२ ॥
प्रसाधयन्ति धीमन्तो भुक्तिं मुक्तिमुपायतः ।
तत्र स्यात्सगुणध्यानाद्भुक्तिर्मुक्तिस्तु निर्गुणात् ॥ १६३ ॥
ध्यानमेकाग्रचित्तैकसाध्यं न सुकरं नृणाम् ।
तस्मादत्र सुखोपायं श्रीमन्नादमनाहतम् ॥ १६४ ॥
गुरूपदिष्टमार्गेण मुनयः समुपासते ।
सोऽपि रक्तिविहीनत्वान्न मनोरञ्जको नृणाम् ॥ १६५ ॥

सर्वगा तु वारणेत्यत्र वारणेति नाडी तु सर्वगा सकलशरीरव्यापिनी ॥ १६० ॥ १६१ ॥ १६२ ॥ १६३ ॥ १६४ ॥ १६५ ॥

तस्मादाहतनादस्य श्रुत्यादिद्वारतोऽखिलम् ॥ १६६ ॥
गेयं वितन्वतो लोकरञ्जनं भवभञ्जनम् ।
उत्पत्तिमभिधास्यामस्तथा श्रुत्यादिहेतुताम् ॥ १६७ ॥

लोकरञ्जनं भवभञ्जनमिति द्वे गेयविशेषणे ॥ १६६ ॥ १६७ ॥

इति प्रथमे स्वराध्याये द्वितीयं पिण्डोत्पत्तिप्रकरणम् ॥ २॥

---

१ क, ग, घ, ङ, °म्बुसा क° । २ क, °सान्तः कु° ।

अथ तृतीयं नादस्थानश्रुतिस्वरप्रकरणम्।

शरीरं निरूप्य शारीरनादादिकारण(णं) [वक्तु]मारभमाणः श्रुत्यादिप्रपञ्च-निदानस्य चैतन्यादिसाधर्म्येण ब्रह्मत्वं रूपयित्वा तस्य परदेवतात्वमनुसंधायोपास्ते—

**चैतन्यं सर्वभूतानां विवृतं जगदात्मना।**
**नादब्रह्म तदानन्दमद्वितीयमुपास्महे ॥ १ ॥**

**चैतन्यमिति** । सर्वभूतानां सकलप्राणिनां चैतन्यम्। नादो हि स्फोटात्मना समस्तपदार्थप्रकाशकत्वसाधर्म्येण चैतन्यारोपविषयत्वाच्चैतन्यम् । जगदात्मना परिदृश्यमानचराचरप्रपञ्चाकारेण विवृतमतत्त्वतोऽन्यथाभूतम् । नादे श्रुतिवर्णादि-सकलशब्दप्रपञ्चप्रतिभासात्साधर्म्येण नामरूपा(पो)ल्लिखितस्य जगतोऽप्यधिष्ठान-त्वारोपात् । आनन्दमभिव्यञ्जकेऽस्मिन्नभिव्यङ्ग्यानन्दरूपारोपेण । अद्वितीयं स्वकार्यस्वरादिप्रपञ्चकारणत्वरूपेण ब्रह्मसाधर्म्येणैकत्वारोपात् । तदिति सर्वलो-कप्रसिद्धम् । नादब्रह्मेत्यभेदेन प्राधान्य आरोप्य विषयभूतनादानपह्नवे चैतन्या-द्यवयवयुक्तेन(?) समस्तवस्तुविषयं सावयवरूपकम्। **उपास्महे इति** । "अस्मदो द्वयोश्च" इति बहुवचनोपपत्तिः । अयमभिसंधिः । पर(रा)वाक्पर्यायस्य ब्रह्म-शब्देर्नादस्य ब्रह्मणोऽत्यन्तप्रत्यासन्नत्वात्तदुपासनायां कृतायां ब्रह्मप्राप्तिर्मणिप्र-भाप्रवृत्तस्य मणिलाभवद्भवेदिति ।

तथा चोक्तम्—"अतो गीतप्रपञ्चस्य श्रुत्या देहत्वदर्शनात् ।
अपि स्यात्सच्चिदानन्दरूपिणः परमात्मनः ॥
प्राप्तिः प्रभाप्रवृत्तस्य मणिलाभो यथा भवेत् ।
प्रत्यासन्नतयाऽत्यन्तं वीणावादेन" इत्यादि ॥ १ ॥

वनु(ननु)पासनायां सगुणेषु प्रसिद्धदेवतान्तरेषु सत्स्वपि किमचेतनस्य नादस्य ब्रह्मस्वरूपेण नो(णो)पादानमित्यत आह—

**नादोपासनया देवा ब्रह्मविष्णुमहेश्वराः ।**
**भवन्त्युपासिता नूनं यस्मादेते तदात्मकाः ॥ २ ॥**

**नादोपासनयेति** । तत्रोपपत्तिमाह—**यस्मादेते तदात्मका इति** । तदिति नादब्रह्म परामृश्यते । तस्मादभिन्ना यतोऽत इत्यर्थः ॥ २ ॥

तस्य नादस्य नित्यत्वमङ्गीकृत्य तदभिव्यक्तिक्रममाह—

**आत्मा विवक्षमाणोऽयं मनः प्रेरयते मनः ।**
**देहस्थं वह्निमाहन्ति स प्रेरयति मारुतम् ॥ ३ ॥**
**ब्रह्मग्रन्थिस्थितः सोऽथ क्रमादूर्ध्वपथे चरन् ।**
**नाभिहृत्कण्ठमूर्धास्येष्वाविर्भावयति ध्वनिम् ॥ ४ ॥**

---

१ क. ग. घ. ङ. °वृत्तं ज° । २ ङ. °यते ध्व° ।

आत्मा विवक्षमाण इत्यादिना। विवक्षमाण इति ब्रुव इच्छायां सनि तस्याऽऽर्धधातुकत्वाद्ब्रुवो वच्यादेशे पूर्ववत्सन इति निमित्तातिदेशत्वादात्मनेपदित्वे रूपम् ॥ ३ ॥ ४ ॥

**नादोऽतिसूक्ष्मः सूक्ष्मश्च पुष्टोऽपुष्टश्च कृत्रिमः ।**
**इति पञ्चाभिधां धत्ते पञ्चस्थानस्थितः क्रमात् ॥ ५ ॥**

नाभ्यादिस्थानेष्वाविर्भूतस्य नादस्य क्रमेण व्यपदेशभेदमाह—**नादोऽतिसूक्ष्म इति** ॥ ५ ॥

नादशब्दस्य योगतो निरुक्तिमाह—

**नकारं प्राणनामानं दकारमनलं विदुः ।**
**जातः प्राणाग्निसंयोगात्तेन नादोऽभिधीयते ॥ ६ ॥**

**नकारमिति**। प्राणनामानं प्राणेति नाम यस्यासौ प्राणनामा तम्। एतेन मन्त्रशास्त्रानुसारतो बीजाक्षराणां तत्तद्देवतातादूप्यायत्याऽत्र नकारदकारौ प्राणाग्नी इत्युक्तं भवति। विदुर्मान्त्रिका इति शेषः । जातो विदितोऽभिव्यक्त इति यावत्। उक्तपञ्चविधनादस्याप्यविशेषेण गीतोपयोगित्वे प्राप्ते हृत्कण्ठमूर्धस्थानेष्वेव श्रुतिपदनाडीसद्भावात्तत्रत्यस्यैव नादत्रयस्य गीतोपयोगित्वम् । नामान्तराणि स्वरूपभेदो वा ॥ ६ ॥

**व्यवहारे त्वसौ त्रेधा हृदि मन्द्रोऽभिधीयते ।**
**कण्ठे मध्यो मूर्ध्नि तारो द्विगुणश्चोत्तरोत्तरः ॥ ७ ॥**

**व्यवहारे त्विति**। व्यवह्रियत इति व्यवहारो गीतं तस्मिन् । तुः पक्षं व्यावर्तयति । नाभ्या(भ्यां) स्वस्थानयोर्नैवामित्यर्थः । **द्विगुणश्चोत्तरोत्तर इति**। उत्तरोत्तरो मन्द्रादुत्तरो मध्यो मध्यादुत्तरस्तार इति यावत्। द्विगुणः। गुण उच्चारणप्रयत्नः। द्वौ गुणो यस्येति द्विगुणः। अयमर्थः। मन्द्रस्थानस्थितात्षड्जादिव्यपदेशवतो नादान्मध्यस्थानस्थितः स एव षड्जादिव्यपदेशवान्। ततो द्विगुणप्रयत्नसाध्यत्वाद्द्विगुण इति । पूर्वस्थानस्थितात्क्रमेणाऽऽरोहे सत्यष्टमस्वर इति यावत्। अत्रासाविति नामसाम्यनिर्देशेऽपि व्यवहारानुपयोगात्स्वररूपनादाद्द्वैगुण्यं विवक्षितम्। श्रुतिरूपनादाविवक्षायां तु त्रयोविंशः ॥ ७ ॥

द्विगुणस्थानान्युक्त्वा क्रमप्राप्ताः श्रुतीर्नादभेदत्वेनाऽऽह—

**तस्य द्वाविंशतिर्भेदाः श्रवणाच्छ्रुतयो मताः ।**
**हृद्यूर्ध्वनाडीसंलग्ना नाड्यो द्वाविंशतिर्मताः ॥ ८ ॥**

**तस्येति**। तस्यैकैकस्थानाविर्भूतस्य नादस्य । सामान्यविवक्षयैकत्वम्। **द्वाविंशतिर्भेदा इति**। अभिव्यञ्जकनाडीभेदवशात् । श्रवणाच्छ्रवणयोग्यत्वात्। श्रुतयः। श्रूयन्त इति व्युत्पत्त्या। एतदुक्तं भवति। यद्यपि श्रवणयो-

ग्यत्वमनुरणनात्मनः स्वरतानादिरूपेण दीर्घदीर्घस्यापि ध्वनेर्विद्यते तथाऽप्यत्र मारुताद्याह( ह )त्यनन्तरोत्पन्नक्षणप्रथमक्षणवर्तिश्रवणमात्रयोग्यध्वनेरेव श्रुतित्वमिति। तत्र मन्द्रस्थाने श्रुतिभेदजनकनाडीनां संनिवेशमाह—हृदीति। ऊर्ध्वनाड्याविडापिङ्गले तयोः संलग्ना नाड्यः सच्छिद्रनलिकाः ॥ ८ ॥

**तिरश्च्यस्तासु तावत्यः श्रुतयो मारुताहताः ।**
**उच्चोच्चतरतायुक्ताः प्रभवन्त्युत्तरोत्तरम् ॥ ९ ॥**

तासु नाडीषूत्तरोत्तरा उच्चोच्चतरतायुक्ताः। उच्चोच्चतरा चोच्चोच्चतरे तयोर्भावावुच्चोच्चरते ताभ्यां युक्ताः श्रुतयः प्रभवन्ति । अयमर्थः । मन्द्रस्थानप्रथमनाड्युत्पन्ना श्रुतिरतिनीचा । तदपेक्षया द्वितीयतृतीययोः श्रुत्योरुच्चोच्चरते । तत्र द्वितीयाया उच्चायास्तृतीया किंचिदुच्चेति तरप्रयोगः । एवं तृतीयाचतुर्थ्यादिषु श्रुतिषु द्वयोर्द्रष्टव्यमिति ॥ ९ ॥

एवं प्रथमस्थानोक्तमर्थमुत्तरोत्तरस्थानद्वयेऽप्यतिदिशति—

**एवं कण्ठे तथा शीर्षे श्रुतिर्द्वाविंशतिर्मता ॥ १० ॥**

**एवं कण्ठ इति** ॥ १० ॥

शरीरे प्रतिस्थानमुक्तसंख्याकनाडीसंनिवेशस्य तत्तच्छ्रुत्या नादस्य च परोक्षत्वात्तत्सद्भावे संदेहः स्यादिति तन्निरासार्थं प्रत्यक्षतः संवादयितुं प्रतिज्ञाय निर्दिशति—

**व्यक्तये कुर्महे तासां वीणाद्वंद्वे निदर्शनम् ।**
**द्वे वीणे सदृशौ कार्ये यथा नादः समो भवेत् ॥ ११ ॥**

**व्यक्तय इत्यादिना**। सदृशौ सदृशाकारे । **यथा नादः समो भवेदिति** । यथा सदृशाकारयोर्नादः समस्तथा कार्ये । नादसाम्ये लाघवादिविशिष्टाकारसाम्यं निमित्तमित्यर्थः ॥ ११ ॥

**तयोर्द्वाविंशतिस्तन्त्र्यः प्रत्येकं तासु चाऽऽदिमा ।**
**कार्या मन्द्रतमध्वाना द्वितीयोच्चध्वनिर्मनाक् ।**
**स्यान्निरन्तरता श्रुत्योर्मध्ये ध्वन्यन्तराश्रुतेः ॥ १२ ॥**

**तासु चेति**। वीणयोः प्रत्येकं द्वाविंशतौ तन्त्रीषु । चकारो द्वितीयवीणागततन्त्रीसमुच्चयार्थः । आदिमा प्रथमा तन्त्री। कर्त्रपेक्षया संनिहितेत्यर्थः । मन्द्रतमध्वानाऽतिमन्द्रस्वना। उत्तरोत्तरापेक्षया पूर्वपूर्वस्य मन्द्रत्वे संभवत्यपि सर्वापेक्षयेयं मन्द्रेति तमप्रयोगः। अतिमन्द्रस्वनत्वं च तन्त्र्या अतिशिथिलीकरणेन भवति। ततोऽपि शिथिलीकरणे यथा सानुरञ्जेप्यन( थाऽनुरञ्जकान्यमन्द्र )ध्वन्य(?)-संभवस्तथा कार्येत्यर्थः। द्वितीया तन्त्री मनागुच्चध्वनिः कार्या । मनागुच्चध्वनित्वस्यैव व्यवस्थापकं स्यान्निरन्तरतेति। श्रुत्योः पूर्वोत्तरतन्त्र्युत्पन्नयोर्मध्ये ध्वन्यन्तराश्रुतेर्ध्व-

न्यन्तरस्य पूर्वोत्तरश्रुतिविलक्षणस्य पूर्वश्रुतेः किंचिदुच्चस्योत्तरश्रुतेः किंचिन्नीचस्या-न्यध्वनेरश्रुतिरश्रवणम्। अश्रुतेरिति हेतौ पञ्चमी। मध्यगतध्वन्यन्तराश्रवणं निमित्ती-कृत्य श्रुत्योर्निरन्तरता यथा स्यात्तथा तन्त्री किंचिद्दृढीकरणेन मनागुच्चध्वनिः कार्येत्यर्थः। अत्र नैरन्तर्यं ध्वन्योरेवोक्तम्। तत्तु तन्त्र्योर्दण्डादिप्रदेशस्थयोः। अतस्तन्त्र्योर्दण्डादिषु मध्येऽवकाशो दृश्यत इति तत्र ध्वन्यन्तरसंभवो न शङ्क-नीयः। द्वितीयेत्युपलक्षणम्। तेन तृतीयादयोऽपि द्वितीयाद्यपेक्षया किंचित्किं-चिद्दृढीकरणेन मनागुच्चध्वनयः कार्या इत्यर्थः॥ १२॥

**अधराधरतीव्रास्तास्तज्जो नादः श्रुतिर्मतः।**
**वीणाद्वये स्वराः स्थाप्यास्तत्र षड्जश्चतुःश्रुतिः॥१३॥**
**स्थाप्यस्तन्त्र्यां तुरीयायामृषभस्त्रिश्रुतिस्ततः।**
**पञ्चमीतस्तृतीयायां गान्धारो द्विश्रुतिस्ततः॥ १४॥**
**अष्टमीतो द्वितीयायां मध्यमोऽथ चतुःश्रुतिः।**
**दशमीतश्चतुर्थ्यां स्यात्पञ्चमोऽथ चतुःश्रुतिः॥ १५॥**
**चतुर्दशीतस्तुर्यायां धैवतस्त्रिश्रुतिस्ततः।**
**अष्टादश्यास्तृतीयायां निषादो द्विश्रुतिस्ततः॥ १६॥**

एवं कृते तास्तन्त्र्योऽधराधरास्तीव्रा उच्चोच्चध्वनयो भवन्ति। यथा शरीरे श्रुतय उत्तरोत्तरोच्चा उत्पद्यन्ते तथा वीणायामधरोच्चा उत्पद्यन्त इति स्वार-स्यम्। तज्जस्तासु तन्त्रीष्वाहत्योत्पन्नो नादः श्रुतिरिति मतः। अत्र श्रुति-शब्दं( ब्द )निरुक्तिपूर्वकं श्रुत्येकत्वादिविषयविकल्पे **मतङ्गो** मतभेदानदर्शयत्।

तद्यथा-" श्रवणार्थस्य धातोः क्तिप्रत्यये च सुसंश्रिते।
श्रुतिशब्दः प्रसाध्योऽयं शब्दज्ञैः कर्मसाधनैः "॥

श्रूयन्त इति श्रुतयः। सा चैकाऽनेका वा। एकैव श्रुतिरिति। तद्यथा—तत्राऽऽदौ तावदिहाकाशपवनसंयोगात्पुरुषप्रयत्नप्रेरितो ध्वनिर्नाभेरूर्ध्वमाकाशदे-शमाक्रामत धू(मन्धू?)पवत्सोपानपदावस्थानं पवनेच्छयाऽऽरोहन्नन्तर्भूतपूरणप्रत्य-यार्थतया चतुःश्रुत्यादिभेदभिन्नः प्रतिभासत इति **मामकीयं** मतम्। +चतु-र्थ्य(?)श्रुत्यादिभेदभिन्न इत्यर्थः। अन्ये तु पुनर्द्विप्रकारां श्रुतिं मन्यन्ते। कथं स्वरान्तरविभागान्( त् )। तथा चाऽऽह **विश्वावसुः**—

" श्रवणेन्द्रियग्राह्यत्वाद्ध्वनिरेव श्रुतिर्भवेत्।
सा चैका द्विविधा ज्ञेया स्वरान्तरविभागतः॥
नियतश्रुतिसंस्थानाद्गीयते सप्तगीतिषु।
तस्मात्स्वरगता ज्ञेयाः श्रुतयः श्रुतिवेदिभिः "॥

---

+ चतुर्थश्रुत्यादीति पाठः।

---

१ ग. °रक्ता।

शुद्धस्वरूपेत्यर्थः ।

" अन्तरस्वरवर्तिन्यो ह्यन्तरश्रुतयो मताः " ।

विकृतस्वरूपेत्यर्थः । प्रयोगबहुत्वापेक्षया श्रुतय इति बहुवचननिर्देशः ।

" एतासामपि वैस्वर्यं क्रियाक्रमविभागतः " ।

केचित्स्थानत्रये योगात्त्रिविधां श्रुतिं मन्वते । अन्ये त्विन्द्रियवैगुण्यात्त्रिविधां श्रुतिं मन्यन्ते । इन्द्रियवैगुण्यं च त्रिविधम् । सहजं दोषजमभिघातजं चेति । अत्रेन्द्रियं मनः । तत्र सत्त्वगुणयुक्तं सहजम् । रजस्तमोयुक्तं दोषजम् । अम्लादिरसोपहतमभिघातजमित्यर्थः । अपरे तु वातपित्तकफसंनिपातभेदभिन्नां चतुर्विधां श्रुतिं प्रतिपेदिरे । तथा चाऽऽह तुम्बरुः—

" उच्चैस्तरो ध्वनी रूक्षो विज्ञेयो वातजो बुधैः ।
गम्भीरो घनलीनस्तु ज्ञेयोऽसौ पित्तजो बुधैः ॥
स्निग्धश्च सुकुमारश्च मधुरः कफजो ध्वनिः ।
त्रयाणां गुणसंयुक्तो विज्ञेयः संनिपातजः " ॥

एते तु शब्दभेदत्वेन वक्ष्यन्ते । अपरे तु वेणादयो मुनयो नवविधां श्रुतिं मन्यन्ते । तथा हि—" द्विश्रुतिस्त्रिश्रुतिश्चैव चतुःश्रुतिक एव च ।
स्वरप्रयोगः कर्तव्यो वंशच्छिद्रगतो बुधैः " ॥

भरतेनाप्युक्तम्—

"द्विकत्रिकश्च(च)तुष्कास्तु ज्ञेया वंशगताः स्वराः ।
कम्पमानार्धमुक्ताश्च व्यक्तमुक्ताङ्गुलिस्वराः ।
इति तावन्मया प्रोक्ताः समीच्यः श्रुतयो नव " इति ।

एतानि षण्मतानि स्वरश्रुत्योरभेदमङ्गीकृत्य प्रवर्तितानीति मन्तव्यम् । तानि त्वभिव्यङ्ग्याभिव्यञ्जकत्वाभ्यां साक्षाद्भिन्नरूपायाः(पयोः) स्वरश्रुत्योर्भेदापह्नवान्न समीचीनानि । अत्र केचिन्मीमांसाधिमांसलिताधियो धीरा द्वाविंशतिं श्रुतीर्मन्यन्ते । केचन पुनः षट्षष्टिभेदभिन्नाः श्रुतय इति वदन्ति । अन्ये पुनरानन्त्यं वर्णयन्ति श्रुतीनाम् । तथा चाऽऽह कोहलः—

"द्वाविंशतिं केचिदुदाहरन्ति श्रुतीः श्रुतिज्ञानविचारदक्षाः ।
षट्षष्टिभिन्नाः खलु केचिदासामानन्त्यमेव प्रतिपादयन्ति " इति ।

तत्र—"आनन्त्यं हि श्रुतीनां च सूचयन्ति विपश्चितः ।
यथा ध्वनिविशेषाणाममानं गगनोदरे ॥

---

१ ग. °यामाम° । २ ग. वेणवाद° ।

उत्तालपवनोद्वेलज्जलराशिसमुद्भवाः ।
इयत्यः प्रतिपद्यन्ते न तरङ्गपरम्पराः " ॥

इति श्रुतीनामानन्त्यं दर्शितमिति । अस्मिन्पक्षे रणनानुरणनात्मकयोः श्रुति-स्वरयोर्भेदाङ्गीकारेऽप्यनुरणनरूपाणामपि ध्वनीनां श्रुतित्वमभिधायोभयेषामपि वीचीतरङ्गन्यायेनोत्पद्यमानानां तेषामतिसूक्ष्मभागकल्पनया प्रतिध्वन्यवयवभूतध्वनिबहुत्वविवक्षयाऽऽनन्त्यं दर्शितम् । तदनुपपन्नमिति मन्तव्यम् । यद्यपि श्रवण-योग्यस्य ध्वनेरिन्द्रियग्राह्यत्वाक्षिप्तसावयवत्वेन त्रसरेणुवदवयवाः सन्तु तथाऽपि तेषां श्रोत्रप्रत्यक्षमूलेनानुमानेनार्थापत्त्या वाऽन्यतरेणैव त्रसरेणुगतपरमाणुवद्गम्य-तया श्रोत्रग्राह्यत्वाभावात् । स्वतः स्वराभिव्यक्तिहेतुत्वाभावेनाश्रुतित्वादिति । द्वाविंशतिश्रुतिपक्षे षट्षष्टिश्रुतिपक्षे च यद्यपि श्रुतिस्वरयोर्भेदाङ्गीकारः समान एव तथाऽपि द्वाविंशतिश्रुतिपक्षे द्वाविंशतिः श्रुतय एव मन्द्रस्थाः स्थानान्तर-योरपि द्विगुणत्रिगुणत्वेनाऽऽवत्यन्ते इति । षट्षष्टिश्रुतिपक्षे तु तावत्य एव श्रुतयः स्थानत्रयेऽप्यनावृत्ताः परस्परं भिन्ना इति च वैषम्यम् । तत्रानावृत्तिपक्षस्वीकारे षड्जादीनामपि स्वराणामावृत्त्यभावान्मध्यतारस्थाश्चतुर्दश स्वराः पृथग्व्यपदेश-भाजो भवेयुः । नैव तथा व्यवहारः । अत एव मतङ्गादिदर्शितेषु नवसु पक्षेषु द्वाविंशतिश्रुतिपक्षमेव रणनानुरणनात्मना साक्षादनुभूयमानश्रुतिस्वरभेदानपह्नव-वेनाऽऽवृत्त्या सप्तानामेव स्वराणां गुणाभिन्नानां व्यवहारोपयोगित्वसिद्धेश्च सार-तमं निश्चित्य **निःशङ्को** वीणयोर्निदर्शितानां तासां द्वाविंशतिश्रुतीनां मध्ये चतुर्थीप्रभृतिषु शास्त्रानुसारेण पूर्वोत्तरावधिप्रदर्शनपूर्वकं षड्जादिसप्तस्वरस्थापनं विदधाति—**वीणाद्वय इत्यादिना** । **चतुःश्रुतिरिति** । स्वाभिव्यक्तिकरणत्वेन चतस्रः श्रुतयो यस्येति स तथोक्तः । एवं त्रिश्रुतिरित्यादौ द्रष्टव्यम् ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

**एकविंश्या द्वितीयायां वीणैकाऽत्र ध्रुवा भवेत् ॥ १७ ॥**

अत्र वीणयोः । एका ध्रुवा भवेदिति । अनयोश्चलत्वध्रुवत्वे सारणान्वय-व्यतिरेकानुविधायिनी ॥ १७ ॥

इति ध्रुववीणा ।

**चलवीणा द्वितीया तु तस्यां तन्त्रीस्तु[1] सारयेत् ॥ १८ ॥**

**द्वितीयेति** । ध्रुवत्वेन कल्पिताया अन्येत्यर्थः । अत्र तुशब्दो व्यपदे-शान्तरपरिग्रहार्थः । श्रुतिस्वरेयत्तापरिज्ञानार्थं चलवीणायां सारणां विदधाति—**तस्यामिति** । **तन्त्रीस्तु सारयेदिति** । तुशब्दो भिन्नक्रमः । तस्यां त्विति

१ ख. तन्त्रीं तु सा° ।

योजना ध्रुवातो वैषम्यप्रदर्शनार्था । सारयेत्सारणां कुर्यात् । स्वस्वतन्त्रो(न्त्र्यु)-त्थितात्स्वरात्तत्तच्छ्रुतिस्थानात्प्रच्याव्य श्रुत्यन्तराणि तन्त्रीः प्रापयेदित्यर्थः॥ १८॥

सारयेदित्यनेन नियमेन श्रुत्यन्तरप्रापणे प्राप्ते प्रथमादिसारणासु श्रुत्यन्तरनियममाह—

**स्वोपान्त्यतन्त्रीमानेयास्तस्यां सप्त स्वरा बुधैः ॥ १९ ॥**

**स्वोपान्त्येति** । तस्यां प्रथमायां सारणायाम् ॥ १९ ॥

ननु श्रुत्यन्तरप्राप्त्या स्वरान्तरत्वं किं न स्यादित्याह—

**ध्रुववीणास्वरेभ्योऽस्यां चलायां ते स्वरास्तदा ।**
**एकश्रुत्यपकृष्टाः स्युरेवमन्याऽपि सारणा ॥ २० ॥**

**ध्रुववीणास्वरेभ्य इति** । ते स्वरास्तदैकश्रुत्यपकृष्टाः स्युरित्यत्र त इति ध्रुवायामिव चतुःश्रुतिकत्वादिलक्षणानां षड्जादीनां परामर्शाच्छ्रुत्यन्तरप्राप्तावप्येकश्रुत्यपकर्षेण तेषामेव नीचत्वमात्रप्रतीतेर्विशेषताभावात्स्वरान्तरत्वं न स्यादित्यर्थः । उक्तं प्रकारं सारणान्तरेऽप्यतिदिशति—**एवमिति** । पूर्वत्र सारणायामेकश्रुत्यपकृष्टात्स्वरात्प्रकृ(?)तिकत्वात्तेषां ततोऽप्युपान्त्यतन्त्र्यानयनमिहान्यशब्दार्थः ॥ २० ॥

द्वितीयादिषु सारणासु ज्ञेयं दर्शयति—

**श्रुतिद्वयलयादस्यां चलवीणागतौ गनी ।**
**ध्रुववीणोपगतयो रिधयोर्विशतः क्रमात् ॥ २१ ॥**
**तृतीयस्यां सारणायां विशतः सपयो रिधौ ।**
**निगमेषु चतुर्थ्यां तु विशन्ति समपाः क्रमात् ॥ २२ ॥**

**श्रुतिद्वयेत्यादिना**। अस्यां द्वितीयसारणायां चलवीणागतौ स्वस्योपान्त्यतन्त्रीस्थितौ गनी गान्धारनिषादौ ध्रुववीणोपगतयोर्ध्रुववीणायां स्वस्वाधारश्रुतिस्थयो रिधयोर्ऋषभधैवतयोः क्रमादृषभे गान्धार(रो)धैवते निषादश्च श्रुतिद्वयलयात्प्रातिस्विकश्रुतिद्वयस्य परित्यागाद्विशतो लीनौ भवतः । ध्वनिसाम्यादेकाकारतां भजत इति यावत् । एवं तृतीयचतुर्थसारणयोरपि स्वरान्तरप्रवेशो द्रष्टव्यः । ननु चतुर्थसारणायां मन्द्रषड्जस्य निषादे प्रवेश उच्यते । तत्कथमुपपद्यते । 'कार्या मन्द्रतमा '(मध्वाना) इति षड्जादिमश्रुतेरारम्भात्तत्पूर्वध्वन्यसंभवेनोपान्त्यतन्त्र्यभावात्सप्तध्वन्यसंभवात्तन्त्र्यभावात्(?) तथाऽपि मन्द्रस्वरसप्तकस्याऽऽवृत्तौ षड्जनिषादयोः संनिधानान्निषादाधारश्रुतेरुपान्त्यत्वं कल्पयित्वा प्रवेशः पर्यवस्यतीत्युपपन्नम् । अथवा स्थानान्तरावृत्तस्य तस्यैव षड्जस्य पूर्वं निषादसंभवात्तस्मिन्प्रवेशो द्रष्टव्यः ॥ २१ ॥ २२ ॥

सारणानां फलमाह—

---

१ ग. °षलाभाभा° ।

**श्रुतिद्वाविंशतावेवं सारणानां चतुष्टयम् ।**
**ध्रुवाश्रुतिषु लीनायामियत्ता ज्ञायते स्फुटम् ।**
**अतः परं तु रक्तिघ्नं न कार्यमपकर्षणम् ॥ २३ ॥**

**श्रुतिद्वाविंशताविति** । यद्येवं स्यादेतदनावृत्तिमतानुसारेण सारणापञ्चकेनापि सप्तानामेव स्वराणामेकोनात्रिंशच्छ्रुतीयत्तानिश्चयः कर्तुं शक्यत इति । नैवम् । स्वरास्तावच्छ्रुत्यनुरणनात्मकाः । ते च षड्जादयो लोके शास्त्रे च चतुर्थ्यादिश्रुतिषु मयूरादिस्वरसंवादित्वेनाभिव्यक्ताः सिद्धाः । तेषां तदुक्तरीत्योत्कर्षणेन पञ्चम्यादिषु श्रुतिषु प्रापणे कृते तादृशानुरणनाभावान्मन्द्रमध्यमयोरुत्तरोत्तरस्थानाक्रमणेन तारमन्द्रव्यवस्थितेरपायाच्च । यतो रक्तिघातोऽतः सारणान्तरं न कर्तव्यमित्यभिसंधायोक्तमतः परं त्विति ॥ २३ ॥

इत्थमियत्तया निश्चिताभ्यः श्रुतिभ्यश्च स्वराणां निष्पत्तिमाह—

**श्रुतिभ्यः स्युः स्वराः षड्जर्षभगान्धारमध्यमाः ।**
**पञ्चमो धैवतश्चाथ निषाद इति सप्त ते ॥ २४ ॥**

**श्रुतिभ्यः स्युः स्वरा इति** । चतसृभ्यस्तिसृभ्यो द्वाभ्यां च यथायोगं[1] द्वाविंशतिश्रुतिभ्यः सप्त स्वरा भवन्तीत्यर्थः । अत्र पञ्च पक्षाः संभवन्ति । श्रवणैकेन्द्रियग्राह्यत्वाद्विशेषस्पर्शशून्ययोः स्वरश्रुत्योर्जातिव्यक्त्योरिव तादात्म्यमिति **प्रथमः** पक्षः । दर्पणे मुखविवर्तवच्छ्रुतिषु स्वरा विवर्तन्त इति **द्वितीयः** । यथा घटस्य मृत्पिण्डदण्डकार्यत्वं तथा स्वराणां श्रुतिकार्यत्वमिति **तृतीयः** । क्षीरं दधिरूपेणेव श्रुतयः स्वररूपेण परिणमन्त इति **चतुर्थः** । प्रदीपादन्धकारस्थितघटाद्यभिव्यक्तिवच्छ्रुतिभ्यः स्वराणामभिव्यक्तिरिति **पञ्चमः** । **नाऽऽद्यः** । स्वरश्रुत्योर्भिन्नबुद्धिग्राह्यत्वादाश्रयाश्रयित्वभेदाच्च जातिव्यक्त्योरपि निर्विशेषं न सामान्यमिति न्यायेन भेदस्य सिद्धत्वाच्च । न **द्वितीयः** । विवर्तत्वे हि स्वराणां भ्रान्तत्वं स्यात् । न च तथा तेषामबाधितप्रयोगहेतुत्वदर्शनात् । **तृतीयोऽपि न** परीक्षाक्षमः । स्वरव्यतिरेकेण श्रुतिसद्भावे प्रमाणाभावादिति वक्तुं हि न युक्तम् । स्वरस्य हि श्रूयमाणमनुरणनात्मकत्वं रणनमन्तरेण नोपपद्यत इत्यर्थापत्त्या वाऽयं स्वरो रणनपूर्वकः । अनुरणनात्मकत्वात् । दण्डाहतजयघण्टानुरणनशब्दवदित्यनुमानेन वा तत्सिद्धेः । सत्यम् । यद्यपि स्फुटपौर्वापर्येण कार्यकारणभावप्रतीतिरस्ति तथाऽप्युपादानस्य मृत्पिण्डादेर्यथा घटिकादिकार्यनिष्पत्तौ भेदेनानुपलब्धिर्न तथेह स्वरनिष्पत्तौ श्रुतीनामनुपलम्भ इति तासामकारणत्वान्न तृतीयः। **चतुर्थपञ्चमावदुष्टत्वे मतङ्गादिसंमतत्वाद्ग्राह्यौ**। अथ शुद्धस्वरानन्वर्थतया प्रसिद्धैर्नामभिः परिगणयति-**षड्जेति**। षड्जादिनाम्नामन्वर्थता **मतङ्गादिभिरुक्ता** ।

१ ग. 'योग्यं द्वा'

तद्यथा—"षण्णां स्वराणां जनकः षड्भिर्वा जन्यते स्वरैः ।
षड्भ्यो वा जायतेऽङ्गेभ्यः षड्ज इत्यभिधीयते " ॥

षडपि स्वराञ्जनयति प्रकाशतीति जनेरन्तर्भावितण्यर्थात् " अन्येष्वपि दृश्यते " इति डप्रत्यये टिलोपे च सति षड्ज इति रूपम् । षड्भिः स्वरैरङ्ग-भावेन प्रविष्टैर्जन्यते प्रकाश्यत इति वा षड्जः । पूर्ववद्रूपसिद्धिः । षड्भ्यो नासाकण्ठोरस्तालुजिह्वारन्ध्रस्थानेभ्यो जायत इति वा । " पञ्चम्यामजातौ " इति डप्रत्यये षड्ज इति ।

प्राप्नोति हृदयं शीघ्रमन्यस्माद्दृषभः स्मृतः ।
स्त्रीगवीषु यथा तिष्ठन्विभाति ऋषभो महान् ।
स्वरग्रामे समुत्पन्नः स्वरोऽयमृषभस्तथा " ॥

ऋषति गच्छति हृदयमन्यस्वरेभ्य इति " ऋष गतौ " इत्यस्माद्धातोरौणा-दिके भकप्रत्यय ऋषभ इति रूपम् । यथा गोसमूहे बलीवर्दस्तथा स्वरसमूहे राशौ द्वितीयो बलवान् । ऋषभवन्नदत इ(ती)ति वा ऋषभः ।

" वाचं गानात्मिकां धत्त इति गान्धारसंज्ञकः " ।

गां गानात्मिकां वाचं धत्त इति । ' धृ धारणे ' इत्यस्माद्धातोर्गोशब्दे कर्म-ण्युपपदेऽणप्रत्यये पृषोदरादित्वाद्बहुलग्रहणाद्वाऽलुकि गान्धार इति रूपम् । गान्धर्वसुखहेतुत्वाद्वा गान्धारः ।

" स्वराणां मध्यमत्वाच्च मध्यमः स्वर उच्यते ।

सप्तानां स्वराणां चतुर्थस्वरस्तस्य मध्यस्थत्वात् । ' मध्यान्मः ' इति भवे मप्रत्यये मध्यम इति रूपम् । अथवा मद्धियोऽमो रोग इति मध्यमः । यद्वा मम धियो रोग इति मध्यमशब्देन सप्तानां स्वराणां श्रूयमाणो रुचिरत्वाश-ङ्कया पीडयतीत्यर्थः ।

" स्वरान्तराणां विस्तारं यो मिमीते स पञ्चमः " ।
पाठक्रमेण गणने संख्यया पञ्चमोऽथवा ॥

" पचि विस्तारे " इत्यस्माद्धातोर्भावे घञि पचं विस्तारं मिमीत इति " आतोऽनुपसर्गे कः " इति कप्रत्यये पञ्चम इति रूपम् । " ह्वावामश्च " इत्यणेपुष्कसंज्ञात्वा( णतु युक्सत्त्वा )दुपेक्ष्यते । यद्वा पृषोदरादित्वाद्गभाव आलोपश्च । स्वराणां क्रमेण गणने पञ्चमत्वाद्वा पञ्चमस्थानसंभूतत्वाद्वा पञ्चमः ।

" धीर्यस्यास्ति स धीवांस्तत्संबन्धी धैवतः स्मृतः " इति ।

यद्वा—" षष्ठस्थाने धृतो यस्मात्ततोऽसौ धैवतो मतः " ।

धीरस्यास्तीति धीवांस्तत्संबन्धित्वेन " तस्येदम् " इत्यणि धैवत इति रूपम् । संबन्धित्वं चानेकप्रकारं निरूप्यनिरूपकलक्षणमास्वाद्यास्वादकलक्षणं जन्यजन-

१ क. °णयुक्तसंज्ञा° ।

कलक्षणं चेति । तत्रोत्तरस्वरेण संकृष्टश्रुतित्वात्स्थूलमतीनां दुर्विवेकत्वाद्धीमतः सूक्ष्ममतेरेव निरूप्यत्वाद्धैवत इति । षष्ठस्थाने ललाटस्थाने धृतत्वाद्वा धैवतः ।

" निषीदन्ति स्वराः सर्वे निषादस्तेन कथ्यते " ।

" षदॢ विशरणे " इत्यस्माद्धातोर्निषीदन्ति पर्यवस्यन्त्यस्मिन्स्वरा इत्यकर्तरि चेति सूत्रेण घञि निषाद इति रूपम् । इत्युक्तप्रकारेण ते स्वराः सप्तैवेति नियमे सप्तधात्वाश्रितत्वं *सप्तचक्राश्रितत्वं वा निमित्तं मतङ्गोक्तमनुसंधेयम् ॥ २४ ॥

प्रयोगसौकर्यार्थं तेषामाद्याक्षराण्युद्धृत्य संज्ञान्तराण्याह–

**तेषां संज्ञा सरिगमपधनीत्यपरा मताः ॥ २५ ॥**

**तेषां संज्ञा इति** । सरिगादीनां मतङ्गाभिमत उद्धारक्रम उच्यते । अत्रा-कचटतपयशा अष्टौ वर्गाः[1] । तत्राष्टमस्य तृतीयं हरिबीजयुक्तमाद्यस्वरमुद्धरेत् । हरिबीजमकारः। सप्तमस्य द्वितीयं कामबीजयुक्तं द्वितीयस्वरमुद्धरेत् । द्वितीयस्य तृतीयं हरिबीजयुक्तं तृतीयं स्वरमुद्धरेत् । षष्ठस्य पञ्चममकारयुक्तं मध्यमस्वरं समुद्धरेत् । षष्ठस्य प्रथममकारयुक्तं पञ्चममुद्धरेत् । पञ्चमस्य चतुर्थमकारयुक्तं षष्ठस्वरमुद्धरेत् । पञ्चमस्य पञ्चमं कामबीजयुक्तं सप्तममुद्धरेत् । कामबीजमिकारः । अत्र सरिगादिष्वाद्याक्षराणां व्यञ्जनत्वात्कथं स्वरत्वमित्याक्षिप्याऽऽचार्य-परिभाषया संकेतमात्रमेतादिति प्रत्याह मतङ्गः ॥ २५ ॥

स्वराणां सामान्यलक्षणं स्वरशब्दस्य निरुक्तिं चाऽऽह–

**श्रुत्यनन्तरभावी यः स्निग्धोऽनुरणनात्मकः ।**
**स्वतो रञ्जयति श्रोतृचित्तं स स्वर उच्यते ॥ २६ ॥**

**श्रुत्यन्तरभावीति** । श्रुत्यन्तरभावी श्रुतेश्चतुर्थ्यादेर्मारुताद्याहत्युत्पन्नप्रथ-मध्वनेरनन्तरं भाव्याविर्भवनशीलः । स्निग्धोऽरूक्षः सन्दूरसंश्राव्यः । अनुर-णनात्मकोऽनुस्वाररूपः । स्वतः सहकारिकारणानिरपेक्षं रञ्जयत्यनुरक्तं करोति । स्वतःशब्दोपपदात् " रञ्ज रागे " इत्यस्माद्धातोः " अन्येभ्योऽपि दृश्यते " इति डप्रत्यये टिलोपे पूर्वपदस्य तकारादेः पृषोदरादित्वाल्लोपे च स्वर इति रूपसिद्धिः ॥ २६ ॥

यद्येवं चतुर्थ्यादेरेव श्रुतेः स्वरकारणत्वमस्तु न पूर्वपूर्वासामित्याक्षिपति–

**ननु श्रुतिश्चतुर्थ्यादिरस्त्वेवं स्वरकारणम् ।**
**त्र्यादीनां तत्र पूर्वासां श्रुतीनां हेतुता कथम् ॥ २७ ॥**

**नन्विति** । **त्र्यादीनामिति** । तृतीयादीनामित्यर्थः । अत्र वृत्तौ तीयप्रत्य-यान्तस्य प्रत्ययलोपेऽपि तदर्थग्रहणमिति त्र्यादीनामितिनिर्देशोपपत्तिः ॥२७॥

*ग. पुस्तकेऽस्मात्पूर्वं ' सप्तद्वयाश्रितत्वम् ' इत्यधिकं वर्तते ।

[1] क. वर्णाः ।

समाधत्ते—

ब्रूमस्तुर्यातृतीयादिः श्रुतिः पूर्वाभिकाङ्क्षया ।
निर्धार्यतेऽतः श्रुतयः पूर्वा अप्यत्र हेतवः ॥ २८ ॥

ब्रूम इति । तुर्यातृतीयादिरिति । षड्जमध्यमपञ्चमानां तुर्या । ऋषभधैवतयोस्तृतीया । आदिशब्देन गान्धारनिषादयोर्द्वितीया च श्रुतिः पूर्वाभिकाङ्क्षयाऽऽदिशब्दसामर्थ्यात्पूर्वेत्यस्य वीप्सा कर्तव्या । पूर्वपूर्वाभिकाङ्क्षयेति । उच्चोच्चतरतारूपेण लक्षणेन स्वोत्पत्तौ संख्यया तुर्यादिव्यपदेशे च पूर्वस्या आकाङ्क्षा तया यतो निर्धार्यतेऽत इत्यर्थः ॥ २८ ॥

श्रुतीनामन्योन्यमसंकीर्णतया स्वरूपपरिज्ञानाय कचित्तासां जात्येव संगत्या रक्तिलाभाय चावान्तरभेदसहितानां जातीनां स्वरे व्यवस्थानं दर्शयति—

दीप्ताऽऽयता च करुणा मृदुर्मध्येति जातयः ।
श्रुतीनां पञ्च तासां च स्वरेष्वेवं व्यवस्थितिः ॥ २९ ॥
दीप्ताऽऽयता मृदुर्मध्या षड्जे स्यादृषभे पुनः ।
संस्थिता करुणा मध्या मृदुर्गान्धारके पुनः ॥ ३० ॥
दीप्तायते मध्यमे ते मृदुमध्ये च संस्थिते ।
मृदुर्मध्याऽऽयताख्या च करुणा पञ्चमे स्थिता ॥ ३१ ॥
करुणा चाऽऽयता मध्या धैवते सप्तमे पुनः ।
दीप्ता मध्येति तासां च जातीनां ब्रूमहे भिदाः ॥ ३२ ॥
तीव्रा रौद्री वज्रिकोग्रेत्युक्ता दीप्ता चतुर्विधा ।
कुमुद्वत्यायता या स्यात्क्रोधा चाथ प्रसारिणी ॥ ३३ ॥
संदीपिनी रोहिणी च भेदाः पञ्चेति कीर्तिताः ।
दयावती तथाऽऽलापिन्यथ प्रोक्ता मदन्तिका ॥ ३४ ॥
त्रयस्ते करुणाभेदा मृदोर्भेदचतुष्टयम् ।
मन्दा च रतिका प्रीतिः क्षमेति मध्या तु षड्भिदा ॥ ३५ ॥
छन्दोवती रञ्जनी च मार्जनी रक्तिका तथा ।
रम्या च क्षोभिणीत्यासामथ ब्रूमः स्वरस्थितिम् ॥ ३६ ॥
तीव्राकुमुद्वतीमन्दाछन्दोवत्यस्तु षड्जगाः ।
दयावती रञ्जनी च रक्तिका चर्षभे स्थिताः ॥ ३७ ॥
रौद्री क्रोधा च गान्धारे वज्रिकाऽथ प्रसारिणी ।
प्रीतिश्च मार्जनीत्येताः श्रुतयो मध्यमाश्रिताः ॥ ३८ ॥

---

१ ख. °ख्याऽत्र क° । घ. °ख्या या क° । २ घ. ङ. षड्विधा । ३ क. घ. रञ्जिनी ।

क्षिती रक्ता च संदीपिन्यालापिन्यपि पञ्चमे ।
मदन्ती रोहिणी रम्येत्येतास्तिस्रस्तु धैवते ।
उग्रा च क्षोभिणीति द्वे निषादे वसतः श्रुती ॥ ३९ ॥

**दीप्तायतेत्यादिना** । स्वरविनियोगानन्तरमुद्दिष्टानामपि श्रुतिजातीनामिह निरूपणं श्रुतिस्वरविवेचनरूपार्थसंगतिवशादुपपन्नम् । व्युत्क्रमेणोद्देशस्तु क्वचित्क्रमस्याविवक्षितत्वात्(त्व)ज्ञापनार्थम् । एतेन कुलानि जातय इत्यादिक्रमस्तु विवक्षित इति मन्तव्यम् ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥

ते मन्द्रमध्यताराख्यस्थानभेदात्त्रिधा मताः ॥ ४० ॥

प्रसङ्गाच्छ्रुतिजातीरुक्त्वा प्रकृतिस्वरपरामर्शपूर्वकं स्थानभेदात्तेषां त्रैविध्यमाह—**ते मन्द्रेति** ॥ ४० ॥

त एव विकृतावस्था द्वादश प्रतिपादिताः ॥ ४१ ॥

ननु च्युतादयः पृथक्स्वराः स्युः । किं तेषामवस्थान्तरापन्नषड्जादित्वकल्पनयेत्यत आह—**त एवेति** । **द्वादशेति** ॥ ४१ ॥

षड्जमध्यमग्रामद्वयापेक्षया क्रमप्राप्तान्विकृतस्वराँल्लक्षयति—

च्युतोऽच्युतो द्विधा षड्जो द्विश्रुतिर्विकृतो भवेत् ।
साधारणे काकलीत्वे निषादस्य च दृश्यते ॥ ४२ ॥
साधारणे श्रुतिं षाड्जीमृषभः संश्रितो यदा ।
चतुःश्रुतित्वमायाति तदैको विकृतो भवेत् ॥ ४३ ॥

**च्युतोऽच्युत इत्यादिना** । चतुःश्रुतिः षड्जो द्विश्रुतिर्विकृतः संश्च्युत (तोऽच्युत) इति द्विधा भवेत् । स च साधारणे स्वसाधारणे च्युतः । निषादस्य काकलीत्वे चाच्युत इति दृश्यते ॥ ४२ ॥ ४३ ॥

साधारणे त्रिश्रुतिः स्यादन्तरत्वे चतुःश्रुतिः ।
गान्धार इति तद्भेदौ द्वौ निःशङ्केन कीर्तितौ ॥ ४४ ॥

साधारणे त्रिश्रुतिः स्यादित्यत्र मध्यमसाधारण इत्यर्थः । अन्तरत्वे चतुःश्रुतिरित्यत्र स्वस्यान्तरत्व इति विशेषणीयम् ॥ ४४ ॥

मध्यमः षड्जवद्द्वेधाऽन्तरसाधारणाश्रयात् ।
पञ्चमो मध्यमग्रामे त्रिश्रुतिः कैशिके पुनः ॥ ४५ ॥
मध्यमस्य श्रुतिं प्राप्य चतुःश्रुतिरिति द्विधा ।
धैवतो मध्यमग्रामे विकृतः स्याच्चतुःश्रुतिः ॥ ४६ ॥

**मध्यमः षड्जवदिति** । अत्र षड्जवदिति षड्जो यथा द्विश्रुतिर्विकृतश्च्युताच्युतत्वभेदभिन्नो मध्यमोऽपि तथेति वनेरर्थः ॥ ४५ ॥ ४६ ॥

**कैशिके काकलीत्वे च निषादस्त्रिचतुःश्रुतिः ।**
**प्राप्नोति विकृतौ भेदौ द्वाविति द्वादश स्मृताः ॥**
**तैः शुद्धैः सप्तभिः सार्धं भवन्त्येकोनविंशतिः ॥ ४७ ॥**

कैशिके काकलीत्वे चेत्यत्र कैशिके षड्जसाधारणे त्रिश्रुतिः । स्वस्वकाकलीत्वे चतुःश्रुतिरिति ॥ ४७ ॥

**मयूरचातकच्छागक्रौञ्चकोकिलदर्दुराः ।**
**गजश्च सप्त षड्जादीन्क्रमादुच्चारयन्त्यमी ॥ ४८ ॥**

लोकतोऽपि षड्जादिस्वरूपपरिज्ञानाय मयूरादिप्राणिविशेषध्वनि(नि) निदर्शनाभिप्रायेणाऽऽह—**मयूरेति** ॥ ४८ ॥

स्वराणामन्योन्यस्वरूपकृतं भेदमुक्त्वा प्रसङ्गात्प्रयोगार्थं प्रकारभेदेन तेषां चातुर्विध्यं दर्शयति—

**चतुर्विधाः स्वरा वादी संवादी च विवाद्यपि ।**
**अनुवादी च वादी तु प्रयोगे बहुल(लः)स्वरः ॥ ४९ ॥**

**चतुर्विधा इति** । वदनाद्वादी । ननु वदनादिकं प्राणिधर्मः कथमचेतनानां स्वराणां संभवति । सत्यम् । वदनं हि नाम रागप्रतिपादकत्वं विवक्षितं न वचनमित्यदोषः । संवदनात्संवादी । संवदनं नाम यद्वादिना स्वरेण रागस्य रागत्वं जनितं तन्निर्वाहकत्वम् । विवदनाद्विवादी । विवदनं नाम वाद्यादिभिः स्वरैरुत्पाद्यमानरक्तेर्विनाशकत्वम् । अनुवदनादनुवादी । अनुवदनं नाम वादिसंवादिसंपादितरक्त्यनुकूलत्वम् । क्रमेण ताल्लँक्षयति—**वादी त्वित्यादिना** । प्रयोगे जात्यादौ बहुलो ग्रहन्यासत्वादिभेदेन पुनरावृत्तः ॥ ४९ ॥

**श्रुतयो द्वादशाष्टौ वा ययोरन्तरगोचराः ।**
**मिथः संवादिनौ तौ स्तो निगावन्यविवादिनौ ॥ ५० ॥**

संवादिलक्षणपरिज्ञानार्थमादौ मण्डलप्रस्तारं वीणाप्रस्तारं वा लिखेत् । तत्र मण्डलप्रस्तारो यथा—षडूर्ध्वरेखा लिखित्वा तदूर्ध्वाधः किंचिदग्राण्यवशेष्य मध्ये पञ्च तिर्यग्रेखाः किंचिदग्रावशेषं लिखेत् । तदा परितो रेखाः किंचिदग्रावशेषं लिखेत् । तदा परितो रेखाग्राणि द्वाविंशतिर्भवन्ति । वीणाप्रस्तारस्तु तिर्यग्रेखा एव द्वाविंशतिं लिखेत् । तत्र वामतो दक्षिणतो वा रेखाग्राणि द्वाविंशतिर्भवन्ति । तत्रैकस्मिञ्श्रुतिमण्डले रेखाग्रेषु शुद्धत्वे विकृतत्वे षड्जादीन्स्वस्वश्रुतिसंख्यया

१ घ. ङ. °गक्रौञ्च° । २ ङ. °वाद्यथ वि° ।

लिखेत् । तेषु ययोः स्वरयोरन्तरगोचराः स्वाधारश्रुतीर्विहाय मध्यवर्तिन्यः श्रुतयो द्वादशाष्टौ वा दृश्यन्ते तदा तौ मिथः संवादिनौ भवत इति ज्ञातव्यम् । **निगावन्यविवादिनाविति** । अन्येषां पञ्चानां विवादिनौ विरोधिनौ ॥५०॥

ननु निगयोरितरान्पञ्चापि स्वरान्प्रति विवादित्वमुक्तं तदयुक्तम् । शुद्धयोर्मध्यमनिषादयोः परस्परं संवादित्वदर्शनादित्यपरितोषेण पक्षान्तरमाह—

**रिधयोरेव वा स्यातां तौ तयोर्वा रिधावपि ।**
**शेषाणामनुवादित्वं वादी राजाऽत्र गीयते ॥ ५१ ॥**
**संवादी त्वनुसारित्वादस्यामात्योऽभिधीयते ।**
**विवादी विपरीतत्वाद्धीरैरुक्तो रिपूपमः ।**
**नृपामात्यानुसारित्वादनुवादी तु भृत्यवत् * ॥ ५२ ॥**

**रिधयोरेवेति** । प्रथममन्यविवादिनावित्यविशेषेण कथनं तु समश्रुतिकयोरेव संवाद इति मतानुसारेण । अतो द्वादशाष्टश्रुत्यन्तरितत्वमात्रमेव संवादिलक्षणत्वमि( णमि )ति सिद्धं भवति । **तौ तयोर्वेति** । तौ रिधौ तयोर्निगयोर्विवादिनौ स्तः । एतेनैकश्रुत्यन्तरितौ परस्परं विवादिनाविति लक्षणं सूचितं भवति । द्व्यन्तरत्वाद्विवादित्वमुक्तमिति **मतङ्गो**क्तस्यापि द्वयोरेकस्वराधारश्रुत्या सह द्व्यन्तरत्वस्य विवक्षितत्वादेकश्रुत्यन्तरितत्वमेवार्थः । त्रयोदशनवान्तरमिति **मतङ्गो**क्तस्यापि द्वयोरेकस्वराधारश्रुत्या संवादिलक्षणस्यापि द्वादशाष्टान्तरत्वमेवार्थः । अतः शुद्धावस्थायां रिगयोर्धन्योश्च यथा परस्परं विवादस्तथा विकृतावस्थायां गमयोर्निधयोश्च विवादो द्रष्टव्यः । अयमभिप्रायः । वादिसंवाद्यनुवादिनां परस्परं स्थानव्यत्ययेन प्रयोगेऽपि जातिरागहानिर्भ(र्न भ ? )वति । विवादिनस्तु प्रयोगे जातिरागहानिर्भवेदिति । शेषाणां वाद्यादिलक्षणरहितानाम् । अथ प्रयोगे वाद्यादीनां प्रधानोपसर्जनभावेन तारतम्यं सदृष्टान्तं दर्शयति— **वादी राजेत्यादिना** ॥ ५१ ॥ ५२ ॥

**गीर्वाणकुलसंभूताः षड्जगान्धारमध्यमाः ।**
**पञ्चमः पितृवंशोत्थो रिधावृषिकुलोद्भवौ ॥ ५३ ॥**
**निषादोऽसुरवंशोत्थो ब्राह्मणाः समपञ्चमाः ।**
**रिधौ तु क्षत्रियौ ज्ञेयौ वैश्यजाती निगौ मतौ ॥ ५४ ॥**
**शूद्रावन्तरकाकल्यौ स्वरौ वर्णास्त्विमे क्रमात् ।**
**पद्माभः पिञ्जरः स्वर्णवर्णः कुन्दप्रभोऽसितः ॥ ५५ ॥**

---

* एतच्छ्लोकादनन्तरं 'वादिमण्डलयोर्लक्षणं यथा—यत्रोर्ध्वं तिर्यगष्टौ च सप्त रेखाः क्रमाल्लिखेत् । तासु प्रान्तेषु कोष्ठेषु लेख्या वाद्यादयः स्वराः । वाद्यादिसंनिधिं प्राप्ता ग्रामयोश्च यथा श्रुतिः । तदुवाचेति निःशङ्करामो वाद्यादिमण्डलम्' इति श्लोकद्वयं वर्तते ।

पीतः कर्बुर इत्येषां जन्मभूमीरथ ब्रुव ।
जम्बूशाककुशक्रौञ्चशाल्मलीश्वेतनामसु ॥ ५६ ॥
द्वीपेषु पुष्करे वै ते जाताः षड्जादयः क्रमात् ।
वह्निर्वेधाः शशाङ्कश्च लक्ष्मीकान्तश्च नारदः ॥ ५७ ॥
ऋषयो ददृशुः पञ्च षड्जादींस्तुम्बुरुर्धनी ।
वह्निब्रह्मसरस्वत्यः श्रीशशर्वगणेश्वराः ॥ ५८ ॥
सहस्रांशुरिति प्रोक्ताः क्रमात्षड्जादिदेवताः ।
क्रमादनुष्टुब्गायत्री त्रिष्टुप्च बृहती ततः ॥ ५९ ॥
पङ्क्तिरुष्णिक्च जगतीत्याहुश्छदांसि सादिषु ।
सरी वीरेऽद्भुते रौद्रे धो बीभत्से भयानके ।
कार्यौ गनी तु करुणे हास्यशृङ्गारयोर्मपौ ॥ ६० ॥

ज्ञात्वा प्रयोगेऽदृष्टातिशयोऽप्यस्तीति स्वराणां कुलादीन्युद्देशक्रमेणाऽऽह—**गीर्वाणकुलेत्यादिना** ॥५३ ॥५४॥ ५५ ॥५६॥५७॥५८॥५९॥६०॥

इति प्रथमे स्वराध्याये तृतीयं नादस्थानश्रुतिस्वरप्रकरणम् ॥ ३ ॥

---

अथ चतुर्थं ग्राममूर्छनाक्रमतानप्रकरणम् ।

---

एवं स्वरान्निरूप्य व्यस्तानां तेषां दृष्टादृष्टफलोपयोगित्वं नास्तीति तत्सिद्धये नियतसमस्तस्वरसंनिवेशरूपान्मूर्छनादीन्निरूपयिष्यंस्तदाश्रयत्वाद्व्यवस्थापकत्वाच्च ग्रामयोः प्रसक्तयोस्तत्सामान्यलक्षणं तावदाह—

**ग्रामः स्वरसमूहः स्यान्मूर्छनादेः समाश्रयः ।**
**तौ द्वौ धरातले तत्र स्यात्षड्जग्राम आदिमः ॥ १ ॥**
**द्वितीयो मध्यमग्रामस्तयोर्लक्षणमुच्यते ।**
**षड्जग्रामः पञ्चमे स्वचतुर्थश्रुतिसंस्थिते ॥ २ ॥**

**ग्राम इति** । ग्रामवद्ग्रामः । यथा लोके जनसमूहो ग्राम इत्युच्यत एवमत्र स्वरसमूहो ग्राम इति विवक्षितः । स्वरसमूहो ग्राम इत्येतावत्युच्यमाने लौकिकवैदिकवाक्येष्वपि स्वरसमूहस्य संभवात्तत्रातिव्याप्तिः स्याल्लक्षणस्य तद्व्यावृत्त्यर्थं मूर्छनादेः समाश्रय इति विशेषणम् । अत्राऽऽदिशब्देन क्रमतानवर्णालंकारजात्यादयो गृह्यन्ते । सामान्यलक्षणे ग्राम इति जातावेकत्वानिर्देशादविशेषेण सप्तानामपि स्वराणां ग्रामविशेषणत्वे प्राप्ते त्रयाणामेव तद्विशेषणत्वमवगमयन्ग्रामविशेषलक्षणानि लोकव्यवस्थापूर्वकमाह—**तौ द्वावित्यादिना** । **ननु**

समूहित्वाविशेषेण सप्तानामपि ग्रामव्यपदेशकत्वसंभवे कथं धरातले द्वावित्य-वधारणमिति चेत्तत उच्यते । शुद्धविकृतरूपेण द्विविधस्वरप्रयोगवशात् । "द्वौ ग्रामौ विश्रुतौ लोके षड्जमध्यमसंज्ञकौ" इति मुनिवचनाच्च । शुद्धाश्रयत्वात्ष-ड्जग्राम आदिमो विकृताश्रयत्वाद्द्वितीयो मध्यमग्राम इत्युपपद्यत इति । स्वचतुर्थश्रुतिसंस्थित इति । स्वकीयचतुर्थश्रुतौ करुणाजातिभेद आलापि-न्यामादितः सप्तदश्यां स्थिते सति षड्जग्रामः ॥ १ ॥ २ ॥

**स्वोपान्त्यश्रुतिसंस्थेऽस्मिन्मध्यमग्राम इष्यते ।**
**यद्वा धस्त्रिश्रुतिः षड्जे मध्यमे तु चतुःश्रुतिः ॥ ३ ॥**
**रिमयोः श्रुतिमेकैकां गान्धारश्चेत्समाश्रितः ।**
**पश्रुतिं धो निषादस्तु धश्रुतिं सश्रुतिं श्रितः ॥ ४ ॥**
**गान्धारग्राममाचष्टे तदा तं नारदो मुनिः ।**
**प्रवर्तते स्वर्गलोके ग्रामोऽसौ न महीतले ॥ ५ ॥**

**स्वोपान्त्यश्रुतिसंस्थ इति** । स्वोपान्त्यश्रुतावायताभेदे संदीपिन्यां षोडश्यां संतिष्ठत इति संस्थस्तस्मिन् । अत्र चतुर्थश्रुतिसंस्थित उपान्त्यश्रुतिसंस्थ इति चैतावत्युक्ते मध्यमग्रामे मध्यमसाधारणे पञ्चमस्य चतुःश्रुतिकत्वेन स्वतृतीयश्रु-तिसंस्थस्यापि मध्यमान्तिमश्रुतिसाहित्येन चतुर्थश्रुतिसंस्थत्वं तस्यामवस्थायां स्वद्वितीयश्रुतेरुपान्त्यत्वेनोपान्त्यश्रुतिसंस्थत्वं च संभवतीति तन्निवृत्त्यर्थमुभयत्र स्वशब्दोपादानं कृतम् । तयोस्तृतीयद्वितीययोः श्रुत्योः स्वकीयत्वेन चतुर्थोपा-न्त्यत्वाभावात् । यद्वेत्यभ्युच्चयपक्षः । कुतः । पञ्चमभेदायत्तत्वेन ग्रामभेदे सिद्धे ग्रामभेदाश्रयणेन धैवतभेदकथनात् । धैवतस्य पञ्चमसंनिधानं विना स्वगतभेदा-प्रतीतेः स्वतो ग्रामभेदकत्वाभावाच्च । भेदकत्वकथनं तु धैवतः पञ्चमान्त्यश्रुति-लाभाच्चतुःश्रुतिर्विकृतः संस्तदलाभे शुद्धश्च साक्षाल्लक्षणस्य पञ्चमस्य क्रमात्त्रि-श्रुतित्वं चा[व]गमयन्ग्रामयोरुपलक्षणं भवतीति ॥ ३ ॥ ४ ॥ ५ ॥

ननु स्वरप्रयोगवशादिह द्वावेव ग्रामौ स्याताम् । स्वरान्तरेषु सत्सु किं तयोः षड्जमध्यमविशेषणेनेत्याशङ्क्य तत्रोपपत्तिमाह—

**षड्जः प्रधान आद्यत्वादमात्याधिक्यतस्तथा ।**
**ग्रामे स्यादविलोपित्वान्मध्यमस्तु पुरःसरः ॥ ६ ॥**
**एतत्कुलप्रसूतत्वाद्गान्धारोऽप्यग्रणीर्दिवि ।**
**क्रमाद्ग्रामत्रये देवा ब्रह्मविष्णुमहेश्वराः ॥ ७ ॥**
**हेमन्तग्रीष्मवर्षासु गातव्यास्ते यथाक्रमम् ।**
**पूर्वाह्णकालमध्याह्नेऽपराह्णेऽभ्युदयार्थिभिः ॥ ८ ॥**

---

१ क. °ति व° ।

**षड्जः प्रधान** इति । अमात्याविकयतः संवादिस्वरबाहुल्यादित्यर्थः । ग्रामे प्रधानः स्यादित्यन्वयः । **अविलोपित्वादिति** । मध्यमस्याविलोपित्वं चाधस्तनानां सरिगाणामुपरितनानां पधनीनां च यथासंख्यं द्वयोर्द्वयोरेकत्र तन्त्र्यां वदनं संवादिन इति मतानुसारेणैकाकिनो मध्यमस्यान्येन संवादाभावात्परिशेषादवधिभूतस्य तस्य लोपो नेष्यत इति केषांचिन्मतम् । अन्येषां तु शुद्धतानलक्षणावसरे षड्जर्षभनिषादपञ्चमहीनाश्चत्वारस्ताना इत्यादिना **भरतादिभिर्मध्यम**व्यतिरिक्तानामिव षाडवौडुवकारित्वेन लोपविधानान्मध्यमस्याविनाशित्वमिति ॥ ६ ॥ ७ ॥ ८ ॥

ग्रामलक्षणे तदाधेयत्वेन प्रथमोपात्तानां मूर्छनानां सामान्यलक्षणमाह—

**क्रमात्स्वराणां सप्तानामारोहश्चावरोहणम् ।**
**मूर्छनेत्युच्यते ग्रामद्वये ताः सप्त सप्त च ॥ ९ ॥**
**षड्जे तूत्तरमन्द्राऽऽदौ रजनी चोत्तरायता ।**
**शुद्धषड्जा मत्सरीकृदश्वक्रान्ताऽभिरुद्गता ॥ १० ॥**
**मध्यमे स्यात्तु सौवीरी हारिणाश्वा ततः परम् ।**
**स्यात्कलोपनता शुद्धमध्या मार्गी च पौरवी ॥ ११ ॥**
**हृष्यकेत्यथ तासां तु लक्षणं प्रतिपाद्यते ।**
**मध्यस्थानस्थषड्जेन मूर्छनाऽऽरभ्यतेऽग्रिमा ॥ १२ ॥**

**क्रमात्स्वराणामिति** । क्रमादिति कूटतानव्यावृत्त्यर्थम् । सप्तानां स्वराणामिति शुद्धतानव्यावृत्त्यर्थम् । आरोहश्चावरोहणमित्यारोह्यवरोहिद्विविधवर्णालंकारनिवृत्त्यर्थम् । **मूर्छनेति** । यया करणभूतया रागो मूर्छ्यते व्याप्यत इति श्रोता मूर्छ्यते मोह्यत इति वा "मुर्छा मोहसमुच्छ्राययोः" इति धातोर्ण्यन्ताल्ल्युटि प्रत्यये मूर्छनेति रूपम् । यदि पुनर्मतङ्गनान्दिकेश्वरादिभिः प्रयोगे स्थानत्रयव्याप्तिसिद्ध्यर्थं लक्ष्यानुरोधेन द्वादश स्वरमूर्छना अप्युक्ता एवमपि लक्ष्ये प्रायेण ग्रामद्वयसंसृष्टप्रयोगदर्शनात्तेनैव स्थानत्रयव्याप्तिम(प्तिः से)त्स्यतीत्यभिप्रायेण न पृथगुक्ताः । तद्विशेषान्ग्रामद्वयेऽपि व्यवहारार्थं नामतो रूपतश्च संख्यापूर्वकं दर्शयति-**ग्रामद्वय इत्यादिना** । मूर्छनेति जातिविवक्षयैकत्वे प्रकृतेऽपि ता इति बहुवचनेन परामर्शो वक्ष्यमाणतद्विशेषापेक्षयेत्युपपद्यते । मध्यस्थानस्थषड्जेनाग्रिमा मूर्छनोत्तरमन्द्राऽऽरभ्यते । कुतोऽयं नियमः । **भरतादिनियमित**त्वात्तासाम् । यथाऽऽह भरतः—

" मध्यमस्वरेण वैणवेन मूर्छनानिर्देशः " इति ।

मतङ्गोऽपि—मध्यसप्तकेन मूर्छनानिर्देशः कार्यो मन्द्रतारसिद्ध्यर्थम् ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

**अधस्तनैर्निषादाद्यैः षडन्या मूर्छनाः क्रमात् ।**
**मध्यमध्यममारभ्य सौवीरी मूर्छना भवेत् ।**
**षडन्यास्तदधोधःस्थस्वरानारभ्य तु क्रमात् ॥ १३ ॥**

अधस्तनैर्मन्द्रस्थानभवैः । तदधोधःस्थस्वरांस्तस्य मध्यस्थानस्थितमध्यमस्याधोधःस्था गान्धारऋषभादयः स्वरास्तान् ॥ १३ ॥

क्रमादवरोहक्रमेण लक्ष्यानुरोधेन पक्षान्तरमाह—

**षड्जस्थानस्थितैर्न्याद्यै रजन्याद्याः परे विदुः ॥ १४ ॥**

**षड्जस्थानस्थितैरिति** । मध्यस्थानस्थितषड्जस्थानगतैरिति प्रकरणादवगन्तव्यम् । सरिगमपधनीत्युत्तरमन्द्रस्वरस्थानेष्वेव निसरिगमपधेति रजनीस्वरानुच्चारयेदित्यर्थः ॥ १४ ॥

**हारिणाश्वादिका गाद्यैर्मध्यमस्थानसंस्थितैः ॥ १५ ॥**

**हारिणाश्वादिका इति** । अत्रापि मध्यस्थानस्थमध्यममारभ्य मपधनिसरिगेति सौवीरीस्वरस्थानेष्वेव गमपधनिसरीति हारिणाश्वादिस्वरानुच्चारयेदित्यर्थः । उभयत्राप्यादिशब्देन षड्जमध्यमस्थानयोरेव तत्तन्मूर्छनादिमस्वरारम्भो द्रष्टव्यः ॥ १५ ॥

ननु षड्जमध्यमस्थानयोरेव निषादगान्धारादिप्रयोगे सति षड्जग्राम उत्तरमन्द्रारजन्यादीनां कथं परस्परं भेदो मध्यमग्रामे च सौवीरीहारिणाश्वादिकानां च कथमन्योन्यं भेद इत्याशङ्क्य परिहरिष्यन्नाह—

**षड्जादिमध्यमादींश्च तदूर्ध्वं सारयेत्क्रमात् ॥ १६ ॥**

**षड्जादिमध्यमादींश्चेति** । **तदूर्ध्वमिति** । रजन्यादिकायां षड्जस्थानस्थापितनिषादादेर्हारिणाश्वादिकायां मध्यमस्थानस्थापितगान्धारादेश्च परं षड्जादीन्मध्यमादींश्च स्वरान्सारयेत् । स्वस्वश्रुतिसंस्थापर्यालोचनया श्रुत्यन्तराणि प्रापयेदित्यर्थः । **क्रमादिति** । उत्तरायतायां षड्जस्थाने धैवते स्थापिते तदूर्ध्वं निषादं कलोपनतायां मध्यमस्थान ऋषभे स्थापिते तदूर्ध्वं गान्धारं चेत्यादिक्रमः ॥ १६ ॥

तस्मान्मूर्छनानां शुद्धादिभेदेन प्रत्येकं चातुर्विध्यं दर्शयति—

**चतुर्धा ताः पृथक्शुद्धाः काकलीकलितास्तथा ।**
**सान्तरास्तद्द्वयोपेताः षट्पञ्चाशदितीरिताः ॥ १७ ॥**

**चतुर्धेति** । ग्रामयोरुक्ताश्चतुर्दश मूर्छनास्ता इति परामृश्यते । शुद्धाः षड्जग्रामे सर्वस्वरविकाररहिताः । मध्यमग्रामे तु ग्रामस्वरूपभेदनिर्वर्तकं पञ्चमं तदुपलक्षकं धैवतं च विहायेतरस्वरविकाररहिताः । तत्र पञ्चमधैवतयोस्तादवस्थ्यमेव शुद्धत्वं विवक्षितमिति मन्तव्यम् । ननु विकृतस्वरेषु यद्यपि पञ्चमस्य ग्राम-

१ ख. जगुः । २ ङ. संश्रितैः । ३ क. ख. ग. घ. तदोर्ध्वं । ४ ग. °देरप° । ५ ग. °तेऽपि स्था° । ६ ग. °नादीनां । ७ ङ. °शदुदीरि° ।

भेदकत्वेनैव चरितार्थाभावेऽपि ऋषभधैवतयोश्च षड्जपञ्चमविकारायत्तविकारयोः स्वतो भेदकत्वाभावेऽपि षड्जमध्यमसाधारणद्वयाश्रयणेनापि प्रकारान्तरेषु संभवत्सु केवलं काकल्यन्तराश्रयणेनैव चतुर्धेति निश्चयः कथमिति चेत्। सत्यम्। षड्जमध्यमयोः साधारणीकृतयोः स्वरूपेण भेदकत्वे संभवत्यपि काकल्यन्तरयोः साधारणयोरन्तर्भूतत्वेन तयोः पृथग्भेदकत्वम्। तथा चाऽऽह मतङ्गः—"साधारणस्वरौ निषाद्गान्धारवन्तौ तदादिविकृतास्तत्रैवान्तर्भूताः" इति। किंच ग्रामद्वये मूर्छनासाधारणप्रकारभेदानिरूपणावसरे प्रतिनियतग्रामवर्तिनोः षड्जमध्यमसाधारणयोरनुपयोगाच्च। यथोक्तं भरतेन—षड्जग्रामे षड्जसाधारणं मध्यमग्रामे मध्यमसाधारणम्" इति। अतश्चतुर्धेत्युपपद्यत इत्याचार्यरहस्यमसंप्रदायाविदुषां दुर्ग्रहम्। श्रुतिस्वरप्रमाणज्ञः कल्लिनाथश्चातुर्विध्यं मूर्छनानामत्रैवं निरदीधरत् ॥१७॥

मूर्छनाभेदकत्वेन प्रसक्तयोः काकल्यन्तरयोः स्वरूपमाह—

**श्रुतिद्वयं चेत्षड्जस्य निषादः संश्रयेत्तदा ।**
**स काकली मध्यमस्य गान्धारस्त्वन्तरः स्वरः ॥ १८ ॥**

**श्रुतिद्वयं चेदिति** । मध्यमस्येत्यत्रापि श्रुतिद्वयं चेदित्याद्यनुषञ्जनीयम्। मूर्छनाभेदोपयोगिकाकल्यन्तरप्रसङ्गान्मतङ्गप्रोक्तौ स्वराणां प्रवेशनिग्रहावुच्येते। तद्यथा—द्विविधस्तानप्रयोगः प्रवेशेन निग्रहेण च। प्रवेशो द्विविधः पूर्वस्वरविप्रकर्षेणोत्तरस्वरमार्दवेन च। तत्रर्षभापेक्षया षड्जस्याधरीभूतस्य लोपनीयस्यापि विप्रकर्षः पीडनम्। ऋषभापादनमिति यावत्। तस्यैव षड्जस्य निषादापेक्षयोत्तरीभूतस्य मार्दवं शिथिलीकरणम्। निषादापादनमिति यावत् । निग्रहस्तूत्तरस्वरपरित्यागः। असंस्पर्श इति यावत्। तथाऽऽह भरतः—

"द्विधा तानक्रिया तन्त्र्यां प्रवेशान्निग्रहात्तथा" ।

तत्र प्रवेशो नामाधरस्वरविप्रकर्षादुत्तरस्वरमार्दवाद्वा। निग्रहश्चासंस्पर्श इति। दन्तिलेनाप्युक्तम्—

"तानक्रिया द्विधा तन्त्र्यां प्रवेशान्निग्रहात्तथा ।
प्रवेशो ध्वनिसादृश्यमसंस्पर्शस्तु निग्रहः" इति ॥ १८ ॥

मूर्छनासु प्रथमादिसंख्यापरिज्ञानोपायमाह—

**यस्यां यावतिथौ षड्जमध्यमौ ग्रामयोः क्रमात् ।**
**मूर्छना तावतिथ्येव सा निःशङ्केन कीर्तिता ॥ १९ ॥**

**यस्यामिति** । यावतिथाविति । यावच्छब्देन पू(ब्दात्पू)रणेऽर्थे डटि 'वतोरिथुक्' इति डट्प्रत्ययस्येथुगागमे कृते यावच्छब्दस्य टिलोपे कृते च (?)

---

१ क. °स्याचरी° । ग. °स्यावरी° । २ ग. °त्यागप्रसङ्गार्थं इ° ।

यावतिथ इति रूपम्। ग्रामयोर्यस्यां मूर्छनायां षड्जमध्यमौ यावतिथौ सा मूर्छना तावतिथी। अत्र 'टिड्ढाणञ्' इत्यादिना ङीप् ॥ १९ ॥

अथ मूर्छनाप्रसङ्गेन केवलारोहवत्तया तदेकदेशरूपात्क(न्क)मात्प(न्प)स्तारे कूटतानोपयोगार्थं प्रतिमूर्छनमियत्तयाऽवधार्य लक्षयति—

**प्रथमादिस्वरारम्भादेकैका सप्तधा भवेत् ।**
**तासूच्चार्यान्त्यस्वरांस्तान्पूर्वानुच्चारयेत्क्रमात् ।**
**ते क्रमास्तेषु संख्या स्याद्द्व्यानवत्या शतत्रयम् ॥२०॥**

**प्रथमादीत्यादिना** । प्रथमादिस्वरारम्भात् । यस्यां मूर्छनायां यः प्रथमः स आदिर्येषां त इतरे षट्स्वरास्तद्गुणसंविज्ञानात्प्रथमश्चेति प्रथमाद्यः सप्त स्वराः प्रथमादिस्वरास्तेषामारम्भक्रमेण क्रमादिमत्त्वेनोच्चारणं तस्मात् । **एकैकेति ।** शुद्धादिभेदेनोक्तासु षट्पञ्चाशन्मूर्छनासु प्रत्येकमित्यर्थः । तास्वन्त्यस्वरान्क्रमादुच्चार्य पूर्वान्क्रमादुच्चारयेदिति क्रमादित्यस्याऽऽवृत्त्याऽन्वयः कर्तव्यः । पूर्वादनारब्धस्वरादधस्तनादिह सप्तस्वरात्मकेषु क्रमेषु पूर्वानुच्चारयेदिति लक्षणांशः । प्रतिमूर्छनं प्रथमक्रमेष्वसंभवेऽपि द्वितीयादिक्रमेषु संभवात्स्वरविषयो द्रष्टव्यः। तद्यथा—उत्तरमन्द्रायां सरिगमपधनीति प्रथमः क्रमः । रिगम[ प ]-धनिसेति द्वितीयः । गमपधनिसरीति तृतीयः । मपधनिसरिगेति चतुर्थः । पधनिसरिगमेति पञ्चमः । धनिसरिगमपेति षष्ठः । निसरिगमपधेति सप्तमः । एवं क्रमेणोच्चारितत्वादेतेषां क्रमसंज्ञा ॥ २० ॥

**यक्षरक्षोनारदाब्जभवनागाश्विपाशिनः ।**
**षड्जग्रामे मूर्छनानामेताः स्युर्देवताः क्रमात् +॥ २१ ॥**
**तासामन्यानि नामानि नारदो मुनिरब्रवीत् ।**
**मूर्छनोत्तरवर्णाद्या षड्जग्रामेऽभिरुद्गता ॥ २२ ॥**
**अश्वक्रान्ता च सौवीरी हृष्यका चोत्तरायता ।**
**रजनीति समाख्याता ऋषीणां सप्त मूर्छनाः ॥ २३ ॥**
**आप्यायनी विश्वभृता चन्द्रा हेमा कपर्दिनी ।**
**मैत्री चान्द्रम(चन्द्राव)ती पित्र्या मध्यमे मूर्छना इमाः॥२४॥**
**नन्दा विशाला सुमुखी चित्रा चित्रावती सुखा ॥ २५ ॥**
**आलापा चेति गान्धारग्रामे स्युः सप्त मूर्छनाः ।**
**ताश्च स्वर्गे प्रयोक्तव्या विशेषात्तेन नोदिताः ॥ २६ ॥**

**यक्षरक्षइत्यादि** । स्पष्टोऽर्थः ॥२१॥२२॥२३॥२४॥२५॥२६॥

---

+ अस्मादूर्ध्वं 'ब्रह्मेन्द्रवायुगन्धर्वसिंहद्रुहिणभानवः । स्युरिमा मध्यमग्राममूर्छनादेवताः क्रमात्' इत्ययं श्लोको 'घ' पुस्तके वर्तते ।

---

१ क. °प्यायिनी । २ ङ. °श्वभृता । ३ घ. मन्दा । ४ ख. विशाखा ।

प्रसङ्गात्क्रमानुक्त्वा मूर्छनैकदेशरूपत्वेन मूर्छनानन्तरमुद्दिष्टाञ्शुद्धतानाँल्लक्षयति—

**तानाः स्युर्मूर्छनाः शुद्धाः षाडवौडुवितीकृताः ॥ २७ ॥**

**तानाः स्युरिति** । तन्यते विस्तार्यत इति तनोतेर्धातोरकर्तरि चेत्यादिना सूत्रेण कर्मणि घञि तान इति रूपम् । दायो लाभ इतिवत् । शुद्धा मूर्छनाः षाडवौडुवितीकृताः सत्यः शुद्धास्तानाः स्युरिति शुद्धपदस्योभयत्र संबन्धः । यदि तानपदेनैव संबन्धस्तदा मूर्छना इत्यविशेषेण प्रकृतत्वात्षट्पञ्चाशन्मूर्छनानामपि प्रसक्तौ तासां च प्रत्येकं वक्ष्यमाणप्रकारेण षाडवौडुवितत्वयोः कृतयोस्तदुच्छे(?)तानसंख्यायां षट्त्रिंशदुत्तरशतत्रयमितायां सत्यां तानाश्चतुरशीतिः स्युरिति **भरतवचनविरोधः** स्यात् । किंचोत्तरवाक्ययोः 'षड्जगाः सप्त मध्यमे सप्त' इति च संख्योपादानमनुपपन्नं स्यात् । अतः शुद्धा मूर्छना इत्यन्वयः कर्तव्यः । अथ मूर्छनापदेनैव संबन्धः क्रियते तदा कूटतानानामपि लक्ष्यत्वं प्रतीयेत । तानपदस्याविशेषोपादानात् । तन्मा भूदित्युभयत्रान्वयः कर्तव्यः । इह मूर्छनानां शुद्धत्वं नाम काकल्यन्तररहितत्वम् । तानानां तु शुद्धत्वं काकल्यन्तररहितत्वं व्युत्क्रमेणोच्चारितस्वररहितत्वं चावगन्तव्यम् । **षाडवौडुवितीकृता इति** । सप्तसु नियतैकस्वरलोपात्षाडवाः । सप्तसु नियतस्वरद्वयलोपादौडुविताः । पूर्वमषाडवाः षाडवाः संपन्नाः । पूर्वमनौडुविता औडुविताः संपन्नाः । षाडवीकृताश्चौडुवीकृताश्चेति समासः ॥ २७ ॥

षाडवौडुवितीकृता इत्यनेनैकस्य द्वयोर्वा स्वरविशेषेण लोपे प्राप्ते **भरता**दिमतानुसारेण लोपं नियमयति—

**षड्जगाः सप्त हीनाश्चेत्क्रमात्सरिपसप्तमैः ।**
**तदाऽष्टाविंशतिस्ताना मध्यमे सरिगोज्झिताः ॥ २८ ॥**
**सप्त क्रमाद्यदा तानाः स्युस्तदा त्वेकविंशतिः ।**
**एते चैकोनपञ्चाशदुभये षाडवा मताः ॥ २९ ॥**
**सपाभ्यां द्विश्रुतिभ्यां च रिपाभ्यां सप्त वर्जिताः ।**
**षड्जग्रामे पृथक्ताना एकविंशतिरौडुवाः ॥ ३० ॥**
**रिधाभ्यां द्विश्रुतिभ्यां च मध्यमग्रामगास्तु ते ।**
**हीनाश्चतुर्दशैव स्युः पञ्चत्रिंशत्तु ते युताः ।**
**सर्वे चतुरशीतिः स्युर्मिलिताः षाडवौडुवाः ॥ ३१ ॥**

**षड्जगा इत्यादिना** । ननु शुद्धतानेषु केषुचिच्छेदकपञ्चमलोपाद्ग्रामाविवेकः

१ क. °दुच्छन्नान° । २ ग. °त्वं वाऽव° । ३ क. °वा युताः । ४ घ. °श्चविंश° ।

कथमिति चेत् । उच्यते । ग्रामविशेषमभिकृत्यैव तत्स्वरहीनतानाभिधानात्कचि-द्भेदकपञ्चमाभावेऽपि तानविशेषस्यैव ग्रामभेदकत्वमिति ॥२८॥२९॥३०॥३१॥

क्रमप्राप्तान्कूटतानाँल्लक्षयति—

**असंपूर्णाश्च संपूर्णा व्युत्क्रमोच्चारितस्वराः ।**
**मूर्छनाः कूटतानाः स्युस्तत्संख्यामभिदध्महे ॥ ३२ ॥**

**असंपूर्णाश्चेति** । मूर्छनाश्चतुर्विधा अपि मूर्छनाः संपूर्णा असंपूर्णाश्च व्युत्क्रमोच्चारितस्वराश्चेत्कूटतानाः स्युरित्यन्वयः । संपूर्णाः सप्तस्वरयुक्ताः । असंपूर्णा एकैकान्त्यान्त्यस्वरत्यागे सति षट्स्वराद्येकस्वरान्ताः । चकारो विकल्पार्थः । व्युत्क्रमोच्चारितस्वरा इत्यत्र स्वराणामानुपूर्व्यारोह एव क्रमः । तेष्वेकादिस्वरव्यत्यासो व्युत्क्रमः । अवरोहे सत्यामपि विपरीतानुपूर्व्यां क्रमत्वाभावेन कूटतानत्वमेव । कूटत्वं नाम व्युत्क्रमोच्चारितस्वरत्वम् ॥ ३२ ॥

**पूर्णाः पञ्च सहस्राणि चत्वारिंशद्युतानि तु ।**
**एकैकस्यां मूर्छनायां कूटतानाः सह क्रमैः ॥ ३३ ॥**
**षट्पञ्चाशन्मूर्छनास्थाः पूर्णाः कूटास्तु योजिताः ।**
**लक्षद्वयं सहस्राणि द्व्यशीतिर्द्वे शते तथा ।**
**चत्वारिंशच्च संख्याता अथापूर्णान्प्रचक्ष्महे ॥ ३४ ॥**

अथ षट्पञ्चाशन्मूर्छनास्वेकैकस्याः संपूर्णादिसप्तभेदेषु प्रतिभेदं वक्ष्यमाणप्रस्तारवशादियत्तया कूटतानसंख्यां दर्शयितुं प्रतिज्ञापूर्वकमाह—**पूर्णाः पञ्च सहस्राणीत्यादिना** ॥ ३३ ॥ ३४ ॥

**एकैकान्त्यान्त्यविरहाद्भेदाः षट्षट्स्वरादयः ।**
**एकस्वरोऽत्र निर्भेदोऽप्युक्तो नष्टादिसिद्धये ।**
**क्रमाश्चाकूटतानत्वेऽप्युक्तास्तेषूपयोगिनः ॥ ३५ ॥**

**एकैकान्त्यान्त्यविरहादिति** । एकैकस्यां मूर्छनायामन्त्यान्त्यविरहादन्त्यान्त्यस्वरपरित्यागात् । अन्त्यान्त्येति वीप्सयोत्तरमन्द्रायां संपूर्णक्रमेऽन्त्यो निषादस्तस्य परित्यागात्षट्स्वरक्रमो भवति । तस्मिन्क्रमेऽन्त्यो धैवतस्तत्परित्यागात्पञ्चस्वरः क्रमो भवति । एवमसंपूर्णाः षड्भेदा द्रष्टव्याः । तद्यथा । सरिगमपधेति षट्स्वरो भेदः । सरिगमपेति पञ्चस्वरः । सरिगमेति चतुःस्वरः । सरिगेति त्रिस्वरः । सरीति द्विस्वरः । सेत्येकस्वरः । एवमन्यास्वपि मूर्छनासु प्रत्येकं षड्भेदा द्रष्टव्याः । निर्भेदः प्रस्ताराभावादवान्तरभेदरहितः । **नष्टादिसिद्धय इति** । आदिशब्देनोद्दिष्टस्य संख्यायाश्च ग्रहणम् । तेषु मौलैकाङ्कसमन्वितैरित्येकस्वरतानस्योपयोगात्तत्सिद्धिरिति तस्यै । **तेषूपयोगिन इति** । तेषु कूटता-

१ ख, च ।

नेषु मूलकारणत्वेनोपयोगिनो यतोऽत्र उक्ताः । व्युत्क्रमस्य क्रमापेक्षितत्वादिति भावः ॥ ३५ ॥

स्युः षाडवानां विंशत्या सह सप्त शतानि तु ।
औडुवानां तु विंशत्या सहितं शतमिष्यते ॥ ३६ ॥
चतुःस्वराणां कूटानां चतुर्विंशतिरीरिताः ।
त्रिस्वराः षड्द्विस्वरौ द्वावेकस्त्वेकस्वरो मतः ॥ ३७ ॥

स्युः षाडवानामिति । अत्र षाडवत्वं षट्स्वरत्वमात्रेण विवक्षितम् । ननु (तु) प्रयोगावनसमर्थषट्स्वरत्वम् । औडुवानामित्यत्राप्येवमेव द्रष्टव्यम् ॥३६॥ ३७ ॥

आर्चिको गाथिकश्चाथ सामिकोऽथ स्वरान्तरः ।
एकस्वरादितानानां चतुर्णामभिधा इमाः ॥ ३८ ॥

आर्चिक इति । यज्ञप्रयोगेष्वृचामेकस्वराश्रयत्वात्तत्संबन्धादार्चिकः । तथा गाथासंबन्धाद्गाथिको द्विस्वरः । सामसंबन्धात्त्रिस्वरस्तानः सामिकः । साम्नां तु त्रिस्वरत्वं सप्तस्वरवत्त्वेऽपि मन्द्रादिस्थानत्रयविवक्षया । चतुःस्वरतानस्यैकस्वरादिसप्तविधतानमध्यवर्तित्वात्स्वरान्तर इति संज्ञा ॥ ३८ ॥

उक्तशुद्धादिभेदेन निगयुक्ताश्चतुर्विधाः ।
तयोरेकैकहीनाश्च द्वेधा मूलक्रमा मताः ॥ ३९ ॥

उक्तशुद्धादिभेदेनेति । अत्राऽऽदिशब्देन सकाकलिः सान्तरस्तद्द्वयोपेता गृह्यन्ते ॥ ३९ ॥

षड्जाद्यौ मध्यमाद्यौ च चत्वारः स्युर्द्विधा द्विधा ।
चतुर्धाऽन्ये दशेत्यष्टाचत्वारिंशदमी क्रमाः ॥ ४० ॥
सविंशतिः सप्तशती प्रागुक्ता गुणिता क्रमैः ।
चतुस्त्रिंशत्सहस्राणि षष्ट्या पञ्च शतानि च ॥ ४१ ॥
इति षाडवसंख्या स्यादथ पञ्चस्वरान्ब्रुवे ।
गाद्यौ धाद्यौ निषादाद्यौ चतुर्भेदाः षडौडुवाः ॥ ४२ ॥
अष्टावन्ये द्विधेत्येवं चत्वारिंशदिमे क्रमाः ।
सविंशतौ(?) शते तैश्च गुणितेऽष्टौ शतानि तु ॥ ४३ ॥
+चत्वारि च सहस्राणि संख्या पञ्चस्वरेष्विति ।
चतुःस्वरेषु न्यादिद्वौ चतुर्धा द्वादशापरे ॥ ४४ ॥

---

+ चत्वारिंशत्सहस्राणीति पाठ उपलभ्यते ।

---

१ क. त्वेन नो° ।

क्रमा द्विधेति द्वात्रिंशच्चतुर्विंशतिताडिताः ।
शतानि सप्ताष्टषष्ट्या स्याच्चतुःस्वरसंमितिः ॥ ४५ ॥
त्रिस्वरेषु तु माद्यौ द्वावभेदौ द्वादशापरे ।
द्विधा षड्विंशतिरिति क्रमास्ते षड्भिराहताः ॥ ४६ ॥
षट्पञ्चाशच्छतं च स्युर्द्विस्वरेषु पुनर्द्विधा ।
रिगधन्यादयोऽष्टौ स्युः शुद्धाः षडितरे क्रमाः ।
द्वाविंशतिस्ते तु चतुश्चत्वारिंशद्द्विताडिताः ॥ ४७॥

**षड्जाद्यौ मध्यमाद्यौ चेति**। षड्जग्राम औत्तरमन्द्रक्रमः षड्जाद्यो मध्यमग्रामे शौद्धमध्यमः क्रमः षड्जाद्यः । एतौ षड्जाद्यौ । मध्यमग्रामे सौवीरक्रमो मध्यमाद्यः । षड्जग्रामे मात्सरीकृतक्रमो मध्यमाद्यः । एतौ मध्यमाद्यौ । मिलित्वा चत्वारः । द्विधा स्युः । प्रत्येकं द्विधा भवन्ति । निगयोरेकैकहीनत्वादित्यर्थः । **अन्ये दश चतुर्धेति** । निगयुक्तत्वादित्यर्थः । गाद्यौ धाद्यावित्यादिष्वप्येवं द्रष्टव्यम् ॥ ४० ॥ ४१ ॥४२॥४३॥ ४४ ॥ ४५ ॥४६॥४७॥

एकस्वरास्त्वभेदत्वान्मौला एव चतुर्दश ॥ ४८ ॥
षड्जादेः शुद्धमध्याया भेदकं पञ्चमं विना ।
चतुःस्वरे क्रमाद्द्वंद्वेऽष्टाचत्वारिंशदीरिताः ॥ ४९ ॥
तानास्त्रिस्वरयोस्त्वेते द्वादश द्विस्वरे द्वयम् ।
एक एव स्वरस्ते त्रिषष्टिरौत्तरमन्द्रकैः ॥ ५० ॥
पुनरुक्ता मतास्तानैर्याादिमार्गिक्रमाः पुनः ।
पञ्चस्वरा ये चत्वारस्तत्तानानां चतुःशती ॥ ५१ ॥
अशीत्यभ्यधिका चातुःस्वरी षण्णवतिर्भवेत् ।
द्वादश त्रिस्वरद्वंद्वे चत्वारो द्विस्वरद्वये ॥ ५२ ॥
एक एकस्वरस्तानस्तेषां पञ्चशती त्वियम् ।
त्रिनवत्या युता तानैरभिन्ना रजनीगतैः ॥ ५३ ॥

**एकस्वरास्त्विति** । तुशब्दो द्विस्वरादिक्रमवैषम्यद्योतनार्थः । वैषम्यं च काकल्यन्तरप्रयुक्तं भेदराहित्यम् । अभेदत्वात्प्रस्तारकृतभेदरहितत्वात् । मौल्या मूले भवाः शुद्धा इत्यर्थः । चतुर्दशैव । अत्रान्ययोगव्यवच्छेदार्थमवधारणम् । अयमभिप्रायः । यद्यपि निगयोः काकल्यन्तरात्तस्थापत्त्या मूर्छनाभेदकत्वेऽप्येकैकस्वरयोस्तयोः स्वरान्तरयोगमन्तरेण स्वगतसूक्ष्मभेदस्यालक्ष्यमाणत्वाच्छुद्धयोरेव गणना काकल्यन्तरयोरिति । यदा पुनः षड्जग्रामे मध्यमस्थानस्थितषड्जस्थान एव निषादाद्यारम्भेण रजन्यादयो मूर्छना भवेयुरिति । तथा मध्यम-

ग्रामे मध्यस्थानस्थितमध्यमस्थान एव गान्धाराद्यारम्भेण हारिणाश्वाद्यो मूर्छना भवेयुरिति च पक्षः । तदा ग्रामयोर्भेदकपञ्चमाभावेऽपि मूर्छनानां स्थानभेदस्य विद्यमानत्वात्कूटतानपौनरुक्त्याभाव एव । यदा पुनर्ग्रामयोर्मूर्छनानां तदधोधःस्थ-स्वरारम्भपक्षस्तदा तु मध्यमग्रामीणानां शुद्धमध्यमार्गीपौरवीगतानां तानानां षड्-जग्रामीणैरुत्तरमन्द्रारजन्युत्तरायतागतैर्यथायोगं षट्स्वरादिभिस्तानैः सह स्थान-भेदाभावाद्भेद[क]पञ्चमाभावेन पौनरुक्त्यं निश्चित्य तत्र शुद्धाश्रयत्वेन प्रथमो-क्तान्षड्जग्रामिकान्गणनायां संस्थाप्य तदपेक्षया पुनरुक्तान्मध्यमग्रामिकानप-नेतुं तान्परिगणयति—**षड्जादेः शुद्धमध्याया** इत्यादिना । ननु शुद्धमध्याया इत्यनेनैव षड्जादित्वे सिद्धे षड्जादेरिति विशेषणं व्यर्थमिति चेत् । न । अशु-द्धमध्यायाः प्रथमादिस्वरारम्भकमात्क्रमसप्तकवत्त्वेन तावत्येवोक्तक्रमविषयः संदेहः स्यात्तन्निवर्तकत्वेन विशेषणमर्थवदिति । एवं न्यादिमार्गीत्यत्र धैवतादेस्तु पौरव्या इत्यत्राप्यवगन्तव्यम् ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥

**धैवतादेस्तु पौरव्याश्चत्वारः षट्स्वराः क्रमात् ।**
**तत्तानानां तु साशीतिः शताष्टाविंशतिर्मता ॥ ५४ ॥**
**औडुवानां चतुर्णां प्रागुक्ता संख्या चतुःस्वरौ ।**
**त्रिस्वरौ द्विस्वरावेकस्वरः प्रागुक्तसंख्यकाः ॥ ५५ ॥**
**पञ्चविंशतिसंयुक्ता चतुस्त्रिंशच्छती त्वियम् ।**
**तानानां सदृशाकारा स्यात्तानैरौत्तरायतैः ॥ ५६ ॥**

**धैवतादेस्तु पौरव्या इति ।** अत्र धैवतस्य ग्रामभेदकत्वं नाऽऽशङ्कनीयम् । तस्योपलक्षणतया पूर्वमभेदकत्वप्रतिपादनात् ॥ ५४ ॥ ५५ ॥ ५६ ॥

**इत्येकाशीतिसंयुक्तं सहस्राणां चतुष्टयम् ।**
**तानानां पुनरुक्तानां पूर्णापूर्णैः सह क्रमैः ॥ ५७ ॥**
**अपनीयेत चेदेषा कूटतानमितिर्भवेत् ।**
**लक्षत्रयं सप्तदश सहस्राणि शतानि च ॥ ५८ ॥**
**नवात्रिंशद्युतानीति ज्ञानोपायोऽत्र कथ्यते ॥ ५९ ॥**

**पूर्णापूर्णैः क्रमैः सहेति ।** तत्र पूर्णाः क्रमाः प्रथमादिस्वरारम्भादि[त्यादि]ना लक्षणेन निष्पन्ना द्वानवतियुतशतत्रयसंख्याकाः । अपूर्णा द्व्यशीत्युत्तरशत-संख्याकाः । उभये चतुःसप्तत्यधिकपञ्चशतसंख्याकाः । नन्वेतैः क्रमैः सहिते पुनरुक्ततानानामेकाशीतियुक्तसहस्रचतुष्टये द्व्यशीत्युत्तरपञ्चशताधिकद्वाविंशति-सहस्रसहितलक्षत्रयतानराशेरपनीते सत्यवशिष्टकूटतानसंख्या लक्षत्रयं सप्तदश सहस्राणि नव शतानि सप्तविंशतिश्चेति दृश्यते । अत्र त्रिंशद्युतानीति कथमुपप-द्यत इति चेत् । ब्रूमः । अत्रैकस्वरतानानां चतुर्दशानां मध्ये शुद्धमध्यामार्गीपौरवी-गतेषु त्रिष्वेकस्वरतानेषु पुनरुक्तत्वेनापनीतेष्वेकादशैवेतरेष्वेषां क्रमत्वाभावेऽपि

कूटतानत्वाभावादपनेयत्वेन क्रमराशौ निवेशिताः। त्रयस्तु न निवेशिता इति तैः सह त्रिंशद्युतानीत्युपपद्यत इति । एवं तर्हि शुद्धमध्यादिष्वेव द्विस्वरादिष्वेकत्रिंशत्क्रमेषु पुनरुक्ततानत्वेनापनीतेषु तेषामपि क्रमराशावननुप्रवेशादेकषष्टियुक्तानीति पठितव्यं स्यादिति चेत्सत्यम् । अत्रोच्यते । पुनरुक्ततानत्वाकारेणापनीतानामपि तेषां क्रमत्वसंभवात्क्रमराशावनुप्रविष्टानां क्रमत्वप्रयुक्त्याऽपि पुनरु(र)पनेयत्वमाकारद्वयवशाद्बृहस्पतिसवानुष्ठानवदुपपद्यते । यद्वै(थै)कस्यापि बृहस्पतिसवस्याश्वमेधाङ्गत्वेन प्राधान्येन वाऽनुष्ठेयत्वं लोके च यथैकस्यापि देवदत्तस्य पाठकपाचकत्वोपाधिवशाद्भेदेन परिगणना कार्यान्तरान्वयस्तद्वत्त्रयाणामेकस्वराणामनुक्रमत्वाभावेनाऽऽकारद्वयासंभवान्न पुनरपनेयत्वं द्विस्वरादीनामेकत्रिंशत्तानानामाकारद्वयसंभवात्पुनरपनेयत्वमेव । अन्यथा तु दोषः स्यादिति मत्वा त्रिंशद्युतानीति सुष्ठूक्तं निःशङ्कशार्ङ्गदेवेन । ये तु मन्यन्ते त्यक्तानां न हि सकृत्त्यागः कथमप्युपपद्यत इति निर्णीय—

सहस्रैः सप्तदशभिर्युतं लक्षत्रयं य(त)था ।
शतानि नव षष्टिश्च सैका कूटाः समासतः ॥

इति ते प्रष्टव्याः । अथैकत्रिंशत्तानानां सकृत्त्यागः पुनरुक्तत्वेन वा क्रमत्वेन वा । यदि पुनरुक्तत्वेनैव त्यज्येरंस्तदा तेषां क्रमत्वेन त्याज्येष्वपरिगणनात्केवलकूटतानपरिगणनावसरे कर्म(क्रमा?)णामपि ग्रहणात्कूटाः समासतः इति वदतां व्याहतिः स्यात् । किंच तेषां पुनरुक्ताकारवत्तया च पुनरुक्तपरित्यागोऽपि साकल्येन न कृतः स्यात् । अथ क्रमत्वेनैव परित्यागस्तदा पुनरुक्तत्वेनैव त्याज्येष्वपरिगणनादपुनरुक्तकूटतानेयत्ताभिधानावसरे पुनरुक्तानामपि तेषां ग्रहणात्त्रिषष्टिः परिकीर्तितेत्यादिना शुद्धमध्यादिषु क्रमैः सह पुनरुक्तान्परिगणयतां व्याहतिः स्यात् । तेषां क्रमाकारवत्तया च क्रमत्यागोऽपि साकल्येन न कृतः स्यादिति तत्रभवतां मीमांसामांसलितधियां षष्टिश्च सैका कूटा इति महदिदं ग्रन्थनिर्माणकौशलम् ।

संगीतरत्नाकरभावबोद्धा श्रीकल्लिनाथः सुधियां मतेन ।
अपौनरुक्त्यां क्रमकूटतानसंख्याविरोधं त्विह पर्यहार्षीत् ॥५७॥५८॥५९॥

परिगणितपूर्णापूर्णतानसंख्यापरिज्ञानोपायमाह—

**अङ्कानेकादिसप्तान्तानूर्ध्वमूर्ध्वं लिखेत्क्रमात् ।**
**हते पूर्वेण पूर्वेण तेषु चाङ्के परे परे ।**
**एकस्वरादिसंख्या स्यात्क्रमेण प्रतिमूर्छनम् ॥ ६० ॥**

**अङ्कानेकादिसप्तान्तानिति** । तेषु सप्तस्वङ्केषु परे परे व्यङ्कादौ पूर्व-

---

१ क. ग. °नाममका° । २ क. प्रकुष्ट° ।

णैकाङ्कादिना हते गुणिते सति । अयमर्थः । प्रथमं पूर्वैणैकाङ्केन परे व्यङ्के गुणिते द्विसंख्या जायते । ततो जातं द्विसंख्याकं पूर्वं कृत्वा परेऽङ्के गुणिते षट्संख्या जायते । षट्संख्या ( ख्यया ) परे चतुरङ्के गुणिते चतुर्विंशतिसंख्या जायते । तया परे पञ्चाङ्के गुणिते विंशत्युत्तरशतसंख्या जायते । तया परे षडङ्के गुणिते विंशतिः सप्तशती जायते । तया परे सप्ताङ्के गुणिते चत्वारिंशद्युतपञ्चसहस्रसंख्या जायते । एवमुक्तरीत्या गुणितव्यम् । एवं कृते सति प्रतिमूर्छनं क्रमेणैकस्वरादिसंख्या स्यादेकस्वरादितानानां संख्या भवेत् ॥६०॥

उक्तसंख्यानिदर्शनार्थमुद्देशक्रमेण प्रस्तारं लक्षयति—

**क्रमं न्यस्य स्वरः स्थाप्यः पूर्वः पूर्वः परादधः ।**
**स चेदुपरि तत्पूर्वः पुरस्तूपरिवर्तिनः ।**
**मूलक्रमक्रमात्पृष्ठे शेषाः प्रस्तार ईदृशः ॥ ६१ ॥**

**क्रमं न्यस्येति** । क्रमं षष्ट्युत्तरपञ्चशतसंख्यया परिगणितेषु पूर्णापूर्णक्रमेष्वन्यतमं न्यस्य लिखित्वा पूर्वः पूर्वः स्वरः परादधः स्थाप्य इत्युत्तरमन्द्रायां तावत्सरिगमेति चतुःस्वरं क्रमं लिखित्वा तस्मिन्क्रमे पूर्वः षड्जः परादृषभादधः स्थाप्यः । अत्र पूर्वः पूर्व इति वीप्साऽऽप्रस्तारपरिसमाप्तेः प्रतितानं सकृत्करणविषयाऽवगन्तव्या नैकतानविषया । एकतानविषयत्वे तु पुरस्तूपरिवर्तिन इत्यस्य क्वचिदपि न संभवः । तेन परिगणिततानभेदा अपि न संभवेयुः । तस्मादेकवारमेव पूर्वस्वरः परादधः स्थाप्यः । स चेदुपरि तत्पूर्व इत्यस्य लक्षणांशस्य नायं विषयः । पुरस्त्विति । लिखितस्वरापेक्षया तत्पङ्क्तौ क्रमेण लेखनोचिते देशे लिखितो हस्तस्य दक्षिणभाग इत्यर्थः । उपरिवर्तिनः पुरोदेशस्योर्ध्वयन्त्रस्थिताः स्थाप्या इत्यूह्यम् । अनेनात्र षड्जानन्तरं गमौ स्थाप्यौ । पृष्ठे प्रथममध्ये लिखितस्वरस्य पश्चाद्देशे लिखतो हस्तस्य वामभाग इत्यर्थः । शेषाः क्रमापेक्षया लिखितेभ्योऽवशिष्टाः स्वरा मूलक्रमक्रमान्मूलक्रम उत्तरमन्द्रायां क्रमेण षड्जादिसप्तस्वराद्याः क्रमाः सप्त । तत्र षड्जाद्यः क्रमो मूलक्रमः । तस्मिन्स्वराणां यः क्रमो व्यवहितत्वेनाव्यवहितत्वेन वा तस्मात् । स्थाप्या इति शेषः । शेषा इति बहुवचनं संभवद्विषयम् । अनेनात्रावशिष्ट ऋषभः पृष्ठे लिख्यते । एवं च सति रिसगमेति प्रथमः कूटतानः प्रस्तारे निष्पद्यते । अथास्मिंस्ताने यद्यपि ऋषभात्षड्जः पूर्वस्तथाऽपि ' स चेदुपरि ' स पूर्व उपरि चेदुपरि तस्यामेव पङ्क्तावुत्तरत्र वर्तते चेत्तदा तत्पूर्व उपरिवर्तमानात्पूर्वः स्थाप्य इत्यत्रोपरिवर्तमानात्षड्जादस्मिन्क्रमे पूर्वाभावादेवर्षभषड्जयोरधः स्थाप्यौ न संभवतः । गान्धारस्याधस्तान्मूलक्रमापेक्षयर्षभस्य पूर्वत्वात्तस्योपर्यवर्तमानत्वाच्चर्षभः स्थाप्यः । पुरस्तूपरिवर्तिन इति ऋषभानन्तरं मध्यमः स्थाप्यः । अत्रापि बहुवचनं संभवद्वि-

षयम् । मूलक्रमादिति पृष्ठे षड्जगान्धारौ स्थाप्यौ । तदा सरिगमेति द्वितीयः कूटतानः । एवं मूलक्रमावरोहावधि प्रस्तारे क्रियमाणे तत्तत्क्रमोक्तसंख्याकाः कूटताना उत्पद्यन्ते । ततः प्रस्तार एव न संभवति ॥ ६१ ॥

अथ खण्डमेरुः ।

एवं प्रस्तुतेषु कूटेषु नष्टोद्दिष्टतानबोधार्थं खण्डमेरुं लक्षयति—

**सप्ताद्येकान्तकोष्ठानामधोऽधः सप्त पङ्क्तयः ।**
**तास्वाद्यायामाद्यकोष्ठे लिखेदेकं परेषु खम् ॥ ६२ ॥**

**सप्तेति** । सप्ताद्येकान्तकोष्ठानां सप्ताऽऽदयो येषां ते सप्तादयः । एकोऽन्तो येषां त एकान्ता इति तद्गुणसंविज्ञानो बहुव्रीहिः । सप्तादयश्च त एकान्ताः कोष्ठा इति ततः कर्मधारयः । तेषां सप्त पङ्क्तयोऽधोऽधः क्रमेण लेखनीया इति शेषः । अयमर्थः । आदौ सप्तकोष्ठान्वितां तिर्यक्पङ्क्तिं लिखेत् । तदधोऽध आदिमैकैककोष्ठग्रामात्क्रमेण षट्पङ्क्तीर्लिखेत् । तदा सप्ताद्येकान्तकोष्ठानां सप्त तिर्यक्पङ्क्तयो भवन्ति । अत्रैव चैकादिसप्तान्तकोष्ठानामूर्ध्वाधःस्थितपङ्क्तयश्च सप्त दृश्यन्ते । तासु तिर्यक्पङ्क्तिष्वाद्यायां सप्तकोष्ठिकायां पङ्क्तावाद्यकोष्ठ एकैकसंख्याङ्कं लिखेत् । परेषु द्वितीयादिषु तत्पङ्क्तिकोष्ठेषु खं शून्याङ्कं बिन्दुमित्यर्थः । खमिति जातावेकवचनम् ॥ ६२ ॥

**वेद्यतानस्वरमितान्न्यस्येत्तेष्वेव लोष्टकान् ॥ ६३ ॥**

तेष्वेवाऽऽद्यपङ्क्तिकोष्ठेष्वेव वेद्यतानस्वरमितान् । नष्टत्वेन वोद्दिष्टत्वेन वा जिज्ञास्यो वेद्यस्तस्य ज्ञानस्य यावन्तः स्वरास्तैर्मितान्सप्तसंख्याकान् । **लोष्टकानिति** । चालनोचितद्रव्योपलक्षणम् ॥ ६३ ॥

**प्राक्पङ्क्त्यन्त्याङ्कसंयोगमूर्ध्वाधःस्थितपङ्क्तिषु ।**
**शून्यादधो लिखेदेकं तं चाधोऽधः स्वकोष्ठकात् ॥ ६४ ॥**
**कोष्ठसंख्यागुणं न्यस्येत्खण्डमेरुरयं मतः ॥ ६५ ॥**

इति खण्डमेरुः ।

| स | रि | ग | म | प | ध | नि |
|---|---|---|---|---|---|---|
| १ | ० | ० | ० | ० | ० | ० |
| | १ | २ | ६ | २४ | १२० | ७२० |
| | | ४ | १२ | ४८ | २४० | १४४० |
| | | | १८ | ७२ | ३६० | २१६० |
| | | | | ९६ | ४८० | २८८० |
| | | | | | ६०० | ३६०० |
| | | | | | | ४३२० |

ऊर्ध्वाधःस्थितपङ्क्तिषूर्ध्वाधःस्थितकोष्ठानां पङ्क्तिषु । अत्र स्थितेतिविशेषणपदस्य विशेष्यकोष्ठपदसापेक्षत्वेन समासः । प्राक्पङ्क्त्यन्त्यङ्कसंयोगं प्राक्पङ्क्तेः प्राक्पङ्क्तौ प्राक्पङ्क्तीनां वा यथासंभवमन्त्याङ्क[संयोग]मन्त्याङ्कयोरन्त्याङ्कानां वा संयोगं संयोगोत्पन्नमङ्कान्तरमित्यर्थः । संनिहितपरपङ्क्तौ शून्याद्बिन्द्वाक्रान्तकोष्ठादधःकोष्ठे लिखेत् । एतदुक्तं भवति । द्वितीयपङ्क्तौ प्राक्पङ्क्त्यन्त्याङ्कस्यैकत्वेन संयोगस्याभावादेकाङ्कमेव लिखेत् । तृतीयपङ्क्तौ तु प्राक्पङ्क्त्योरन्त्याङ्कयोः संभवेन तत्संयोगोत्पन्नं द्व्यङ्कं शून्यादधो लिखेदिति । तं च द्व्यङ्कादिकं च स्वकोष्ठकात्स्वेनाधिष्ठितकोष्ठमारभ्याधोऽधः । कोष्ठसंख्यागुणं कोष्ठयोः कोष्ठानां वा संख्या कोष्ठसंख्या तस्या गुणो यस्मिन्कर्मणीति क्रियाविशेषणम् । अयमर्थः । तृतीयपङ्क्तौ द्व्यङ्काधिष्ठितकोष्ठेन सहाधःकोष्ठस्य द्वितीयस्य संभवात्तत्र द्व्यङ्कं द्विगुणीकृत्य चतुरङ्कं लिखेत् । चतुर्थपङ्क्तावपि प्राक्पङ्क्तीनामन्त्याङ्कानां संयोगिनां षडङ्कं तत्र शून्यादधो लिखेत् । (*चतुर्थपङ्क्तावपि प्राक्पङ्क्तीनामन्त्याङ्कानां संयोगिनां षडङ्कं तत्र शून्यादधो लिखेत्)। ततः संनिहिताधःकोष्ठे तं कोष्ठसंख्यया द्विगुणीकृत्य द्वादशाङ्कं लिखेत् । ततोऽप्यधःकोष्ठे तं षडङ्कमेव कोष्ठसंख्यया त्रिगुणीकृत्याष्टादशाङ्कं लिखेत् । एवं पञ्चम्यादिषु पङ्क्तिषु प्राक्पङ्क्त्यन्त्याङ्कसंयोगादिप्रकारेण लिखेदिति ॥ ६४ ॥ ६५ ॥

अस्मिन्खण्डमेरावुद्दिष्टनष्टयोर्बोधोपायं दर्शयति—

**स्वरान्मूलक्रमस्यान्त्यात्पूर्वं यावतिथः स्वरः ।**
**उद्दिष्टान्त्यस्तावतिथे कोष्ठेऽधो लोष्टकं क्षिपेत् ॥ ६६ ॥**

**स्वरानित्यादिना** । स्वरूपमुक्त्वा कतमोऽयमिति संख्याविषयत्वेन यः पृच्छ्यते स उद्दिष्टः स्वरूपत्वात् । उद्दिष्टसंज्ञकस्तान उद्दिष्टान्त्यस्वरो मूलक्रमस्य मूर्छनाप्रथमस्वरमारभ्य प्रवृत्तस्योत्तरमन्द्रायां सरिगमेति चतुःस्वरक्रमस्य भावात् । अन्त्यान्त्यस्वरमध्यमात्पूर्वं पृष्ठतो मगसरीत्युद्दिष्टतानस्यान्त्य ऋषभो यावतिथ इति विचार्यमाणेस्तु तृतीयो भवति । अधस्तावतिथे तृतीये कोष्ठे द्वादशाङ्काङ्किते ॥ ६६ ॥

**लोष्टचालनमन्त्यात्स्यात्त्यक्त्वा लब्धं क्रमो भवेत् + ।**
**लोष्टाक्रान्ताङ्कसंयोगादुद्दिष्टस्य मितिर्भवेत् × ॥ ६७ ॥**

**लोष्टचालनमन्त्यात्स्यादिति** । नियमेनाधोधःस्थितपङ्क्तिषु चतुर्थपङ्क्तौ बिन्दुकोष्ठस्थितं लोष्टकं क्षिपेत् । अनन्तरं लब्धं कोष्ठस्थाङ्कप्रापकत्वेन चरिता-

* इदमधिकम् । + अत ऊर्ध्वम् ‘ अन्त्यमेन्द्रसमोत्पोपि (?)लब्धस्त्याज्यः सपङ्क्तिकः ’ इति श्लोकार्धं ङ. पुस्तके वर्तते । × अत ऊर्ध्वं ‘ संख्यया तु यदा रूपे पृष्टे नष्टं तदुच्यते ’ श्लोकार्धं ङ. पुस्तके वर्तते ।

१ ग. °णस्तृती° । २ ङ. लोष्टकान्त्याङ्क° ।

र्थमृषभं त्यक्त्वा क्रमो भवेत् । शिष्टानां स्वराणां सगमेति क्रमो भवेत् । तदो-द्दिष्टेऽपि लब्धत्यागान्मगसेत्युद्दिष्टो भवेत् । पुनरप्युद्दिष्टान्त्यः षड्जः पूर्वोक्तरीत्या तृतीयो यतस्तेन तृतीयपङ्क्तिबिन्दुस्थितलोष्टकमधस्तृतीये चतुरङ्काङ्किते क्षिपेत् । तदा षड्जे लब्धे तमपि त्यक्त्वा गमेति क्रमः स्यात् । मगेत्युद्दिष्टोऽपि स्यात् । पुनरप्युद्दिष्टान्त्यस्य गान्धारस्योक्तरीत्या द्वितीयत्वाद्द्वितीयपङ्क्तिबिन्दुस्थितं लोष्ट-कमधो द्वितीये कोष्ठ एकाङ्काङ्किते क्षिपेत् । ततो मूलक्रमोद्दिष्टयोरवशिष्टस्य मध्यमस्यैकत्वात्प्रथमपङ्क्तेरधः कोष्ठाभावाच्च मौलिकाङ्कस्थितो लोष्टो न चलति । यत्र पुनर्मूलक्रम उद्दिष्टताने च स्वराणामन्त्यत्वादिना साम्यं तत्रापि न लोष्टचालनम् । एवं च सति लोष्टाक्रान्ताङ्कसंयोगादुद्दिष्टस्य मितिर्भवेदिति प्रकृतस्य मगसरीत्यस्वा( स्या )ष्टादशत्वं प्रमितं भवति । एवं सर्वतानेष्वपि द्रष्टव्यम् ॥ ६७ ॥

> **यैरङ्कैर्नष्टसंख्या स्यान्मौलैकाङ्कसमन्वितैः ।**
> **तेषु लोष्टं क्षिपेन्मूलं(ले) लोष्टस्थानमितं भवेत् ॥ ६८ ॥**
> **नष्टतानस्वरस्थानं ततो यावतिथे पदे ।**
> **अधःक्रमादस्ति लोष्टः स्वरस्तावतिथो भवेत् ।**
> **क्रमान्तिमस्वरात्पूर्वाल्ल(र्वो ल)ब्धत्यागादि पूर्ववत् ॥ ६९ ॥**

एतावतिथ इति संख्याविशेषमुक्त्वा किंरूप इति स्वरूपं विषयीकृत्य यः पृच्छ्यतेऽसौ प्रतीयमानरूपत्वान्नष्ट इत्युच्यते । नष्टसंख्या नष्टतानसंख्या । उत्तरमन्द्रायां चतुःस्वरक्रमे तावदष्टादशस्तान इत्युक्त्वा मौलैकाङ्कसमन्वितै-स्तिर्यक्पङ्क्तिष्वाद्या सप्तकोष्ठिका पङ्क्तिर्मूलं तत्र भवो मौलः स चासावेका-ङ्कश्च । तत्राऽऽद्यकोष्ठस्थित इति यावत् । तेन समन्वितैर्यैरङ्कैर्भिन्नपङ्क्ति-कोष्ठस्थितैश्चतुर्थपङ्क्तौ द्वादशाङ्केन तृतीयपङ्क्तौ चतुरङ्केण द्वितीयपङ्क्ता-वेकाङ्केन चैतैर्मिलितैरष्टादशसंख्या स्यात् । तेष्वङ्केषु लोष्टं प्रत्येकं क्षिपेत् । नष्टतानस्वरस्थानम् । नष्टतानस्वरस्य प्रापकं स्थानं चालितलोष्टाक्रान्तकोष्ठ इत्यर्थः । मूले तिर्यगाद्यपङ्क्तौ । लोष्टस्थानमितं लोष्टस्थानं बिन्दुकोष्ठस्तेन मितं बिन्दुकोष्ठेन सह परिगणितमित्यर्थः । अन्यथा स्वकोष्ठकात्कोष्ठसंख्यागुण-मित्यत्रोक्तनियमोऽत्रापि प्रसरेदित्येवमुक्तम् । ततोऽनन्तरमधः क्रमाद्यावतिथे पदे लोष्टोऽस्ति क्रमान्तिमस्वरात्पूर्वस्तावतिथः स्वरो भवेदिति । प्रकृतेऽष्टादशे तानेऽन्त्यलोष्टस्य तृतीयकोष्ठस्थितत्वात्क्रमान्तिमस्वरात्पूर्वस्तृतीय ऋषभो नष्टता-नान्तिमत्वेन लभ्यते । लब्धत्यागादि पूर्ववदित्यतिदेशात उद्दिष्टोक्तप्रकारेण कर्त-व्यमित्यर्थः । तथा च कृते सति ऋषभं त्यक्त्वा सगमेति क्रमो भवति । तद्व-दुपान्त्यलोष्टस्यापि तृतीयकोष्ठस्थितत्वात्क्रमान्तिमत्वात्पूर्वस्तृतीयः षड्जो नष्टो-पान्त्यत्वेन लभ्यते । ततोऽपि गमेति क्रमो द्वितीयलोष्टस्य द्वितीयकोष्ठस्थितत्वा-त्क्रमान्तिमो द्वितीयो गान्धारो नष्टाद्वितीयत्वेन लभ्यते । ततः पारिशेष्यान्म-

ध्यमस्तानपूरकत्वेन नष्टादिमो लभ्यते। तद्रा मगसरीति नष्टतानरूपं स्यात्। किंच यत्र यत्रान्ते मध्ये वा लोष्टचालनं नास्ति तत्र तत्र मूलक्रमान्त्यादिः स्वरो नष्टोऽपि तादृशो लभ्यत इत्यवगन्तव्यम्॥ ६८॥ ६९॥

खण्डमेरावपि तानसंख्याज्ञानोपायमाह—

**तानस्वरमितोर्ध्वाधःपङ्क्तिगान्त्याङ्कमिश्रणात्।**
**एकस्वरादितानानां संख्या संजायते क्रमात्॥ ७०॥**

**तानस्वरेति**। तानस्वरमितोर्ध्वाधःपङ्क्तिगान्त्याङ्कमिश्रणात्। तानस्यैकस्वरादिष्वन्यतमस्य स्वरा यावन्तस्तैर्मितास्तत्संख्यापरिच्छिन्नास्तत्समसंख्याका इत्यर्थः। ऊर्ध्वाधःपङ्क्तयश्च ता गच्छन्तीति पङ्क्तिगास्त एवान्त्याङ्कास्तेषां यथासंभवं द्वित्र्यादीनां मिश्रणात्। एकस्वरादितानानां संख्या पूर्वोक्तैकस्वरस्यैको द्विस्वरस्य द्वौ त्रिस्वरस्य षट् चतुःस्वरस्य चतुर्विंशतिरित्यादिरूपा। क्रमाद्द्व्यङ्कमिश्रणे द्विस्वरतानसंख्या त्र्यङ्कमिश्रणे त्रिस्वरतानसंख्येत्यादिः क्रमस्तस्मात्॥ ७०॥

**अथात्र शुद्धतानानां नामानि व्याहरामहे।**
**अग्निष्टोमोऽत्याग्निष्टोमो वाजपेयश्च षोडशी॥ ७१॥**
**पुण्डरीकोऽश्वमेधश्च राजसूयस्ततः परः।**
**इति स्युः षड्जहीनानां सप्त नामान्यनुक्रमात्॥ ७२॥**

कूटतानोपयोगित्वेन खण्डमेरुं निरूप्य प्रसङ्गाच्छुद्धतानानामदृष्टफलसंबन्धं च कथयिष्यंस्तेषां यज्ञानामभिधेयत्वं वक्तुमुपक्रमते—**अथात्रेत्यादिना**॥७१॥७२॥

**स्विष्टकृद्बहुसौवर्णो गोसवश्च महाव्रतः।**
**विश्वजिद्ब्रह्मयज्ञश्च प्राजापत्यश्च सप्तमः॥ ७३॥**
**क्रमादृषभहीनानां तानानामभिधा इमाः।**
**अश्वक्रान्तो रथक्रान्तो विष्णुक्रान्तस्ततः परः॥ ७४॥**
**सूर्यक्रान्तो रथ(गज)क्रान्तो बलि(ल)भिन्नागय(प)क्षकः।**
**इति पञ्चमहीनानां संज्ञाः सप्त क्रमान्मताः॥ ७५॥**
**चातुर्मास्योऽथ संस्थाख्यः शस्त्रश्चोक्थश्चतुर्थकः।**
**सौत्रामणी तथा चित्रा सप्तमस्तूद्भिदाह्वयः।**
**संज्ञा निषादहीनानां षाडवानामिमाः क्रमात्॥ ७६॥**

॥ ७३॥ ७४॥ ७५॥ ७६॥

इति षाड्जग्रामिकाष्टाविंशतिषाडवताननामानि।

---

१ क. °त्संख्यया प°।

सावित्री चार्धसावित्री सर्वतोभद्रसंज्ञकः ।
आदित्यानामयनश्च गवामयननामकः ॥ ७७ ॥
सर्पाणामयनः षष्ठः सप्तमः कौण्ड(ण)पायि(य)नः ।
नामानि षड्जहीनानां तानानामिति मेनिरे ॥ ७८ ॥
अग्निचिद्द्वादशाहश्चोपांशुः सोमाभिधस्ततः ।
अश्वप्रतिग्रहो बर्हिरथाभ्युदयसंज्ञकः ॥ ७९ ॥
ऋषभेण विहीनानामिति नामानि मन्वते ।
सर्वस्वदक्षिणो दीक्षा सोमाख्यः समिदाह्वयः ॥ ८० ॥
स्वाहाकारस्तनूनपात्ततो गोदोहनो मतः ।
इति गान्धारहीनानां क्रमात्संज्ञाः प्रचक्षते ॥ ८१ ॥

इति माध्यमग्रामिकैकविंशतिषाडवताननामानि ।

इडा पुरुषमेधश्च श्येनो वज्र इषुस्ततः ।
अङ्गिराः कङ्क इत्येताः सप्त(प)हीनाभिधाः क्रमात् ॥८२॥
ज्योतिष्टोमस्ततो दर्शो नान्द्याख्यः पौर्णमासकः ।
अश्वप्रतिग्रहो रात्रिः सौभरः[1] सप्तमः स्मृतः ॥ ८३ ॥
एता निषादगान्धारहीनानामभिधाः क्रमात् ।
सौभाग्यकृच्च कारीरी शान्तिकृत्पुष्टिकृत्तथा ॥ ८४ ॥
वैतनेयोच्चाटनौ च वशीकरणसंज्ञकः ।
पञ्चमर्षभहीनानां तानानामभिधा इमाः ॥ ८५ ॥

इति षाड्जग्रामिकैकविंशत्यौडुवताननामानि ।

त्रैलोक्यमोहनो[2] वीरः कन्दर्पबलशातनः ।
शङ्खचूडो गजच्छायो रौद्राख्यो विष्णुविक्रमः ॥ ८६ ॥
तानानां रिधहीनानां नामान्येतान्यनुक्रमात् ।
भैरवः कामदाख्यश्चावभृ[3]तोऽ(थोऽ)ष्टकपालकः ॥ ८७ ॥
स्विष्टकृच्च वषट्कारो मोक्षदः सप्तमो मतः ।
संज्ञा निषादगान्धारहीनानामिति संमताः ॥ ८८ ॥

इति माध्यमग्रामिकचतुर्दशौडुवताननामानि ।

यद्यज्ञनामा यस्तानस्तस्य तत्फलमिष्यते ॥ ८९ ॥

॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४॥ ॥ ८५॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥

---

१ ख. ग. सोत्तरः । घ. सौरभः । २ ङ. °नो द्वीप्तः क° । ३ ख. °वभृतोऽ° ।

शुद्धतानानां यज्ञफलसंबन्धे किं प्रमाणमित्यत आह–

**गान्धर्वे मूर्छनास्तानाः श्रेयसे श्रुतिचोदिताः ।**
**गाने स्थानस्य लाभेन ते कूटाश्चोपयोगिनः ॥ १० ॥**

**गान्धर्व इति** । गान्धर्वं वक्ष्यमाणलक्षणो गीतविशेषस्तत्र । **मूर्छनास्ताना इति** । तानाः शुद्धा इति प्रकरणाल्लभ्यते । तत्साहचर्यान्मूर्छना अपि शुद्धा एव विवक्षिताः । श्रेयसेऽदृष्टफलाय । **श्रुतिचोदिता इति** । श्रुतिशब्देन तदनुगृहीताः स्मृतयोऽप्युपलक्ष्यन्ते । ताभिश्चोदितास्तानास्तद्यथा–

उत्तरमन्द्रानुगता गायेत्तिस्रो मुदा युक्तः ।
गान्धाररक्षोघ्नीरित्यौद्गात्रे(?)मूर्छना विहिताः ॥
आग्निष्टोमिकतानेन गीतं साम शृणोति यः ।
स सर्वपातकैर्मुक्तो लोकाञ्जयति दुर्जयान् ॥
दक्षप्रोक्तं पठेद्यस्तु वर्णयञ्शुद्धषड्जया ।
प्रत्यक्षसंध्ययोः स्तोत्रं नाकलोकं स गच्छति ॥
आग्निष्टोमिकतानेन यैर्नरैः स्तूयते शिवः ।
ते भुक्त्वा विपुलान्भोगाञ्शिवसायुज्यमाप्नुयुः " इति ॥

कूटतानानां तु केवलं दृष्टफलत्वेनोपयोगित्वमाह–**गान इति** । गानं वक्ष्यमाणलक्षणं तस्मिन्स्थानस्य तत्तन्मूर्छनावशेन सारितानां स्वराणामाधारश्रुतेर्लाभेन परिज्ञानेन ॥ १० ॥

इति प्रथमे स्वराध्याये चतुर्थं ग्राममूर्छनाक्रमशुद्धतानकूटतानप्रकरणम् ॥

---

अथ पञ्चमं साधारणप्रकरणम् ।

---

गीते विकृतस्वरप्रयोगेण वैचित्रीं क्वचिद्गानसाम्यं च दर्शयितुं साधारणमवधारयति–

**साधारणं भवेद्द्वेधा स्वरजातिविशेषणात् ।**
**स्वरसाधारणं तत्र चतुर्धा परिकीर्तितम् ।**
**काकल्यन्तरषड्जैश्च मध्यमेन विशेषणात् ॥ १ ॥**

**साधारणमित्यादिना । स्वरजातिविशेषणादिति** । स्वरसाधारणं जातिसाधारणमित्येवंरूपेण । तत्र तयोर्मध्ये स्वरसाधारणं चतुर्धा । **काकल्यन्तरषड्जैश्च मध्यमेन विशेषणादिति** । काकलीसाधारणमन्तरसाधारणं षड्जसाधारणं मध्यमसाधारणमित्येवमित्यर्थः ॥ १ ॥

अनेकाश्रयत्वेन लोकसिद्धं साधारणशब्दार्थं प्रकृते योजयति--

**साधारणः काकली हि भवेत्षड्जनिषादयोः ।**
**साधारण्यमतस्तस्य यत्तत्साधारणं विदुः ॥ २ ॥**

**साधारणः काकलीत्यादिना** । हि यस्मात्कारणात्काकलीविकृतश्चतुः-श्रुतिको निषादः षड्जनिषादयोः शुद्धयोः साधारणो भवेत्तदुभयस्मृ( श्रु ) तिसंबन्धित्वेनातः कारणात्स्वकाकलीतो यत्साधारण्यं तत्साधारणं विदुः । तदेव साधारण्यं साधारणमितिपदेनापि विदुरित्यर्थः । धर्मपरत्वेन साधारणमिति नपुंसको निर्देशः । अतः साधारणं भवेद्द्वेधेत्यादिषु साधारणपदस्य साधारण्यपद-पर्यायत्वमवसेयम् । माधुर्ये मधुरमितिप्रयोगवत् ॥ २ ॥

**अन्तरस्यापि गमयोरेवं साधारणं मतम् ।**
**प्रयोज्यौ षड्जमुच्चार्य काकलीधैवतौ क्रमात् ॥ ३ ॥**
**एवं मध्यममुच्चार्य प्रयुञ्जीतान्तरर्षभौ ।**
**षड्जकाकलिनौ यद्वोच्चार्य षड्जं पुनर्व्रजेत् ॥ ४ ॥**

**अन्तरस्यापीति** । अन्तरस्य विकृतत्वेन चतुःश्रुतिकस्य गान्धारस्यापि । एवमुक्तप्रकारेणोभयाश्रयत्वेन गमयोः शुद्धयोः श्रुतिसंबन्धित्वेन साधारणं साधारण्यं मतमिष्टम् । स्वरसाधारणविशेषधर्मत्वेन काकल्यन्तरयोरुपात्तयोस्तत्संबन्ध-वशादुद्देशक्रममुल्लङ्घ्यापि तयोः प्रयोगं दर्शयति--**प्रयोज्यावित्यादिना** । काकलीधैवतावित्यत्र काकलीति स्त्रीलिङ्गनिर्देशः ॥ ३ ॥ ४ ॥

**तत्परान्यतमं चैवं मध्यमं चान्तरस्वरम् ।**
**प्रयुज्य मध्यमो ग्राह्यस्तत्परोऽन्यतमोऽथवा ॥ ५ ॥**
**अल्पः प्रयोगः सर्वत्र काकली चान्तरः स्वरः ॥ ६ ॥**

**तत्परान्यतममिति** । तस्मात्षड्जात्परेषु स्वरेष्वन्यतमसंनिहितः परो यदि लोप्यः स्यात्तदा तं विहाय तत्संनिहितमेव परमित्यर्थः । काकलीप्रयोगेऽभिहितं प्रकारमन्तरं (र)प्रयोगेऽप्यतिदिशति--**एवं मध्यममिति** ॥५॥६॥

एवं काकलीसाधारणमन्तरसाधारणं च सप्रयोगमुक्त्वा षड्जमध्यमसाधारणे लक्षयति--

**निषादो यदि षड्जस्य श्रुतिमाद्यां समाश्रयेत् ।**
**ऋषभस्त्वन्तिमां प्रोक्तं षड्जसाधारणं तदा ॥ ७ ॥**
**मध्यमस्यापि गम(प)योरेवं साधारणं मतम् ।**
**साधारणं मध्यमस्य मध्यमग्रामगं ध्रुवम् ॥ ८ ॥**

**निषादो यदीत्यादिना** । स्वरसाधारणचतुष्टयस्यापि ग्रामद्वये प्रसक्तौ विकृत-

त्वेऽपि स्वराणां पञ्चश्रुतित्वमनिष्टमिति मत्वा मध्यमसाधारणं मध्यम एव नियम-[य]ति–**साधारणं मध्यमस्येति** ॥ ७ ॥ ८ ॥

षड्जमध्यमसाधारणयोर्व्यपदेशान्तरे सप्रवृत्तिनिमित्तं दर्शयति–

**साधारणे कैशिके ते केशाग्रवदणुत्वतः ।**
**ते एव कैश्चिदुच्येते ग्रामसाधारणे बुधैः ॥ ९ ॥**

**साधारणे इति** । ते साधारणे षड्जमध्यमसाधारणे । केशाग्रवदप्यणु-त्वतः । चतुःश्रुतिकस्य च्युतत्वेन द्विश्रुतिकत्वापत्त्याऽल्पत्वात्कैशिके इत्युच्येते । ते एव षड्जमध्यमसाधारणे एव ग्रामपतिनियतत्वात्कैश्चिद्बुधैर्ग्रामसाधारणे इति चोच्येते इत्यन्वयार्थः ॥ ९ ॥

जातिसाधारणं लक्षयति–

**एकग्रामोद्भवास्वेकांशासु जातिषु यद्भवेत् ।**
**समानं गानमार्यास्तज्जातिसाधारणं जगुः ।**
**जातिसाधारणं केचिद्रागानेव प्रचक्षते ॥ १० ॥**

**एकग्रामेति** । **जातिसाधारणमिति** । जात्योर्वा जातिषु वा वर्णसाम्येन गानस्य यत्साधारणं तदेव तथोक्तम् ॥ १० ॥

इति प्रथमे स्वराध्याये पञ्चमं साधारणप्रकरणम् ॥

---

अथ षष्ठं वर्णालंकारप्रकरणम् ।

---

जातिसाधारणनिरूपणे गानसंबन्धित्वेन प्रसक्तं वर्णं सप्रभेदं लक्षयति–

**गानक्रियोच्यते वर्णः स चतुर्धा निरूपितः ।**
**स्थाय्यारोह्यवरोही च संचारीत्यथ लक्षणम् ॥ १ ॥**
**स्थित्वा स्थित्वा प्रयोगः स्यादेकस्यैव स्वरस्य यः ।**
**स्थायी वर्णः स विज्ञेयः परावन्वर्थनामकौ ॥ २ ॥**
**एतत्संमिश्रणाद्वर्णः संचारी परिकीर्तितः ॥ ३ ॥**

**गानक्रियेति** । गानक्रियाया वर्णत्वं स्वरपदादेर्वर्णनाद्विस्तारकरणात् । **एक-स्यैवेति** । तत्राऽऽद्यौ 'सासासा रीरीरी' एवमादिप्रयोगः । द्वितीये 'सारी-मामा'[1] इत्येवमादिरूपः । **परावन्वर्थनामकाविति** । परावारोह्यवरोहिणाव-न्वर्थनामकौ । सरिगमपधनीत्यारोहादारोही । निधपमगरिसेत्यवरोहादवरोहीत्ये-वम् । एतत्संमिश्रणात् । एतेषां स्थाय्यादीनां त्रयाणां वर्णानां सारीसारीगा सनिधासारीगेत्येवं यथायोगं मिश्रणात्संचारी वर्णः परिकीर्तितः । यत्र गान-

---

१ ग. नां मामारीगा सनिधामारी° ।

क्रियायां यस्य वर्णस्य बाहुल्यं दृश्यते तत्र तेन व्यपदेशः कर्तव्य इति मन्तव्यम् ॥ १ ॥ २ ॥ ३ ॥

उक्तवर्णग्रथनविशेषरूपमलंकारं प्रतिवर्णं सविभागं लक्षयति—

विशिष्टवर्णसंदर्भमलंकारं प्रचक्षते।
तस्य भेदा बहुविधास्तत्र स्थायिगतान्ब्रुवे ॥ ४ ॥

विशिष्टवर्णसंदर्भमित्यादिना। वर्णसंदर्भोऽलंकार इत्येतावत्युक्ते वर्णविशेषे संचारिणि व्यभिचारः स्यात्स मा भूदिति विशिष्टमिति विशेषणम्। वैशिष्ट्यं च नियतकलादियुक्तत्वम्। इह प्रसन्नादिप्रभृतीनामलंकारत्वम्। गीतिरेतैरलं क्रियत इति करणव्युत्पत्त्या यथा लोके हारादिभिर्नारी काव्ये चानुप्रासादिभी रसादिस्तद्वत्। तथा चाऽऽह—भरतः प्रकारान्तरेण—

'शशिना रहितेव निशा विजलेव नदी लता विपुष्पेव।
आविभूषितेव कान्ता गीतिरलंकारहीना स्यात्' इति ॥ ४ ॥

येषामाद्यन्तयोरेकः स्वरस्ते स्थायिवर्णगाः।
प्रसन्नादिः प्रसन्नान्तः प्रसन्नाद्यन्तसंज्ञकः ॥ ५ ॥
ततः प्रसन्नमध्यः स्यात्पञ्चमः क्रमरेचितः।
प्रस्तारोऽथ प्रसादः स्यात्सप्तैते स्थायिनि स्थिताः ॥ ६ ॥

येषामाद्यन्तयोरिति। येषामलंकाराणामाद्यन्तयोः कलानामुपक्रमोपसंहारयोरेकः स्वरो मूर्छनावद्यो न षड्जादीनां मध्ये यस्तूपक्रान्त उपसंहारे स्थानान्तरगतोऽपि स एवेत्यर्थः। एतेन स्थायिवर्णादिवृत्तिरेतेषु दर्शिता। अतस्ते स्थायिवर्णगाः स्थाय्यलंकाराः ॥ ५ ॥ ६ ॥

उक्तेऽप्येवं मन्द्रादिस्थानेष्वलंकारलक्षणार्थं प्रतिमूर्छनं तारमन्द्रव्यवहारमन्यथाऽनेकधा करोति—

मन्द्रः प्रकरणेऽत्र स्यान्मूर्छनाप्रथमस्वरः।
स एव द्विगुणस्तारः पूर्वः पूर्वोऽथवा भवेत् ॥ ७ ॥
मन्द्रः परस्ततस्तारः प्रसन्नो मृदुरित्यपि।
मन्द्रस्तारस्तु दीप्तः स्यान्मन्द्रो बिन्दुशिरा भवेत्।
ऊर्ध्वरेखाशिरास्तारो लिपौ त्रिर्वचनात्प्लुतः ॥ ८ ॥

मन्द्रः प्रकरण इति। द्विगुणोऽष्टमः ॥ ७ ॥ ८ ॥

उद्देशक्रमेण त्रिषष्टिमलंकारांल्लक्षयति—

---

१ क. °न्द्रस्य व्य°। २ ङ. मन्द्रात्परस्त°।

मन्द्रद्वयात्परे तारे प्रसन्नादिरुदीरितः ।
सां सां सां । (१)
तद्वैलोम्ये प्रसन्नान्तः ।
सां सां सां । (२)
प्रसन्नद्वयमध्यगे ॥ ९ ॥

मन्द्रद्वयात्पर इत्यादि त्रिषष्टिरुदिता मयेत्यन्तेन । इह ग्रन्थकारेण दिङ्मात्रप्रदर्शनार्थमुत्तरमन्द्रामधिकृत्य प्रसिद्धालंकाराणां प्रकारोऽधिष्ठितः । तद्वन्मूर्छनान्तरेष्वप्यलंकारप्रस्तारा द्रष्टव्याः ॥ ९ ॥

जातिसाधारणं लक्षयति—

दीप्ते प्रसन्नाद्यन्तः स्यात् ।
सां सां सां । (३)
तारयोर्मध्यगे पुनः ।
मन्द्रे प्रसन्नमध्याख्यमलंकारविदो विदुः ॥ १० ॥
सां सां सां । (४)
आद्यन्तो मूर्छनादिश्चेत्स्वरो मध्यो द्वितीयकः ।
सैका कलाऽथ चेन्मध्येऽथ तृतीयचतुर्थकौ ॥ ११ ॥
सा द्वितीया पञ्चमाद्यास्त्रयोऽन(न्त)श्चेत्कला परा ।
एवं कलात्रयेणोक्तोऽलंकारः क्रमरेचितः ॥ १२ ॥
सां रि सां । सां गम सां । संपधनि सां । (५)
दीप्तोऽन्तश्चेत्प्रतिकलं प्रस्तारः सोऽभिधीयते ।
संरिसां । सं गमसां । सं पधनी सां । (६)
तारमन्द्रविपर्यासात्तं प्रसादं प्रचक्षते ॥ १३ ॥
सांरिसां । सांगमसां । सांपधनिसां । (७)

इति स्थायिगतालंकाराः ।

स्यातां विस्तीर्णनिष्कर्षौ *बिन्दुरभ्युच्चयोऽपरः ।
हसितप्रेङ्खिताक्षिप्तसंधिप्रच्छादनास्तथा ॥ १४ ॥
उद्गीतोद्वाहितौ तद्वत्त्रिवर्णो वेणिरित्यमी ।
द्वादशाऽऽरोहिवर्णस्थालंकाराः परिकीर्तिताः ॥ १५ ॥
मूर्छनादेः स्वराद्यत्र क्रमेणाऽऽरोहणं भवेत् ।
स्थित्वा स्थित्वा स्वरैर्दीर्घैः स विस्तीर्णोऽभिधीयते ॥ १६ ॥

॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

* संगीतपारिजातेऽयमभ्युच्चय इत्युदाहृतः ।

१ ग. °रत्निःप्र° । २ ङ. °वेणुरि°

सा रि(री) गा मा पा धा नि [नी]। ( १ )
ह्रस्वैः स्वरैः स निष्कर्षो द्विर्द्विरुक्तैर्निरन्तरैः।
सस रिरि गग मम पप धध निनि। (२)
त्रिश्चतुर्वा स्वरोच्चारे मात्रवर्णमिमं विदुः ॥ १७ ॥
ससस रिरिरि गगग ममम पपप धधध निनिनि।
ससस्स रिरिरिरि गगगग मममम पपपप धधधध निनि-
निनि। ( २ )
निष्कर्षस्यैव भेदौ द्वौ केचिद्वेतौ बभाषिरे।
प्लुतं ह्रस्वं प्लुतं ह्रस्वं प्लुतं ह्रस्वं प्लुतं स्वरम् ॥ १८ ॥
कुर्वन्क्रमाद्यदाऽऽरोहेत्ततो बिन्दुरयं मतः।
सासासा रि गागागा म पापापा ध निनिनि। (३)
एकान्तरस्वरारोहमाहुरभ्युच्चयं बुधाः ॥ १९ ॥
स ग प नि। (४)
यत्रैकोत्तरवृद्धाभिरावृत्तिभिरुदीरिताः।
आरुह्यन्ते स्वराः प्राह हसितं तं शिवप्रियः ॥ २० ॥
सा रीरी गागागा मामामामा पापापापापा
धाधाधाधाधाधा नीनीनीनीनीनीनी। (५)
स्वरद्वयं समुच्चार्य पूर्वपूर्वयुतं परम्।
यदाऽऽन्दोलितमारोहेत्प्रेङ्खितोऽसौ क्रमोऽथवा ॥ २१ ॥
सरी रीगा गमा मपा पधा धनी। (६ )
एकान्तरं स्वरयुगं तादृक्पूर्वयुतं परम्।
क्रमादारोहति यदा तदाऽऽक्षिप्तं प्रचक्षते ॥ २२ ॥
सगा गपा पनी। (७)
त्रिस्वराद्या कलाऽन्ये च पूर्वा पूर्वाऽन्तिमाऽऽदिमे।
काले स्तस्त्रिस्वरे यत्र संधिप्रच्छादनस्तु सः ॥ २३ ॥
सरिगा गमपा पधनी। (८)
यद्याद्यस्त्रिस्त्रिरावृत्तः कलयोस्त्रिस्वरात्मनोः।
तदोद्गीतः
सससरिगोमममपधा। (९)
मध्यमेन तादृशोद्वाहितो मतः ॥ २४ ॥
॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

---
१ ङ. °गाममपधनि।

सरिरिरिगा मपपपधा । ( १० )
अन्त्यस्य तु त्रिरावृत्तौ त्रिवर्णं वर्णयन्त्यमुम् ।
सरिगगगा मपधधधा । ( ११ )
त्रयाणां तु त्रिरावृत्तौ पृथग्वेणिरुदीरिता ॥ २५ ॥
ससस रिरिरि गगग ममम पपप धधध निनिनि । (१२)

इत्यारोह्यलंकाराः ।

अवरोहक्रमादेते द्वादशाप्यवरोहिणि ॥ २६ ॥

इत्यवरोह्यलंकाराः ।

मन्द्रादिर्मन्द्रमध्यश्च मन्द्रान्तः स्यादतः परम् ।
प्रस्तारश्च प्रसादोऽथ व्यावृत्तस्खलितावपि ॥ २७ ॥
परिवर्ताक्षेपबिन्दूद्वाहितोर्मिसमास्तथा ।
प्रेङ्खनिष्कूजितश्येनक्रमोद्घटितरञ्जिताः ॥ २८ ॥
संनिवृत्तप्रवृत्तोऽथ वेणुश्च ललितस्वरः ।
हुंकारो ह्लादमानश्च ततः स्यादवलोकितः ॥ २९ ॥
स्युः संचारिण्यलंकाराः पञ्चविंशतिरित्यमी ।
त्रिस्वराऽऽद्या कलैकैकमन्द्रत्यागेन चापराः ॥ ३० ॥
त्रिस्वराश्चेत्कला मन्द्राद्या मन्द्रादिस्तदा भवेत् ।
सगरी रिमगा गपमा मधपा पनिधा । ( १ )
ताः कला मन्द्रमध्यान्त्याः क्रमाच्चेदपरौ तदा ॥ ३१ ॥
मन्द्रमध्यो यथा—
गसरि मरिगा पगमा धमपा निपधा । ( २ )
मन्द्रान्तो यथा—
रिगसा गमरी मपगा पधमा धनिपा । ( ३ )
त्यक्तान्तरं स्वरयुगं त्यक्तादारभ्य चेत्पुनः ।
युगं तादृक्समारोहेत्तदा प्रस्तार उच्यते ॥ ३२ ॥
सगा रिमा गपा मधा पनी । ( ४ )
पूर्वः पूर्वः परस्योर्ध्वाधोवर्ती क्रियते स्वरः ।
यदा तदा प्रसादं तमाह श्रीकरणेश्वरः ॥ ३३ ॥
सरिसा रिगरी गमगा मपमा पधपा धनिधा । ( ५ )

॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥

---

१ क. ख. ग. ङ. °रिवृत्ताक्षे° । २ ख. ग. °ध्यान्ताः क्र° ।

चतुःस्वरा कला तत्राऽऽद्या तृतीयं द्वितीयकात् ।
तुर्यं गत्वाऽऽदिमं गच्छेदेवमेकैकहानतः ।
चतुःस्वराः परा यत्र स व्यावृत्तः स्मृतो बुधैः ॥ ३४ ॥
सागरिमासा रीमगपारी गापमधागा माधपनीमा । ( ६ )
कलां प्रयुज्य मन्द्रादेर्द्विरुक्तोर्ध्वस्वरान्वित(ता?)म् ।
अवरुह्येत चेदेष स्खलिताख्यस्तदा भवेत् ॥ ३५ ॥
सगरिमा मरिगासा । रीमगाप पगमारी ।
गापमधा धमपागा । माधपनी निपधामा । ( ७ )
स्वरं द्वितीयमुज्झित्वा त्रिस्वराऽऽद्या कला यदि ।
त्यक्तादारभ्य तादृश्योऽन्यास्तदा परिवर्तकः ॥ ३६ ॥
सगमा रिमपा गपधा मधनी । ( ८ )
त्रिस्वराश्चेत्कला पूर्वपूर्वत्यागोर्ध्वसंक्रमैः ।
तदाऽऽक्षेपः
सरिगा रिगमा गमपा मपधा पधनी । (९)
अथ बिन्दुः स यत्र प्लुतमधःस्वरम् ॥ ३७ ॥
कृत्वाऽग्रिमस्वरं स्पृष्ट्वाऽधः स्पर्शेनाखिलाः कलाः ।
सासासारिसा रीरीरीगरी गागागामगा मामा-
मापमा पापापाधपा धाधाधानिधा । (१०)
कलायां त्रीन्स्वरान्गीत्वाऽवरुह्यैकं पराः कलाः ॥ ३८ ॥
यत्रैकैकोज्झिता गीतास्तद्वदुद्वाहितस्तु सः ।
सरिगरी रिगमगा गमापमा मपधपा पधनिधा (११) ।
मूर्छनादेः स्वरात्तुर्यं प्लुतीकृत्याऽऽद्यमेत्य च ॥ ३९ ॥
तूर्यगाने कलैकैकहानाद्यत्रापरास्तथा ।
स ऊर्मिः स्यात् ।
मामामासमा पापापारिपा धाधाधागधा नीनीनीसनी(१२)।
स तु समः कला यत्र चतुःस्वराः ।
तुल्यारोहावरोहैकैकहानादपरास्तथा ॥ ४० ॥
सरिगमा मगारिसा रीगमपा पमगारि गम-
पधा धपमगा मपधनी निधपमा । (१३)
॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥

---

१ क. °स्तद्वा । सः । २ क. °राः साम्यारो° ।

कला गतागतवती द्विस्वरैकैकहानतः ।
यत्रान्यास्तादृशः स स्यात्प्रेङ्खः ।
सरीरिसा रिगागरी गमामगा मपापमा
पधाधपा धनीनिधा । (१४)
निष्कूजितः पुनः ॥ ४१ ॥
प्रसादस्य कलां गीत्वा तत्कलादेस्तृतीयकम् ।
गत्वाऽऽद्यगानाद्भवति ।
गरिसागसा रिगरीमरी गमगापगा
मपमाधमा पधपानिधा । (१५)
श्येनः संवादियुग्मकः ॥ ४२ ॥
क्रमात्सरिगमाद्यैः स्यात् ।
सप रिध गनि ससा । ( १६ )
कलाद्वित्रिचतुःस्वराः ।
आद्यस्वराद्यास्तिस्रः स्युर्द्वितीयाद्यादयस्तथा ॥ ४३ ॥
यत्रासौ क्रम इत्युक्तः ।
सरि सरिग सरिगम । रिग रिगमा रिगमापा ।
गम गमपा गमपधा । मप मपध मपधनी । (१७)
स तूद्घटित उच्यते ।
यत्र स्वरद्वयं गीत्वा पञ्चमाच्चतुरः स्वरान् ॥ ४४ ॥
अवरोहकलां गायेत्तथैकैकोज्झनात्परः ।
सारिपमगरी रिगधपमगा गमनीधपमा । (१८)
द्विरुक्ता यदि मन्द्रान्ता मन्द्रादेः स्युः कलास्तदा ॥ ४५ ॥
रञ्जितः
सगरि सगरि सा । रिमग रिमग री । गपम गपम गा ।
मधप मधप मा । पनिध पनिध पा । (१९)
अथ भवेदेष संनिवृत्तप्रवृत्तकः ।
यत्राऽऽद्यपञ्चमौ गीत्वा तुर्यांस्त्रीनवरोहति ॥ ४६ ॥
क्रमात्कला सा यत्रान्यास्तद्वदेकैकहानतः ।
सपामगरी रिधापमगा गनीधपमा । (२०)
यत्राऽऽद्यः स्याद्विर्द्वितीयचतुर्थकतृतीयकाः ॥ ४७ ॥

॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥

१ ङ. °कोज्झितात्प° ।

सक्तत्कलाऽन्याश्चैककहानाद्वेणुरसौ मतः ।
सासरिमागा रीरीगपामा गागमधापा मामपनीधा । (२१)
गीता(त्वाऽऽ)द्यौ द्वौ चतुर्थं च यस्यान्तावववरोहति ॥४८॥
सा कलाऽन्याश्च तादृश्यो यत्रासौ ललितस्वरः ।
सारीमरीसा रीगपगारी गमाधमागा मपानिपमा । (२२)
आदिमेन कला यत्र द्विस्वराद्या गतागतैः ॥ ४९ ॥
स्वरैरेकोत्तरं वृद्धैः स हुंकारो निगद्यते ।
सरिसा सरिगरिसा सरिगमगरिसा सरिगमपमगरीसा
सरिगमपधपमगरिसा सरिगमपधनिधपमगरिसा । (२३)
ह्लादमाने प्रसन्नान्ता मन्द्रादिस्तु कला मताः ॥ ५० ॥
सगरिसा रिमगरी गपमगा मधपमा पनिधपा । (२४)
यदाऽऽरोहेऽवरोहे च स्वद्वितीयं परित्यजेत् ।
चतुःस्वरा समकला तदा स्यादवलोकितः ॥ ५१ ॥
सगमामरिसा रिमपापगरी गपधाधमगा मधनीनिपमा । (२५)
एते संचार्यलंकारा आरोहेण प्रदर्शिताः ।
एतानेवावरोहेण प्राह श्रीकरणाग्रणीः ॥ ५२ ॥

इति संचार्यलंकाराः ।

अन्येऽपि सप्तालंकारा गीतज्ञैरुपदर्शिताः ।
तारमन्द्रप्रसन्नश्च मन्द्रतारप्रसन्नकः ॥ ५३ ॥
आवर्तकः संप्रदानो विधुतोऽप्युपलोलकः ।
उल्लासितश्चेति तेषामधुना लक्ष्म कथ्यते ॥ ५४ ॥
कलास्तेषां द्वितीयायाः पूर्वैकैकप्रधान(हाण)तः ।
अष्टमस्वरपर्यन्तमारुह्याऽऽद्यं व्रजेद्यदि ॥ ५५ ॥
तारमन्द्रप्रसन्नोऽयमलंकारस्तदोच्यते ।
सरिगमपाधनिसांसां । (१)
मन्द्रादष्टममुत्पत्य सप्तकस्यावरोहणे ॥ ५६ ॥
मन्द्रतारप्रसन्नाख्यमाह माहेश्वरोत्तमः ।
सांसांनिधपमगारिसां । (२)
आद्यं द्वितीयमाद्यं च द्विर्द्विर्गीत्वा द्वितीयकम् ॥ ५७ ॥

॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥

१ ङ. °ण निःशङ्कः प्राह सन्मतिः ।

सकृदाद्यं यत्कलायां गायेदावर्तकस्तु सः ।
ससरिरिससरिसा । रिरिगगरिरिगरी गगममगगमगा मम-
पपममपमा पपधधपपधपा । धधनिनिधधनिधा । (३)
एतस्यैव कलाऽऽन्त्यौ द्वौ स्वरौ संत्यज्य गीयते ॥ ५८ ॥
यदा तदा संप्रदानमलंकारं विदुर्बुधाः ।
ससरिरिसस रिरिगगरिरि गगममगग ममपपमम पपधध-
पप धधनिनिधध । (४)
युग्ममेकान्तारितयोस्त्यक्ताद्प्येवमेव चेत् ॥ ५९ ॥
द्विर्द्विः प्रयुज्येत तदा विधुतो बुधसंमतः ।
सगसगा रिमरिमा गपगपा मधमधा पनीपनी । (५)
कलायामाद्ययोर्युग्मं चेत्तृतीयद्वितीययोः ॥ ६० ॥
द्विर्द्विः प्रयुज्यते तज्ज्ञैरुपलोलस्तदोच्यते ।
सरि सरि गरि गरि रिगरिगमगमग गमगमपमपमा
मपमपधपधपा पधपधनिधनिधा । (६)
द्विर्गीत्वाऽऽद्यं तृतीयं च प्रथमं च तृतीयकम् ॥ ६१ ॥
सकृद्गायेद्यत्कलायां तदुल्लासितमूचिरे ।
ससगसगा रीरिमरिमा गगपगपा ममधमधा पपनिपनी । (७)

इति सप्तालंकाराः ।

इति प्रसिद्धालंकारास्त्रिषष्टिरुदिता मया ॥ ६२ ॥

॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥

अनन्तत्वात्तु ते शास्त्रे न सामस्त्येन कीर्तिताः ॥६३॥

ननु कलादिसंनिवेशवशेन प्रत्येकं स्थाय्यादिवर्णसंदर्भाणामनन्तत्वादलंकारा-णामन्येषामपि संभवे कथं त्रिषष्टिरित्युद्दिश्य[तं] लक्षणनिगमनं चेत्यत आह— अनन्तत्वादिति ॥ ६३ ॥

अलंकारनिरूपणे फलं दर्शयति—

रक्तिलाभः स्वरज्ञानं वर्णाङ्गानां विचित्रता ।
इति प्रयोजनान्याहुरलंकारनिरूपणे ॥ ६४ ॥

रक्तिलाभ इति । निरूपणं स्वरूपेण कथनं विशेषलक्षणम् । तेन स्वरूप-परिज्ञाने सति रक्तिलाभादयो भवन्तीत्यर्थः ॥ ६४ ॥

इति षष्ठं वर्णालंकारप्रकरणम् ॥

---

१ ङ. °यां गीयेदा° । २ ख. ग. °पणात् । र° ।

अथ सप्तमं जातिप्रकरणम् ।

गानक्रियात्मकवर्णालंकारनिरूपणानन्तरमलंकायतया प्रतीतगीताद्यनुगतत्वेन प्रसक्तानां जातीनां लक्षणमुद्दिष्टं विवेक्तुकामस्तल्लक्ष्यत्वेनाऽऽक्षिप्ता जातीः सप्रभेदं लक्षयितुमुद्दिशति—

शुद्धाः स्युर्जातयः सप्त ताः षड्जादिस्वराभिधाः ।
षाड्ज्यार्षभी च गान्धारी मध्यमा पञ्चमी तथा ॥ १ ॥
धैवती चाथ नैषादी शुद्धतालक्ष्म कथ्यते ।
यासां नामस्वरो न्यासोऽपन्यासोंऽशो ग्रहस्तथा ।
तारन्यासविहीनास्ताः पूर्णाः शुद्धाभिधा मताः ॥ २ ॥

शुद्धाः स्युरित्यादिना । जातय इति । यथायोगं ग्रामद्वयाज्जायन्त इति जातयः । अत एव नित्यतया साकल्येन सामान्यरूपजातिलक्षणभावेऽप्यनेकगेयव्यक्तिष्वनुवृत्तत्वमात्रेण गोत्वादिजातिवज्जातय इति वा गीतजातं तस्योपरञ्जनं वाऽऽभ्यो जायत इति जातय इति वा जातिशब्दव्युत्पत्तिर्मतङ्गाद्यभिमता द्रष्टव्या। जातयः शुद्धा वक्ष्यमाणशुद्धत्वलक्षणोपेताः सप्त स्युः। ताः षड्जादिस्वराभिधाः। [षड्जादि]स्वराणामभिधा इवाभिधा यासां ता इत्युपमानपूर्वपदो बहुव्रीहिः। यद्वा षड्जादिस्वरवाचकाः षड्जादिशब्दाः प्रकृतित्वेनाभिधाः संज्ञा यासां ताः। अत्राभिधाशब्दस्याऽऽवृत्तिः कर्तव्या। तथैवोद्दिशति-षाड्जीत्यादिना । तासां शुद्धत्वं किमित्यत आह—शुद्धतालक्ष्मेति । यासां षाड्ज्यादीनां नामस्वरः षड्जादिरेव वक्ष्यमाणलक्षणन्यासत्वाद्यवस्थापन्नो भवति याश्च तारन्यासविहीनास्तारस्थाने न्यासविहीना इति विशेषनिषेधः शेषाभ्यनुज्ञां गमयतीति मन्द्रमध्यस्थानयोर्यथायोगं न्यासविधिरिष्यते । यदपि भरतेन न्यासः शुद्धासु मन्द्रः स्यादित्युक्तं तत्तारनिषेधपरं द्रष्टव्यम् । अन्यथा षाड्ज(?)मध्यमषड्जन्यासत्व(त्वं)मतङ्गोक्तं लक्ष्ये विरुध्येत। पूर्णाः सप्तस्वरयुक्ताः शुद्धाभिधाः शुद्धा इति संज्ञा यासां ताः॥ १॥२॥

विकृता न्यासवर्ज्यैतल्लक्ष्महीना[1] भवन्त्यमूः ॥ ३ ॥

अमूः शुद्धाः षाड्ज्यादय एव । न्यासवर्ज्यैतल्लक्ष्महीना इति । जातीनां शुद्धतायामभिहितेषु नामस्वरस्यैव न्यासापन्यासांशग्रहत्वेषु( त्व )संपूर्णत्वेषु पञ्चसु लक्षणेषु मध्ये न्यासवर्ज्यन्यासनियमस्यैकस्य सङ्गं परिहृत्यैतल्लक्ष्मभिरपन्यासांशग्रहपूर्णत्वैर्हीना नियतं वर्जिताः । अयमर्थः । नामस्वरमेव न्यासं कृत्वाऽपन्यासादीन्स्वरान्तराणि कुर्यादिति । एवं कृता यदि तदा विकृता विकृतावस्थापन्ना भवन्ति । न तु विकृतसंसर्गजातजातिवद्व्यपदेशान्तरे सा( रभा )ज

[1] च. वर्जिता लक्ष्म ।

इत्यर्थः । अत्र न्यासनियमस्य परित्यागो नेष्टः । तस्मिन्नपि परित्यक्ते सति विकृतासु जात्यन्तरभेदकत्वेन प्रधानभूतावयवा न तु वृत्तौ (?) । तासां तत्तच्छुद्धजातिभेदत्वप्रतीतिर्न स्यात् ॥ ३ ॥

न्यासव्यतिरिक्तसंपूर्णत्वादिषु चतुर्थ( र्षु )लक्षणेष्वेकद्व्यादिपरित्यागेन संभूतान्भेदान्षड्जा( न्षाड्ज्या )दिषु यथासंभवं परिगणयति—

**संपूर्णत्वग्रहांशापन्यासेष्वेकैकवर्जनात् ।**
**भवन्ति भेदाश्चत्वारो द्वयोस्त्यागे तु षण्मताः ॥ ४ ॥**

**संपूर्णत्वेत्यादिना । एकैकवर्जनादिति** । संपूर्णत्वादीनां स्वरूपनिषेधो न क्रियते । जात्यनुत्पत्तिप्रसङ्गात् । अपि तु नियतस्वरपर्युदासात्स्वरान्तरविधिर्विज्ञायते । **भवन्ति भेदाश्चत्वार इति** । संपूर्णत्ववर्जने कृते ग्रहांशापन्यासयुक्त एकः । ग्रहवर्जने संपूर्णत्वांशापन्यासवान्द्वितीयः । अंशवर्जने संपूर्णत्वग्रहापन्यासवांस्तृतीयः । अपन्यासवर्जने संपूर्णत्वग्रहांशयुक्तश्चतुर्थो भेदः । इति चत्वारो भेदाः । **द्वयोस्त्यागे तु षण्मता इति** । संपूर्णत्वग्रहाभ्यां संपूर्णत्वांशाभ्यां संपूर्णत्वापन्यासाभ्यां ग्रहांशाभ्यां ग्रहापन्यासाभ्यामंशापन्यासाभ्यां यु( त्य )क्ताभ्यां षड्भेदा भवन्ति ॥ ४ ॥

**त्यागे त्रयाणां चत्वार एकस्त्यक्ते चतुष्टये ।**
**भेदाः पञ्चदशैवैते षाड्ज्याः सद्भिर्निरूपिताः ॥ ५ ॥**

**त्यागे त्रयाणां चत्वार इति** । संपूर्णत्वग्रहांशैः संपूर्णत्वग्रहापन्यासैः संपूर्णत्वांशापन्यासैर्ग्रहांशापन्यासैस्त्यक्ता[ क्तै ]श्चत्वारो भेदाः । चतुष्टये त्यक्त एको भेद इत्येते पञ्चदशैव भेदाः षाड्ज्या निरूपिताः ॥ ५ ॥

पूर्णताहीनानामवान्तरभेदं वक्तुं विभजते—

**तत्राष्टौ पूर्णताहीनाः षाडवौडुवभेदतः ॥ ६ ॥**

**तत्राष्टाविति** । तत्र पञ्चदशसु मध्येऽष्टौ भेदाः संपूर्णत्वरहिताः । सप्त त्वितरवर्जिताः । संपूर्णत्वयुक्तत्वे सतीतरेषु ग्रहांशापन्यासेषु यथायोगमेकेन द्वाभ्यां त्रिभिर्वा वर्जिता द्विधा स्युरिति । पूर्णताहीना अष्टौ भेदाः षाडवौडुवभेदतो द्विधा स्युः षोडश भवन्तीत्यर्थः । ननु पूर्णताहीनानां भेदानां चतुःस्वरादिभिरपि भेदैः सह षड्विधत्वे संभवति कथं द्वैविध्यमिति चेत् । उच्यते । पूर्णताहीना इत्यनेन चतुःस्वरादीनां च प्रतीतौ सत्यामपि नावि[ न्ज्ञि ]वयुक्तन्यायेन जातिरागनिष्पादकत्वात्संपूर्णत्वसदृशप्रतिपत्त्या षाडवौडुवयोरेवात्र ग्रहणमिति । चतुःस्वरप्रयोगस्तु **भरतेना**पकृष्टध्रुवायामेवोक्तः । त्रिस्वरादीनां प्रयोगस्तु सामव्यतिरिक्तगांदौ द्रष्टव्यः ॥ ६ ॥

षाड्ज्यपेक्षयाऽऽर्षभ्यादिषु षट्सु जातिषु भेदाधिक्यं दर्शयति—

---

१ क. रञ्जयति ।

**अतोऽष्टावधिका आर्षभ्यादिष्वौडुवजातिषु ।**
**अतस्त्रयोविंशतिधा षट्सु प्रत्येकमीरिताः ॥ ७ ॥**

**अतोऽष्टाविति** । अतोऽस्याः पूर्णताहीनेषु षोडशस्वष्टाभिरेव षाडवभेदैः पूर्णतायुक्तैरितरवर्जितैः सप्तभिः सह पञ्चदशभेदवत्त्वेनोक्तायाः षाड्ज्या इतरास्वार्षभ्यादिष्वौडुवजातिष्वौडुवावस्थया नियुक्तास्वष्टावौडुवभेदा अधिकाः । अतः कारणात्ता आर्षभ्यादयः षड्जाद(त)यः प्रत्येकं त्रयोविंशतिरिति सप्तसु जातिषु विकृतभेदा मिलितास्त्रिपञ्चाशदुत्तरं शतं भवन्ति ॥ ७ ॥

उक्तविकृतभेदसंसर्गोत्पन्नानां व्यपदेशान्तरभाजां विकृतजातीनां संख्यामाह—

**विकृतानां तु संसर्गाज्जाता एकादश स्मृताः ॥ ८ ॥**

**विकृतानां त्विति** । तुशब्दो भिन्नक्रमः । विकृतानां संसर्गाज्जातास्त्विति । उक्ता विकृताः शुद्धजातीनामेवावस्थान्तराणि । एतास्तद्विकृतभेदसंसर्गोत्पन्नत्वान्न तथेति तुशब्दार्थः ॥ ८ ॥

ता उद्दिश्य तासां निमित्तभूतं विकृतावस्थापन्नषड्जादिसंसर्गं दर्शयति—

**स्यात्षड्जकैशिकीषड्जोदीच्यवाषड्जमध्यमाः ।**
**गान्धारोदीच्यवा रक्तगान्धारी कैशिकी तथा ॥ ९ ॥**
**मध्यमोदीच्यवा कार्मारवी गान्धारपञ्चमी ।**
**तथाऽऽन्ध्री नन्दयन्तीति तद्धेतूनधुना ब्रुवे ॥ १० ॥**
**षाड्जीगान्धारिकायोगाज्जायते षड्जकैशिकी ।**
**षाड्जिकामध्यमाभ्यां तु जायते षड्ज्यमध्यमा ॥ ११ ॥**
**गान्धारीपञ्चमीभ्यां तु जाता गान्धारपञ्चमी ।**
**गान्धार्यार्षभिकाभ्यां तु जातिरान्ध्री प्रजायते ॥ १२ ॥**
**षाड्जी गान्धारिका तद्वद्धैवती मिलितास्त्विमाः ।**
**षड्जोदीच्यवतीं जातिं कुर्युः कार्मारवीं पुनः ॥ १३ ॥**
**उत्पादयन्ति(ति) नैषादी पञ्चम्यार्षभिकायुताः(तां) ।**
**नन्दयती(न्ती) तु गान्धारी पञ्चम्यार्षभिकान्विता ॥१४॥**
**गान्धारी धैवती षाड्जी मध्यमेति युतास्त्विमाः ।**
**गान्धारोदीच्यवां कुर्युर्मध्यमोदीच्यवां पुनः ॥ १५ ॥**
**एता एव विना षाड्ज्या पञ्चम्या सह कुर्वते ।**
**कुर्युस्ता रक्तगान्धारीं नैषादी न च धैवती ।**
**आर्षभीं धैवतीं त्यक्त्वा पञ्चभ्यः कैशिकी भवेत् ॥ १६ ॥**

---

१ ख. ग. °धा षाड्ज्याः प्र° । २ ग. °च्यतां कु° । ३ ग. °च्यतां पु° । ४ क. °दी नावधै° । ग. ख. °दी नवधै° । ५ क. ग. पञ्चस्था कै° ।

**स्यात्षड्जकैशिकीत्यादिना पञ्चभ्यः कैशिकी भवेदित्यन्तेन ।** अत्राष्टादशसु जातिसंज्ञासु षाड्ज्यादीनां कासांचिदन्वर्थतया योगरूढता कार्मारव्यादीनां तु कतिपयानां केवलरूढतैवेति मन्तव्यम् ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

सर्वासामपि जातीनां ग्रामविभागं दर्शयति—

**चतस्रः षड्जशब्दिन्यो नैषादी धैवती तथा ।**
**आर्षभी चेति सप्तैताः षड्जग्रामस्य जातयः ।**
**शेषाः स्युर्मध्यमग्रामे पूर्णत्वाद्यधुनोच्यते ॥ १७ ॥**

**चतस्र इत्यादिना ।** अष्टादशसु जातिषु मध्ये यथायोगं संपूर्णत्वादिना साधर्म्यमाह—**पूर्णत्वादीत्यादिना ।** पूर्णत्वादीत्यादिशब्देन षाडवत्वमौडुवत्वं च गृह्यते ॥ १७ ॥

**कार्मारव्यथ गान्धारे(र) पञ्चमी षड्जकैशिकी ।**
**मध्यमोदीच्यवेत्येता नित्यपूर्णाः प्रकीर्तिताः ॥ १८ ॥**

नित्यपूर्णा नित्यं सदा पूर्णाः । न कदाचिदपि षाडवौडुवावस्थापन्ना इत्यर्थः॥ १८॥

**षाड्जी च नन्दयन्त्यान्ध्री गान्धारोदीच्यवेत्यमूः ।**
**संपूर्णषाडवाः प्राह चतस्रः सोढलात्मजः ॥ १९ ॥**

संपूर्णषाडवाः संपूर्णाश्च ताः षाडवाश्च । षाड्जीनन्दयन्त्यान्ध्रीगान्धारोदीच्यवाश्चतस्रो जातयो भरतादिमतपर्यालोचनया संपूर्णत्वेन षाडवत्वेन च नियमिता इति निश्चित्य कथ्यन्त इत्यर्थः । एवं च सति यदि गी(गा)ता ताः षाडवीकर्तुमिच्छति तदा वक्ष्यमाणलक्षणानुसारेण षाड्ज्यां निषादलोपेन नन्दयन्त्यान्ध्र्योः षड्जलोपेन गान्धारोदीच्यवयोर्ऋषभलोपेन च षाडवत्वं नियतं द्रष्टव्यम् ॥ १९ ॥

**दशावशिष्टाः संपूर्णषाडवौडुविता मताः ॥ २० ॥**

**दशावशिष्टा इति ।** अवशिष्टा नित्यपूर्णाभ्यश्चतसृभ्यः संपूर्णषाडवाभ्यश्चतसृभ्यश्च व्यतिरिक्ता दशाऽऽर्षभी गान्धारी मध्यमा पञ्चमी धैवती नैषादी षड्जोदीच्यवा षड्जमध्यमा रक्तगान्धारी कैशिकी चेति । संपूर्णषाडवौडुविताः । संपूर्णाश्च षाडवाश्चौडुविताश्चेति कर्मधारयः । दशाप्येताः संपूर्णत्वादिव्यवस्थापन्ना इत्यर्थः । तद्यथा—आर्षभी[ षड् ड्ज ]लोपात्षाडवा । सपलोपादौडुवा । गान्धारीरक्तगान्धारीकैशिक्यो वि[ रि? ]लोपेन षाडवाः । रिधलोपेनौडुवाः । मध्यमापञ्चम्यौ गलोपेन षाडवे । निगलोपेनौडुवे । धैवतीनैषाद्यौ पलोपेन षाडवे ।

---

१ क. ख. ग. काश्यपो मुनिः ।

सपलोपेनौडुवे। षड्जोदीच्यवा रिलोपेन षाडवा। परिलोपेनौडुवा। षड्ज-मध्यमा निलोपेन षाडवा। निपलोपेनौडुवेति ॥ २० ॥

**पञ्चमीमध्यमाषड्जमध्यमाख्यासु जातिषु।**
**स्वरसाधारणं प्रोक्तं मुनिभिर्भरतादिभिः ॥ २१ ॥**

तत्र कासुचिज्जातिषु भरताद्युक्तं स्वरसाधारणप्रयोगे नियमं दर्शयति—**पञ्च-मीत्यादिना** ॥ २१ ॥

अनेनैव वचनेन पञ्चमीमध्यमाषड्जमध्यमासु तिसृषु जातिषु यथायोगं षड्-जमध्यमपञ्चमानामन्यतमस्यांशत्वे स्वरान्तरस्यांशत्वे चोभयत्र स्वरसाधारणे प्राप्ते स्वरान्तरांशत्वपक्षे निवृत्त्यर्थं स्वरसाधारणं परिसंख्याति—

**अंशेषु समपेष्वेव यथास्वनियमाद्भवेत्।**
**एतदल्पनिगास्वाहुः कम्बलाश्वतरादयः।**
**अल्पद्विश्रुतिके रागभाषादावपि तन्मतम् ॥ २२ ॥**

**अंशेषु समपेष्विति**। **एतदिति** स्वरसाधारणम्। **यथास्वनियमात्**। स्वनियमः 'प्रयोज्यौ षड्जमुच्चार्य' इत्यादिनोक्तस्तमनतिक्रम्य। **अत्रेयं** व्यवथा। पञ्चम्यां पञ्चमेंऽशे मध्यमा। षड्जमध्यमयोः प्रत्येकं षड्जमध्यम-पञ्चमे (?)। 'स्वांशेषु साधारणप्रयोगः' इति **कम्बलाश्वतरादयः**। एत-त्स्वरसाधारणं काकल्यन्तरावित्यर्थः। अल्पनिगासु लोप्यनिषादगान्धारासु जातिषु पञ्चमीमध्यमाषड्जमध्यमषाड्जीषु। एतदुक्तं भवति। निषादगान्धारयोरितर-स्मिन्नंशेऽन्यस्य तत्संवादित्वेन लोप्यत्वाभावात्काकल्यन्तरप्रयोगो न कर्तव्य इति। किंवाऽल्पद्विश्रुतिकत्वे[ के ] लोप्यनिषादगान्धारे। **रागभाषादावपीति**। अत्र रागशब्देन ग्रामरागोपरागास्त्रिविधा गृह्यन्ते। भाषादिशब्देन पुना रागा-ङ्गभाषाङ्गक्रियाङ्गोपाङ्गचतुष्टयं गृह्यत इति दशविधोऽपि रागप्रपञ्चो गृहीतः। तत्रापिशब्देन न केवलमल्पद्विश्रुतिकासु जातिष्वेवाल्पद्विश्रुतिके रागादौ सर्व-त्रापीति द्योत्यते। तत्काकल्यन्तरसाधारणं मतं **भरतादीनां** संमतम् ॥२२॥

उक्तमर्थं व्यतिरेकेणाप्युदाहृत्य द[द्रि]ढयन्नाह—

**निगयोरंशयोः षड्जमध्यमायां न तद्भवेत्।**
**विकृता एव तत्रापि स्वरसाधारणाश्रयाः ॥ २३ ॥**

**निगयोरंशयोरिति**। पञ्चमी मध्यमेति भरतमतानुसारिणा वचनेनैतदल्प-निगास्विति **कम्बलाश्वतरादिमतानुसारिणा** वचनेन चोपात्तासु पञ्चमीमध्यमाष-ड्जमध्यमाषाड्जीषु चतसृषु षड्जमध्यमाया विकृतसंसर्गजत्वेन केवलविकृतत्वा-

१ ष. °ष्वेतत्त्वथा नियमे भवेत्।

च्छुद्धताया अभावेऽपीतरासां तिसृणां शुद्धावस्थायां विकृतावस्थायां वा विशेषेण स्वरसाधारणे प्राप्ते नियमयति—विकृता एवेति । तत्र पञ्चमीमाध्यमीषाड्जीषु तिसृषु । अयमभिग्रन्थिः [संधिः] षड्जादिषु शुद्धावस्थायां विकृतस्वरप्रयोगो न कर्तव्य इति ॥ २३ ॥

अथाष्टादशसु जातिषु यथायोगमेकांशकादिसप्तांशकान्तं वक्ष्यमाणलक्षणांशस्वरसंबन्धकथनेन संसृतामंशसंख्यामवधारयति—

**एकांशा नन्दयन्ती च मध्यमोदीच्यवा तथा ।**
**गान्धारपञ्चमीत्येतास्तिस्रो द्व्यंशास्तु धैवती ॥ २४ ॥**
**गान्धारोदीच्यवा चाथ पञ्चमीत्युदिता इमाः ।**
**नैषाद्यार्षभिकाषड्जकैशिक्यस्त्र्यंशिका मताः ॥ २५ ॥**
**आन्ध्रीकार्मारवीषड्जोदीच्यवाश्चतुरंशकाः ।**
**पञ्चांशा रक्तगान्धारी गान्धारी मध्यमा तथा ॥ २६ ॥**
**षाड्जीत्येताश्चतस्रः स्युः षडंशैकैव कैशिकी ।**
**सप्तांशा सूरिभिः षड्जमध्यमा परिकीर्तिता ।**
**इति त्रिषष्टिरंशाः स्युर्जातिस्वष्टादशस्विमे ॥ २७ ॥**

**एकांशा** इत्यादिना **जातिष्वष्टादशस्विम** इत्यन्तेन । **एकांशाः** । एकस्वरोंऽशो यासां ताः । नन्दयन्तीमध्यमोदीच्यवागान्धारपञ्चमीनां तिसृणां वक्ष्यमाणलक्षणानुसारेण प्रत्येकं पञ्चमोंऽशो वेदितव्यः । **द्व्यंशास्त्विति** । धैवतीगान्धारोदीच्यवापञ्चम्यः । तत्र धैवत्यामृषभधैवतावंशौ । गान्धारोदीच्यवायां षड्जमध्यमौ पञ्चम्यामृषभपञ्चमौ । **त्र्यंशिका मता इति** । नैषाद्यार्षभिकाषड्जकैशिक्यः । तत्र नैषाद्यां निषादषड्जगान्धारास्त्रयोंऽशाः । आर्षभ्यामृषभनिषादधैवताः । षड्जकैशिक्यां षड्जगान्धारपञ्चमाः । **चतुरंशका इति** । आन्ध्रीकर्मारवीषड्जोदीच्यवाः । तत्राऽऽन्ध्यामृषभगान्धारपञ्चमनिषादाश्चत्वारोंऽशाः । कार्मारव्यामृषभपञ्चमधैवतनिषादाः । षड्जोदीच्यवायां षड्जमध्यमधैवतनिषादाः । **पञ्चांशा इति** । रक्तगान्धारी [ गान्धारी ] मध्यमाषाड्ज्यश्चतस्रः । तत्र रक्तगान्धार्यां सगमपनिषादाः पञ्चांशाः । गान्धार्यामपि तद्वत् । मध्यमायां सरिगमधाः । षाड्ज्यां सगमपधाः । **षडंशेति** । एकैव कैशिकी । तत्रर्षभव्यतिरिक्ताः षट्स्वरा अंशाः । **सप्तांशेति** । षड्जमध्यमाः । तस्यां षड्जादयः सप्त स्वरा अंशाः स्युः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

अथ त्रयोदशविधं जातिलक्ष्मेत्युद्देशे लक्ष्यत्वेनोपात्तजातिनिरूपणावसरे तदवयवत्वेन च प्राप्तांस्त्रयोदशापि ग्रहादीन्विभज्य क्रमेण लक्षयति—

**ग्रहांशतारमन्द्राश्च न्यासापन्यासकौ तथा ।**
**अपि संन्यासविन्यासौ बहुत्वं चाल्पता ततः ॥ २८ ॥**

**एतान्यन्तरमार्गेण सह लक्ष्माणि जातिषु ।**
**षाडवौडुविते क्वापीत्येवमाहुस्त्रयोदश ॥ २९ ॥**

**ग्रहांशतारमन्द्राश्चेत्यादिना । षाडवौडुविते क्वापीति** । नित्यपूर्णाभ्योऽन्यासु यथायोगमित्यर्थः । यद्यपि **भरतमतङ्गादिभिः** संन्यासविन्यासयोर्विदार्याश्रितत्वादपन्यासेऽन्तर्भावेनान्तरमार्गस्याप्यंशाद्यवयवानामन्यो[ न्य ]संघट्टनात्मकस्यांशादिसंबन्धाधीनसिद्धेः पृथगुद्देशो नापेक्षित इति दशकं जातिलक्षणमित्युक्तं तथाऽपि संन्यासविन्यासयोः पृथगवयवत्वेनान्तरमार्गस्य तु सत्स्वंशादिष्ववयवेषु तेन विना प्रयोगासिद्धेस्तस्याऽऽवश्यकत्वाल्लक्षणेषु पृथगुद्दिश्य त्रयोदशेत्युक्तं ग्रन्थकारेण ॥ २८ ॥ २९ ॥

**गीतादिनिहितस्तत्र स्वरो ग्रह इतीरितः ।**
**तत्रांशग्रहयोरन्यतरोक्तावुभयग्रहः ॥ ३० ॥**

**गीतादिनिहित इति** । तत्र तेषु त्रयोदशसु मध्ये गीतादिनिहितः । गीतस्य रञ्जकस्वरसंदर्भस्याऽऽदावुपक्रमे निहितः । गृहीत इति येन गीतं गृह्यत इति वा ग्रहः । तत्रांशग्रहयोरित्यत्र तत्रेति गीतगानलक्षण इत्यर्थः । अंशग्रहयोरन्यतरोक्तौ यत्र क्वचिदंश एवोच्यते न ग्रहो यत्र च ग्रह एवोच्यते न त्वंशस्तत्रोभयग्रह उभयोर्ग्रहांशयोर्ग्रहो ग्रहणं भवति । अयमर्थः । यत्र गीतलक्षणे यस्य स्वरस्यांशत्वमुक्तं नान्यस्य ग्रहत्वं तत्र तस्यैव ग्रहत्वमप्युक्तमिति यस्य च ग्रहत्वमुक्तं नान्यस्यांशत्वं तत्रापि तस्यैवांशत्वमप्युक्तमिति । एतेनैतदुक्तं भवति । यस्यां जातौ ये यावन्तोंऽशास्तत्र ते तावन्त एव ग्रहा इति । सर्वासु जातिषु ग्रहा अपि त्रिषष्टिरित्यर्थः । तथा चोक्तं **भरतेन**—

'त्रिषष्टिरंशा विज्ञेयास्तासां चैवांशवद्ग्रहाः ' इति ।

**मतङ्गे**नापि—सोंऽशवांस्त्रिषष्टिभेदभिन्नो बोद्धव्यः ' इति ॥ ३० ॥

**यो रक्तिव्यञ्जको गेये यत्संवाद्यनुवादिनौ ।**
**विदार्यां बहुलौ यस्मात्तारमन्द्रव्यवस्थितिः ॥ ३१ ॥**
**यः स्वयं यस्य संवादी वा(चा)नुवादी स्वरोऽपरः ।**
**न्यासापन्यासविन्याससंन्यासग्रहतां गतः ।**
**प्रयोगे बहुलः स स्याद्वाद्यंशो योग्यतावशात् ॥ ३२ ॥**

यो रक्तीत्याद्यंशलक्षणम् । रक्तिव्यञ्जकत्वादिधर्मयुक्तो यः स्वरः[स] संगीतभागत्वादंश इति व्यपदिश्यते गेये । रक्तिव्यञ्जक इत्यत्र रक्तिव्यञ्जक इत्येतावत्युच्यमाने स्वरगतरक्तिमात्रव्यञ्जकत्वं स्वरान्तराणामप्याविशिष्टमितीह स्वरसंदर्भभेदमतिनियतरक्तिविशेषव्यञ्जकत्वं( त्वस्य )विवक्षितत्वाद्गेय इति विशेषणं यथा

---

१ घ. °यश्च वाद्य° ।

वाक्यार्था(?)भूतरसादिव्यञ्जकत्वं विवक्षितान्यपरवाच्येऽसंलक्ष्यक्रमध्वनौ स्वार्थमभिदधतः पदस्य । यत्संवाद्यनुवादिनौ यस्यांशत्वेन लिलक्षयिषितस्य स्वरस्य । अस्मिल्लँक्षणे प्रतिवाक्यं यच्छब्दो विधेयांशस्वरपरः । संवाद्यनुवादिनौ पूर्वोक्तलक्षणौ स्वरौ विदार्यां गतिखण्डे बहुलौ प्रचुरप्रयोगौ । यस्मात्तारमन्द्रव्यवस्थितिः । यमवधिं कृत्वोत्तरस्वरारोहेण तारव्यवस्थाऽधस्तनस्वरानवरोहेण मन्द्रव्यवस्था च भवति । यः स्वयं यस्य संवादी यस्य वादिव्यपदेशवतः स्वरस्य स्वयमेव कदाचित्संवादी च भवति । अत्र चकार एवार्थः संवाद्ये[ वे ]ति । अनुवादी स्वरोऽपरः । यस्यानुवादी त्वपर एव स्वरो भवति । न कदाचिदपि स्वस्य स्वयमनुवादीत्यर्थः । यथा लोके राजा प्रयोजनवशात्क्वचिदमात्यकृत्यकारी भवति न कदाचिदपि भृत्यकृत्यकारी तद्वत् । यश्च न्यासापन्यासविन्याससंन्यासग्रहतां गतः सन्प्रयोगे बहुलो भवति तस्य न्यासादिरूपापत्तिः प्रयोगबाहुल्ये हेतुः । स वादी योग्यतावशादंशः स्यात् । योग्यता नामात्र यथायोगं रक्तिव्यञ्जकत्वाद्युक्तलक्षणार्हत्वम् । तथाऽऽह भरतः—

> "रागश्च यस्मिन्वसति यस्माच्चैव प्रवर्तते ।
> तेनैव तारमन्द्राणां योऽत्यर्थमुपलभ्यते ।
> ग्रहापन्यासविन्याससंन्यासन्यासयोगतः ।
> अन( नु )वृत्तश्च यश्चेह सोंऽशः स्याद्दशलक्षणः" ॥ इति ।

नन्वंश( शो ) ग्रह इतिभरतादेशेन सर्वेष्वप्यंशधर्मेषु ग्रहस्य प्राप्तेषु ग्रहांशयोः को विशेष इति चेत् । उच्यते । ग्रहस्यांशातिदेशतस्तु प्राप्तं वादित्वमेव न केवलं धर्मः । अपि तु वादित्वादिचतुष्टयमपीति तयोर्भेद इति । यथोक्तं मतङ्गेन—"अंशोऽ(शोऽ)थ वाद्येव परं ग्रहस्तु वाद्यादिभिन्नश्चतुर्विधः" इति ॥३१॥३२॥

दे( द )शानामपि लक्षणानां सप्तषष्टिरूपत्वाद्बहुलत्वमेवांशस्य नियतलक्षणमित्याह—

**बहुलत्वं प्रयोगेषु व्यापकं त्वंशलक्षणम् ॥ ३३ ॥**

**बहुलत्वमिति** । प्रयोगे बहुलत्वं व्यापकमंशलक्षणमिति संबन्धः । **व्यापकमिति** । योंऽशः स बहुलमि(ल इ)त्यविनाभावात् ॥ ३३ ॥

अथ तारव्यवस्था[माह]—

**मध्यमे सप्तकेंऽशः स्यात्तस्मात्तारस्थितात्परान् ।**
**स्वरांश्चतुर आरोहेदेष तारावधिः परः ॥ ३४ ॥**

**मध्यमे सप्तकेंऽशः स्यादिति । मध्यमे सप्तक इति** । मध्यस्थानस्थितेषु षड्जादिषु सप्तसु स्वरेष्वित्यर्थः । अंशः स्यात् । षड्जमध्यमग्रामयोः प्राधान्यात्प्राबल्याच्च यस्मिन्ग्रामे यश्चतुःश्रुतिकोंऽशः षड्जो वा मध्यमो वा भवेत् । तारस्थितात्द्विगुणात् । तस्मात्षड्जाद्वा मध्यमाद्वा परांश्चतुरः स्वरान् । मध्यमग्रामे

तावत्तस्मादिति तारमध्यमपरामर्शः। तस्मादिति ल्यब्लोपे पञ्चमी। तमारभ्येत्यर्थः। तेन सह परांश्चतुरो मपधनीनारोहेदित्यर्थः। षड्जग्रामे तु तस्मादिति तारषड्जपरामर्शः। तस्मादित्यवधौ पञ्चमी। ततः परांश्चतुरः स्वरान्रिगमपानारोहेदिति। एष तारावधिः। एष उक्तप्रकारस्तारावधिः। परो निरतिशयः। कुतः। मध्यमग्रामे तारनिषादात्परस्य स्वरस्यासंभवादेव। षड्जग्रामे तु तारपञ्चमात्परयोर्धैवतनिषादयोः संभवे शक्तौ च सत्यामपि तत्र प्रयोगे रक्तेरभावादिति ॥ ३४ ॥

**अर्वाक्तु कामचारः स्यात्तारो(रे) लुप्तोऽपि गण्यते ॥३५॥**

**अर्वाक्त्विति** । अर्वाङ्न्यूनतारावधित्वेनोक्तयोर्निषादपञ्चमयोरधस्तात्तारे स्थिति(ते)षु यस्य कस्यचिदवधित्वं तु कामचारः। गातुरशक्त्येच्छया वा प्रवर्तनम् (?)। **तारो(रे) लुप्तोऽपि गण्यत इति**। तारे तारव्यवस्थाविषये। चतुर आरोहेदित्यत्र चतसृषु मध्ये प्रयोगस्य लक्षणवशादेकस्य स्वरस्य लोपे सत्यपरोक्षगणनायां सोऽपि गृह्यते ॥ ३५ ॥

नन्दयन्त्या जातेरपि मध्यमग्रामीणत्वात्तारव्यवस्थायां चतुःस्वरारोहे तारमध्यमस्य प्रारम्भावधित्वे प्राप्ते तदपवादत्वेन तारषड्जस्य **भरतादि**मतात्परावधित्वं **रुद्रटादि**[1]मतात्पूर्वावधित्वं च विहितमित्यभिसंधाय तन्त्रेणाऽऽह—

**आतारषड्जमारोहे( हो ) नन्दयन्त्यां प्रकीर्तितः॥ ३६ ॥**

**आतारषड्जमिति** । परावधित्व आतारषड्जपर्यन्तमारोहः प्रकीर्तितो **भरतादि**भिरित्यर्थः। यथाऽऽह **भरतः**—

"तारगत्या तु षड्जं च कदाचिन्नातिवर्तते" इति ।

तत्पूर्वावधित्वे त्वातारषड्जं तारषड्जमारभ्याऽऽरोहः सामान्यतः प्राप्तचतुर्थस्वरारोहः सामान्यतः प्रकीर्तितो रुद्रटादिभिरित्यर्थः। यथा यावत्षड्जमेव तारगतिर्मध्यमस्याप्यत्र संवादित्वादनांशित्वाच्च तारगतौ **रुद्रटेन** कृता मध्यमस्येति न दोष इति **मतङ्गोक्तम्**। अयमाशयः। मन्दयन्त्या हृष्यकामूर्छनान्वितेन पञ्चमांशत्वान्मन्द्रव्यापकत्वेन तारगतिः। संकोचस्त्वाचार्यैः कृत इति। सामान्या तारव्यवस्था तु **भरतोक्ता** यथा—

'अंशाक्षरैर्गतिं विद्यादाचतुर्थस्वरादिह ।
आपञ्चमात्सप्तमाद्वा नातः परमिहेष्यते '॥ इति ।

तरतेर्णिजन्तात्तार्यत इति कर्मणि घञि दूरश्राव्यस्य ध्वनेस्तार इति संज्ञा ॥ ३६ ॥

अथ मन्द्रव्यवस्था—

---

१ ग. 'रुद्रटा' ।

**मध्यस्थानस्थितादंशादामन्द्रस्थांशमाव्रजेत् ।**
**आमन्द्रन्यासमथवा तदधःस्थरिधावपि ।**
**एषा मन्द्रगतेः सीमा ततोऽर्वाक्कामचारिता ॥ ३७ ॥**

**मध्यस्थानस्थितादिति** । अंशाद्ग्रामापेक्षया षड्जाद्वा मध्यमाद्वा । अत्रापि ल्यब्लोपे पञ्चमी, अंशमारभ्येति । आमन्द्रस्थांशं यथाग्रामं मन्द्रस्थानस्थितषड्जपर्यन्तं तादृशमध्यमपर्यन्तं वा । आङत्राभिविधौ । आव्रजेदागच्छेत् । अनेन मध्यस्थितस्यांशस्य प्रायेण प्रारम्भो गम्यते । जातिप्रयोगे षड्जमन्द्रव्यवस्थायामयमेकः पक्षः । अथवाऽऽमन्द्रन्यासं मन्द्रस्थानस्थितन्यासस्वरपर्यन्तम् । आङभिविधौ । अत्र न्यासशब्देन ग्रामयोरन्तिमौ गान्धारनिषादौ विवक्षितौ । न तु जात्यादिगीतसमापकः । तौ च व्यत्यासेन षाड्जग्रामिके प्रयोगे मन्द्रगान्धारो न्यासो माध्यमग्रामिके प्रयोगे मन्द्रनिषादो न्यास इति ग्रामयोर्मन्द्रावधी भवतः । अत्र लिङ्गं षड्जग्रामीणयाऽपि षड्जकैशिक्या मन्द्रगान्धारस्य न्यासत्वदर्शनमिति द्वितीयः पक्षः । तदधःस्थरिधावपीति तृतीयः पक्षः । अत्रापिशब्दो विकल्पार्थः । रिधौ वेति । तच्छब्देन ग्रामन्याससंघातविवक्षितौ गान्धारनिषादौ परामृश्येते । तयोरधःस्थै(स्थौ) रिधावित्यनेन क्रमेण ग्रामविवक्षया न्यासयोऽर्थन्यास एव दर्शितः । यथोक्तं भरतेन—" त्रिधा मन्द्रगतिः । अंशपरा न्यासपराऽपन्यासपरा चेति ।

मन्द्रस्त्वंशात्परो नास्ति न्यासेति द्वौ व्यवस्थितौ ।
गान्धारन्यासलिङ्गेन दृष्टमार्षभसेवनम् " इति ।

एषां( षा ) पक्षत्रयेऽन्यतमाश्रया मन्द्रगतेर्मन्द्रस्थस्वरावरोहस्य सीमाऽवधिः । तत उक्तावधेरर्वाङ्न्यूनता(?) । कामचारिता गातुरिच्छयाऽशक्तेरप्रवर्तमानत्वम्(?) मदी हर्षे इत्यस्माण्णिजन्तान्मदयतीति कर्तरि रप्रत्यये रूपम् । ह्रस्वस्य ध्वनेर्मन्द्र इति संज्ञा ॥ ३७ ॥

अथ न्यासः—

**गीते समाप्तिकृन्न्यास एकविंशतिधा च सः ॥ ३८॥**

**गीते समाप्तिकृदिति** । गीतजात्यादिप्रयोगे समाप्तिकृन्निरपेक्षावसानकारी स्वरे( रो) न्यासः । न्यस्यते त्यज्यते येन गीतमिति करणे घञि न्याससंज्ञकः । स चाष्टादशजातिष्वेकविंशतिधा वक्ष्यमाणप्रकारेण ॥ ३८ ॥

तदेव विवृणोति—

**षाड्ज्यादीनां तु सप्तानां न्यासः स्यान्नामकृत्स्वरः ।**
**द्वौ नामकारिणौ षड्जमध्यमायां तु तौ मतौ ॥ ३९ ॥**

षाड्ज्यादीनामित्यादिना । सप्तानां शुद्धानां विकृतभेदैश्च सहितानाम् । तु नामकादिति षाड्ज्यां षड्ज आर्षभ्यामृषभ इत्येवं नान्य इति तुशब्दार्थः॥३९॥

उदीच्यवात्रयं मान्तं निषगान्ता तु कैशिकी ।
कार्मारवी पञ्चमान्ता गान्ताः पञ्चापराः स्मृताः ॥ ४० ॥

उदीच्यवात्रयमिति । षड्जोदीच्यवा गान्धारोदीच्यवा मध्यमोदीच्यवा च त्रिकं मान्तं मध्यमन्यासकम् । अपराः पञ्च षड्जकैशिकी रक्तगान्धारी गान्धारपञ्चम्यान्ध्री नन्दयन्ती चेति । स्मृता भरतादिभिरिति शेषः ॥ ४० ॥

अथापन्यासः—

अपन्यासः स्वरः स स्याद्यो विदारीसमापकः ।
कार्मारव्यां च नैषाद्यामान्ध्रीमध्यमयोस्तथा ॥ ४१ ॥
आर्षभ्यां च स्वरा येंऽशास्तेऽपन्यासाः प्रकीर्तिताः ।
उदीच्यवानां त्रितयेऽपन्यासौ षड्जधैवतौ ॥ ४२ ॥
मध्यमो रक्तगान्धार्यां गान्धार्यां षड्जपञ्चमौ ।
सरिपाः षड्जकैशिक्यां पञ्चम्यां निरिपाः स्मृताः ॥ ४३ ॥
रिपौ गान्धारपञ्चम्यां षाड्ज्यां गान्धारपञ्चमौ ।
धैवत्यां रिधमाः प्रोक्ता नन्दयन्त्यां मपौ मनौ ॥ ४४ ॥
रिवर्ज्याः षड्जकैशिक्यां सप्तापीत्यूचिरे परे ॥
सप्तस्वरापन्यासां तु भाषन्ते षड्जमध्यमाम् ॥ ४५ ॥
अत्र येंऽशा अपन्यासास्ते स्युरेकोनविंशतिः ।
सप्तत्रिंशत्परे ते च षट्पञ्चाशत्तु संयुताः ।
कैशिक्यां सप्तपक्षे तान्सप्तपञ्चाशतं विदुः ॥ ४६ ॥

अपन्यासः स्वरः स स्यादित्यादिना सप्तपञ्चाशतं विदुरित्यन्तेन निरूपितः स्पष्टः । अपन्यस्यते प्रयोगो येनेत्यपन्यासः । अपन्यसनं च न्यासत्वापगमे त्ववान्तरविच्छेदकारित्वान्न्यासवत्प्रतिभासनम् ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥

संन्यासस्तु(विन्यासौ तु)—

अंशाविवादी गीतस्याऽऽद्यविदारीसमाप्तिकृत् ।
संन्यासोंऽशाविवाद्येव विन्यासः स तु कथ्यते ॥ ४७ ॥
यो विदारीभागरूपपदप्रान्तेऽवतिष्ठते ॥ ४८ ॥

---

१ घ. रिमधाः ।

अंशाविवादी । यस्मिन्प्रयोगे योंऽशस्तस्याविरोधी संवादीत्यर्थः । गीतस्याऽऽद्यविदारीसमाप्तिकृत् । प्रथमखण्डसमापकः । अनेनापन्यासस्यातिरिक्तविदारीविषयत्वं विज्ञेयम्। **विन्यासः स तु कथ्यते** । स इति वक्ष्यमाणपरामर्शः। अंशाविवादित्वमुक्तमेव । विदारीभागरूपपदमान्ते विदार्यां भागरूपाणि वर्णालंकारादीत्युक्तस्य वारणस्य(?) वाक्यस्थानीयस्यावयवभूतानि पदवत्पदानि तेषां स्वरसमुदायात्मनां प्रान्ते योऽवतिष्ठत इति संबन्धः। विवादिव्यतिरिक्तानां सर्वेषामपि स्वराणां संन्यासविन्यासत्वासंभवेन बहुत्वादेतयोः संख्या नोक्ता ॥४७॥४८॥

अथ बहुत्वम्—

**अलङ्घनात्तथाऽभ्यासाद्बहुत्वं द्विविधं मतम् ।**
**पर्यायांशे स्थितं तच्च वादिसंवादिनोरपि ॥ ४९ ॥**

**अलङ्घनादिति** । लङ्घनमीषत्स्पर्शस्वरस्य स्थानप्रयत्नकृतस्वरूपन्यूनता । तदभावोऽलङ्घनम् । साकल्येन स्पर्श इति यावत् । इदमेकं बहुत्वम् । अभ्यासादावृत्तेर्नैरन्तर्येण वा सान्तरत्वेन वा स्वरस्य पुनः पुनरुच्चारणमावृत्तिः । इदमन्यद्बहुत्वम् । तच्च द्विविधं बहुत्वं पर्यायांशे वादिभूतांशाद्व्यतिरिक्तांशे वादिसंवादिनोरपि स्थितम् । प्रयोक्तव्यमिति शेषः ॥ ४९ ॥

अथा[ल्पत्वम् ]—

**अल्पत्वं च द्विधा प्रोक्तमनभ्यासाच्च लङ्घनात् ।**
**अनभ्यासस्त्वनंशेषु प्रायो लोप्येष्वपीक्ष्य(ष्य)ते ॥ ५० ॥**

**[अ]ल्पत्वं चेति** । अनभ्यासाच्च लङ्घनादिति बहुत्वोक्तलक्षणाविपर्ययः । अनभ्यासस्तु । आवृत्त्यभावेन सकृदुच्चारणरूपमल्पत्वं तु । अनंशेषु वादिपर्यायांशोभयव्यतिरिक्तेषु स्वरेष्विष्यते । लोप्येष्वपि षाडवौडुवकारिषु च प्राय इष्यते प्राचुर्येण भवतीत्यर्थः ॥ ५० ॥

**ईषत्स्पर्शो लङ्घनं स्यात्प्रायस्तल्लोप्यगोचरम् ।**
**उशन्ति तदनंशेऽपि क्वचिद्गीतविशारदाः ॥ ५१ ॥**

ईषत्स्पर्श इति ग्रन्थस्तु विवृतार्थः ॥ ५१ ॥

अथान्तर्मार्गः—

**न्यासादिस्थानमुज्झित्वा मध्ये मध्येऽल्पतायुजाम् ।**
**स्वराणां या विचित्रत्वकारिण्यंशादिसंगतिः ॥ ५२ ॥**
**अनभ्यासैः क्वचित्क्वापि लङ्घनैरेव केवलैः ।**
**कृता साऽन्तरमार्गः स्यात्प्रायो विकृतजातिषु ॥ ५३ ॥**

---

१ क. प्रायोऽप्येवं समीक्ष्य° । ख. प्रायोऽप्येष्वपि वक्ष्य° । २ ख. ङ. °कृतिजा° ।

**न्यासादिस्थानमिति**। न्यासादिस्थानं न्यासादीनां न्यासापन्यासविन्यास-संन्यासग्रहांशानां स्थानं गीतस्यान्त्यप्रदेशादि । उज्झित्वा विहाय । **मध्ये मध्य इति**। मध्यानां बहुत्वाद्वीप्सायां द्विर्वचनम् । तेनोक्तन्यासादीनां द्वयोर्द्वयोर्मध्य इत्युक्तं भवति । तत्राल्पतायुजामुक्तद्विविधाल्पत्वभाजां स्वराणां यांऽशादिसंगतिरंशग्रहापन्यासादिभिः सह संगतिरारोहावरोहादिना संघट्टना । विचित्रत्वकारिणी स्वरसमुदायात्मकतानवैचित्र्यकारिणी भवति सा क्वचित्केवलैरनभ्यासैः क्वापि लङ्घनैरेव तत्तद्गीतरक्तिवशात्कृतोत्पादिता साऽन्तर्मार्गः स्यात् । सोऽपि विकृतजातिषु प्रायः स्यात् । शुद्धजातिषु तु कादाचित्क इत्यर्थः ॥५२॥५३॥

अथ षाडवम्—

> **षडवन्ति प्रयोगं ये स्वरास्ते षाडवा मताः ।**
> **षट्स्वरं तेषु जातत्वाद्गीतं षाडवमुच्यते ॥ ५४ ॥**

**षडवन्तीति**। ये षड् स्वराः शुद्धा विकृता वा प्रयोगं जात्यादिकं वेति (दिकमवन्ति) रक्षन्ति प्रवर्तयन्तीत्यर्थः। ते स्वराः षा(ष)डवाः । "अव रक्षणे" इत्यस्माद्धञि 'अव' इति रूपम् । ख( ष )ट् च तेऽवाश्चेति कर्मधारयः । तेषु षडवेषु जातत्वात्षट्स्वरगीतं षाडवमुच्यत इति योजना । तेषु जातत्वादित्यनेन षडवशब्दात् "तत्र जातः" इत्यणि षाडवमिति रूपम् । अयमर्थः । सप्तसु स्वरेषु लक्षणवशादेकस्मिंस्त्यक्ते तदितरषट्स्वरप्रयोगप्रपञ्चवशाज्जातं गीतं षाडवव्यपदेशवादिति ॥ ५४ ॥

अथौडुवितम्—

> **वान्ति यान्त्युडवोऽत्रेति व्योमोक्तमुडुवं बुधैः ।**
> **पञ्चमं तच्च भूतेषु पञ्चसंख्या तदुद्भवा ॥ ५५ ॥**
> **उ(औ)डुवी साऽस्ति येषां च स्वरास्ते त्वौडुवा मताः[1] ।**
> **तेषु जातं तु यद्गीतं तदौडुवितमुच्यते ॥ ५६ ॥**

**वान्तीति**। यान्तीति 'वा गतिगन्धनयोः' इत्यस्माच्णिजन्तस्य वान्तीत्यस्यैव गत्यर्थतोक्तिः । अत्रोडवो नक्षत्राणि । वान्ति(वा गतिगन्धनयो)रितिधातोः 'सुपि स्थः' इत्यत्र सुपीतियोगविभागात्कप्रत्यय उडुवमिति व्योमाऽऽकाशमुक्तम् । तच्चोडुवं भूतेषु पृथिव्यादिमहाभूतेषु गुणबाहुल्येनाभ्यर्थितत्वात्सृष्टिक्रमप्रातिलोम्येन पृथिव्यादिपरिगणनायां पञ्चमम् । पृथिव्यप्तेजोवाय्वाकाशानीति । पञ्चसंख्या पञ्चेति संख्या तदुद्भवा तदुद्भवद्रव्याश्रिता सत्यु(त्यौ)डुवीत्युच्यते । उडुवशब्दात् 'तत्र जातः' इत्यणि स्त्रियां टिड्ढाणञित्यादिना ङीषि(पि) रूपमित्यर्थः । सा चौडुवी संख्या येषां तत्र तत्र नियतस्वरद्वयलोपे सत्यवशि-

---

१ ङ. °डवाः स्मृताः ।

ष्टानां प्रयोगप्रवर्तकानां स्वराणामस्ति ते तु पञ्च स्वरा औडुवा मताः । तदस्यास्तीत्यस्मिन्नर्थे शैषिकेऽणि सतीत्यर्थः । जातं त्विति । तुशब्देन येषामितियच्छब्दतात्पर्येणोक्ता एव न तु संपूर्णे षाडवे वा । शते पञ्चाशन्न्यायेन यथाकथंचित्संभवतः पञ्चापीति गम्यते । त औडुवा यत्र गीते संजातास्तद्गीतमौडुवितमुच्यते । औडुवशब्दात् "तदस्य संजातम्" इत्यादिनेतच्प्रत्यये सतीत्यर्थः ॥ ५५ ॥ ५६ ॥

**तत्संबन्धादौडुवं च पञ्चस्वरमिदं विदुः ॥ ५७ ॥**

**तत्संबन्धादिति** । पञ्चस्वरमिदं गीतं तत्संबन्धात् । तच्छब्देनौडुवाः परामृश्यन्ते । तेषामौडुवानां संबन्धीति संबन्धमात्रविवक्षायां तस्येदमित्यणप्रत्यय औडुवमिति च विदुः ॥ ५७ ॥

पूर्वं द्विविधस्याल्पत्वस्य सामान्येन प्रायो लोप्यविषयत्वमुक्त्वेदानीं तस्यैव कदाचिल्लोप्यविशेषेष्ववस्थां दर्शयति—

**क्रमादल्पाल्पतरते षाडवौडुवकारिणौ ।**
**संपूर्णत्वदशायां स्तः पञ्चम्यां तु विपर्ययः ॥ ५८ ॥**

**क्रमादिति** । अल्पाल्पतरते । अल्पश्चाल्पतरश्चाल्पाल्पतरौ स्वरौ तयोर्भावावल्पाल्पतरते । अत्र द्वंद्वान्ते श्रुतस्य तलः प्रत्येकमभिसंबन्धोऽल्पताऽल्पतरता चेति । अल्पताऽनभ्यासः । अल्पतरता लङ्घनम् । संपूर्णत्वदशायां यासां जातीनां संपूर्णत्वाद्यवस्थात्रयं संभवति तासां संपूर्णत्वावस्थायामेव ते । षाडवौडुवकारिणौ क्रमौ स्तः । षाडवकारिणः स्वरस्याल्पता, औडुवकारिणः स्वरस्याल्पतरतेति प्रयोज्ये भवतः । यासां जातीनां तु संपूर्णषाडवत्वावस्थाद्वयमेव तासु षाडवकारिणोऽल्पतैवौडुवकारिणोऽभावादल्पतरता न स्यात् । पर(रा)स्तु नित्यपूर्णास्तासु लोप्यस्वराभावादल्पत्वमनंशविषयमेवेत्यवगन्तव्यम् । अल्पत्वप्रयोगे कृतस्य नियमस्य क्वचिद्विधिना बाधं दर्शयति—**पञ्चम्यां त्विति** । तुशब्दोऽन्येतरजातिवैलक्षण्यद्योतनार्थः । विपर्ययोऽन्यथाभावः । एतदुक्तं भवति । अवस्थात्रयवत्याः पञ्चम्याः पूर्णत्वलक्षणे 'सगमाः स्वल्पका मताः' इत्यनेन वक्ष्यमाणेन षड्जमध्यमयोरषाडवौडुवकारित्वादप्राप्तौ क्रमाद्गेन निगाभ्यां च षाडवौडुविता मतेति षाडवकारित्वाद्गान्धारे प्राप्तौ च संभूय त्रयाणामल्पत्ववचनेन निषादेऽप्यौडुषकारित्वम् । न तत्र बहुत्वस्य प्राप्तावृषभपञ्चमनिषादामनष्य न्यासास्यमिति ? बहुत्ववचनेन नियमस्य बाध इति । यथा 'प्राङ्मुखोऽन्नानि भुञ्जीत' इत्यस्य लक्ष्मीव्रते संपत्कामः पश्चिमाशामुखीतेत्यनेन वचनेन(?) ॥ ५८ ॥

ननु विषयव्यवस्थया सर्वजातिषु नियतस्याल्पत्वस्य पञ्चम्यां कथं विपर्यय इत्यत आह—

१ ग. °दन्यतरत्व° ।

**वचनं विधिरप्राप्ताविहाल्पत्वबहुत्वयोः ॥ ५९ ॥**

**वचनं विधिरिति** । इह पञ्चम्ग्रामल्पत्वबहुत्वयोः स्वरधर्मयोरप्राप्तौ । अत्र षाडवौडुवकारिणोः षड्जमध्यमयोरल्पत्वस्यौडुवकारिणि निषादे बहुत्वस्य च प्राप्तौ सत्यां वचनं दौर्बल्यं चात्र विज्ञेयं षड्जगान्धारमध्यमैरिति षड्जमध्यमयोः साक्षादल्पत्वस्य सनिषादावपन्यासवित्यपन्यासालिङ्गेन निषादे बहुत्वस्य च **भरतोक्त**मेतद्वचनम् । विधिः । विधीयतेऽनेनेति करणे " उपसर्गे घोः किः " इति किप्रत्यये सति[रूपम्] प्रातःसंध्यामुपासीतेतिवचनवत् ॥ ५९ ॥

ननु षड्जमध्यमयोरप्राप्तावल्पत्ववचनं निषादेऽप्यप्राप्तौ बहुत्ववचनं विधिरस्तु । इह षाडवकारित्वेनाल्पत्वविषये गान्धारप्राप्तौ सत्यामपि पुनरल्पत्वविधानं किमित्याशयवानाह--

**परिसंख्या द्वयोः प्राप्तावेकस्यातिशयाय त(य)त् ॥ ६० ॥**

**परिसंख्येति** । द्वयोः । इह षाड्वौडु[व]कारिणोर्गान्धारनिषादयोर्द्वयोः । प्राप्तावल्पत्वधर्मितया प्राप्तौ सत्यामेकस्य तयोरेकस्य गान्धारस्यातिशयाय रक्तिविशेषाय यदल्पत्ववचनं परिसंख्या सा परिसंख्या भवतीत्यर्थः । यत्तदोः संबन्धस्य नित्यत्वादत्र सेतितच्छब्दाध्याहारः कर्तव्यः। परिसंख्योदाहरणं यथा । इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्त इति । चयनप्रकरण इमामगृभ्णन्निति मन्त्रे रशनालिङ्गेन प्राप्तयोरश्वगर्दभाभिधान्योस्तस्माद्श्वाद्गर्दभोऽश्वतर इति निकृष्टाया गर्दभाभिधान्या अश्वाभिधानी श्रेयसीत्येवैकस्य(स्या) अतिशयायेमामगृभ्णन्रशनामृतस्येतिमन्त्रानुवादेनाश्वाभिधानीमादत्त इति यत्तदर्थशास्त्रं वचनं परिसंख्या तद्वत् । परिसंख्याया इतरपरिवर्जनफलत्वादिहापि निषादस्याप्यल्पत्वान्नि(नि)षेधः फलम् ॥ ६० ॥

ग्रहादीनां त्रयोदशानां जातिलक्षणानां प्रत्येकमन्वर्थतया स्वरूपं निरूप्य तोतिषा( तत्षा )ड्जादिषु शुद्धविकृतासु सप्तसु ते[?]विकृतान्योन्यसंसर्गजातासु षड्जकैशिक्यादिष्वेकादशसु चेत्यष्टादशसु जातिषु क्रमेण प्रत्येकं यथासंभवं योजयित्वा सप्रस्तारं दर्शयितुमाह--

**अथ प्रत्येकमेतासां जातीनां लक्ष्म कथ्यते ।**
**षाड्ज्यामंशाः स्वराः पञ्च निषादर्षभवर्जिताः ।**
**निलोपात्षाडवं सोऽत्र पूर्णत्वे काकली क्वचित् ॥ ६१ ॥**

**अथ प्रत्येकमित्यादिना** । प्रत्येकमेकस्यामेकस्याम् । विभक्त्यर्थेऽ[वीप्सायाम्?]व्ययीभावः । तासु निषादर्षभवर्जिताः पञ्च स्वराः सगमपधा अंशाः । ते पर्यायेण वादिनो ग्रहाश्च भवन्तीत्यर्थः । निलोपान्निषादपरित्यागात्षाडवं षड्-

स्वरप्रयोगः कार्य इति शेषः । सोऽत्र निषादः । अत्र षाड्ज्यां पूर्णत्वे संपूर्णावस्थायां क्वचित्षड्जस्य वादित्वे विकृतदशायां काकली भवति ॥ ६१ ॥

**सगयोः सधयोश्चात्र संगतिर्बहुलस्तु गः ।**
**गान्धारेंऽशे न नेर्लोपो मूर्छना धैवतादिका ॥ ६२ ॥**

**सगयोः सधयोश्चात्र संगतिरिति** । अत्र षड्जस्य गान्धारेणैकान्तरितेन तादृशेनैव धैवतेन च यथा रक्तिसंबन्धः सगसगसधेति गसगसधसेति वा कार्यः । गस्तु गान्धारस्तु । **बहुल इति** । यद्यपि निगावन्यविवादिनाविति विवादित्वाद्गान्धारस्याऽऽप्तं [?] बहुत्वम् । तथाऽपि गान्धारस्य तु बाहुल्यमिह मुनिवचनाद्विधीयत इति तुशब्दार्थः । गान्धारांशे न नेर्लोपः । निषादस्य गान्धारसंवादित्वादंशसंवादिनो लोपाभावादिति भावः । एतेनावस्थाद्वयवत्या अप्यस्याः षड्जगान्धारस्यांशत्वे निर्लोपप्रतिषेधेन षाडवापवादात्पूर्णैवावस्थवेत्युक्तं भवति । अतोऽस्याः समपधेषु चतुर्ष्वंशेषु संपूर्णषाडवत्वावस्थाद्वयं व्यवस्थितम् । षड्जेंऽशेऽपि तस्यैव ग्रहापन्यासत्वात्केवलाशुद्धतायां पूर्णतैव । इत्यस्यां पूर्णतायां षडंशाः षाडवत्वे चत्वार इति मतङ्गोक्ता दशांशा वेदितव्याः । एवमवस्थापन्नांशसंख्या जात्यन्तरेष्वप्यूह्या । मूर्छना धैवतादिका । अस्यां षड्जग्रामिकतया धैवतादिका । उत्तरायता मूर्छना [न] तु मध्यमग्रामिणा पौरवीत्यर्थः ॥ ६२ ॥

अस्यां तालमार्गगीतिविनियोगानां नियमं दर्शयति—

**त्रिधा तालः पञ्चपाणिरत्र चैककलादिकः ॥ ६३ ॥**
**क्रमान्मार्गाश्चित्रवृत्तिदक्षिणा गीतयः पुनः ।**
**मागधी संभाविता च पृथुलेति क्रमादिमाः ॥ ६४ ॥**
**नैष्क्रामिकध्रुवायां च प्रथमे प्रेक्षणे स्मृतः ।**
**विनियोगो द्वादशात्र कला अष्टलघुः कलाः ॥ ६५ ॥**

**त्रिधा ताल इत्यादिना** । अत्र षाड्ज्यामेककलादिक एककलो द्विकलश्चतुष्कल इति त्रिधा च पञ्चपाणिः । षट् पितापुत्रकः[?] । प्रयोक्तव्य इति शेषः । क्रमान्मार्गा इत्यनेनैककलपञ्चपाणौ चित्रो मार्गः । मागधी गीतिः । द्विकले वृत्तिमार्गः । संभाविता गीतिः । चतुष्कले दक्षिणो मार्गः पृथुला गीतिरिति क्रमो दर्शितः । अत्र षाड्ज्यामित्युपलक्षणं जात्यन्तरेष्वपि तालान्तरेष्वप्येककलत्वादीनां योजना कर्तव्या । उत्तरत्र योक्ताऽस्माभिः कलासंख्येत्यादिना सामान्येन वक्ष्यमाणत्वात् । तालादीनां लक्षणं तु स्वरप्रकरणे वक्ष्यते । तथा प्रथमप्रेक्षणे नैष्क्रामिकध्रुवायां च विनियोगः स्मृत इति योजना । प्रथमप्रेक्षणे नाटकादीनां प्रथमाङ्के । नैष्क्रामिकध्रुवायामिति ध्रुवासामान्यलक्षणं तावद्भरतोक्तम्—

१ क. ख. ग. घ. °ष्टगुरुः क° ।

“ यानि चैवं निबद्धानि च्छन्दोवृत्तिविधानतः ।
मुखप्रतिमुखादीनि गीताङ्गान्येव सर्वशः ।
यदात्मकानि तानि स्युर्ध्रुवासंज्ञानि नाटके ॥ ” इति ।

तद्विशेषाश्च—
“ प्रावेशिकी तु प्रथमा द्वितीया क्षेपिकी स्मृता ॥
प्रासादिकी तृतीया च चतुर्थी चान्तराध्रुवा ।
निष्क्रामिकी तु विज्ञेया पञ्चमी च ध्रुवा बुधैः ” ॥

इति प्रवेशाद्यर्थसूचनादेता(स्ता)सामृत्व(मन्व)र्थता ज्ञेया । अपकृष्ट ताडितादयो गुरुलघ्वक्षरोभयप्रायास्त्रिविधा अपि ध्रुवा जातयः प्रावेशिक्यादीनामेवान्तरभिदाः । एतासां सतालत्वमेव पदमधिकृत्योक्तम्—“ सतालं च ध्रुवार्थेषु निबद्धम् ” । तत्रैव स्मृतम्—“अनिबद्धाक्षराणि स्युस्तेनेनप्रभृतीनि च” इति । “ तत्राङ्कान्ते निष्कामे तु भवेत्त्र्यस्रावसानिकी ” । आया[अस्याः] प्रस्तुतार्थनियोगः । “ निष्क्रामोपगतगुणां विद्यान्नैष्क्रामिकीं तां तु ” ॥

“ अथोत्तमानां कर्तव्या चतुरस्रावसानिकी ।
अधमानां तु कर्तव्या ध्रुवा त्र्यस्रावसानिकी ॥

नैष्क्रामिकी—“ त्र्यस्रे विरामास्त्रिकलश्चतुरस्रे चतुष्कलः ।
प्रावेशिक्यां ध्रुवायां तु नैष्क्रामिक्यां तथैव च ” इति ।

एवं यत्तत्तालविशेषनियतायां नैष्क्रामिक्यां ध्रुवायां विनियोगः । ध्रुवापदानामेतज्जात्युक्तस्वरसंदर्भेण योजनं नाट्याङ्गत्वेन । चकारात्स्वातन्त्र्येणापि नाट्यप्रोक्तपदैरन्यैर्वा शंकरस्तुतावेव विनियोगः समुच्चीयते । स्मृता भरतादिभिरिति शेषः । **द्वादशात्र कला इति** । अत्र षाड्ज्यां कलाः कालविशेषा द्वादश । अत्रोक्तस्य पञ्चपाणेर्यथाक्षरत्वे द्वादशमात्रिकत्वात् । कलाशब्देन प्रतीतस्य कालविशेषस्य ध्रुवादिमार्गभेदाश्रितत्वे नानैकरूपत्वादिह किंप्रमाणो विवक्षित इत्याकाङ्क्षायामाह—**अष्टलघुः कलेति** । अत्र लघुशब्देन पञ्चलघ्वक्षरोच्चारमितः कालो विवक्ष्यते । तादृशा अष्टौ लववो यस्याः कलायाः सा अष्टलघुः । एतेनात्र कला दक्षिणमार्गाश्रितेति गम्यते । तथा च वक्ष्यति—‘ योक्ताऽस्माभिः कलासंख्या सा दक्षिणपथे स्थिता ’ इति । अतोऽत्र चतुष्कलस्य पञ्चपाणेर्द्विरावृत्तिरवगन्तव्या । यदा तु वृत्तिमार्गाश्रयणेन चतुर्विंशतिकलास्तदा द्विकलपञ्चपाणेश्चतुरावृत्तयः। यदा पुनश्चित्रमार्गाश्रयणेनाष्टाचत्वारिंशत्कलास्तदा यथाऽक्षरपञ्चपाणेरष्टा[वा]वृत्तयः । एवं तालान्तरमप्यूह्यम् ॥६३॥६४॥६५॥

१ ग. °षु बन्द्धम् ।

अस्यां षाड्ज्यां षड्जो न्यासः । गान्धारपञ्चमावपन्यासौ । वराटी दृश्यते । अस्य प्रस्तारः—

१ षाड्जी.

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| सा | सा | सा | सा | पा | निध | पा | धनि | १ |
| तं | ० | भ | व | ल | ला० | ० | ट० | |
| री | गम | गा | गा | सा | रिग | धस | धा | २ |
| न | य० | ना | ० | म्बु | जा० | ०० | धि | |
| रिग | सा | री | गा | सा | सा | सा | सा | ३ |
| कं० | ० | ० | ० | ० | ० | ० | ० | |
| धा | धा | निध | निसं | निध | पा | सां | सां | ४ |
| न | ग | सू० | ०० | नु | प्र | ण | य | |
| नी | धा | पा | धनि | री | गा | सा | गा | ५ |
| के | ० | लि | ०० | स | मु | ० | द्र | |
| सा | धा | धनि | पा | सा | सा | सा | सा | ६ |
| वं | ० | ०० | ० | ० | ० | ० | ० | |
| सा | सा | गा | सा | मा | मा | मा | मा | ७ |
| स | र | स | कु | त | ति | ल | क | |
| सा | पस | मा | धनि | निध | पा | गा | रिग | ८ |
| पं | ०० | ० | का० | नु० | ले | प | ०० | |
| गा | गा | गा | गा | सा | सा | सा | सा | ९ |
| नं | ० | ० | ० | ० | ० | ० | ० | |
| धां | सा | री | गरि | सा | मा | मा | मा | १० |
| प्र | ण | मा | ०० | मि | का | ० | म | |
| धा | नी | पा | धनि | री | गा | री | सा | ११ |
| दे | ० | हें | ०० | ध | ना | ० | न | |
| रिग | सा | री | गा | सा | सा | सा | सा | १२ |
| लं० | ० | ० | ० | ० | ० | ० | ० | |

अस्यां षाड्ज्यां षड्जो न्यास इति वदतोऽयं भावः । अस्यां षाड्ज्यां

विकृतावस्थासु ग्रहादीनामनियमत्वेऽपि नामस्वरस्यैव न्यासत्वं शुद्धायां विकृतासु च नियतमिति । गान्धारपञ्चमावपन्यासाविति विकृतावस्थामाश्रित्योक्तिः । शुद्धतायां तु नामस्वरस्य षड्जस्य वाऽन्यासत्वं कर्तव्यम् । यदाह मतङ्गः— ' शुद्धत्वे षड्जश्चापन्यासः ' इति । वराटी दृश्यत इति । यदा विकृतावस्थायामपि काकलीप्रयोगस्तदा वराटी प्रतीयते । अन्यदाचाराद्येकदेशप्रतीतिरेवेत्यर्थः । प्रस्तार इह कलासु स्वरसंनिवेशः । क्रियत इति शेषः । तत्र षड्जग्रामे शुद्धस्वरमेलने प्रथमायां तावन्मध्यस्थानस्थितः षड्जः पञ्चलघ्वक्षरोच्चारमितलघुकालश्चतुर्वारमावर्त्यते । ततस्तत्स्थान एव पञ्चमो लघुकाल एकः । ततस्तत्रत्यावेव निषादधैवतौ मिलित्वैकलघुकालौ । पुनः पञ्चम एकलघुकालः । ततो धैवतनिषादावेकलघुकालौ । इत्येका कला । अस्यां तं भवललाटेति । ब्रह्म( क्रम )प्रोक्तपदाक्षरैः स्वरयोजनाप्रकारस्तु तमिति सानुनासिकेन प्रथमः षड्जः । तच्छेषतयैव द्वितीयः । भवाभ्यां तृतीयचतुर्थौ । लेन पञ्चमः । लेन दीर्घेण निषादः । तच्छेषत्वेन धैवतपञ्चमौ । टेन धैवतः । तच्छेषो निषाद इति(१) । द्वितीयस्या एकमध्यस्थाने रिर्लघुः । गमौ लघू । द्वौ गौ लघू । गो लघुः । रिगौ लघू । धसौ लघू । धो लघुः । अत्र नयनाम्बुजाधीत्यक्षरयोजना । नेन रिः । येन लघुना गः । तच्छेषो मः । सानुनासिकदीर्घेण नेन गः । तच्छेषो गः । बुना सः । दीर्घेण जेन रिः । तच्छेषा गधसाः । धिना धः ( २ ) । तृतीयस्यां रिगौ लघू । सारिगास्त्रयो लघवः । ततश्चत्वारः षड्जा लघवः । अत्र कमित्येकाक्षरयोजना । केन सानुनासिकेन रिः । तच्छेषा इतरे स्वराः ( ३ )। चतुर्थ्यां मध्यस्थानौ धौ लघू । निधौ लघू । निसौ लघू । पुनर्निधौ लघू । पो लघुः । तारे सौ लघू । नगसूनुप्रणयेत्यक्षरयोजना । नगसूभिर्धनयः । तच्छेषा धनिसाः । नुना निः । तच्छेषो धः । प्रणयैः पमसाः ( ४ ) । पञ्चम्यां मध्यस्थाने निधपा लघवः । धनी लघू । रिगसगा लघवः । केलिसमुद्भवेत्यक्षरयोजना । केक्षरेण निः । तच्छेषो धः । लीत्यनेन पः । तच्छेषौ धनी । सेन रिः । मु इत्यनेन गः । तच्छेषः सः । द्भेन सः ( ५ ) । षष्ठ्यां मध्ये सो लघुः । मन्द्रे धो लघुः । तच्छेषेषु धनी लघू । यो लघुश्चत्वारो लघवः । वमित्यक्षरयोजना । वेन सानुनासिकेन सः। तच्छेषा इतरे ( ६ )। सप्तम्यां मध्ये ससगसममममा लघवः । सरसकृततिलकाक्षरैः क्रमेण युक्ताः ( ७ ) । अष्टम्यां मध्ये सो लघुः । पसौ लघू । मो लघुः । धनी लघू । निधौ लघू । पो लघुः । गो लघुः । निगौ लघू । पङ्कजानुलेपेत्यक्षराणि । सानुनासिकेन पेन सः । तच्छेषा पसमाः । दीर्घेण केन धः । तच्छेषो निः । नुना निः । तच्छेषो धः । लेक्षरेण

१ ग. °द्धानां वि° । २ क. ° स्य न्या° । ३ घ. °ह शु° ।

पः। पेन गः। तच्छेषौ रिगौ (८)। नवम्यां मध्ये गाश्चत्वारो लघवः। साश्चत्वारो लघवः। नमित्यक्षरं सानुनासिकम्। तेन गस्तच्छेषा इतरे (९)। दशम्यां मन्द्रे धो लघुः। मध्ये सो लघुः। रिर्लघुः। गरी लघू। सममपा लघवः। प्रणमामि कामेत्यक्षराणि। प्रणमाक्षरैर्धसरयः। तच्छेषौ गरी। मिना सः। दीर्घेण केन मः। तच्छेषो मः। ततो मेन मः (१०)। एकादशयां मध्ये धनिपा लघवः। धनी लघू। रिगरिसा लघवः। देहेन्धनानेत्यक्षराणि। देकारेण धः। तच्छेषो निः। हेमित्यनेन पः। तच्छेषौ धनी। धनानेत्येतैः क्रमेण रिगरयः। तच्छेषः सः(११)। द्वादश्यां मध्ये रिगौ लघू। सरिगास्त्रयो लघवः। चत्वारः षड्जा लघवः। लमिति रिः। शेषाः सर्वेऽपि स्वराः।

तं भवललाटनयनाम्बुजाधिकं नगसूनुप्रणयकेलिसमुद्भवम्।
सरसकुङ्कुमतिलकपङ्कजानुलेपनं प्रणमामि कामदेहेन्धनानलम्॥

अत्र स्वरसंख्याऽल्पत्वबहुत्वपरिज्ञानाय लिख्यते। षड्जाः षट्त्रिंशत्। ऋषभा द्वादश। गान्धारा विंशतिः। मध्यमा अष्टौ। पञ्चमा धैवताः सप्तदश। निषादा द्वादशेति मिलिता द्वादशोत्तरं शतम्। अयं प्रस्तारः षड्जांशत्वे गान्धाराद्यंशत्वेऽप्येवमेवांशबहुत्वादिना सम्यग्विचार्योद्धारो नेयः। गान्धाराद्यंशत्वमपि स्वस्थानस्थितानामेव तेषां स्थायित्वकरणमपि वीणायामुपतन्त्रीणां स्वनादसाम्यापादनमिति रहस्यम्। षड्जादिसर्वजातिष्वंशस्वरगतो रसो वेदितव्यः। इति **षाड्जी** ॥ १ ॥

अथाऽऽर्षभी—

**आर्षभ्यां तु त्रयोंऽशाः स्युर्निषादर्षभधैवताः।**
**द्विश्रुत्योः संगतिः शेषैर्लङ्घनं पञ्चमस्य च ॥ ६६ ॥**
**षाडवं षड्जलोपेन सपलोपादिहौडुवम्।**
**मूर्छना पञ्चमादिश्च तालश्चच्चत्पुटो मतः।**
**अष्टौ कला भवन्तीह विनियोगस्तु पूर्ववत् ॥ ६७ ॥**

**आर्षभ्यां त्विति**। तुशब्दोऽस्यां षाड्जीवैलक्षण्यद्योतनार्थः। निषादर्षभधैवतास्त्रयोंऽशा ग्रहाश्च स्युः। द्विश्रुत्योर्गान्धारनिषादयोः प्रत्येकं शेषैः सरिमपधैः पञ्चभिर्यथायोगं संगतिः संबन्धः। एतेन गान्धारनिषादयोर्बहुत्वमितरेषामल्पत्वमिति सूचितम्। पञ्चमस्य लङ्घनं च लङ्घनमल्पतरत्वम्। चकारादल्पत्वं च संपूर्णावस्थायां भवति। षाडवं षड्जलोपेनेत्यादि स्फुटार्थम् ॥ ६६ ॥ ६७ ॥

**अस्यामार्षभ्यामृषभो न्यासः। अंशा एवापन्यासाः। देशीमधुकर्यौ दृश्येते। प्रस्तारः—**

१ ग. °श्रुतिः सं°। २ घ. ङ. °श्चच्चत्पु°। ३ ग. शेषैर्य सरिमपाधैः।

२ आर्षभी.

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| री | गा | सा | रिग | मा | रिम | गा | रिरि | १ |
| गु | ण | लो | ०० | च | ना० | ० | ०धि | |
| री | री | निध | निध | गा | रिम | मा | पनि | २ |
| क | म | न० | ०० | न्त | म० | म | र० | |
| मा | धा | नी | धा | पा | पा | सा | गा | ३ |
| म | ज | र | म | ० | ० | क्ष | य | |
| नी | धनि | री | गरि | सधं | गरि | री | री | ४ |
| म | जे० | ० | ०० | ०० | ०० | यं | ० | |
| री | मा | गरि | सधं | सस | रिस | रिग | मम | ५ |
| प्र | ण | ०० | मा | ०० | ०० | मि० | दिव्य | |
| निध | पा | री | री | रिप | गरि | सध | सा | ६ |
| म० | णि | द | ० | पं० | णा० | ०० | म | |
| रिस | रिस | रिग | रिग | मा | मा | मा | गरि | ७ |
| ल० | नि० | के० | ०० | ० | ० | तं | ०० | |
| पा | नी | नी | मग | री | सध | गरि | गरि | ८ |
| भ | व | म | मे | ० | ०० | ०० | यं० | |

**देशीमधुकर्यौ दृश्येते इति।** देशीमधुकर्यौ सदृशरागत्वादृषभाङ्गत्वेन प्रसूताया आर्षभ्या गाने तयोः प्रतीतिर्भवतीति भावः। षड्जग्रामे शुद्धस्वरमेलने प्रथमकलायां मध्ये रिगसास्त्रयो लघवः। रिगावेकः। मश्चैको रिमावेकः। गा एकः। ऋषभावेकः। एवमष्टौ लघवः। अत्र गुणलोचनाधीत्यक्षराणि। गुणलोभिः क्रमेण रिगसाः। तच्छेषौ रिगौ। चनाभ्यां मरी। तच्छेषा मगरयः। धिना रिः ( १ )। द्वितीयस्यां मध्यऋषभौ। निधावेकः। पुनर्निधावेकः। ग एकः। रिमावेकः। म एकः। पनी एकः। एवमष्टौ। कमनन्तममरेत्यक्षराणि। कमनै रिरिनयः। तच्छेषा धनिधाः। न्तमाभ्यां गरी। तच्छेषो मः। मराभ्यां मपौ। तच्छेषो निः ( २ )। तृतीयस्यां मध्ये मधनिधपपसगा अष्टौ लघवः। मजरमक्षयेत्यक्षराणि मजरैर्मधनिधाः। तच्छेषौ पौ। क्षयाभ्यां सगौ ( ३ )। चतुर्थ्यां मध्ये निरेकः। धनी एकः। रिरेकः। गरी एकः। समन्द्रधावेकः। गरी एकः। ऋषभौ द्वौ। एवमष्टौ। मजेयमित्यक्षराणि। मजे इत्याभ्यां निधौ। तच्छेषा अष्टौ पराः। यमित्यनेनोपान्त्यो

रिः । तच्छेषो रिः [ ४ ] । पञ्चम्यां मध्ये रिरेकः । म एकः । गरी एकः । सधावेकः। सावेकः। रिगावेकः । मौ द्वौ । एवमष्टौ । प्रणमामि दिव्येत्यक्षराणि । प्रणाभ्यां रिमौ । तच्छेषौ गरी । दीर्घेण मेन सः । तच्छेषा धससरिसाः । मिना रिः । तच्छेषो गः । दिव्याभ्यां मौ ( ५ ) । षष्ठ्यां मध्ये निधावेकः । प एकः । ऋषभौ द्वौ । रिपावेकः । गरी एकः । सधावेकः । स एकः । एवमष्टौ । मणिदर्पणामित्यक्षराणि । मेन निः । तच्छेषो धः । णिदाभ्यां परी । तच्छेषो रिः । र्पणा ( र्पेण ) रिः । तच्छेषः पः । दीर्घेण णेन गः । तच्छेषा रिसधाः । मेन सः ( ६ ) । सप्तम्यां मध्ये रिसौ द्विर्द्वौ । रिगौ द्विर्द्वौ । मध्यमास्त्रयः । गरी एकः। एवमष्टौ । लनिकेतमित्यक्षराणि । लेन रिः। तच्छेषः सः । निना रिः । तच्छेषः सः । क इत्यनेन रिः । तच्छेषा गरिगममाः । तमित्यनेन मः । तच्छेषौ गरी ( ७ ) । अष्टम्यां मध्ये पनिरयस्त्रयः । म एकः । गरी एकः । सधावेकः । गरी द्विर्द्वौ । एवमष्टौ । भवममेयमित्यक्षराणि । भवममे इत्येतैः पनिरिमाः । तच्छेषा गरीसधगरयः । यमित्यनेन गः । तच्छेषो रिरिति [ ८ ] ।

गुणलोचनाधिकमनन्तममरमजरमक्षयमजेयम् ।
प्रणमामि दिव्यमणिदर्पणामलनिकेतं भवममेयम् ॥

अत्रापि स्वरसंख्या प्रस्तारत एव द्रष्टव्या । अंशान्तरप्रस्तारेष्वभ्यूहनीया । **इत्यार्षभी ॥ २ ॥**

**अथ गान्धारी–**

**पञ्चांशा रिधवर्जाः स्युर्गान्धार्यां संगतिः पुनः ।**
**न्यासांशाभ्यां तदन्येषां धैवतादृषभं व्रजेत् ।**
**रिलोपनिधलोपाभ्यां षाडवौडुविते क्रमात् ॥ ६८ ॥**

**पञ्चांशा इति** । अस्यां गान्धार्यां रिधवर्ज्याः पञ्च सगमपनयोंऽशा ग्रहाश्च स्युः । संगतिः पुनः संगतिस्तु न्यासांशाभ्यां न्यासेन गान्धारेणांशेन गमपनिसेन्यतमेन तदन्येषां न्यासादुपात्तांशाच्चान्येषां पर्यायांशानंशरूपाणां च भवतीति शेषः । **धैवतादृषभं व्रजेदिति** । पूर्णावस्थायां कदाचिद्धैवतर्षभयोः संगतिः स्यादित्यर्थः ॥ ६८ ॥

**पञ्चमः षाडवद्वेषी निसमध्यमपञ्चमाः ।**
**अंशा द्विषन्त्यौडुवितं कलाः षोडश कीर्तिताः ॥ ६९ ॥**

**पञ्चमः षाडवद्वेषीत्यादिना (दीति)** । एतदुक्तं भवति । यदा पञ्चमोंऽशो भवति तदा संपूर्णावस्थैवेति निसमा यदांऽशास्तदा संपूर्णषाडवावस्थे द्वे एवेति च । एतेन गान्धाराङ्गत्व एतस्यास्तिस्रोऽवस्था इति ज्ञायते । पञ्चमः षाडवद्वेषी निसमध्यमपञ्चमाः । अंशा द्विषन्त्यौडुवितमित्यस्योपपत्तिराचार्यवचनं च रक्-

गान्धार्यां सम्यगभिधास्यते तत एवावगन्तव्यम् । **कलाः षोडश कीर्तिता इति** । चतुष्कलस्य चञ्चत्पुटस्य दक्षिणमार्गे चतुरावृत्तिका ॥ ६९ ॥

**मूर्छना धवतादिः स्याच्चालश्चञ्चत्पुटो मतः ।**
**विनियोगो ध्रुवागाने तृतीयप्रेक्षणे भवेत् ॥ ७० ॥**

**मूर्छना धैवतादिः स्यादिति** । अस्यां गान्धार्यां माध्यमग्रामिकत्वात्पौरवी-मूर्छनेत्यर्थः । **तृतीयप्रेक्षणे ध्रुवागान इति** । ध्रुवासामान्यनिर्देशात्प्रावेशि-क्यादिषु यथा विनियोग इत्यर्थः ॥ ७० ॥

**अस्यां गान्धार्यां गान्धारो न्यासः । षड्जपञ्चमावपन्यासौ । गान्धा-रपञ्चमदेशीवेलावल्यो दृश्यन्ते । अस्य प्रस्तारः—**

३ गान्धारी.

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| गा | गा | सा | नीं | सा | गा | गा | गा | १ |
| ए | ० | ० | ० | तं | ० | ० | ० | |
| गा | गम | पा | पा | धप | मा | निध | निसं | २ |
| र | ज० | नी | व | धू० | ० | मु० | ख० | |
| निध | पनि | मा | मपरि | गा | गा | गा | गा | ३ |
| वि० | ०० | ० | भ्र०० | म | ० | दं | ० | |
| गा | गम | पा | पा | धप | मा | निध | निसं | ४ |
| नि | शा० | म | य | व० | रो | ०० | रुं० | |
| निध | पनि | मा | मपरि | मा | गा | मा | मा | ५ |
| त | व० | मु | ख०० | वि | ला | ० | स | |
| गा | सा | गा | गा | गा | गम | गा | गा | ६ |
| व | पु | श्चा | रु० | ० | म० | ण | ल | |
| गा | गम | पा | पा | धप | मा | निध | निसं | ७ |
| मृ | दु० | कि | र | ण० | ० | ०० | ०० | |
| निध | पनि | मा | मपरि | गा | गा | गा | गा | ८ |
| म० | मृ० | त | भ०० | वं | ० | ० | ० | |
| री | गा | मा | पध | री | गा | सा | सा | ९ |
| र | ज | त | गि० | रि | शि | ख | र | |
| नीं | नीं | नीं | नीं | नीं | नीं | नीं | नीं | १० |
| म | णि | श | क | ल | शं | ० | ख | |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| गा | गम | पा | पा | धप | मा | निध | निसं | ११ |
| व | र० | यु | व | ति० | दं | ०० | त० | |
| निध | पनि | मा | मपरि | गा | गा | गा | गा | १२ |
| पं० | ०० | क्ति | नि०० | भं | ० | ० | ० | |
| नी | नी | पा | नी | गा | मा | गा | सा | १३ |
| प्र | ण | मा | ० | मि | प्र | ण | य | |
| गा | सा | गा | गा | गा | गम | गा | गा | १४ |
| र | ति | क | ल | ह | र० | व | तु | |
| गा | पा | मा | मा | निध | निसं | निध | पनि | १५ |
| दं | ० | ० | ० | ०० | ०० | ०० | ०० | |
| मा | पारग | गा | गा | गा | गा | गा | गा | १६ |
| श | शि०० | ० | ० | ० | नं | ० | ० | |

**षड्जपञ्चमावपन्यासाविति** । विकृतत्वविवक्षया। **गान्धारपञ्चमदेशी-वेलावल्यो दृश्यन्त इति** । गान्धारपञ्चमो ग्रामरागः । दृश्यन्त इत्यनेन गान्धारांशप्रस्तारगाने तेषामेकदेशेन प्रतीतिरुक्ता । मध्यमग्रामे शुद्धस्वरमेलने प्रथमकलायां मध्ये गगसा लघवस्त्रयः । मन्द्रे निरेकः । मध्ये स एकः । गास्त्रयः । एवमष्टौ । एतमित्यक्षरे । एकारेण गः । तच्छेषा गसनयः । तमित्यनेन सः । तच्छेषा गास्त्रयः [१] । द्वितीयस्यां मध्ये ग एकः । गमावेकः । पौ द्वौ । धपावेकः । म एकः । निधावेकः । निषादषड्जावेकः । एवमष्टौ । रजनिवधूमुखेत्यक्षराणि । रजभ्यां गौ । तच्छेषो मः । निवधूभिः पपधाः । तच्छेषौ पमौ । मुना निः । तच्छेषो धः । खेन निः । तच्छेषः सः [२] । तृतीयस्यां मध्ये निधावेकः । पनी एकः । म एकः । मपरय एकः । गाश्चत्वारः । एवमष्टौ । विभ्रमदमित्यक्षराणि । विना निः । तच्छेषा धपनिमाः । भ्रेण मः । तच्छेषौ परी । मेन गः । तच्छेषो गः । दमिति गः । तच्छेषो गः [३] । द्वितीयावच्चतुर्थी कला । निशामय वरोरु, इत्यक्षराणि । निशाभ्यां गौ । तच्छेषो मः । मयवैः पपधाः । तच्छेषः पः । रो इति मः । तच्छेषौ निधौ । रुणा निः । तच्छेषः सः [४] । पञ्चम्यां तृतीयावत्प्रथमाद्यो लघवः षट् । उपान्त्यान्त्यौ मध्यमषड्जौ । तव मुखविलासेत्यक्षराणि । तेन निः । तच्छेषो धः । वेन धः । तच्छेषो निः । मुखाभ्यां मौ । तच्छेषौ परी । विलाभ्यां गौ । तच्छेषो मः । सेन सः (५) । षष्ठ्यां मध्ये गसौ द्वौ । गास्त्रयः । गमावेकः । गौ द्वौ । एवमष्टौ । वपुश्चारुममलेत्यक्षराणि । वपुश्चारुभिर्गसगगाः । तच्छेषो



१ ग. °धूसुखे° ।

गः । मेन गः । तच्छेषो मः । मलाभ्यां गौ (६)। चतुर्थीवत्सप्तमी । मृदुकिरणेत्यक्षराणि । मृदुभ्यां गौ । तच्छेषो मः । किरणैः पपधाः । तच्छेषा इतरे (७) । तृतीयावदष्टमी । ममृतभवमित्यक्षराणि । मेन निः । तच्छेषो धः । मृणा पः । तच्छेषो निः । तभाभ्यां मौ । तच्छेषौ परी । वमिति गः । तच्छेषा इतरे (८) । नवम्यां मध्ये रिगमास्त्रयो लघवः । पधावेकः । रिगौ द्वौ । सौ द्वौ । एवमष्टौ । रजतगिरिशिखरेत्यक्षराणि । रजतगिभिः क्रमेण रिगमपाः । तच्छेषो धः । रिशिखरै रिगससाः (९) । दशम्यां मन्द्रेऽष्टौ । निषादा लघवः । मणिशकलशङ्खेत्यक्षराणि । मणिशकलशमित्येतैः षण्निषादाः । तच्छेष उपान्त्यः । खेनान्त्यः [१०] । सप्तमीवदेकादशी । वरयुवतिदन्तेत्यक्षराणि । वराभ्यां गौ । तच्छेषो मः । युवतिभिः पपधाः । तच्छेषः पः । दमिति मः । तच्छेषौ निधौ । तेन निः । तच्छेषः सः [११] । अष्टमीवद्द्वादशी । पङ्क्तिनिभमित्यक्षराणि । पेन निः । तच्छेषा धपनयः । ङ्क्तिनिभ्यां मौ । तच्छेषौ परी । भमिति गः । तच्छेषा गाः[१२] । त्रयोदश्यां मध्ये निनिपनिगमगसा लघवः । प्रणमामि प्रणयेत्यक्षराणि । चतुर्थो माक्षरशेषः[१३] । चतुर्दश्यां मध्ये गसौ द्वौ । गास्त्रयः । गमावेकः । गौ द्वौ । एवमष्टौ । रतिकलहरवतु, इत्यक्षराणि । मध्यमो रशेषः[१४] । पञ्चदश्यां मध्ये गपौ द्वौ । मौ द्वौ । निधावेकः । निषादषड्जावेकः । निधावेकः । पनी एकः । एवमष्टौ । दमिति गः । तच्छेषा इतरे[१५] । षोडश्यां मध्ये म एकः । परिगा एकः । गाः षट् । एवमष्टौ । शशिनामित्यक्षराणि । शशिभ्यां मपौ । तच्छेषास्त्रयो गाश्च । नमिति गः । तच्छेषास्त्रयो गाः [१६] ।

एतं रजनिवधूमुखविभ्रमदं निशामय वरोरु
तव मुखविलासवपुश्चारुममलमृदुकिरणममृतभवम् ।
रजतगिरिशिखरमणिशकलशङ्खवरयुवतिदन्तपङ्क्तिनिभं
प्रणमामि प्रणयरतिकलहरवतुदं शशिनम् ॥

अत्र रा[श]शिप्रणामोऽपि शशिनः शशिशेखरसंबन्धाच्छंकरस्तुतावेव पर्यवस्यति । अथवा शशिनोऽष्टमूर्तिधरमूर्तिभेदत्वात्साक्षात्तत्प्रणाम एवेति मन्तव्यम् ।
**इति गान्धारी ॥ ३ ॥**

**अथ मध्यमा—**

**पञ्चांशा मध्यमायां स्युरगान्धारनिषादकाः ।**
**षड्जमध्यमबाहुल्यं गान्धारोऽल्पोऽत्र षाडवम् ॥७१॥**

१ ग. °तिकेलिक° ।

गालोपान्त्यगलोपेन चौडुवं स्यात्कलाष्टकः ।
ऋषभादि मूर्छना स्याच्चालश्चच्चत्पुटो मतः ।
विनियोगो ध्रुवागाने द्वितीयप्रेक्षणे भवेत् ॥ ७२ ॥

पञ्चांशा इति । मध्यमायामगान्धारनिषादकाः पञ्च सरिमपधा अंशा ग्रहाश्च स्युः । षड्जमध्यमबाहुल्ये प्राप्तेऽपि पुनर्ग्रहणं तयोः पर्यायांशत्वेऽपि वादिवद्बाहुल्यसिद्ध्यर्थम् । गान्धारोऽल्प इति । पूर्णतायामिति मन्तव्यम् । अत्र षाडवमिति । स्पष्टोऽर्थः ॥ ७१ ॥ ७२ ॥

अस्यां मध्यमायां मध्यमो न्यासः । अंशा एवापन्यासाः ।
चोक्षषाडवदेश्यन्धाल्यो दृश्यन्ते । प्रस्तारः—

४ मध्यमा.

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| मा<br>पा | मा<br>० | मा<br>० | मा<br>तु | पा<br>भ | धनि<br>व० | नी<br>मू | धप<br>०० | १ |
| मा<br>धं | पम<br>जा० | मा<br>० | सा<br>० | मा<br>न | गा<br>नं | री<br>० | री<br>० | २ |
| पा<br>कि | मा<br>री | रिम<br>ट० | गम<br>०० | मा<br>० | मा<br>० | मा<br>० | मा<br>० | ३ |
| मा<br>म | निध<br>णि० | निस<br>द० | निध<br>०० | पम<br>र्प० | पध<br>०० | मा<br>णं | मा<br>० | ४ |
| नीं<br>गौ | नीं<br>० | री<br>री | री<br>० | नीं<br>क | री<br>र | री<br>प | पा<br>० | ५ |
| नीं<br>ल्ल | मप<br>वां० | मा<br>० | मा<br>० | सा<br>गु | सा<br>लि | सा<br>० | सा<br>सु | ६ |
| गा<br>ते | नी<br>०.. | सां<br>० | गां<br>० | धप<br>०० | सा<br>० | धनि<br>जि० | सां<br>तं | ७ |
| पा<br>सु. | सां<br>कि | पा<br>र | निधप<br>००० | मा<br>णं | मा<br>० | मा<br>० | मा<br>० | ८ |

चोक्षषाडवेति । शुद्धषाडवो ग्रामरागो माध्यमग्रामिकशुद्धस्वरमेलने । प्रथमकलायां मध्ये मध्यमाश्चत्वारो लववः । प एकः । धनी एकः । निरेकः । धपावेकः । एवमष्टौ । पातु भवम्, इत्यक्षराणि । पा इति मः । तच्छेषौ मौ । तुभवैर्मपधाः । तच्छेषो निः । मू इति निः । तच्छेषौ धपौ[१] । द्वितीयस्यां मध्ये म एकः । पमविकः। मसममगरिरयः षट् । एवमष्टौ । धंजाननमित्यक्षराणि ।

धजाभ्यां मपौ तच्छेषा ममसाः । ननाभ्यां मगौ । तच्छेषौ री (२) । तृतीयस्यां मध्ये पमौ द्वौ । रिमावेकः । गमावेकः । माश्चत्वारः । किरीटेत्यक्षराणि । किरीटैः पमरयः । तच्छेषा इतरे (३) । चतुर्थ्यां तारे म एकः । निधावेकः । नितारषड्जावेकः । तारे निधावेकः । पमावेकः । पधावेकः । मौ द्वौ । मणि दर्पणमित्यक्षराणि । मणिभ्यां मनी । तच्छेषो धः । देन निः । तच्छेषाः सनिधाः । र्पेण पः । तच्छेषा मपधाः। णमिति मः । तच्छेषो मः (४)। पञ्चम्यां मन्द्रे नी द्वौ । री द्वौ । निरिरिपाश्चत्वारः ।गौरीकरपेत्यक्षराणि । गौ इति निः । तच्छेषो निः । री इति रिः । तच्छेषे रिः । करपैर्निरीरयः । तच्छेषः पः [५] । षष्ठ्यां मन्द्रे निरेकः । मपावेकः । मौ द्वौ । साश्चत्वारः । ल्लवाङ्गुलि-ष्वित्यक्षराणि । 'ल्लवां' इति निमौ ।तच्छेषाः पममाः। गुलिभ्यां सौ । तच्छेषः सः । सुना सः [६] । सप्तम्यां तारे गनिसगाश्चत्वारः । धपावेकः । म एकः । धनी एकः । स एकः । तेजितमित्यक्षराणि । ते इति गः । तच्छेषाः परे षट् स्वराः । जिना धः । तच्छेषो निः । तमिति सः ( ७ ) । अष्टम्यां मध्ये प एकः । तारे स एकः । पुनर्मध्ये प एकः । निधपा एकः । माश्चत्वारः । सुकिरणमित्यक्षराणि । सुकिरैः पसपाः । तच्छेषा निधपाः। णमिति मः । तच्छेषास्त्रयः ( ८ ) ।

पातु भवमूर्धजाननं किरीटमणिदर्पणम् ।
गौरीकरपल्लवाङ्गुलिसुतेजितं सुकिरणम् ॥ इति **मध्यमा** ॥४॥

**अथ पञ्चमी—**

**रिपावंशौ तु पञ्चम्यां सगमाः स्वल्पका मताः ।**
**रिमयोः संगतिर्गच्छेत्पूर्णत्वे गान्निषादकम् ॥ ७५ ॥**

**रिपावंशाविति** । सगमाः स्वल्पका मता इत्यत्र समयोरषाडवौडुवकारित्वे-नाप्राप्तावल्पत्ववचनं विधिरिति गस्य षाडवौडुवकारित्वेन प्राप्तौ पुनर्वचनं परिसं-ख्येति च 'पञ्चम्यां तु विपर्ययः' इत्यादिग्रन्थव्याख्यानसमये पूर्वं प्रतिपादितम् । संपूर्णदशायां **गान्निषादकं गच्छेदिति** । गन्योः संगतिं कुर्यादित्यर्थः । एतेन षाडवत्वे गस्यौडुवत्वे निगयोश्च लोप्यत्वात्तत्र तयोः संगतिं न कुर्यादिति गम्यते॥७३॥

**क्रमाद्गेन निगाभ्यां च षाडवौडुवि(व)ता मता ।**
**ऋषभोंऽशस्त्वौडुवितं द्वेष्टयष्टौ च कला मताः ॥ ७४ ॥**

गेन निगाभ्यां चेत्यत्र लुप्तेन लुप्ताभ्यामिति चाध्याहारः कार्यः । क्रमात्षाड-वौडुवता । गेन षाडवं निगाभ्यामौडुवमिति क्रमात् । षाडवौडुवयोर्भावः षाडवौ-डुवता । **ऋषभोंऽशस्त्वौडुवितं द्वेष्टीति** । अस्यामौडुवकारिणोर्निगयोर्द्वयपि ऋषभेंऽशे संवादित्वाभावे( वस्तथा )पि—

" ऋषभश्चैव पञ्चम्यां कैशिक्यां चैव धैवतः ।
एवं हि द्वादशैते स्युर्वर्ज्याः पञ्चस्वरे सदा " ॥

इति मुनिवचनबलादौडुवत्वं निषिध्यत इति मन्तव्यम् ॥ ७४ ॥

**मूर्छनादि तु पूर्ववत्प्रेक्षणं तु तृतीयकम् ॥ ७५ ॥**

**मूर्छनादि तु पूर्ववदिति** । पूर्ववन्मध्यमायामिवात्रापि मूर्छनार्षभादि । आदिशब्देन चञ्चत्पुटश्च तालो गृह्यते । अन्यदुक्तप्रायम् ॥ ७५ ॥

**अस्यां पञ्चम्यां पञ्चमो न्यासः । ऋषभपञ्चमनिषादा अपन्यासः । चोक्षपञ्चमादेश्यन्धाल्यो दृश्यन्ते । प्रस्तारः—**

५ पञ्चमी.

| पा | धनि | नी | नी | मा | नी | मा | पा | १ |
|---|---|---|---|---|---|---|---|---|
| ह | र० | मू | ० | र्ध | जा | ० | न | |
| गा | गा | सा | सा | मां | मां | पां | पां | २ |
| नं | म | हे | ० | श | म | म | र | |
| पां | पां | धां | नीं | नीं | नीं | गा | सा | ३ |
| प | ति | बा | ० | हु | स्तं | ० | भ | |
| पा | मा | धा | नी | निध | पा | पा | पा | ४ |
| न | म | नं | ० | तं० | ० | ० | ० | |
| पा | रीं | रीं | रीं | रीं | रीं | रीं | रीं | ५ |
| प्र | ण | मा | ० | मि | पु | रु | ष | |
| मां | निंग | सा | सध | नी | नी | नी | नी | ६ |
| मु | ख० | प | द्म० | ० | ल | ० | क्ष्मी | |
| सां | सा | सां | मा | पा | पा | पा | पा | ७ |
| ह | र | मं | ० | वि | का | ० | प | |
| धा | मा | धा | नी | पा | पा | पा | पा | ८ |
| ति | म | जे | ० | यं | ० | ० | ० | |

माध्यमग्रामिकशुद्धस्वरमेलने प्रथमकलायां मध्ये प एको लघुः । धनी एकः । नी द्वौ । मनिमपाश्चत्वारः । एवमष्टौ लघवः । हरमूर्धजानेत्यक्षराणि । हराभ्यां पधौ । तच्छेषो निः । ' मू ' इति निः । तच्छेषो निः । धनीभ्यां मनी । तच्छेषो मः । नेन पः [१] । द्वितीयस्यां मध्ये गौ द्वौ । सौ द्वौ । मन्द्रौ मौ द्वौ । पौ द्वौ । नं महेशममरेत्यक्षराणि । ' नं महे ' इति गगसाः । तच्छेषः [illegible]

शममरैममपपाः[२]। तृतीयस्यां मन्द्रे पौ द्वौ। ध एकः। निषादास्त्रयः। ग एकः। मध्ये स एकः । पतिबाहुस्तम्भेत्यक्षराणि । पतिबा इति पपधाः। तच्छेषो निः । हुस्तमिति निषादौ । तच्छेषो गः। भेन सः [ ३ ] । चतुर्थ्यां मध्ये पमधनयश्चत्वारः । निधावेकः । पास्त्रयः । नमनन्तमित्यक्षराणि । नमनमिति पमधाः । तच्छेषो निः । तमिति निः । तच्छेषा इतरे [ ४ ] । पञ्चम्यां मध्ये पौ द्वौ । तार ऋषभाः षट् । प्रणमामि पुरुषेत्यक्षराणि । ' प्रणमा ' इति पपरयः।( तच्छेषो रिः। मि )पुरुषैश्चत्वार ऋषभाः (५)। षष्ठ्यां मन्द्रे म एकः । निगावेकः । स एकः । सधावेकः । निषादाश्चत्वारः। एवमष्टौ । मुखपद्मलक्ष्मी-त्यक्षराणि। मुखाभ्यां मनी। तच्छेषो गः। पद्माभ्यां सौ। लेन निः। तच्छेषौ धनी। तच्छेषो निः । क्ष्मीति निः [ ६ ] । सप्तम्यां तारे सास्त्रयः । मध्ये म एकः । पाश्चत्वारः । हरमम्बिकापेत्यक्षराणि । ' हरमं ' इति सास्त्रयः । तच्छेषो मः । बिकाभ्यां पौ । तच्छेषः पः [ ७ ] । अष्टम्यां मध्ये घमधनयश्चत्वारः । पाश्चत्वारः । तिमजेयमित्यक्षराणि । तिमजे इति धमधाः । तच्छेषो निः । यमिति पः । तच्छेषाः परे ( ८ ) ।

हरमूर्धजाननं महेशममरपतिबाहुस्तम्भनमनन्तम् ।
तं प्रणमामि पुरुषमुखपद्मलक्ष्मीहरमम्बिकापतिमजेयम् ॥ इति पञ्चमी ॥५॥

अथ धैवती-

**स्तो धैवत्यां रिधावंशौ लङ्घ्यावारोहिणौ मपौ ।**
**पलोपात्षाडवं प्रोक्तमौडुवं सपलोपतः ॥ ७६ ॥**
**ऋषभादि मूर्छना स्यात्तालो मार्गश्च गीतयः ।**
**विनियोगश्च षाड्जीवत्कला द्वादश कीर्तिताः ॥ ७७ ॥**

**स्तो धैवत्यामिति** । आरोहिणावारोहिवर्णगौ सपौ लङ्घ्यौ लङ्घनीयौ । पूर्णावस्थायामल्पतरौ कर्तव्यावित्यर्थः । एतेनावरोहे तौ सभावन्यौ कर्तव्यौ न त्वल्पतरावेति गम्यते । पलोपात्षाडवमित्यादिः स्पष्टार्थो ग्रन्थः ॥७६॥७७॥

**अस्यां धैवत्यां धैवतो न्यासः । ऋषभमध्यमधैवता अपन्यासाः । चोक्षकैशिकदेशीसिंहल्यो दृश्यन्ते । प्रस्तारः-**

६ धैवती

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| धा | धा | निध | पध | मा | मा | मा | मा | १ |
| त | रु | णा० | ०० | म | लें | ० | दु | |
| धा | धा | निध | निस | सा | सा | सा | मा | २ |
| म | णि | भू० | ०० | षि | ता | ० | म | |
| सध | धा | पा | मध | धा | निध | धनि | धा | ३ |
| ल० | शि | रो | ०० | ० | ०० | जं० | ० | |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| सा | सा | रिग | रिग | सा | रिग | सा | सा | ४ |
| भु | ज | गा० | ०० | धि | पै० | ० | क | |
| धां | धां | नीं | पां | धां | पां | मां | मां | ५ |
| कुं | ० | ड | ल | वि | ला | ० | स | |
| धां | धां | पां | मंधं | धां | निंधं | धंनिं | धां | ६ |
| क्ष | त | शो | ०० | ० | ०० | भं० | ० | |
| धा | धा | निसं | निध | पा | पा | पा | पा | ७ |
| न | ग | सू० | ०० | नु० | ल | ० | क्ष्मी | |
| रिग | सा | सा | सा | नीं | नीं | नीं | नीं | ८ |
| दे० | हा | ० | ० | र्धं | मि | ० | श्रि | |
| सा | रिग | रिग | सा | नीं | सा | धा | धा | ९ |
| त | श० | री० | ० | ० | ० | रं | ० | |
| रीं | गंरिं | मंगं | मां | मां | मां | मां | मां | १० |
| प्र | ण० | मा० | ० | मि | भू | ० | त | |
| नी | नी | धा | धा | पा | रिग | सा | रिग | ११ |
| गी | ० | तो | ० | प | हा० | ० | र० | |
| पा | धा | मा | मा | धा | नी | धा | धा | १२ |
| प | रि | तु | ० | ० | ० | ष्टं | ० | |

षाड्जग्रामिकशुद्धस्वरमेलने प्रथमकलायां मध्ये धौ लघू । निधावेकः । पधावेकः । माश्चत्वारः । तरुणामलेन्दिृत्यराणि । तरुणा, इति धधनयः । तच्छेषा धपधाः । मलें, इति मौ । तच्छेषो मः । दुना मः ( १ ) । द्वितीयस्यां मध्ये धौ द्वौ । निधावेकः । निसावेकः । साश्चत्वारः । मणिभूषितामेत्यक्षराणि । मणिभूभिर्धधनयः । तच्छेषा धनिसाः । षिताभ्यां सौ । तच्छेषः सः । मेन सः ( २ ) । तृतीयस्यां मध्ये सधावेकः । धपौ द्वौ । मधावेकः । ध एकः । निधावेकः । धनी एकः । ध एकः । एवमष्टौ । लशिरोजमित्यक्षराणि । लेन सः । तच्छेषो धः । शिरो इति धपौ । तच्छेषा मधधनिधाः । जं, इति धः । तच्छेषौ निधौ ( ३ ) । चतुर्थ्यां मन्द्र सौ द्वौ । रिगौ द्विद्वौं । स एकः । रिगावेकः । सौ द्वौ । एवमष्टौ । भुजगाधिपैकेत्यक्षराणि । भुजगाभिः ससरयः । तच्छेषा गरिगाः । धिपे इति सरी । तच्छेषौ गसौ । केन सः ( ४ ) । पञ्चम्यां मन्द्रे धौ द्वौ । निपधपाश्चत्वारः । मौ द्वौ । कुण्डलविलासेत्यक्षराणि । द्विती-

योपान्त्यौ शेषौ (५)। षष्ठ्यां मन्द्रे धौ द्वौ। प एकः। मधावेकः। ध एकः। निधावेकः। धनी एकः। ध एकः। कृतशोभमित्यक्षराणि। कृतशोभिर्धधपाः। तच्छेषा मधधनिधाः। भमिति धः। तच्छेषौ निधौ (६)। सप्तम्यां मध्ये धौ द्वौ। द्वौ नितारषड्जौ द्विर्द्वौ। निधावेकः। पास्त्रयः। नगसूनुलक्ष्मीत्यक्षराणि। नगसूभिर्धधनयः। तच्छेषाः सनिसाः। नुना निः। तच्छेषो धः। ल्ेन पः। तच्छेषः पः। क्ष्मीति पः (७)। अष्टम्यां मध्ये रिगावेकः। सास्त्रयः। निषादाश्चत्वारः। देहार्धमिश्रीत्यक्षराणि। दे, इति रिः। तच्छेषो गः। हा, इति सः। तच्छेषौ सौ। र्धमिभ्यां नी। तच्छेषो निः। श्रिणा निः (८)। नवम्यां मध्ये स एकः। रिगौ द्विर्द्वौ। सनिसास्त्रयः। धौ द्वौ। तशरीरमित्यक्षराणि। तशाभ्यां सरी। तच्छेषो गः। री, इति रिः। तच्छेषा गसनिसाः। रमिति धः। तच्छेषो धः (९)। दशम्यां मन्द्रे रिरेकः। गरी एकः। मगावेकः। मः पञ्च। प्रणमामि भूतेत्यक्षराणि। प्रणाभ्यां रिगौ। तच्छेषो रिः। मा, इति मः। तच्छेषौ गमौ। मिभूभ्यां मौ। तच्छेषो मः। तेन मः (१०)। एकादश्यां मध्ये नी द्वौ। धौ द्वौ। प एकः। रिगावेकः। स एकः। रिगावेकः। गीतोपहारेत्यक्षराणि। गी, इति निः। तच्छेषो निः। तो, इति धः। तच्छेषो धः। पहाभ्यां परी। तच्छेषौ गसौ। रेण रिः। तच्छेषो गः (११)। द्वादश्यां मध्ये पधसमधनयः षट्। धौ द्वौ। परितुष्टमित्यक्षराणि। परितुभिः पधसाः। ष्टमित्युपान्त्यः (१२)।

तरुणामलेन्दुमणिभूषितामलशिरोजं
भुजगाधिपैककुण्डलविलासकृतशोभम्।
नगसूनुलक्ष्मीदेहार्धमिश्रितशरीरं
प्रणमामि भूतगीतोपहारपरितुष्टम्॥ इति धैवती॥ ६॥

अथ नैषादी-

**नैषाद्यां निरिगा अंशा अनंशा बहुलाः स्मृताः॥ ७८॥**
**षाडवौडुवलङ्घ्याः स्युः पूर्वावद्विनियोजनम्।**
**चञ्चत्पुटः षोडशात्र कला गादिश्च मूर्छना॥ ७९॥**

**नैषाद्यामिति**। अनंशा बहुला निरिगा अंशाः स्मृता इति योजना। अ[नं]शाः समपधा अबहुला अल्पत्वयुक्ताः। एषु निरिगेष्वंशेषु तेऽ[नं]शा [अ]बहुलाः। अन्यथाऽनंशाः षड्जादयो बहुलाः स्मृता इति पदभेदेन भिन्नवाक्यत्वे पूर्णावस्थायां षड्जमध्यमपञ्चमधैवतानामल्पत्वं षाडवे षड्जमध्यमधैवतानामल्पत्वमौडुवे मध्यमधैवतयोरल्पत्वमिति च मतङ्गवचनेनानभ्यासस्त्वनंशेष्विति स्वरवचनेन च विरोधः स्यात्। पूर्वावत्। धैवत्यामिव। षाडवाडुवलङ्घ्याः स्युः। पलोपात्षाडवं सलोपादौडुवमारोहिणौ सपौ लङ्घ्यौ चेति षाडवौडुवलङ्घ्या विनियोजनं षाड्जीवदिति च। अन्यद्द्वाभ्यामनतिरिक्तम्॥७८॥७९॥

अस्यां नैषाद्यां निषादो न्यासः। अंशा एवापन्यासः। चोक्षसाधारितदेशीवेलावल्यो दृश्यन्ते। अस्य प्रस्तारः—

७ नैषादी.

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| नी | नी | नी | नी | सां | धा | नी | नी | १ |
| तं | ० | सु | र | वं | ० | दि | त | |
| पा | मा | सा | धां | नीं | नीं | नीं | नीं | २ |
| म | हि | ष | म | हा | ० | सु | र | |
| सा | सा | गा | गा | नी | नी | धा | नी | ३ |
| म | थ | न | मु | मा | ० | प | तिं | |
| सां | सां | धा | नी | नी | नीं | नी | नी | ४ |
| भो | ० | ग | यु | तं | ० | ० | ० | |
| सा | सा | गा | गा | मां | मां | मां | मां | ५ |
| न | ग | सु | त | का | ० | मि | नीं | |
| नीं | पां | धां | पां | मां | मां | मां | मा | ६ |
| दि | ० | व्य | वि | शे | ० | ष | क | |
| रीं | गां | सां | सां | रीं | गां | नी | नी | ७ |
| सू | ० | च | क | शु | भ | न | ख | |
| नी | नी | पा | धनि | नी | नी | नीं | नी | ८ |
| द | ० | र्प | ण० | कं | ० | ० | ० | |
| सा | सा | गा | सा | मा | मा | मा | मा | ९ |
| अ | हि | मु | ख | म | णि | ख | चि | |
| मां | मां | मां | मां | नीं | धां | मां | मां | १० |
| तो | ० | ज्ज्व | ल | नू | ० | पु | र | |
| धा | धा | नी | नी | री | गा | मां | मां | ११ |
| बा | ल | ० | भु | जं | ग | ० | म | |
| मां | मां | पां | धां | नीं | नीं | नीं | नीं | १२ |
| र | व | क | लि | ० | तं | ० | ० | |
| पां | पां | नीं | नीं | री | री | री | रीं | १३ |
| द्रु | त | म | भि | व्र | जा | ० | मि | |

| री | मा | मा | मा | री | गा | सा | सा | १४ |
|---|---|---|---|---|---|---|---|---|
| श | र | ण | म | निं | ० | दि | त | |
| धा | मा | री | गा | सा | धा | नी | नी | १५ |
| पा | ० | द | यु | ग | पं | ० | क | |
| पां | मां | रीं | गां | नी | नी | नी | नी | १६ |
| ज | वि | ला | ० | सं | ० | ० | ० | |

षाड्जग्रामिकशुद्धस्वरमेलने प्रथमकलायां मध्ये निषादाश्चत्वारः । तारे स एकः । मध्ये ध एकः । नी द्वौ । एवमष्टौ लघवः । तं सुरवन्दितेत्यक्षराणि । तमिति निः । तच्छेषो निः । सुखामिति निनिसाः । तच्छेषो धः । दिताभ्यां नी ( १ ) । द्वितीयस्यां मध्ये पमसास्त्रयः । मन्द्रे ध एकः । निषादाश्चत्वारः । महिषमहासुरेत्यक्षराणि । षष्ठ शेषः ( २ ) । तृतीयस्यां मध्ये सौ द्वौ । गौ द्वौ । नी द्वौ । धनी द्वौ । मथनमुमापतिमित्यक्षराणि । षष्ठे शेषः (३) चतुर्थ्यां तारे सौ द्वौ । मध्ये ध एकः । निषादाः पञ्च । भोगयुतमित्यक्षराणि । भो इति सः । तच्छेषः सः । गयुतमिति धनिनयः । तच्छेषा इतरे ( ४ ) । पञ्चम्यां मध्ये सौ द्वौ । गौ द्वौ । मन्द्रे माश्चत्वारः । नगसुतकामिनीत्यक्षराणि । षष्ठः शेषः ( ५ ) । षष्ठ्यां मन्द्रे निपधपाश्चत्वारः । माश्चत्वारः । दिव्यविशेषकेत्यक्षराणि । द्वितीयषष्ठौ शेषौ ( ६ ) । सप्तम्यां तारे रिगससरिगाः षट् । मध्ये नी द्वौ । सूचकशुभनखेत्यक्षराणि । द्वितीयः शेषः [ ७ ] । अष्टम्यां मध्ये निनिपास्त्रयः । धनी एकः । निषादाश्चत्वारः । दर्पणकमित्यक्षराणि । दे न निः । तच्छेषो निः । र्पणाभ्यां पधौ । तच्छेषो निः । कमिति निः । तच्छेषा इतरे [ ८ ] । नवम्यां मध्ये सगसाश्चत्वारः । माश्चत्वारः । अहिमुखमणिखचीत्यक्षराणि [ ९ ] । दशम्यां मन्द्रे माश्चत्वारः । निधौ द्वौ । मौ द्वौ । तोज्ज्वलनूपुरेत्यक्षराणि । द्वितीयषष्ठौ शेषौ [ १० ] । एकादश्यां मध्ये धौ द्वौ । नी द्वौ । रिगौ द्वौ । मन्द्रे मौ द्वौ । बालभुजंगमेत्यक्षराणि । तृतीयसप्तमौ शेषौ [ ११ ] । द्वादश्यां मन्द्रे मौ द्वौ । प एकः । ध एकः । निषादाश्चत्वारः । खकलितमित्यक्षराणि । खकलिभिर्ममपधाः । तच्छेषो निः । तमिति निः । तच्छेषा इतरे [ १२ ] । त्रयोदश्यां मन्द्रे पौ द्वौ । नी द्वौ । मध्य ऋषभाश्चत्वारः । द्रुतमभिव्रजामीत्यक्षराणि । सप्तमः शेषः ( १३ ) । चतुर्दश्यां मध्ये रिरेकः । मास्त्रयः । रिगौ द्वौ । सौ द्वौ । शरणमनिन्दितेत्यक्षराणि । षष्ठः शेषः ( १४ ) । पञ्चदश्यां मध्ये धमरिगसधाः षट् । नी द्वौ । पादयुगपङ्केत्यक्षराणि । द्वितीयसप्तमौ शेषौ ( १५ ) । षोडश्यां तारे पपरिगाश्चत्वारः । मध्ये निषादाश्चत्वारः । जविलासमित्यक्षराणि । जविलाभिः पमरगः । तच्छेषो गः । समिति निः । तच्छेषाः परे ( १६ ) ।

| री | मा | मा | मा | री | गा | सा | सा | १४ |
|---|---|---|---|---|---|---|---|---|
| श | र | ण | म | निं | ० | दि | त | |
| धा | मा | री | गा | सा | धा | नी | नी | १५ |
| पा | ० | द | यु | ग | पं | ० | क | |
| पां | मां | रीं | गां | नी | नी | नी | नी | १६ |
| ज | वि | ला | ० | सं | ० | ० | ० | |

षाड्जग्रामिकशुद्धस्वरमेलने प्रथमकलायां मध्ये निषादाश्चत्वारः । तारे स एकः । मध्ये ध एकः । नी द्वौ । एवमष्टौ लघवः । तं सुरवन्दितेत्यक्षराणि । तमिति निः । तच्छेषो निः । सुखामिति निनिसाः । तच्छेषो धः । दिताभ्यां नी ( १ ) । द्वितीयस्यां मध्ये पमसास्त्रयः । मन्द्रे ध एकः । निषादाश्चत्वारः । महिषमहासुरेत्यक्षराणि । षष्ठ शेषः ( २ ) । तृतीयस्यां मध्ये सौ द्वौ । गौ द्वौ । नी द्वौ । धनी द्वौ । मथनमुमापतिमित्यक्षराणि । षष्ठे शेषः (३) चतुर्थ्यां तारे सौ द्वौ । मध्ये ध एकः । निषादाः पञ्च । भोगयुतमित्यक्षराणि । भो इति सः । तच्छेषः सः । गयुतमिति धनिनयः । तच्छेषा इतरे ( ४ ) । पञ्चम्यां मध्ये सौ द्वौ । गौ द्वौ । मन्द्रे माश्चत्वारः । नगसुतकामिनीत्यक्षराणि । षष्ठः शेषः ( ५ ) । षष्ठ्यां मन्द्रे निपधपाश्चत्वारः । माश्चत्वारः । द्विव्य-विशेषकेत्यक्षराणि । द्वितीयषष्ठौ शेषौ ( ६ ) । सप्तम्यां तारे रिगससरिगाः षट् । मध्ये नी द्वौ । सूचकशुभनखेत्यक्षराणि । द्वितीयः शेषः [ ७ ] । अष्टम्यां मध्ये निनिपास्त्रयः । धनी एकः । निषादाश्चत्वारः । दर्पणकमित्य-क्षराणि । देन निः । तच्छेषो निः । र्पणाभ्यां पधौ । तच्छेषो निः । कमिति निः । तच्छेषा इतरे [ ८ ] । नवम्यां मध्ये सगसाश्चत्वारः । माश्चत्वारः । अहिमुखमणिखचीत्यक्षराणि [ ९ ] । दशम्यां मन्द्रे माश्चत्वारः । निधौ द्वौ । मौ द्वौ । तोज्ज्वलनूपुरेत्यक्षराणि । द्वितीयषष्ठौ शेषौ [ १० ] । एकादश्यां मध्ये धौ द्वौ । नी द्वौ । रिगौ द्वौ । मन्द्रे मौ द्वौ । बालभुजंगमित्यक्षराणि । तृतीयसप्तमौ शेषौ [ ११ ] । द्वादश्यां मन्द्रे मौ द्वौ । प एकः । ध एकः । निषादाश्चत्वारः । खकलितमित्यक्षराणि । खकलिभिर्ममपधाः । तच्छेषो निः । तमिति निः । तच्छेषा इतरे [ १२ ] । त्रयोदश्यां मन्द्रे पौ द्वौ । नी द्वौ । मध्य ऋषभाश्चत्वारः । द्रुतमभिन्नजामीत्यक्षराणि । सप्तमः शेषः ( १३ ) । चतुर्दश्यां मध्ये रिरेकः । मास्त्रयः । रिगौ द्वौ । सौ द्वौ । शरणमनिन्दितेत्यक्ष-राणि । षष्ठः शेषः ( १४ ) । पञ्चदश्यां मध्ये धमरिगसधाः षट् । नी द्वौ । पादयुगपङ्केत्यक्षराणि । द्वितीयसप्तमौ शेषौ ( १५ ) । षोडश्यां तारे पपरि-गाश्चत्वारः । मध्ये निषादाश्चत्वारः । जविलासमित्यक्षराणि । जविलाभिः पमरगः । तच्छेषो गः । समिति निः । तच्छेषाः परे ( १६ ) ।

तं सुरवन्दितमहिषमहासुरमथनमुमापतिं भोगयुतं
नगसुतकामिनीदिव्यविशेषकसूचकशुभनखदर्पणकम् ।
अहिमुखमणिखचितोज्ज्वलनूपुरबालभुजंगमरवकलितं
द्रुतमभिव्रजामि शरणमनिन्दितपादयुगपङ्कजविलासम् ॥ इति नैषादी ॥७॥

इति षड्जादयः सप्त जातयः शुद्धतालक्षणयुक्ता एव प्रस्तारे दर्शिताः । लक्षणेषु नामस्वराव्यतिरेकेण स्वरान्तराणां ग्रहांशापन्यासत्ववचनं तु तासामेव विकृतदशायामपि नियमप्रदर्शनार्थमित्यवसेयम् ।

अथ संसर्गजविकृतजातिषु प्रथमा षड्जकैशिकी—

**अंशाः स्युः षड्जकैशिक्यां षड्जगान्धारपञ्चमाः ।**
**ऋषभे मध्यमेऽल्पत्वं +धनिषादौ मनाग्बहू ॥ ८० ॥**

**अंशाः स्युरिति । ऋषभे मध्यमेऽल्पत्वमिति ।** इहानंशेषु रिमधनिषु प्राप्तमल्पत्वं रिमयोर्नियम्यते । **धनिषादौ मनाग्बहू इति ।** अंशीभूतसगपापेक्षयाऽल्पत्वमल्पीभूतरिमापेक्षया बहुत्वं धन्योः कर्तव्यमित्यर्थः ॥ ८० ॥

**चञ्चत्पुटः षोडशास्यां कलाः स्युर्विनियोजनम् ।**
**प्रावेशिक्यां ध्रुवायां स्यात्प्रेक्षणं तु द्वितीयकम् ॥ ८१ ॥**

**चञ्चत्पुट इत्यादि ।** स्पष्टोऽर्थः ॥ ८१ ॥

**अस्यां षड्जकैशिक्यां न्यासो गान्धारः । षड्जनिषादपञ्चमा अपन्यासः। प्रागुक्ता गान्धारपञ्चमहिन्दोलकदेशीवेलावल्यो दृश्यन्ते । अस्य प्रस्तारः—**

८ षड्जकैशिकी.

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| सा<br>दे | सा<br>० | मां<br>० | पां<br>० | गरि<br>०० | मग<br>०० | मा<br>० | मा<br>० | १ |
| मा<br>वं | मा<br>० | मा<br>० | मा<br>० | सां<br>० | सां<br>० | सां<br>० | सां<br>० | २ |
| धा<br>अ | धा<br>स | पा<br>क | पा<br>ल | धा<br>श | धा<br>शि | री<br>ति | रिम<br>ल० | ३ |
| री<br>कं | री<br>० | नीं<br>० | नीं<br>० | नीं<br>० | नीं<br>० | नीं<br>० | नीं<br>० | ४ |
| धा<br>द्वि | धा<br>रं | पा<br>द | धनि<br>ग० | मा<br>तिं | मा<br>० | पा<br>० | पा<br>० | ५ |

+धनिपास्त्विति पाठः ।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| धा<br>नि | धा<br>पु | पा<br>ण | धनि<br>म० | धा<br>तिं | धा<br>० | पा<br>० | पा<br>० | ६ |
| सा<br>मु | सा<br>० | सा<br>ग्ध | सा<br>० | सा<br>मु | सा<br>खां | सा<br>० | सा<br>बु | ७ |
| धा<br>रु | धा<br>ह | पा<br>दि | धा<br>० | धनि<br>व्य० | धा<br>कां | धा<br>० | धा<br>तिं | ८ |
| सा<br>ह | सा<br>र | सा<br>मं | रिग<br>०० | सा<br>बु | रिग<br>दो० | धा<br>० | धा<br>द | ९ |
| मा<br>धि | धा<br>नि | पा<br>ना | पा<br>० | धा<br>दं | धा<br>० | नी<br>० | नी<br>० | १० |
| री<br>अ | री<br>च | गा<br>ल | सा<br>व | सां<br>र | सां<br>सू | सां<br>० | गां<br>नु | ११ |
| धां<br>दे | रिंसं<br>०० | रीं<br>हा | सांरिं<br>०० | रीं<br>र्ध | सां<br>मि | सां<br>० | सां<br>श्रि | १२ |
| सा<br>त | सरि<br>श० | री<br>री | सरि<br>०० | रीं<br>रं | सा<br>० | सा<br>० | सा<br>० | १३ |
| मा<br>प्र | मा<br>ण | मा<br>मा | मा<br>० | निध<br>मि० | पध<br>तम | मा<br>हं | मा<br>० | १४ |
| नी<br>अं | नी<br>नु | पा<br>प | पम<br>म० | पा<br>मु | पम<br>ख० | पध<br>क० | रिग<br>म० | १५ |
| गा<br>लं | गा<br>० | गा<br>० | गा<br>० | गा<br>० | गा<br>० | गा<br>० | गा<br>० | १६ |

न्यासो गान्धार इति । 'गान्धारश्च भवेन्न्यासः' इति मुनिवचनात् । तेन "न्यासवर्ज्यैतलक्ष्महीनाः" इत्यत्र न्यासवर्जे( र्ज्ये )त्यस्य विकृतजातिलक्षणांशस्य संसर्गजविकृताविषयत्वमुक्तं भवति । षाड्जग्रामिकशुद्धस्वरमेलने प्रथमकलायां मध्ये सौ द्वौ । मन्द्रे मपौ द्वौ । मध्ये गरी एकः । मगावेकः । मौ द्वौ । एवमष्टौ लघवः । वे ( दे ) इति प्रथमः सः । तच्छेषा इतरे ( १ ) । द्वितीयस्यां मध्ये माश्चत्वारः । मन्द्रे साश्चत्वारः । वमिति मः । तच्छेषा इतरे ( २ ) । तृतीयस्यां मध्ये धौ द्वौ । पौ द्वौ । धौ द्वौ । रिरेकः । रिमावेकः । असकलशाशितिलेत्यक्षराणि । अन्त्यः शेषः ( ३ ) । चतुर्थ्यां मध्ये री द्वौ । मन्द्रे निषादाः षट् । कमिति रिः । तच्छेषा इतरे ( ४ ) ।

पञ्चम्यां मध्ये धौ द्वौ। प एकः। धनी एकः। मौ द्वौ। पौ द्वौ। द्विरदग-तिमित्यक्षराणि। द्विरदगैर्धधपधाः। तच्छेषो निः। तिमिति मः। तच्छेषाः परे (५)। षष्ठ्यां मध्ये धौ द्वौ। प एकः। धनी एकः। धौ द्वौ। पौ द्वौ। निपुणमतिमित्यक्षराणि। निपुणमैर्धधपधाः। तच्छेषो निः। तिमिति धः। तच्छेषाः परे (६)। सप्तम्यां मध्ये षड्जा अष्टौ। मुग्धमुखाम्बित्यक्षराणि। मुना सः। तच्छेषः सः। ग्धेन सः। तच्छेषः सः। मुखांभ्यां सौ। तच्छेषः सः। बुना सः (७)। अष्टम्यां मध्ये धधपधाश्चत्वारः। धनी एकः। धास्त्रयः। रुहदि-व्यकान्तिमित्यक्षराणि। चतुर्थषष्ठोपान्त्याः शेषाः (८)। नवम्यां मध्ये सास्त्रयः। रिगावेकः। स एकः। रिगावेकः। धौ द्वौ। हरमम्बुदोदेत्यक्षराणि। हरमं, इति साः। तच्छेषौ रिगौ। बुदोभ्यां सरी। तच्छेषौ गधौ। देन धः (९)। दशम्यां मध्ये मधौ द्वौ। पौ द्वौ। धौ द्वौ। नी द्वौ। धिनिनादमित्यक्षराणि। धिनिनाभिर्मपधाः। तच्छेषः पः। दमिति धः। तच्छेषाः परे (१०)। एकादश्यां मध्ये रिरिगसाश्चत्वारः। मन्द्रे सास्त्रयः। ग एकः। अचलवरसून्वि-त्यक्षराणि। सप्तमः शेषः (११)। द्वादश्यां मन्द्रे ध एकः। रिसावेकः। रिरेकः। सरी एकः। रिरेकः। सास्त्रयः। देहार्धमिश्रीत्यक्षराणि। दे, इति धः। तच्छेषौ रिसौ। हा इति रिः। तच्छेषौ सरी। र्धमिभ्यां रिसौ। तच्छेषः सः। श्रिणा सः (१२)। त्रयोदश्यां मध्ये स एकः। सरी एकः। रिरेकः। सरी एकः। रिरेकः। सास्त्रयः। तशरीरमित्यक्षराणि। तशाभ्यां सौ। तच्छेषो रिः। री, इति रिः। तच्छेषौ सरी। रमिति रिः। तच्छेषाः साः (१३)। चतुर्दश्यां मध्ये माश्चत्वारः। निधावेकः। पधावेकः। पधावेकः। मौ द्वौ। प्रणमामि तमहमित्यक्षराणि। चतुर्थषष्ठाष्टमाः शेषाः। (१४) पञ्चदश्यां मध्ये निनिपास्त्रयः। पमावेकः। प एकः। पमावेकः। पधावेकः। रिगावेकः। अनुपममुखकमेत्यक्षराणि। पञ्चमाष्टमदशमद्वादशाः शेषाः (१५)। षोडश्यां मध्ये गान्धारा अष्टौ। लमिति गः। तच्छेषा इतरे (१६)।

देवमसकलशशितिलकं द्विरदगतिं
निपुणमतिं मुग्धमुखाम्बुरुहदिव्यकान्तिम्।
हरमम्बुदोदधिनिनादमचलवरसूनुदेहार्धमिश्रितशरीरं
प्रणमामि तमहमनुपममुखकमलम्। **इति षड्जकैशिकी** ॥८॥

**अथ षड्जोदीच्यवा—**

**अंशाः समनिधाः षड्जोदीच्यवायां प्रकीर्तिताः।**
**मिथश्च संगतास्ते स्युर्मन्द्रगान्धारभूरिता ॥ ८२ ॥**

---

१ ख. °भूरितः ॥ ८२ ॥ ङ. °भूषिताः ॥ ८२ ॥

**अंशाः समनिधा इति** । मिथश्च संगतास्ते स्युः । ते समनिधा मिथः परस्परं संगताश्च रक्तिवशाद्यथायोगं संबद्धाश्च भवेयुः । मन्द्रगान्धारभूरिता । मन्द्रस्थानस्थितस्य गान्धारस्थानंशस्यापि भूरिता बाहुल्यम् ' षड्जश्च ऋषभश्चैव गान्धारश्च बली भवेत् ' इति **मुनिवचनाद्भ**वति । तेन स्थानान्तरास्थितस्य तन्नेत्युक्तं भवति ॥ ८२ ॥

**षड्जर्षभौ भूरितारौ रिलोपात्षाडवं मतम् ।**
**औडुवं रिपलोपेन धैवतेंऽशे न षाडवम् ॥ ८३ ॥**

षड्जर्षभौ भूरितारौ भूरितारस्थानं ययोस्तौ । तारस्थयोर्बाहुल्यं कर्तव्यमित्यर्थः । तत्रर्षभस्य च षाडवौडुवकारित्वेन पूर्णावस्थायामृषभपञ्चमयोरल्पत्वमिति **मतङ्ग**वचनं मन्द्रमध्यस्थऋषभविषयम् । ' ऋषभश्च बली भवेत् ' इति **मुनिवचनं** तु तारस्थर्षभविषयमिति व्यवस्थापनीयम् । तत्र षड्जस्यांशत्वेन सिद्धेऽपि बहुत्वे षड्जस्येति **मुनिवचना**न्मन्द्रमध्यस्थापेक्षया तारस्थस्यातिशयत्वेन बहुत्वं षड्जर्षभावित्यनेन विधीयत इत्यवगन्तव्यम् । **धैवतेंऽशे न षाडवमिति** । ऋषभस्य धैवतसंवादित्वेनांशस्य वादिलोपस्यानिष्टत्वात् । ननु तस्मिन्नेवांशे रिपलोपेनौडुवाभ्युपगमः कथमिति चेत् । उच्यते । रिपयोर्लोपेनौडुवत्वे षाडवकारित्वं पञ्चम एव पर्यवसितमिति तस्यासंवादित्वान्न विरोधः ॥ ८३ ॥

**षाड्जीवद्गीतितालादि गान्धारादिश्च मूर्छना ।**
**द्वितीये प्रेक्षणे गाने ध्रुवायां विनियोजनम् ॥ ८४ ॥**

षाड्जीवदित्यादि गतार्थम् ॥ ८४ ॥

**अस्यां मध्यमो न्यासः । षड्जधैवतावपन्यासौ । प्रस्तारः**—

१ षड्जोदीच्यवा.

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| सा<br>शै | सा<br>० | सा<br>० | सा<br>० | मां<br>ले | मां<br>० | गां<br>० | गां<br>० | १ |
| गा<br>श | मा<br>० | पा<br>सू | मा<br>० | गा<br>० | मा<br>० | मा<br>० | धां<br>नु | २ |
| सा<br>शै | सा<br>० | मा<br>ले | गा<br>० | पा<br>श | पा<br>सू | नी<br>० | धा<br>नु | ३ |
| धा<br>प्र | नी<br>ण | सा<br>य | सा<br>० | धा<br>प्र | नी<br>सं | पा<br>० | मा<br>ग | ४ |
| गां<br>स | सा<br>वि | सा<br>ला | सा<br>० | सा<br>स | सा<br>खे | सा<br>० | गां<br>ल | ५ |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| धा<br>न | धा<br>वि | पा<br>नो | धा<br>० | पा<br>० | नी<br>० | धा<br>दं | धा<br>० | ६ |
| सा<br>अ | गां<br>० | गां<br>धि | गां<br>० | गां<br>क | गां<br>० | सा<br>० | सा<br>० | ७ |
| नी<br>मु | धा<br>० | पा<br>खें | धा<br>० | पा<br>० | धा<br>० | धा<br>० | धा<br>दु | ८ |
| सां<br>अ | सां<br>धि | मा<br>क | गा<br>० | पा<br>मु | पा<br>खें | नी<br>० | धा<br>दु | ९ |
| धा<br>न | नी<br>य | सां<br>नं | सां<br>० | धा<br>न | नी<br>मा | पा<br>० | मा<br>मि | १० |
| गां<br>दे | सा<br>० | सा<br>वा | सा<br>० | सा<br>सु | सा<br>रे | सा<br>० | गां<br>श | ११ |
| धा<br>त | धा<br>व | पा<br>रु | धा<br>चि | मां<br>रं | मां<br>० | मां<br>० | मां<br>० | १२ |

षाड्जग्रामिकशुद्धस्वरमेलने प्रथमकलायां मध्ये साश्चत्वारः । मन्द्रे मौ द्वौ । गौ द्वौ । शेले, इत्यक्षराभ्यां प्रथमपञ्चमौ(१) । द्वितीयस्यां मध्ये गमपमगममधा अष्टौ। शसूनुभिः प्रथमतृतीयाष्टमाः(२)। तृतीयस्यां मध्ये ससमगपपनिधा अष्टौ। शैलेशसून्वित्यक्षराणि । द्वितीयचतुर्थसप्तमाः शेषाः (३) । चतुर्थ्यां मध्ये धनिससधनिपमा अष्टौ । प्रणयप्रसङ्गेत्यक्षराणि । चतुर्थसप्तमौ शेषौ (४) । पञ्चम्यां मन्द्रे ग एकः । मध्ये साः षट् । मन्द्रे ग एकः । सविलासखेलेत्यक्षराणि । चतुर्थसप्तमौ शेषौ (५) । षष्ठयां मध्ये धधपधपनिधधा अष्टौ । नविनोदमित्यक्षराणि । नविनोभिर्धधपाः । दमिति सप्तमः । शेषा इतरे (६) । सप्तम्यां मध्ये स एकः । मन्द्रे गाः पञ्च । मध्ये सौ द्वौ । अधिकैः प्रथमतृतीयपञ्चमाः (७) । अष्टम्यां मध्ये निधपधपधधधा अष्टौ । मुखेन्दुभिः प्रथमतृतीयाष्टमाः(८) । नवम्यां तारे सौ द्वौ । मध्ये मगपपनिधाः षट् । अधिकमुखेन्द्वित्यक्षराणि । चतुर्थसप्तमौ शेषौ (९) । दशम्यां मध्ये धनी द्वौ । तारे सौ । मध्ये धनिपमाश्चत्वारः। नयनं-नमामीत्यक्षराणि । चतुर्थसप्तमौ शेषौ (१०) । एकादश्यां मन्द्रे ग एकः। मध्ये साः षट् । मन्द्रे ग एकः । देवासुरेशेत्यक्षराणि । द्वितीयचतुर्थसप्तमाः शेषाः (११) । द्वादश्यां मध्ये धधपधाश्चत्वारः । तारे माश्चत्वारः । तव रुचिरमित्यक्षराणि । षष्ठादयस्त्रयः शेषाः (१२) ।

शैलेशसूनुप्रणयप्रसङ्गसविलासखेलनविनोदम् ।
अधिकमुखेन्दुनयनं नमामि देवासुरेश तव रुचिरम् ॥

सर्वासु जातिषु मागध्यादिषु गीतियोजनादिकप्रदर्शनार्थमस्यां त्रिरावृत्तपदा मागधी द्विरावृत्तपदाऽर्धमागधीत्यादिवक्ष्यमाणलक्षणानुसारेणार्धमागधीगीतियोगं दर्शयति—

**शैलेक्षराभ्यां प्रथमा द्वितीया तु शसूनुना ।**
**तैः पञ्चभिस्तृतीया स्यात्सप्तमी त्वधिकाक्षरैः ।**
**मुखेन्दुनाऽष्टमी त्वस्यां षड्भिस्तैर्नवमी कला ॥ ८५ ॥**

**शैलेक्षराभ्यामित्यादिना** । प्रथमा प्रथमकला शैलेक्षराभ्याम् । शैले, इत्याभ्यामक्षराभ्यां योजनीयेति शेषः । **द्वितीया तु शसूनुनेति** । द्वितीयकला तु शसूनुनेति द्वंद्वैकवद्भावः । शसूनु इति त्रिभिरक्षरैर्योजनीयेत्यर्थः । **तैः पञ्चभिस्तृतीया स्यादिति** । तृतीयकला तैः शैलेशसूनु, इति पञ्चभिरक्षरैर्योजनीया स्यात् । **सप्तमी त्वधिकाक्षरैरिति** । अधिक, इत्येतैस्त्रिभिरक्षरैः । **अष्टमी तु मुखेन्दुना** । मुखेन्दु, इति त्रिभिरक्षरैः । नवमी तैरधिकैर्मुखेन्दु, इति षड्भिरक्षरैः । अन्यासु कलासु यथालक्षणं गीतान्तरयोगे(गो) द्रष्टव्याः (व्यः) ॥ ८५ ॥ **इति षड्जोदीच्यवा** ॥ ९ ॥

**अथ षड्जमध्यमा—**

**अंशाः सप्त स्वराः षड्जमध्यमायां मिथश्च ते ।**
**संगच्छन्ते निरल्पोंऽशाङ्गादृते वादितां विना ॥ ८६ ॥**

**अंशाः सप्त स्वरा इति** । निरल्पः पूर्णावस्थायां निषादोऽल्पः कार्यः । **अंशाङ्गादृत इति** । तस्यामप्यवस्थायां यदा गान्धारोंऽशो भवति तदा निषादस्य तत्संवादित्वेनाल्पत्वं नेष्टमिति भावः । **वादितां विनेति** । स्वस्य वादित्वे सुतरामल्पत्वाभाव इत्यर्थः ॥ ८६ ॥

**निलोपो(पे) निगलोपे च षाडवौडुविते मते ।**
**षाडवौडुवयोः स्यातां द्विश्रुती तु विरोधिनौ ॥ ८७ ॥**

द्विश्रुती तु निषादगान्धारौ । अंशीभूतौ त्वित्यर्थाद्गम्यते । षाडवौडुवयोर्विरोधिनौ स्याताम् । निलोपेन निगलोपेन च षाडवौडुवयोर्विहितत्वात् । स्वरयोरेवांशत्वं लोप्यत्वमिति च धर्मयोर्विरोधात् । तदा षाडवौडुवे न भवत इति भावः । तेन निगयोरंशयोः पूर्णताया एव नियतत्वादस्यां षाडवांशाः पञ्चौडुवांशा अपि त एव पञ्च संपूर्णांशाः सप्तेति **मतङ्गोक्ताः** सप्तदशांशा द्रष्टव्याः ॥ ८७ ॥

**गीतितालकलादीनि षाड्जीवन्मूर्छना पुनः ।**
**मध्यमादिरिह ज्ञेया पूर्ववद्विनियोजनम् ॥ ८८ ॥**

**गीतितालकलादीनि षाड्जीवदिति** । गीतितालकलादीनि गीतयो माग-

धीसंभाविताः पृथुलास्तिस्रः । तालोऽप्येककलाद्विकलचतुष्कलभेदास्त्रिविधः पञ्चपाणिः । कला अष्ट । लघ्वात्मिका द्वादश । आदिशब्देन चित्रवृत्तिदक्षिणास्त्रयो मार्गा गृह्यन्ते । एतानि गीत्यादीनि षाड्जीवत् । षाड्ज्यामिवास्यामपि कर्तव्यानीत्यतिदेशार्थः । **मूर्छना पुनर्मध्यमादिरिह ज्ञेयेति** । अस्याः षाड्जग्रामिकत्वान्मत्सरीकृता मूर्छनेत्यर्थः । विनियोजनं पूर्ववत् । पूर्वस्यां षड्जोदीच्यवायामिव द्वितीये प्रेक्षणे ध्रुवागान इत्यर्थः ॥ ८८ ॥

**अस्यां षड्जमध्यमौ न्यासौ । सप्त स्वरा अपन्यासाः । अस्य प्रस्तारः—**

१० षड्जमध्यमा.

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| मा | गा | सग | पा | धप | मा | निध | निम | १ |
| र | ज | नि० | व | धू० | ० | मु० | ख० | |
| मां | मां | सां | रिगं | मंग | निध | पध | पा | २ |
| वि | ला | ० | स० | लो० | ०० | ०० | च | |
| मा | गा | री | गा | मा | मा | सा | सा | ३ |
| नं | ० | ० | ० | ० | ० | ० | ० | |
| म | मगम | मा | मा | निध | पध | पम | गमम | ४ |
| प्र | वि०० | क | सि | त० | कु० | मु० | द०० | |
| धा | पध | परि | रिग | गम | रिग | सधस | सा | ५ |
| द | ल० | फे० | न० | सं० | ०० | ००० | नि | |
| निध | सा | री | मगम | मा | मा | मा | मा | ६ |
| भं० | ० | ० | ००० | ० | ० | ० | ० | |
| मां | मां | मंगंमं | मंधं | धंपं | पंधं | पंमं | गंमंगं | ७ |
| का | ० | मि०० | ज० | न० | न० | य० | न०० | |
| धा | पंध | परि | रिग | मग | रिग | सधस | सा | ८ |
| ह्न | द०· | या० | भि० | नं० | ०० | ००० | दि | |
| मा | मा | धनि | धस | धप | मप | पा | पा | ९ |
| तं(नं) | ० | ०० | ०० | ०० | ०० | ० | ० | |
| मां | मंगंमं | मां | निंधं | पंधं | पंमंगं | गां | मां | १० |
| प्र | ·ण०० | मा | ०० | मि० | दे०० | वं | ० | |
| धा | पध | परि | रिग | मग | रिग | सधस | सा | ११ |
| कु | मु० | दा० | धि० | वा० | ०० | ००० | सि | |

| निध | सा | री | मगम | मा | मा | मा | मा | १२ |
|---|---|---|---|---|---|---|---|---|
| नं० | ० | ० | ००० | ० | ० | ० | ० | |

**षड्जमध्यमौ न्यासाविति** । षड्जमध्यमयोरेकतरो न्यासः कर्तव्य इत्यर्थः । **सप्त स्वरा अपन्यासा इति** । ग्रहांशस्वराधीनरक्तिवशास्त[द्य]थायोगं पर्यायेणापन्यासा भवन्तीति मन्तव्यम् । षाड्जग्रामिकशुद्धस्वरमेलने प्रथमकलायां मध्ये मगौ द्वौ । सगावेकः। प एकः। धपा वेकः। म एकः । निधावेकः। निमावेकः। एवमष्टौ लघवः। रजनिवधूमुखेत्यक्षराणि । रजनिभिर्मगसाः। तच्छेषो गः । वधूभ्यां पधौ । शेषौ पमौ । मुना निः । शेषो धः । खेन निः। शेषो मः ( १ )। द्वितीयायां तारे ममसास्त्रयः । रिगावेकः । मगावेकः । मध्ये निधावेकः । पधावेकः । प एकः । विलासलोचेत्यक्षराणि । विलाभ्यां मौ । शेषः सः। सेन रिः । शेषो गः। लो, इति मः । शेषा गनिधपधाः । चेन पः (२)। तृतीयायां मध्ये मगरिगमससा अष्टौ । नामिति मः । शेषा इतरे ( ३ ) । चतुर्थ्यां मध्ये म एकः । मगमा एकः । मौ द्वौ । निधावेकः । पधावेकः । पमावेकः । गममा एकः । प्रविकसितकुसुमे( मुदे )त्यक्षराणि । प्रविभ्यां मौ । शेषौ गमौ । कसितैर्ममनयः । शेषो धः । कुना पः । शेषो धः । मुना पः । शेषो मः । देन गः । शेषौ मौ(४) । पञ्चम्यां मध्ये ध एकः । पधावेकः । परी एकः। रिगावेकः । मगावेकः। रिगावेकः। सधसा एकः । स एकः। दलफेनसंनीत्यक्षराणि । दलाभ्यां धपौ । शेषो धः । फे, इति पः । शेषो रिः । नेन रिः । शेषो गः। सामिति मः । शेषा गरिगसधसाः । निना सः (५)। षष्ठ्यां मध्ये निधावेकः। सरी द्वौ । मगमा एकः । माश्चत्वारः । भामिति निः । शेषा इतरे ( ६ ) । सप्तम्यां मन्द्रे मौ द्वौ । मगमा एकः । मधावेकः । धपावेकः । पधावेकः । पमावेकः । गमगा एकः । कामिजननयनेत्यक्षराणि । का, इति मः । शेषो मः । मिना मः । शेषौ गमौ । जेन मः । शेषो धः । नेन धः । शेषः पः । नेन पः । शेषो धः । येन पः । शेषो मः । नेन गः । शेषौ मगौ ( ७ ) । अष्टम्यां मध्ये ध एकः । पधावेकः । परी एकः । रिगावेकः । मगावेकः । रिगावेकः । सधसा एकः । स एकः । हृदयाभिनन्दीत्यक्षराणि । हृदाभ्यां धपौ । शेषो धः । या, इति पः । शेषो रिः । भिना रिः । शेषो गः । नमिति मः । शेषा गरिगसधसाः । दिना सः ( ८ ) । नवम्यां मध्ये मौ द्वौ । धनी एकः । धसावेकः । धपावेकः । मपावेकः । पौ द्वौ । त(न)मिति मः । तच्छेषा इतरे ( ९ )। दशम्यां मन्द्रे म एकः । मगमा एकः। म एकः । निधावेकः । पधावेकः । पमगा एकः । गमौ द्वौ । प्रणमामि देवमित्यक्षराणि । प्रणाभ्यां मौ । शेषौ गमौ । मा इति मः । शेषौ निधौ । मिना पः । शेषो धः। देन पः । शेषौ मगौ । वामिति गः। शेषो मः (१०)। एकादश्यां मध्ये ध एकः।

पधावेकः। परी एकः। रिगावेकः। मगावेकः। रिगावेकः। सधसा एकः। स एकः। कुमुदाधिवासीत्यक्षराणि । कुमुभ्यां धपौ । शेषौ धः । दा इति पः । शेषो रिः । धिना रिः। शेषो गः । वा इति मः । शेषा गरिगसधसाः । सिना सः (११) । द्वादश्यां मध्ये निधावेकः । सरी द्वौ । मगमा एकः । माश्चत्वारः । नमिति निः । शेषा इतरे (१२)

रजनिवधूमुखविलासलोचनं
　प्रविकसितकुमुददलफेनसंनिभम् ।
कामिजननयनहृदयाभिनन्दितं(नं)
　प्रणमामि देवं कुमुदाधिवासिनम् ॥ इति षड्जमध्यमा ॥१०॥

अथ गान्धारोदीच्यवा—

**गान्धारोदीच्यवायां तु द्वावंशौ षड्जमध्यमौ ।**
**रिलोपात्षाडवं ज्ञेयं पूर्णत्वेंऽशेतराल्पता ॥ ८९ ॥**
**अल्पा निधपगान्धाराः षाडवत्वे प्रकीर्तिताः ।**
**रिधयोः संगतिर्ज्ञेया धैवतादिश्च मूर्छना ॥ ९० ॥**
**तालश्चञ्चत्पुटो ज्ञेयः कलाः षोडश कीर्तिताः ।**
**विनियोगो ध्रुवागाने चतुर्थप्रेक्षणे मतः ॥ ९१ ॥**

**गान्धारोदीच्यवायां त्विति** । पूर्णत्वे संपूर्णदशायामंशेतराल्पतांऽशाभ्यां समाभ्यामितरेषां रिगपधनीनामल्पत्वम् । षाडवत्वे निधपगान्धारा अल्पा ऋषभस्य लुप्तत्वादिति भावः । अत एव रिधयोः संगतिः पूर्णावस्थायामेवेति ज्ञेया । अन्यत्तु सुगमम् ॥ ८९ ॥ ९० ॥ ९१ ॥

**अस्यां मध्यमो न्यासः । षड्जधैवतावपन्यासौ । अस्य प्रस्तारः—**

११- गान्धारोदीच्यवा.

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| सा<br>सौ | सा<br>० | पा<br>० | मा<br>० | पा<br>० | धप<br>०ऽ | पा<br>० | मा<br>० | १ |
| धा<br>म्य | पा<br>० | मा<br>० | मा<br>० | सा<br>० | सा<br>० | सा<br>० | सा<br>० | २ |
| धा<br>गौ | नी<br>० | सा<br>री | सा<br>० | मा<br>मु | मा<br>खां | पा<br>० | पा<br>बु | ३ |
| नी<br>रु | नी<br>ह | नी<br>दि | नी<br>० | नी<br>व्य | नी<br>ति | नी<br>ल | नी<br>क | ४ |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| मा<br>प | मा<br>रि | धा<br>चुं | निस<br>०० | नी<br>वि | नी<br>ता | नी<br>० | नी<br>चिं | ५ |
| मा<br>त | पा<br>सु | मा<br>पा | परिग<br>००० | गा<br>दं | गा<br>० | सा<br>० | सा<br>० | ६ |
| गा<br>प्र | मग<br>वि० | पा<br>क | पध<br>सि० | मा<br>त | धनि<br>हे० | पा<br>० | पा<br>म | ७ |
| री<br>क | गा<br>म | सा<br>ल | सध<br>नि० | नी<br>भं | नी<br>० | धा<br>० | धा<br>० | ८ |
| गा<br>अ | रिग<br>ति० | सा<br>रु | सनि<br>चि० | गा<br>र | रिग<br>कां | सा<br>० | सा<br>ति | ९ |
| सा<br>न | सा<br>ख | सा<br>द | मा<br>० | मनि<br>पं० | धनि<br>णा० | नी<br>० | नी<br>म | १० |
| मा<br>ल | पा<br>नि | मा<br>के | परिग<br>००० | गा<br>तं | गा<br>० | सा<br>० | सा<br>० | ११ |
| गा<br>म | सा<br>न | गा<br>सि | सा<br>ज | मा<br>श | पा<br>री | मा<br>र | परिग<br>००० | १२ |
| गा<br>ता | मा<br>० | गा<br>० | सा<br>ड | गा<br>नं | गा<br>० | गा<br>० | सा<br>० | १३ |
| नी<br>प्र | नी<br>ण | पा<br>मा | धा<br>० | नी<br>मि | गा<br>गौ | गा<br>० | गा<br>री | १४ |
| नी<br>च | नी<br>र | धा<br>ण | पा<br>यु | धा<br>ग | पा<br>म | मा<br>नु | पा<br>प | १५ |
| धा<br>मं | पा<br>० | सा<br>० | सा<br>० | मा<br>० | मा<br>० | मा<br>० | मा<br>० | १६ |

माध्यमग्रामिकशुद्धस्वरमेलने प्रथमकलायां मध्ये सौ द्वौ । पमपास्त्रयः । धपावेकः । पमौ द्वौ । सौ, इति प्रथमः सः । शेषा इतरे [१] । द्वितीयस्यां मध्ये धपममाश्चत्वारः । साश्चत्वारः । म्येति धः । शेषा इतरे (२) । तृतीयस्यां मध्ये धनिससममपपा अष्टौ । गौरीमुखाम्बित्यक्षराणि । द्वितीयचतुर्थसप्तमाः शेषाः (३) । चतुर्थ्यां मध्ये निषादा अष्टौ । रुहदिव्यतिलकेत्यक्षराणि । चतुर्थः शेषः (४) । पञ्चम्यां मध्ये ममधास्त्रयः । निसावेकः । निषादाश्चत्वारः । परिचुम्बिता-

चीत्यक्षराणि । चतुर्थपञ्चमसप्तमाः शेषाः [ ५ ] । षष्ठ्यां मध्ये मपमास्त्रयः । परिगा एकः । गौ द्वौ । सौ द्वौ । तसुपादमित्यक्षराणि । तसुपाभिर्मपमाः । शेषाः परिगाः । दमिति गः । शेषाः परे [६] । सप्तम्यां मध्ये ग एकः । मगावेकः । प एकः । पधावेकः । म एकः । धनी एकः । पौ द्वौ । प्रविकासितहेमेत्यक्षराणि । प्रविभ्यां गमौ । तच्छेषो गः । कसिभ्यां पपौ । तच्छेषो धः । तेन मः । हे, इति धः । तच्छेषौ निपौ । मेन पः (७) । अष्टम्यां मध्ये रिगसास्त्रयः । सधावेकः । नी द्वौ । धौ द्वौ । कमलनिभमित्यक्षराणि । पञ्चमः शेषः । भमिति निः । तच्छेषाः परे [८] । नवम्यां मध्ये ग एकः । रिगावेकः । स एकः। सनी एकः। (ग एकः) । रिगावेकः। सौ द्वौ। अतिरुचिरकान्तीत्यक्षराणि । तृतीयषष्ठनवमदशमाः शेषाः [९] । दशम्यां मध्ये सास्त्रयः । म एकः। मनी एकः । धनी एकः । नी द्वौ । नखदर्पणामित्यक्षराणि। चतुर्थषष्ठाष्टमनवमाः शेषाः । (१०) एकादश्यां तारे मपमास्त्रयः । परिगा एकः । गौ द्वौ । सौ द्वौ । लनिकेतमित्यक्षराणि । लनिकेभिर्मपमाः । तच्छेषाः परिगाः । तमिति गः । शेषाः परे [११] । द्वादश्यां तारे गसगसमपमाः सप्त । परिगा एकः । मनसिजशरीरेत्यक्षराणि । शेषाः परिगाः [१२] । त्रयोदश्यां तारे गमगसाश्चत्वारः । गास्त्रयः । स एकः । ताडनामित्यक्षराणि । ताडनमित्येतैः प्रथमचतुर्थपञ्चमाः । शेषा इतरे (१३) । चतुर्दश्यां तारे नीनीपधनयः पञ्च । गास्त्रयः । प्रणमामि गौरीत्यक्षराणि । चतुर्थसप्तमौ शेषौ (१४) । पञ्चदश्यां तारे निनिधपधपमपा अष्टौ । चरणयुगमनुपेत्यक्षराणि [१५]। षोडश्यां तारे धपससाश्चत्वारः । माश्चत्वारः । ममिति धः । शेषाः परे [१६] ।

सौम्यगौरीमुखाम्बुरुहदिव्यतिलकपरिचुम्बितार्चितसुपादं
प्रविकसितहेमकमलनिभम् ।
अतिरुचिरकान्तिनखदर्पणामलनिकेतं
मनसिजशरीरताडनं प्रणमामि गौरीचरणयुगमनुपमम् ।

**इति गान्धारोदीच्यवा ॥ ११ ॥**

**अथ रक्तगान्धारी—**

**अंशाः स्यू रक्तगान्धार्यां पञ्च धर्षभवर्जिताः**
**रिमतिक्रम्य सगयोः कार्ये संनिधिमेलने ॥ ९२ ॥**
**रिलोपरिधलोपाभ्यां षाडवौडुवमिष्यते।**
**बहुत्वं निधयोरंशः पञ्चमो द्वेष्टि षाडवम् ॥ ९३ ॥**
**द्विषन्त्यौडुवितं षड्जनिमपाः संगतौ सगौ ।**
**पञ्चपाण्यादि षाड्जीवदृषभादिस्तु मूर्छना ।**
**तृतीयप्रेक्षणगतध्रुवायां विनियोजनम् ॥ ९४ ॥**

**अंशाः स्युरिति**। धैवतर्षभवर्जिताः पञ्च सगमपनयः। रिमतिक्रम्य सगयोः संनिधिमेलने कार्ये। रिमतिक्रम्य ऋषभेन[ण] विनेत्यर्थः। "गान्धारषड्जयोश्चात्र संचारश्चर्षभं विना" इति **मुनिवचना**दत्र सगयोर्ऋषभादितरैर्मपधनिभिः सह यथायोगं संनिधिमेलने। संनिधिमेलनं चेह भिन्नलघुककालयोः स्वरयोर्नैरन्तर्यं संनिधिः। एकलघुकालयोर्द्वयोस्त्रयाणां चानैरन्तर्यं मेलनमिति विवक्षितम्। ते कार्ये यथाशक्ति कर्तव्ये। **षाडवौडुवमिति**। द्वंद्वैकवद्भावः। **निधयोर्बहुत्वमिति**। यद्यपि निषादस्यांशत्वेन न प्राप्तमपि बहुत्वमतिशयार्थं धैवतस्य त्वौडुवकारिण औडुवावस्थायामनवस्थानेऽपि संपूर्णषाडवावस्थयोः प्राप्ताल्पत्वापवादेन बहुत्वं 'बलिनौ भवतश्चात्र धैवतः सप्तमस्तथा' इति **मुनिवचना**द्विधीयत इत्यवगन्तव्यम्। अंशः पञ्चमः षाडवं द्वेष्टि। पञ्चमः स्वयमंशीभवन्निलोपानिर्वर्त्यं षाडवं न सहते। मध्यमग्रामे पञ्चमऋषभयोः संवादादिति भावः। षड्जनिमपा औडुवितं द्विषन्ति। सनिमपा अंशा भवन्तो रिधलोपानिर्वर्त्यमौडुवितं न सहन्ते। एक एवांशो गान्धार औडुवं सहत इत्यर्थः। अत्र निधयोः षड्जाद्यंशसंवादित्वाभावेऽप्यौडुवितानभ्युपगमस्तु-

"गान्धारीरक्तगान्धार्योः षड्जमध्यपञ्चमाः।
सप्तमश्चैव विज्ञेया एषु नौडुवितं भवेत्" ॥

इति **मुनिवचना**दवगन्तव्यः। अतः षाडवादिजातिषु क्वचित्षाडवनिषेधोंऽशः संवादिलोपानभ्युपगमान्नियतः। 'संवादिलोपात्समेताः षड्स्वर्थेषु विवक्षिताः' इति **मुनिवचनो**क्तत्वादौडुवादिजातिषु कदाचिदौडुवितस्य प्राप्तस्यापि निषेधः क्वचिदंशलोपात्क्वचिद्वचनादेवेति द्रष्टव्यम्। **सगौ संगताविति**। सगयोः पूर्वं रिव्यतिरिक्तैरितरैः संनिधिमेलनोभयरूपा संगतिरुक्ता। सा कदाचित्तयोः परस्परं कर्तव्येत्यर्थः। पञ्चपाण्यादीत्यादिः स्पष्टार्थः ॥ ९२ ॥ ९३ ॥ ९४ ॥

**अस्यां गान्धारो न्यासः। मध्यमोऽपन्यासः। प्रस्तारः-**

१२ रक्तगान्धारी.

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| पा | नी | सा | सा | सा | गा | पा | नी | १ |
| तं | ० | बा | ० | ल | र | ज | नि | |
| सां | सां | पा | पा | मा | मा | गा | गा | २ |
| क | र | ति | ल | क | भू | ० | ष | |
| मा | पा | धा | पा | मा | पा | धप | मग | ३ |
| ण | वि | भू | ० | ० | ० | ०० | ०० | |
| मा | मा | मा | मा | मा | मा | मा | मा | ४ |
| तिं | ० | ० | ० | ० | ० | ० | ० | |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| धां | नीं | पां | मंपं | धां | नीं | पां | पां | ५ |
| ० | ० | ० | ०० | ० | ० | ० | ० | |
| मां | पां | मां | धनिं | पां | पां | पां | पां | ६ |
| ० | ० | ० | ०० | ० | ० | ० | ० | |
| री | गा | मा | पा | पा | पा | मा | पा | ७ |
| प्र | ण | मा | ० | मि | गौ | ० | री | |
| रीं | गां | मां | पां | पां | पां | मां | पां | ८ |
| व | द् | ना | ० | र | विं | ० | ० | |
| पा | पा | पा | पा | पा | पा | पा | पा | ९ |
| द् | ० | ० | ० | ० | ० | ० | ० | |
| री | गा | सा | सा | री | गा | गा | गा | १० |
| प्री | ० | ति | क | रं | ० | ० | ० | |
| गां | गां | पां | धंमं | धां | निंधं | पा | पा | ११ |
| ० | ० | ० | ०० | ० | ०० | ० | ० | |
| गां | पां | मां | पंरिंगं | गां | गां | गां | गां | १२ |
| ० | ० | ० | ००० | ० | ० | ० | ० | |

माध्यमग्रामिकशुद्धस्वरमेलने प्रथमकलायां मध्ये पनिससगसपनयोऽष्टौ । तं बालरजनीत्यक्षराणि । द्वितीयचतुर्थौ शेषौ (१)। द्वितीयायां तारे सौ द्वौ। मध्ये पौ द्वौ । मौ द्वौ। गौ द्वौ। करतिलकभूषेत्यक्षराणि। सप्तमः शेषः (२) । तृतीयस्यां मध्ये मपधपमपाः षट् । धपावेकः । मगावेकः । णविभू, इत्यक्षराणि । णविभूभिर्मपधाः । शेषाः परे ( ३ ) । चतुर्थ्यां मध्ये मा अष्टौ । तिमिति प्रथमः । शेषाः परे [४]। पञ्चम्यां मन्द्रे धनिपास्त्रयः । मपावेकः। धनिपपाश्चत्वारः । शेषाः सर्वे ( ५ )। षष्ठ्यां मन्द्रे मपमास्त्रयः । धनी एकः । पाश्चत्वारः । शेषाः सर्वे (६) । सप्तम्यां मध्ये रिगमास्त्रयः। पास्त्रयः । मपौ द्वौ । प्रणमामि गौरीत्यक्षराणि । चतुर्थसप्तमौ शेषौ (७) । अष्टम्यां तारे सप्तम्युक्ताः स्वराः । वदनारविमित्यक्षराणि । चतुर्थसप्तमाष्टमाः शेषाः ( ८ ) । नवम्यां मध्ये पा अष्टौ । देन प्रथमः । शेषाः परे ( ९ )। दशम्यां मध्ये रिगससरिगगगा अष्टौ । प्रीतिकरमित्यक्षराणि । अत्र गाः शेषाः ( १० ) एकादश्यां तारे गौ द्वौ । प एकः । धमावेकः । ध एकः । निधावेकः । पौ द्वौ । शेषाः सर्वे ( ११ ) । द्वादश्यां तारे मपमास्त्रयः । परिगा एकः। गाश्चत्वारः । शेषाः सर्वे ( १२ )।

तं बालरजनिकरतिलकभूषणविभूतिं
प्रणमामि गौरीवदनारविन्दप्रीतिकरम् । इति रक्तगान्धारी ॥१२॥

अथ कैशिकी—

कैशिक्यामृषभान्येंऽशा निधावंशौ यदा तदा ।
न्यासः पञ्चम एव स्यादन्यदा द्विश्रुती मतौ ॥९५॥
अन्ये तु निगपान्न्यासान्निधयोरंशयोर्विदुः ।
रिलोपरिधलोपेन षाडवौडुवितं मतम् ॥ ९६ ॥
रिरल्पो निपबाहुल्यमंशानां संगतिर्मिथः ।
षाडवौडुविते द्विष्टः क्रमात्पञ्चमधैवतौ ॥ ९७ ॥
षाड्जीवत्पञ्चपाण्यादि गान्धारादिस्तु मूर्छना ।
पञ्चमप्रेक्षणगतध्रुवायां विनियोजनम् ॥ ९८ ॥

**कैशिक्यामिति** । ऋषभान्य ऋषभादन्ये सगमपधनयः । षट्स्वरा अंशाः । भवन्तीति शेषः । यदा निधावंशौ तदा पञ्चम एव न्यासः स्यादिति 'धैवतेंऽशे निषादे च न्यासः पञ्चम इष्यते' इति मुनिवचनान्नियम्यते । अन्यदा निध-व्यतिरिक्तेषु सरिगमपेष्वंशेष्वित्यर्थः । द्विश्रुती निगौ मतौ । न्यासत्वेन संमतावि-त्यर्थः । अन्ये तु मतङ्गादयस्तु निधयोरंशयोर्निगपांस्त्रीनपि न्यासान्विदुः । 'धैवतनिषादयोरंशत्वे पञ्चमोऽपि न्यासः' इति मतङ्गोक्तत्वात् । अयं पक्षोऽपि पञ्चमस्य न्यासत्वं निरिधयोरिवेति नियमे पर्यवस्यति । रिलोपरिधलोपेनेत्ये-कवद्भावः । रिरल्पः पूर्णावस्थायामिति भावः । निपबाहुल्यमिति । निपयो-रंशत्वे बाहुल्ये प्राप्तेऽपि 'बलिनौ चान्त्यपञ्चमौ' इतिवचनात्तयोरितरांशा-पेक्षयाऽतिबाहुल्यं विधीयत इति बोद्धव्यम् । पञ्चमधैवतावंशीभवन्तौ क्रमात्षा-डवौडुविते द्विष्टः । पञ्चमः षाडवं धैवत औडुवितमिति क्रमः । मध्यमग्राम ऋषभस्य पञ्चमसंवादित्वात्तु धैवतांशे तस्यैव लोप्यत्वाभावादिति भावः । षाड्-जीवदित्यादि । सुबोधम् ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥

अस्यां गान्धारपञ्चमनिषादा न्यासाः । रिवर्ज्याः षट् सप्त वा स्वरा अपन्यासाः । अस्य प्रस्तारः—

१२ कैशिकी.

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| पा | धनि | पा | धनि | गा | गा | गा | गा | १ |
| कै | ०० | शी | ०० | ह | ० | त | ० | |
| पा | पा | मा | निध | निध | पा | पा | पा | २ |
| का | ० | म | त० | नु० | ० | ० | ० | |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| धा· | नी | सा | सा | री | री | री | री | ३ |
| वि | ० | भ्र | म | वि | ला | ० | सं | |
| सा | सा | सा | री | गा | मा | मा | मा | ४ |
| ति | ल | क | यु | तं | ० | ० | ० | |
| मां | धां | नीं | धां | मां | धां | मां | पां | ५ |
| मू | ० | र्धो | ० | र्ध्व | बा | ० | ल | |
| गा | री | सा | धानि | री | री | री | री | ६ |
| सो | ० | म | नि० | भं | ० | ० | ० | |
| गा | री | सा | सा | धा | धा | मा | मा | ७ |
| मु | ख | क | म | लं | ० | ० | ० | |
| गा | गा | गा | मा | मा | निधनि | नी | नी | ८ |
| अ | स | म | ० | हा | ००० | ट्ट | ० | |
| गा | गा | नी | नी | गा | गा | गा | गा | ९ |
| क | स | शे | ० | जं | ० | ० | ० | |
| गां | गां | नीं | नीं | निंधं | पां | पां | पां | १० |
| ह्व | दि | सु | ख | दं० | ० | ० | ० | |
| मां | पां | मां | पां | पां | पां | मां | मां | ११ |
| प्र | ण | मा | ० | मि | लो | च | ० | |
| सां | मां | गां | निंधंनिं | नीं | नीं | मां | गां | १२ |
| न | वि | शे | ००० | षं | ० | ० | ० | |

रिवर्ज्या षट् सप्त वा स्वरा अपन्यासा इति । ' अपन्यासः कदाचिच्च ऋषभोऽपि भवेदिह ' इति मुनिवचनात् । कदाचिदिति पूर्णत्वेऽपि पक्ष इत्यर्थः । माध्यमग्रामिकशुद्धस्वरमेलने प्रथमकलायां मध्ये प एकः । धनी एकः । प एकः । धनी एकः । गाश्चत्वारः । केलीहतेत्यक्षराणि । केलीभ्यां पौ । हताभ्यां प्रथमतृतीयगौ । शेषा इतरे (१) । द्वितीयायां मध्ये पौ द्वौ । म एकः । निधौ द्विर्द्वौ । पास्त्रयः । कामतनु, इत्यक्षराणि । का इति पः । शेषः पः । मताभ्यां मनी शेषो धः । [illegible]ना निः । शेषाः परे ( २ ) । तृतीयायां मध्ये धनी द्वौ । तारे स एकः । [illegible]र स एकः । ऋषभाश्चत्वारः । विभ्रमविलासमित्यक्षराणि । द्वितीयसप्तमौ शेषौ [३] । चतुर्थ्यां मध्ये सास्त्रयः । रिगौ द्वौ । मास्त्रयः । तिलकयुतमित्यक्षराणि । शेषा माः (४) । पञ्चम्यां मन्द्रे मधनिधमधमपा अष्टौ । मूर्धोर्ध्वबालेत्यक्षराणि । द्वितीयचतुर्थसप्तमाः शेषाः [५] । षष्ठ्यां मध्ये गरि-

सास्त्रयः । धनी एकः । ऋषभाश्चत्वारः । सोमनिभमित्यक्षराणि । सोमनिभिर्ग-सधाः । भमिति प्रथमरिः । शेषा इतरे [६] । सप्तम्यां मध्ये गरी द्वौ । सौ द्वौ । धौ द्वौ । मौ द्वौ । मुखकमलमित्यक्षराणि । षष्ठादयः शेषाः [७] । अष्टम्यां मध्ये गास्त्रयः । मौ द्वौ । निधनय एकः । नी द्वौ । असमहाटेत्यक्षराणि । असमैर्गाः । शेषो मः । हा इति मः । शेषा निधनयः । टेन निः । शेषो निः (८) । नवम्यां मध्ये गौ द्वौ । । नी द्वौ । गाश्चत्वारः । कसरोजमित्यक्षराणि । कसरोभिर्गगनयः । जमिति पञ्चमो गः । शेषा इतरे [९] । दशम्यां तारे गौ द्वौ । नी द्वौ । निधावेकः । पास्त्रयः । हृदि सुखदमिति क्रमेण पञ्च । शेषाः परे (१०) । एकादश्यां तारे गपमास्त्रयः । पास्त्रयः । मौ द्वौ । प्रणमामि लोचे-त्यक्षराणि । चतुर्थाष्टमौ शेषौ [ ११ ] । द्वादश्यां तारे समगास्त्रयः । निधनय एकः । नी द्वौ । मगौ द्वौ । नविशेषमित्यक्षराणि । नविशेभिः समगाः । षमिति सप्तमो निः । शेषा इतरे [१२] ।

केलीहतकामतनुविभ्रमविलासं
तिलकयुतं मूर्धोर्ध्वबालसोमनिभम् ।
मुखकमलमसमहाटकसरोजं
हृदि सुखदं प्रणमामि लोचनविशेषम् ॥ **इति कैशिकी ॥१३॥**

**अथ मध्यमोदीच्यवा–**

**पञ्चमांशा सदापूर्णमध्यमोदीच्यवा मता ।**
**लक्ष्म शेषं विजानीयाद्गान्धारोदीच्यवागतम् ॥ ९९ ॥**
**मध्यमादि मूर्छना स्यात्तालश्चञ्चत्पुटो मतः ।**
**चतुर्थस्य प्रेक्षणस्य ध्रुवायां विनियोजनम् ॥ १०० ॥**

**पञ्चमांशेति** । एकः पञ्चम एवांशो यस्याः सा तथोक्ता । **सदापूर्णेति** । कदाचिदपि षाडवौडुवा च न भवतीत्यर्थः । शेषं लक्ष्मांशेन वाऽल्पत्वं रिधयो-र्मिथः संगतिः । षोडश कला इत्येतावल्लक्षणं गान्धारोदीच्यवागतं विजानीयात् । तदत्राप्यनुसंधेयमित्यर्थः । मध्यादि मूर्छना सौवीरी । अन्यत्सुबोधम् ॥९९॥१००॥

**अस्यां मध्यमो न्यासः । प्रस्तारः–**

१४ मध्यमोदिच्यवा.

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| पा | धनि | नी | नी | मा | पा | नी | पा | १ |
| दे | ०० | हा | ० | र्ध | रू | ० | प | |
| री | री | री | गा | सा | रिग | गा | गा | २ |
| म | ति | कां | ० | ति | म० | म | ल | |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| नी | नी | नी | नी | नी | नी | नी | नी | ३ |
| ग | म | लें | ० | दु | कुं | ० | द् | |
| नी | नी | धप | मा | निध | निध | पा | पा | ४ |
| कु | मुं | द्० | नि | भं० | ०० | ० | ० | |
| पा | पा | री | री | री | री | री | री | ५ |
| चा | ० | मी | ० | क | रां | ० | बु | |
| मा | रिग | सा | सधं | नीं | नीं | नीं | नीं | ६ |
| रु | ह | दि | ०० | ० | व्य | कां | ति | |
| मा | पा | नी | सा | पा | पा | गा | गा | ७ |
| प्र | व | र | ग | ण | पू | ० | जि | |
| गा | पां | मां | निंधं | नीं | नीं | सा | सा | ८ |
| त | म | जे | ०० | यं | ० | ० | ० | |
| पां | पां | मां | धंनिं | पां | पां | पां | पां | ९ |
| सु | रा | भि | ष्टु० | त० | म | नि | ल | |
| मां | पां | मां | रिग | गा | गा | गा | गा | १० |
| म | नो | ज | ०० | व | ० | मं | बु | |
| गा | पा | मा | पा | नी | नी | नी | नी | ११ |
| दों | ० | द् | धि | नि | ना | ० | द् | |
| मा | पा | मा | परिग | गा | गा | गा | गा | १२ |
| म | ति | हा | ००० | सं | ० | ० | ० | |
| गां | गां | गां | गां | मां | निंधं | नीं | नीं | १३ |
| शि | वं | शां | ० | त | म० | सु | र | |
| नी | नी | धप | मा | निध | निध | पा | पा | १४ |
| च | मू | म० | थ | नं० | ०० | ० | ० | |
| रीं | गां | सां | सां | मां | निंधंनि | नीं | नीं | १५ |
| वं | ० | दे | ० | त्रै | लो०० | क्य | ० | |
| नीं | नीं | धां | पां | धां | पां | मां | मां | १६ |
| न | त | च | र | णं | ० | ० | ० | |

माध्यमग्रामिकशुद्धस्वरमेलने प्रथमकलायां मध्ये प एकः । धनी एकः । नी

द्वौ । मपनिपाश्चत्वारः । देहार्धरूपेत्यक्षराणि । दे, इति पः । शेषौ धनी । हा, इति निः । शेषो निः । धरूभ्यां मपौ । शेषो निः । पेन पः (१)। द्वितीयायां मध्य ऋषभास्त्रयः । गसौ द्वौ । रिगावेकः। गौ द्वौ । मतिकान्तिममलेत्यक्षराणि । चतुर्थसप्तमौ शेषौ [२] । तृतीयायां मध्ये निषादा अष्टौ । ममलेन्दुकुन्देत्यक्षराणि । चतुर्थसप्तमौ शेषौ [३] । चतुर्थ्यां मध्ये नी द्वौ । धपावेकः। म एकः। निधावेकः । निधावेकः । पौ द्वौ । कुमुदनिभमित्यक्षराणि । कुमुदैर्निनिधाः । शेषः पः । निभंभ्यां मनी । शेषाः परे [४] । पञ्चम्यां मध्ये पौ द्वौ । ऋषभाः षट् । चामीकराम्बित्यक्षराणि । द्वितीयचतुर्थसप्तमाः शेषाः (५)। षष्ठयां मध्ये म एकः । रिगावेकः । स एकः । समन्द्रधावेकः । मन्द्रे निषादाश्चत्वारः । रुहदिव्यकान्तीत्यक्षराणि । तृतीयपञ्चमषष्ठसप्तमाः शेषाः (६) । सप्तम्यां मध्ये मपनिसपपगगा अष्टौ । प्रवरगणपूजीत्यक्षराणि । सप्तमः शेषः (७) । अष्टम्यां मध्ये ग एकः । मन्द्रे पमौ द्वौ । निधावेकः । नी द्वौ । मध्ये सौ द्वौ । तमजेयमित्यक्षराणि । तमजेभिर्गपमाः । शेषौ निधौ । यमिति निः । शेषाः परे (८) । नवम्यां मन्द्रे पौ द्वौ । म एकः । धनी एकः। पाश्चत्वारः । सुराभिष्टुतमनिलेत्यक्षराणि । पञ्चमो निषादः शेषः [९]। दशम्यां मन्द्रे मपमास्त्रयः । मध्ये रिपावेकः । गाश्चत्वारः। मनोजवमम्बित्यक्षराणि । चतुर्थपञ्चमसप्तमाः शेषाः(१०)। एकादश्यां मध्ये गपमपाश्चत्वारः । निषादाश्चत्वारः । दोदधिनिनादेत्यक्षराणि । द्वितीयसप्तमौ शेषौ (११) । द्वादश्यां मध्ये मपमास्त्रयः । परिपा एकः । पाश्चत्वारः । मतिहासमित्यक्षराणि । मतिहाभिर्मपमाः । सामिति सप्तमः । शेषा इतरे ( १२ )। त्रयोदश्यां तारे गाश्चत्वारः । मौ द्वौ । ( म एकः ) । निधावेकः । नी द्वौ । शिवं शान्तमसुरेत्यक्षराणि । चतुर्थसप्तमौ शेषौ ( १३ ) । चतुर्दश्यां मध्ये नी द्वौ । धपावेकः । म एकः । निधावेकः। निधावेकः। पौ द्वौ । चमूमथनमित्यक्षराणि। चमूमैर्निनिधाः । शेषः पः । थनंभ्यां मनी । शेषाः परे (१४)। पञ्चदश्यां तारे रिपससमाः पञ्च । निधनय एकः । नी द्वौ । वन्दे त्रैलोक्येत्यक्षराणि । द्वितीयचतुर्थसप्तमाष्टमदशमाः शेषाः (१५)। षोडश्यां तारे नी द्वौ । धपधपाश्चत्वारः । मौ द्वौ । नतचरणमित्यक्षरैः क्रमेण पञ्च। शेषाः परे (१६) ।

देहार्धरूपमतिकान्तिममलममलेन्दुकुन्दकुमुदनिभं
चामीकराम्बुरुहदिव्यकान्तिप्रवरगणपूजितमजेयम् ।
सुराभिष्टुतमनिलमनोजवमम्बुदोदधिनिनादमतिहासं
शिवं शान्तमसुरचमूमथनं वन्दे त्रैलोक्यनतचरणम् ॥

इति मध्यमोदीच्यवा ॥ १४ ॥

अथ कार्मारवी—

**कार्मारव्यां भवन्त्यंशा निषादरिपधैवताः ।**
**बहवोऽन्तरमार्गत्वादनंशाः परिकीर्तिताः ॥ १०१ ॥**

गान्धारोऽत्यन्तबहुलः सर्वांशस्वरसंगतिः ।
चञ्चत्पुटः षोडशात्र कलाः षड्जादि मूर्छना ।
पञ्चमस्य प्रेक्षणस्य ध्रुवायां विनियोजनम् ॥ १०२ ॥

**कार्मारव्यामिति** । अनंशा इह सगमाः । अनंशत्वेनाल्पा इत्यपि । अन्तरमार्गत्वात्सर्वेषामंशादिस्वरसंगतेर्हेतोर्मुहुः प्रयोगाद्बहवो बहुत्वयुक्ता भवन्ति । नत्वे(न्वे)वं सविशिष्टे बहुत्वेंऽशानंशयोः को भेद इति चेत् । उच्यते । यः स्थायित्वेन बहुप्रयोगः सोंऽशः । यस्तु संचारित्वेन बहुप्रयोगः सोऽन्तरमार्गाश्रयोऽनंश इति विवेक्तव्यम् । बहुलत्वं च प्रयोगेषु व्यापकत्वांशलक्षणमित्यत्रापि बहुत्वांशयो रक्तीत्याद्यंशलक्षणे यच्छब्दाभिहितस्थायिविषयमेवेति मन्तव्यम् । एतेनास्यां जातावन्तरमार्गः कर्तव्य इत्युक्तं भवति । तथा च **भरतः**—'अनंशा बलवन्तस्तु नित्यमेव प्रयोगतः ' इति । गान्धारः सर्वांशस्वरसंगतेः पर्यायांशैरपि संगतेर्विशेषादत्यन्तं बहुलः सर्वांशस्वरसंगतिरपि । " गान्धारस्य विशेषेण सर्वतो गमनं भवेत् " इति **मुनिवचनात्** । **चञ्चत्पुट** इत्यादि सुबोधम् ॥ १०१ ॥ १०२ ॥

**अस्यां पञ्चमो न्यासः । अंशा एवापन्यासाः । अस्य प्रस्तारः—**

१५ कार्मारवी.

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| री | री | री | री | री | री | री | री | १ |
| तं | ० | स्था | ० | णु | ल | लि | त | |
| मा | गा | सा | गा | सा | नी | नी | नी | २ |
| वा | ० | भां | ० | ग | स | ० | क्त | |
| नीं | मां | नीं | मां | पां | पां | गा | गा | ३ |
| म | ति | ते | ० | जः | प्र | स | र | |
| गा | पा | मा | पा | नी | नी | नी | नी | ४ |
| सौ | ० | धां | ० | शु | कां | ० | ति | |
| रीं | गां | सां | नीं | रीं | गां | रीं | मां | ५ |
| फ | णि | प | ति | भु | खं | ० | ० | |
| री | गा | री | सा | नी | धनि | पा | पा | ६ |
| उ | रो | वि | पु | ल | सा० | ० | ग | |
| मां | पां | मां | परिगं | गा | गा | गा | गा | ७ |
| र | नि | के | ००० | तं | ० | ० | ० | |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| री<br>सि | री<br>त | गा<br>पं | सम<br>०० | मा<br>न | भा<br>गें | पा<br>० | पा<br>द्र | ८ |
| मा<br>म | पा<br>ति | मा<br>कां | गरिग<br>००० | गा<br>तं | गा<br>० | गा<br>० | गा<br>० | ९ |
| धा<br>ष | नी<br>० | पा<br>ण्मु | मा<br>ख | धा<br>वि | नी<br>नो | सा<br>० | सा<br>द् | १० |
| नी<br>क | नी<br>र | नी<br>प | नी<br>० | नी<br>ल्ल | नी<br>वां | नी<br>० | नी<br>गु | ११ |
| मां<br>लि | मां<br>वि | धां<br>ला | नीं<br>० | सनिनि<br>स०० | धा<br>की | पा<br>० | पा<br>ल | १२ |
| मा<br>न | पा<br>वि | मा<br>नो | गरिग<br>००० | गा<br>दं | गा<br>० | गा<br>० | गा<br>० | १३ |
| नी<br>प्र | नी<br>ण | पा<br>मा | धनि<br>०० | गा<br>मि | गा<br>दे | गा<br>० | गा<br>व | १४ |
| सां<br>य | रीं<br>० | गां<br>ज्ञो | सां<br>० | नीं<br>प | नीं<br>वी | नीं<br>० | नीं<br>त | १५ |
| नीं<br>कं | नीं<br>० | धां<br>० | धां<br>० | पां<br>० | पां<br>० | पां<br>० | पां<br>० | १६ |

माध्यमग्रामिकशुद्धस्वरमेलने प्रथमकलायां मध्य ऋषभा अष्टौ। तं स्थाणुललितेत्यक्षराणि। द्वितीयचतुर्थौ शेषौ (१)। द्वितीयायां मध्ये मगसगसाः पञ्च। निषादास्त्रयः। वामाङ्गसक्तेत्यक्षराणि। द्वितीयचतुर्थसप्तमाः शेषाः (२)। तृतीयायां मन्द्रे निमनिमपपाः षट्। मध्ये गौ द्वौ। मतितेजःप्रसरेत्यक्षराणि। चतुर्थः शेषः (३)। चतुर्थ्यां मध्ये गपमपाश्चत्वारः। निषादाश्चत्वारः। सौधांशुकान्ते(न्ती)त्यक्षराणि। द्वितीयचतुर्थसप्तमाः शेषाः (४)। पञ्चम्यां तारे रिगसनिरिगरिमा अष्टौ। फणिपतिमुखमित्यक्षराणि। उपा(अ)न्त्यौ शेषौ (५)। षष्ठ्यां मध्ये रिगरिसनयः पञ्च। धनी एकः। पौ द्वौ। उरोविपुलसामित्यक्षराणि। सप्तमाष्टमौ शेषौ (६)। सप्तम्यां तारे मपमास्त्रयः। परिगा एकः। मध्ये गाश्चत्वारः। रतिकेतमित्यक्षराणि। रतिकेभिर्मपमाः। तमिति सप्तमः। शेषा इतरे (७)। अष्टम्यां मध्ये रिरिगास्त्रयः। समावेकः। मौ द्वौ। पौ द्वौ। सितपन्नगेन्द्रेत्यक्षराणि। चतुर्थपञ्चमाष्टमाः शेषाः (८)। नवम्यां मध्ये मपमास्त्रयः। गरिगा एकः। गाश्चत्वारः। मतिकान्तामित्यक्षराणि। मति-

कांभिर्मपमाः । तमिति सप्तमः । शेषा इतरे ( ९ ) । दशम्यां मध्ये धनिपमधनिससा अष्टौ । षण्मुखविनोदेत्यक्षराणि । द्वितीयसप्तमौ शेषौ (१०) । एकादश्यां मध्ये निषादा अष्टौ । करपल्लवाङ्ग्वित्यक्षराणि । चतुर्थसप्तमौ शेषौ (११) । द्वादश्यां मन्द्रे ममधनयश्चत्वारः । मध्ये सनिनय एकः । धपपास्त्रयः । लिविलासकीलेत्यक्षराणि । चतुर्थषष्ठसप्तमनवमाः शेषाः ( १२ ) । त्रयोदश्यां मध्ये नवमीवत्स्वराः । नविनोदमित्यक्षराणि । नविनोभिर्मपमाः । दमिति सप्तमः । [ शेषा इतरे ] । ( १३ ) चतुर्दश्यां मध्ये निनिपास्त्रयः । धनी एकः । गाश्चत्वारः । प्रणमामि देवेत्यक्षराणि । चतुर्थपञ्चमाष्टमाः शेषाः (१४) । पञ्चदश्यां तारे सरिगसाश्चत्वारः । निषादाश्चत्वारः । यज्ञोपवीतेत्यक्षराणि । द्वितीयचतुर्थसप्तमाः शेषाः (१५) । षोडश्यां तारे नी द्वौ । धौ द्वौ । माश्चत्वारः । कमिति प्रथमो निः । शेषाः परे (१६) ।

तं स्थाणुललितवामाङ्गसक्तमातितेजःप्रसरसौधांशुकान्तिफणिपतिमुखं
उरोविपुलसागरनिकेतं सितपन्नगेन्द्रमतिकान्तम् ।
षण्मुखाविनोदकरपल्लवाङ्गुलिविलासकीलनविनोदं
प्रणमामि देवयज्ञोपवीतकम् ॥ इति **कर्मारवी** ॥ १५ ॥

**अथ गान्धारपञ्चमी—**

**अंशो गान्धारपञ्चम्यां पञ्चमः संगतिः पुनः ।**
**कर्तव्याऽत्रापि गान्धारीपञ्चम्योरिव सू(भू)रिभिः ॥१०३॥**
**चञ्चत्पुटः षोडशात्र कला गादिश्च मूर्छना ।**
**तुर्यप्रेक्षणसंबन्धि ध्रुवागाने नियोजनम् ॥ १०४ ॥**

**अंशो गान्धारपञ्चम्यामिति** । संगतिः पुनः संगतिस्तु गान्धारपञ्चम्योरिवात्रापि भूरिभिः कर्तव्येति । गान्धार्यां तावत्, न्यासांशाभ्यां तदन्येषामित्युक्तम् । तद्वदत्रापि न्यासांशाभ्यां गान्धारपञ्चमाभ्यां तदन्येषां सरिमधनीनां पञ्चम्यां तु रिमयोरित्युक्तत्वात्त[द्व]दत्रापि ऋषभमध्यमयोर्मिथश्च । एवं भूरिभिः स्वरैः संगतिः कर्तव्येत्यतिदेशार्थः । शेषं सुबोधम् ॥ १०३ ॥ १०४ ॥

**अस्यां गान्धारो न्यासः । ऋषभपञ्चमावपन्यासौ । प्रस्तारः—**

१६ गान्धारपञ्चमी.

| पा | मप | मध | नी | धप | मा | धा | नी | १ |
|---|---|---|---|---|---|---|---|---|
| कां | ०० | ०० | ० | ०० | ० | ० | ० | |
| सनिनि | धा | पा | पा | पा | पा | पा | पा | २ |
| ००० | ० | तं | ० | ० | ० | ० | ० | |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| धा | नी | सा | सा | मा | मा | पा | पा | ३ |
| वा | ० | मै | ० | क | दे | ० | श | |
| नी | नी | नी | नी | नी | नी | नी | नी | ४ |
| प्रें | ० | खो | ० | ल | मा | ० | न | |
| नी | नी | धप | मा | निध | निध | पा | पा | ५ |
| क | म | ल० | नि | भं० | ०० | ० | ० | |
| पा | पा | री | री | री | री | री | री | ६ |
| व | र | सु | र | भि | कु | सु | म | |
| मा | रिग | सा | सध | नी | नी | नी | नी | ७ |
| गं | ०० | धा | ०० | धि | वा | ० | सि | |
| नी | नी | सा | रिसं | री | री | री | री | ८ |
| त | म | नो | ०० | ज्ञ | ० | ० | ० | |
| नी | गा | सा | निग | सा | नीं | नीं | नीं | ९ |
| न | ग | रा | ०० | ज | सू | ० | नु | |
| नीं | मां | नीं | मां | पां | पां | गा | गा | १० |
| र | ति | रा | ० | ग | र | भ | स | |
| गा | पां | मां | पां | नीं | नीं | नीं | नीं | ११ |
| के | ० | ली | ० | कु | च | ० | ग्र | |
| मा | पा | मा | परिग | गा | गा | गा | गा | १२ |
| ह | ली | लं | ००० | तं | ० | ० | ० | |
| नीं | नीं | पां | धां | नीं | गा | गा | गा | १३ |
| प्र | ण | मा | ० | मि | दे | ० | वं | |
| नीं | नीं | नीं | नीं | नीं | नीं | नीं | नीं | १४ |
| चं | ० | द्रा | ० | र्ध | मं | ० | डि | |
| मां | मां | धां | नीं | सनिनि | धा | पा | पा | १५ |
| त | वि | ला | ० | सकी० | ल | ० | ० | |
| मा | पा | मा | परिग | गा | गा | गा | गा | १६ |
| न | वि | नो | ००० | दं | ० | ० | ० | |

माध्यमग्रामिकशुद्धस्वरमेलने प्रथमकलायां मध्ये प एकः । मपाविकः । म–

धावेकः । निरेकः । धपावेकः । मधनयस्त्रयः । कामिति प्रथमः (१) । द्विती-यायां मध्ये सनिनय एकः । ध एकः । पाः षट् । तमिति पञ्चमः । शेषा इतरे (२) । तृतीयायां मध्ये धनी द्वौ । सौ द्वौ । मौ द्वौ । पौ द्वौ । वामिकदेशेत्यक्ष-राणि । द्वितीयचतुर्थसप्तमाः शेषाः (३) । चतुर्थ्यां मध्ये निषादा अष्टौ । प्रेङ्खोलमानेत्यक्षराणि । द्वितीयचतुर्थसप्तमाः शेषाः (४) । पञ्चम्यां मध्ये नी द्वौ । धपावेकः । म एकः । निधौ द्विर्द्वौ । पौ द्वौ । कमलनिभमित्यक्षराणि । कमलैर्निनिधाः । शेषः पः । निमम्यां मनी । शेषाः परे (५) । षष्ठ्यां मध्ये पौ द्वौ । ऋषभाः षट् । वरसुरभिकुसुमेत्यक्षराणि (६) । सप्तम्यां मध्ये म एकः । रिगावेकः । स एकः । सधावेकः । निषादाश्चत्वारः । गन्धाधिवासीत्यक्षराणि । द्वितीयतृतीयपञ्चमषष्ठनवमाः शेषाः (७)। अष्टम्यां मध्ये नी द्वौ। तारे स एकः । रिसावेकः । ऋषभाश्चत्वारः । तमनोज्ञेत्यक्षराणि । तमनोभिर्निनिसाः । शेषौ रिसौ । ज्ञेति रिः । शेषाः परे [८] । नवम्यां मध्ये निगसास्त्रयः । निगावेकः। स एकः । मन्द्रे निषादास्त्रयः । नगराजसून्वित्यक्षराणि । चतुर्थपञ्चमाष्टमाः शेषाः [९] । दशम्यां मन्द्रे निमनिमपपाः षट् । मध्ये गौ द्वौ । रतिरागरभसे-त्यक्षराणि । चतुर्थः शेषः (१०)। एकादश्यां मध्ये ग एकः । मन्द्रे पमपास्त्रयः। निषादाश्चत्वारः । केलीकुचग्रेत्यक्षराणि । द्वितीयचतुर्थसप्तमाः शेषाः [११] । द्वादश्यां मध्ये मपमास्त्रयः । परिगा एकः । गाश्चत्वारः । हलीलं तमित्यक्षराणि। हलीलमिति मपमाः । तमिति सप्तमः । शेषा इतरे (१२) । त्रयोदश्यां मन्द्रे निनिपधनयः पञ्च । मध्ये गास्त्रयः । प्रणमामि देवमित्यक्षराणि । चतुर्थसप्तमौ शेषौ (१३) । चतुर्दश्यां मन्द्रे निषादा अष्टौ । चन्द्रार्धमण्डीत्यक्षराणि । द्विती-यचतुर्थसप्तमाः शेषाः [१४] । पञ्चदश्यां मन्द्रे मौ द्वौ । धनी द्वौ । मध्ये स-निनय एकः । ध एकः । पौ द्वौ । तविलासकीलेत्यक्षराणि । चतुर्थसप्तमनवम-दशमाः शेषाः (१५)। षोडश्यां मध्ये मपमास्त्रयः । परिगा एकः । गाश्चत्वारः । नविनोदमित्यक्षराणि । नविनोभिर्मपमाः । दमिति सप्तमः । शेषा इतरे (१६) ।

कान्तं वामिकदेशप्रेङ्खोलमानकमलनिभं
वरसुरभिकुसुमगन्धाधिवासितमनोज्ञनगराजसूनुरतिरागरभसकेलीकुचग्रहलीलम् ।
तं प्रणमामि देवं चन्द्रार्धमण्डितविलासकीलनविनोदम् ।

**इति गान्धारपञ्चमी ॥ १६ ॥**

अथाऽऽन्ध्री—

**आन्ध्र्यामंशा निरिगपा रिगयोर्निधयोस्तथा ।**
**संगतिर्न्यासपर्यन्तमंशानुक्रमतो व्रजेत् ॥ १०५ ॥**
**षाडवं षड्जलोपेन मध्यमादिश्च मूर्छना ।**
**पूर्ववत्तु कलातालविनियोगाः प्रकीर्तिताः ॥ १०६ ॥**

**आन्ध्र्यामंशा इति** । निरिगपाः पर्यायेणांशा ग्रहाश्च स्युः। **रिगयोर्निधयोस्तथा** । अत्र तथेति निपातः समुच्चयार्थः । **निधयोश्चेति** । संगतिः परस्परं संनिधिर्मेलनात्मकः संबन्धः। कर्तव्य इति शेषः । परस्परं संगतिरित्यनेनानियमे प्राप्ते नियमार्थमाह–**अंशानुक्रमतो न्यासपर्यन्तं व्रजेदिति** । अंशानुक्रमतः । अत्र निरिगपानां मध्ये यदा योऽशीकृतस्तस्यानुक्रमतस्तमंशीभूतं पूर्वमुच्चार्यानंशं पर्यायांशं वा पश्चादुच्चारयन्न्यासपर्यन्तं गीतसमाप्तिकृत्स्वरपर्यन्तम्। गीतपरिसमाप्तेरित्यर्थः । व्रजेद्गायेदिति नियमः । तथा चाऽऽह **भरतः**–

"गान्धार ऋषभश्चात्र संवादस्तु परस्परम् ।
सप्तमस्य च षष्ठस्य न्यासगत्याऽनुपूर्वशः " इति ॥

ग्रन्थान्तरे चांशानुपूर्व्या न्यासावधिं व्रजेदिति नियमः । तथा चाऽऽह **भरतः**–

"गान्धारर्षभयोश्चात्र व्यापारस्तु परस्परम् ।
सप्तमस्य च षष्ठस्य न्यासगत्याऽनुपूर्वदा(शः) " इति ।

ग्रन्थान्तरे च–" स्वांशानुपूर्व्या व्याप्तिं च कुर्वन्न्यासावधिं व्रजेत् " इति । शेषं निर्विशेषम् ॥ १०५ ॥ १०६ ॥

**अस्यामान्ध्र्यां गान्धारो न्यासः। अंशा एवापन्यासाः । प्रस्तारः**–

१७ आन्ध्री.

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| गा | री | री | री | री | री | री | री | १ |
| त | रु | णें | ० | दु | कु | सु | म | |
| री | गा | री | गा | री | री | री | री | २ |
| ख | चि | त | ज | टं | ० | ० | ० | |
| री | री | गा | गा | री | री | मा | मा | ३ |
| त्रि | दि | व | न | दी | स | लि | ल | |
| री | गा | सा | धनि | नीं | नीं | नीं | नीं | ४ |
| धौ | ० | त | मु० | खं | ० | ० | ० | |
| नीं | री | नीं | री | धंनिं | धंनिं | पां | पां | ५ |
| न | ग | सू | ० | नु० | ०प्र | ण | यं | |
| मां | पां | मां | रिग | गा | गा | गा | गा | ६ |
| वे | ० | द | नि० | धिं | ० | ० | ० | |
| री | री | गा | सस | मा | मा | पा | पा | ७ |
| प | रि | णा | ०० | हि | तु | हि | न | |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| मां<br>शै | पां<br>० | मां<br>ल | रिग<br>गृ० | गा<br>० | गा<br>० | गा<br>० | गा<br>० | ८ |
| धां<br>अ | नीं<br>मृ | गा<br>त | गा<br>भ | गा<br>वं | गा<br>० | गा<br>० | गा<br>० | ९ |
| पा<br>गु | पा<br>ण | मा<br>र | रिग<br>हि० | गा<br>तं | गा<br>० | गा<br>० | गा<br>० | १० |
| नी<br>त | नी<br>म | नी<br>व | नी<br>नि | री<br>र | री<br>वि | री<br>श | री<br>शि | ११ |
| री<br>ज्व | री<br>ल | गा<br>न | नी<br>ज | सा<br>ल | सा<br>प | नी<br>व | नी<br>न | १२ |
| पां<br>ग | पां<br>ग | मां<br>न | रिगं<br>त० | गां<br>नुं | गां<br>० | गां<br>० | गां<br>० | १३ |
| रीं<br>श | रीं<br>र | गां<br>णं | सम<br>०० | मां<br>व्र | मां<br>जा | पां<br>० | पां<br>मि | १४ |
| मां<br>शु | मां<br>भ | नीं<br>म | नीं<br>ति | सां<br>कृ | रीं<br>त | गां<br>नि | पां<br>ल | १५ |
| रिंगं<br>यं० | गां<br>० | गां<br>० | गां<br>० | गां<br>० | गां<br>० | गां<br>० | गां<br>० | १६ |

माध्यमग्रामिकशुद्धस्वरमेलने प्रथमकलायां मध्ये ग एकः। ऋषभाः सप्त। तरुणेन्दुकुसुमेत्यक्षराणि । चतुर्थः शेषः (१)। द्वितीयस्यां मध्ये रिगरिगाश्चत्वारः। ऋषभाश्चत्वारः । खचितजटामिति क्रमेण पञ्चाक्षराणि । शेषाः परे (२)। तृतीयायां मध्ये री द्वौ । गौ द्वौ । री द्वौ । मौ द्वौ । त्रिदिवनदीसलिलेत्यक्षराणि (३) । चतुर्थ्यां मध्ये रिगसास्त्रयः । धनी एकः । मन्द्रे निषादाश्चत्वारः । धौतमुखामित्यक्षराणि । धौ, इति रिः । शेषो गः । तमुभ्यां सधौ । शेषो निः । खमिति निः । शेषाः परे (४) । पञ्चम्यां मन्द्रे निरेकः। मध्ये रिरेकः। पुनर्मन्द्रे निरेकः। मध्ये रिरेकः। मन्द्रे धनी द्विर्द्वौ। पौ द्वौ । नगसूनुप्रणयमित्यक्षराणि । चतुर्थषष्ठसप्तमाः शेषाः (५)। षष्ठ्यां मन्द्रे मपमास्त्रयः। मध्ये रिगावेकः। गाश्चत्वारः। वेदनिधिमित्यक्षराणि । वे, इति मः। शेषः पः । दनिभ्यां मरी। शेषो गः। धिमिति गः। शेषाः परे (६) । सप्तम्यां मध्ये रिरिगास्त्रयः। ससावेकः। मौ द्वौ। पौ द्वौ। परिणाहितुहिनेत्यक्षराणि । चतुर्थपञ्चमौ शेषौ (७)। अष्टम्यां षष्ठ्युक्ताः स्वराः। शैलगृहमित्यक्षराणि। शै, इति मः।तच्छे-

षः पः । लगृभ्यां मरी । शेषो गः । हमिति गः । शेषाः परे (८) । नवम्यां मन्द्रे धनी द्वौ । मध्ये गाः षट् । अमृतभवमिति निरन्तराण्यक्षराणि । शेषाः परे (९) । दशम्यां मध्ये पपमास्त्रयः । रिगावेकः । गाश्चत्वारः । गुणरहितमित्यक्षराणि । गुणरहिभिः पपमरयः । शेषो गः । तमिति गः । शेषाः परे (१०) । एकादश्यां मध्ये निषादाश्चत्वारः । ऋषभाश्चत्वारः । तमवनिरविशशीत्यक्षराणि (११) । द्वादश्यां मध्ये रिरिगनयश्चत्वारः । सौ द्वौ । नी द्वौ । ज्वलनजलपवनेत्यक्षराणि (१२) । त्रयोदश्यां तारे पपमास्त्रयः । रिगावेकः । गाश्चत्वारः । गगनतनुमित्यक्षराणि । गगनतैः प्रथमाद्यश्चत्वारः । नुमिति षष्ठः । शेषा इतरे (१३) । चतुर्दश्यां तारे रिरिगास्त्रयः । समावेकः । मौ द्वौ । पौ द्वौ । शरणं व्रजामीत्यक्षराणि । चतुर्थपञ्चमाष्टमाः शेषाः (१४) । पञ्चदश्यां तारे मौ द्वौ । नी द्वौ । सरिगपाश्चत्वारः । शुभमतिकृति(त)निलेत्यक्षराणि (१५) । षोडश्यां तारे रिगावेकः । गाः सप्त । यमिति रिः । शेषाः परे (१६) ।

तरुणेन्दुकुसुमखचितजटं त्रिदिवनदीसलिलधौतमुखं
नगसूनुप्रणयं वेदनिधिं परिणाहितुहिनशैलगृहम् ।
अमृतभवं गुणरहितं तमवनिरविशशिज्वलनजलपवनगगनतनुं
शरणं व्रजामि शुभमतिकृतनिलयम् ॥ इत्यान्ध्री ॥ १७ ॥

अथ नन्दयन्ती—

**नन्दयन्त्यां पञ्चमोऽशो गान्धारस्तु ग्रहः स्मृतः ।**
**कैश्चित्तु पञ्चमः प्रोक्तो ग्रहोऽस्यां गीतवेदिभिः ॥ १०७ ॥**
**मन्द्रर्षभस्य बाहुल्यं षाडवं षड्जलोपतः ।**
**हृष्यका मूर्छना तालः पूर्ववद्द्विगुणाः कलाः ।**
**विनियोगो ध्रुवागाने प्रथमप्रेक्षणे भवेत् ॥ १०८ ॥**

**नन्दयन्त्यामिति । गान्धारस्तु ग्रहः स्मृत इति ।** अत्रांश एव ग्रहः कार्य इति सकलजातिसाधारणेन **मुनिवचनेन** प्राप्तस्य पञ्चमग्रहत्वस्य गान्धारग्रहो जातिविशेषः कार्य इति विशेषविषयं तद्वचनमेव तक्रकौण्डिन्यनयेन बाधकमित्यवगन्तव्यं गीतवेदिभिर्लक्षणज्ञैरित्यर्थः । कैश्चिदाचार्यैस्तु—अस्यां पञ्चमो ग्रहः प्रोक्त इति पक्षान्तरम् । **मन्द्रर्षभस्य बाहुल्यमिति** । यद्यपि नन्दयन्त्या माध्यमग्रामिकत्वेन ऋषभपर्यन्तायां मन्द्रगतावभावेऽपि मन्द्रपञ्चमारम्भनिष्पन्नऋष्यकामूर्छनाश्रयत्वादंशीभूतमन्द्रपञ्चमेन ऋषभमात्रस्य संवादादितरस्थानस्थितापेक्षया मन्द्रर्षभस्य बाहुल्यं कर्तव्यमित्यभिप्रायः । तथा चाऽऽह **भरतः**—"बाहुल्यमृषभस्यात्र तच्च मन्द्रगतं स्मृतम्" इति । ततः(तालः)**पूर्ववदिति** । पूर्ववदान्ध्यामिव । तालश्चञ्चत्पुटः । **द्विगुणाः कला इति** । पूर्वापेक्षया द्विगुणाः । **पूर्वस्यां**

१ ग. °याममन्द्रगतेरभा° ।

कलाः षोडश अस्यां तु द्वात्रिंशत्कला भवन्तीत्यर्थः । एतेन चच्चत्पुटस्य दक्षिणमार्गे चतुरावृत्तिरुक्ता भवति । अन्यत्सुगमम् ॥ १०७ ॥ १०८ ॥

अस्यां गान्धारो न्यासः । मध्यमावपन्यासौ । प्रस्तारः–

१८ नन्दयन्ती.

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| गा<br>सौ | गा<br>० | गा<br>० | गा<br>० | पा<br>० | पा<br>० | धप<br>०० | मा<br>० | १ |
| धा<br>० | धा<br>० | धा<br>० | धा<br>० | धा<br>० | नी<br>० | सनिनि<br>००० | धा<br>० | २ |
| पां<br>म्यं | पां<br>० | पां<br>० | पां<br>० | पां<br>० | पां<br>० | पां<br>० | पां<br>० | ३ |
| धां<br>वे | नीं<br>० | मां<br>दां | पां<br>० | गां<br>ग | गां<br>वे | गां<br>० | गां<br>द | ४ |
| मा<br>क | री<br>र | गा<br>क | गा<br>म | गा<br>ल | गा<br>यो | गा<br>० | गा<br>निं | ५ |
| मा<br>त | मा<br>मो | पा<br>र | पा<br>जो | धा<br>वि | निध<br>व० | पा<br>० | पा<br>० | ६ |
| धा<br>जिं | नी<br>तं | मा<br>० | पा<br>० | गा<br>० | गा<br>० | गा<br>० | गा<br>० | ७ |
| गम<br>हरं | पा<br>० | पा<br>० | पा<br>० | मा<br>० | मा<br>० | गा<br>० | गा<br>० | ८ |
| धा<br>भ | नी<br>व | मा<br>ह | पा<br>र | गा<br>क | गा<br>म | गा<br>ल | गा<br>गृ | ९ |
| मा<br>हं | मा<br>० | मा<br>० | मा<br>० | मा<br>० | मा<br>० | मा<br>० | मा<br>० | १० |
| री<br>शि | गा<br>वं | मा<br>शां | पा<br>० | पम<br>तं० | पा<br>सं | पा<br>० | नी<br>नि | ११ |
| रीं<br>वे | रीं<br>० | रीं<br>श | रीं<br>न | पां<br>म | पां<br>पू | मां<br>० | मां<br>वँ | १२ |
| धां<br>भू | नीं<br>ष | सनिंनिं<br>००० | धां<br>ण | पां<br>ली | पां<br>० | पां<br>लं | पां<br>० | १३ |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| धां | नीं | मां | पां | गां | गां | गां | गां | १४ |
| उ | र | गे | ० | श | भो | ० | ग | |
| गा | पा | पा | पा | धा | मा | गा | मा | १५ |
| भा | ० | सु | र | शु | भ | पृ | थु | |
| धा | धा | नी | धा | पा | पा | पा | पा | १६ |
| लं | ० | ० | ० | ० | ० | ० | ० | |
| री | गा | मा | पा | पम | पा | पा | नी | १७ |
| अ | च | ल | प | ति० | सू | नु | ० | |
| रीं | रीं | रीं | रीं | पां | पां | पां | पां | १८ |
| क | र | पं | ० | क | जा | ० | म | |
| पा | पा | पा | पा | धा | मा | मा | मा | १९ |
| ल | वि | ला | ० | स | की | ० | ल | |
| नीं | पां | गां | गंमं | गां | गां | गां | गां | २० |
| न | वि | नो | ०० | दं | ० | ० | ० | |
| रीं | रीं | गां | गां | मां | मां | मां | मां | २१ |
| स्फ | टि | क | म | णि | र | ज | त | |
| नी | पा | नी | मा | नी | धा | पा | पा | २२ |
| सि | त | न | व | दु | कू | ० | ल | |
| सां | सां | धानि | धा | पा | पा | पा | पा | २३ |
| क्षी | ० | रोद् | ० | सा | ० | ० | ग | |
| मा | पा | मा | परिग | गा | गा | सां | सां | २४ |
| र | नि | का | ००० | शं | ० | ० | ० | |
| री | री | गा | गा | मा | मा | पा | पा | २५ |
| अ | ज | शि | रः | क | पा | ० | ल | |
| री | री | री | गा | मा | रिग | मा | मा | २६ |
| पृ | थु | भा | ० | ० | ज० | नं | ० | |
| मा | नी | पा | नी | गा | गा | गा | गा | २७ |
| वं | ० | दे | ० | सु | ख | दं | ० | |
| मा | मा | पा | पा | धा | धानि | निध | मा | २८ |
| ह | र | दे | ० | ह | म० | म० | ल | |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| धा<br>म | धा<br>धु | सा<br>सू | नी<br>० | धा<br>द | नी<br>न | पा<br>० | पा<br>सु | २९ |
| री<br>ते | री<br>० | री<br>जो | री<br>० | मा<br>धि | पा<br>क | धा<br>० | मा<br>सु | ३० |
| नी<br>ग | नी<br>ति | नी<br>यो | नी<br>० | धा<br>० | पा<br>० | मा<br>० | मा<br>० | ३१ |
| मा<br>० | परिग<br>००० | गा<br>निं | गा<br>० | गा<br>० | गा<br>० | गा<br>० | गा<br>० | ३२ |

माध्यमग्रामिकशुद्धस्वरमेलने प्रथमकलायां मध्ये गाश्चत्वारः । पौ द्वौ । धपावेकः । म एकः । सौ, इति प्रथमः । शेषाः परे ( १ ) । द्वितीयस्यां मध्ये धाः पञ्च । निरेकः । सनिनय एकः । ध एकः । शेषाः सर्वे (२)। तृतीयायां मन्द्रे पा अष्टौ । म्यमिति प्रथमः पः ( ३ ) । चतुर्थ्यां मन्द्रे धनिमपाश्चत्वारः । गाश्चत्वारः । वेदाङ्गवेद्ये(दे)त्यक्षराणि । द्वितीयचतुर्थसप्तमाः शेषाः ( ४ ) । पञ्चम्यां मध्ये मरी द्वौ । गाः षट् । करकमलयोनिमित्यक्षराणि । सप्तमः शेषः। (५)। षष्ठ्यां मध्ये मौ द्वौ । पौ द्वौ । ध एकः । निधावेकः । पौ द्वौ । तमोरजोविवेत्यक्षराणि । सप्तादयः शेषाः ( ६ )। सप्तम्यां मध्ये धनिमपाश्चत्वारः । गाश्चत्वारः । जितमिति धनी । तृतीयादयः शेषाः (७)। अष्टम्यां मध्ये गमावेकः । पास्त्रयः । मौ द्वौ । गा द्वौ । हरमिति गमौ । शेषाः परे ( ८ ) । नवम्यां सप्तम्युक्ताः स्वराः । भवहरकमलगृ, इत्यक्षराणि ( ९ ) । दशम्यां मध्ये मा अष्टौ । हमिति प्रथमः ( १० ) । एकादश्यां मध्ये रिगमपाश्चत्वारः । पमावेकः । पौ द्वौ । निरेकः । शिवं शान्तं संनतेत्यक्षराणि । चतुर्थषष्ठाष्टमाः शेषाः । ( ११ ) द्वादश्यां मन्द्र ऋषभाश्चत्वारः । पौ द्वा । मौ द्वौ । वेशनमपूर्वमित्यक्षराणि । द्वितीयसप्तमौ शेषौ ( १२ ) । त्रयोदश्यां मन्द्रे धनी द्वौ । मध्यषड्जनिनय एकः । ध एकः । पाश्चत्वारः । भूषणलीलमित्यक्षराणि । तृतीयचतुर्थपञ्चमाष्टमदशमाः शेषाः ( १३ )। चतुर्दश्यां मन्द्रे धनिपमाश्चत्वारः । गाश्चत्वारः । उरगेशभोगेत्यक्षराणि । चतुर्थसप्तमौ शेषौ ( १४ ) । पञ्चदश्यां मध्ये ग एकः । पास्त्रयः । धमगमाश्चत्वारः । भासुरशुभपृथिवित्यक्षराणि । द्वितीयः शेषः ( १५ ) । षोडश्यां मध्ये धौ द्वौ । निधौ द्वौ । पाश्चत्वारः । लमिति प्रथमः ( १६ )। सप्तदश्यां मध्ये रिगमपाश्चत्वारः । पमावेकः । पौ द्वौ । निरेकः । अचलपतिसून्वित्यक्षराणि । षष्ठनवमौ शेषौ ( १७ ) । अष्टादश्यां मन्द्र ऋषभाश्चत्वारः । पाश्चत्वारः । करपङ्कजामेत्यक्षराणि । चतुर्थसप्तमौ शेषौ ( १८ ) । एकोनविंश्यां मध्ये पाश्चत्वारः । ध एकः । मास्त्रयः । लविलासली-

लेत्यक्षराणि । चतुर्थसप्तमौ शेषौ ( १९ ) । विंश्यां मन्द्रे निपगास्त्रयः । गमावेकः । गाश्चत्वारः । नविनोदमित्यक्षराणि । चतुर्थपञ्चमौ सप्तमादयश्च शेषाः ( २० )। एकविंश्यां मन्द्रे री द्वौ । गौ द्वौ । माश्चत्वारः । स्फटिकमणिरजतेत्यक्षराणि ( २१ )। द्वाविंश्यां मध्ये निपनिमनिधपपा अष्टौ । सितनवदुकूलेत्यक्षराणि । सप्तमः शेषः ( २२ )। त्रयोविंश्यां तारे सौ द्वौ । मध्ये धनी एकः । ध एकः । पाश्चत्वारः । क्षीरोदसागेत्यक्षराणि । द्वितीयपञ्चमसप्तमाष्टमाः शेषाः (२३) । चतुर्विंश्यां मध्ये मपमास्त्रयः । परिगा एकः । गौ द्वौ । तारे सौ द्वौ । रनिकाशमित्यक्षराणि । रनिकाभिर्मपमाः । शामिति सप्तमः । शेषा इतरे ( २४ )। पञ्चविंश्यां मध्ये री द्वौ । गौ द्वौ । मौ द्वौ । पौ द्वौ । अजशिरःकपालेत्यक्षराणि । सप्तमः शेषः ( २५ )। षड्विंश्यां मध्य ऋषभास्त्रयः । गमौ द्वौ । रिगावेकः । मौ द्वौ । पृथुभाजनमित्यक्षराणि । चतुर्थपञ्चमसप्तमनवमाः शेषाः । ( २६ )। सप्तविंश्यां मध्ये मनिपनयश्चत्वारः । गाश्चत्वारः । वन्दे सुखदमित्यक्षराणि । द्वितीयचतुर्थाष्टमाः शेषाः (२७) । अष्टाविंश्यां मध्ये ममपपधाः पञ्च । धनी एकः । निधावेकः । म एकः । हरदेहममलेत्यक्षराणि । चतुर्थसप्तमनवमाः शेषाः (२८) । एकोनत्रिंश्यां मध्ये धधसनिधनिपपा अष्टौ । मधुसूदनसु, इत्यक्षराणि । चतुर्थसप्तमौ शेषौ (२९) । त्रिंश्यां तार ऋषभाश्चत्वारः । तेजोधिकसु, इत्यक्षराणि । द्वितीयचतुर्थसप्तमाः शेषाः (३०) । एकत्रिंश्यां मध्ये निषादाश्चत्वारः । धपममाश्चत्वारः । गतियोभिर्निषादास्त्रयः । चतुर्थादयः शेषाः ( ३१ )। द्वात्रिंश्यां मध्ये म एकः। परिगा एकः। गाः षट्। निमिति पञ्चमो गः। शेषा इतरे (३२)।

सौम्यं वेदाङ्गवेदकरकमलयोनिं तमोरजोविवर्जितं हरं
भवहरकमलगृहं शिवं शान्तं संनिवेशनमपूर्वं
भूषणलीलमुरगेशभोगभासुरशुभपृथुलम् ।
अचलपतिसूनुकरपङ्कजामलविलासकीलनविनोदं
स्फटिकमणिरजतासितनवदुकूलक्षीरोदसागरनिकाशम् ।
अजशिरःकपालपृथुभाजनं वन्दे सुखदं
हरदेहममलमधुसूदनसुतेजोधिकसुगतियोनिम् । **इति नन्दयन्ती॥१८॥**

इति संसर्गजा विकृतजातयः प्रातिस्विकांशेष्वेकैकांशेनैव पूर्णत्वे प्रस्तार्य दर्शिताः । एवं यथासंभवमंशावस्थान्तरेऽप्यंशान्तरैरपि लक्षणानुसारेणोह्यम् ।

तत्र—"स्युर्द्वादशकलाः षाड्जी धैवती षड्जमध्यमा ।
कैशिकी रक्तगान्धारी षड्जोदीच्यवतीति षट् ॥
स्युः षोडशकलाश्चाष्टौ गान्धारी च निषादिनी ।
गान्धारोदीच्यवा कार्मारवी गान्धारपञ्चमी ॥

मध्यमोदीच्यवा चाऽऽन्ध्री तथा स्यात्षड्जकैशिकी ।
तिस्रोऽष्टकलिकाः पञ्चम्यार्षभी मध्यमा तथा ।
द्वात्रिंशत्कालिका चैका नन्दयन्ती प्रकीर्तिता।

पूर्वमेकस्या एव षाड्जीलक्षणे 'त्रिधा तालः पञ्चपाणिः' इत्यादिनैक-तालादिषु तालभेदेषु चित्रादयस्त्रयो मार्गा मागध्यादयस्तिस्रो वृत्तयश्च क्रमेण योजनीया इत्युक्तम् । तथा केषुचिद्धैवत्यादीनां लक्षणेषु 'तालो मार्गश्च गीतयः। विनियोगश्च षाड्जीवत्' इति । 'षाड्जीवद्गीतितालादिः' इति चातिदेशतो दर्शितम् । अन्येष्वार्षभ्यादीनां लक्षणेषु तु 'तालश्चञ्चत्पुटो मतः । अष्टौ कला भवन्ति' इति 'कलाः षोडश कीर्तिताः' इति च तालमात्रं कलासंख्यामात्रं चोक्तम् । तत्रैककलत्वादितालविशेषमार्गगीतीनामनुक्तिरेव । तत्र कथं प्रयोग इत्याकाङ्क्षायामाह—

**अनुक्ताविह तालः स्यात्त्रिधैवैककलादिकः ।**
**मार्गाः क्रमाच्चित्रवृत्तिदक्षिणा गीतयः पुनः ।**
**मागधी संभाविता च पृथुलेत्युदिताः क्रमात् ॥ १०९ ॥**

**अनुक्ताविहेति** । इह जातिलक्षणेष्वनुक्तावेककलात्वादितालभेदमार्गगीतीनामनभिधाने तालक्षणेषूक्तश्चञ्चत्पुटः पञ्चपाणिर्वैककलादिस्त्रिधैव स्यात् । एककलादिक इति विधेयविशेषणम् । त्रिधैवेत्यादि षाड्ज्यामेव व्याख्यातं तत एवावगन्तव्यम् ॥ १०९ ॥

एवं तर्हि षाड्ज्यादिलक्षणेषूक्तकलादिसंख्या तत्रोक्तेषु तालमार्गगीतिभेदेषु कतमभेदा इत्याकाङ्क्षायामाह—

**योक्ताऽस्माभिः कलासंख्या सा दक्षिणपथस्थिता ॥११०॥**

**योक्ताऽस्माभिरिति** । अस्माभिर्भरतमतानुसारिभिरस्मदादिभिरित्यर्थः। या कलासंख्या पञ्चपाणौ द्वादश चञ्चत्पुटे कासुचिदष्टौ कासुचित्षोडश, एकस्यां द्वात्रिंशदित्येवंरूपोक्ता । षाड्ज्यादिलक्षणेष्विति शेषः। सा कलासंख्या दक्षिणपथे दक्षिणमार्गे स्थितेति ज्ञेया। एतेनानया मार्गविशेषाश्रयत(श्रय)या कलासंख्या(ख्य)-याऽत्र चतुष्कलस्तालः पृथुला गीतिश्चेति तालगीतिविशेषावप्युक्तौ भवतः॥११०॥

प्रत्येकं त्रिविधस्य तालादित्रितयस्य गीतिलक्षणेषु मिथो यथासंख्यं योज-नादिहोक्तां कलासंख्यां दक्षिणमार्गगतामुक्त्वा तस्या एवं गातुरिच्छया मार्गा-न्तरप्रयोगप्रकारं दर्शयति—

**वार्तिके द्विगुणा ज्ञेया सैव चित्रे चतुर्गुणा ।**
**सर्वजातिषु जानीयादंशस्वरगतं रसम् ॥ १११ ॥**

**वार्तिक इत्यादिना**। सैव मार्गोक्ता कलासंख्यैव वार्तिके मार्गे द्विगुणा ज्ञेया । षाड्ज्यां तावद्दक्षिणे द्वादशोक्ता वार्तिके चतुर्विंशतिर्भवतीत्यर्थः । अष्टलब्धा-

त्मिकाः कला हित्वा चतुर्लघ्वात्मिकाः कलाः कर्तव्या इत्यभिप्रायः। सैवेति पुनरावृत्तिः। सा दक्षिणोक्ता कलासंख्यैव चित्रे मार्गे चतुर्गुणा ज्ञेया। षाड्ज्यां तावदष्टाचत्वारिंशत्कला भवन्तीत्यर्थः। भक्त्वा लघुद्वयात्मिकाः कलाः कर्तव्या इत्यभिप्रायः। एतेनैव वार्तिके द्विकलस्तालः संभाविता गीतिः, चित्रे त्वेककलस्तालो मागधी गीतिरिति चोक्तं भवति। एवं जात्यन्तरेष्वप्यूहनीयम्। लक्षणेषु प्रत्येकं रसानामुक्तिगौरवमिति मत्वा सर्वासामपि लघूक्त्या रसयोगं दर्शयति–**सर्वजातिष्विति**। अंशस्वरगतं यस्यां जातौ यदा योऽंशो भवति तस्यां 'सरी वीरे' इत्यादिनोक्तप्रकारेण तत्तदंशस्वरगतमंशं विजानीयात्। ज्ञात्वा तत्तद्रसाभिव्यञ्जकैः पदैर्गायेदित्यर्थः॥ १११॥

पूर्वषाड्ज्यादिषु कासुचिज्जातिषु 'वराटी दृश्यते' इत्यादिभिर्जन्यरागांशा दिङ्मात्रेण प्रदर्शिताः कासुचिन्न प्रदर्शिताः। तत्र सर्वत्रेदानीं संक्षेपेण रागांशान्दर्शयितुमाह–

**दृश्यन्ते जन्यरागांशास्तज्ज्ञैर्जनकजातिषु।**
**ब्रह्मप्रोक्तपदैः सम्यक्प्रयुक्ताः शंकरस्तुतौ॥ ११२॥**
**अपि ब्रह्महणं पापाज्जातयः प्रपुनन्त्यमूः।**
**ऋचो यजूंषि सामानि क्रियन्ते नान्यथा यथा।**
**तथा सामसमुद्भूता जातयो वेदसंमताः॥ ११३॥**

**दृश्यन्ते इति**। जन्यरागांशा ग्रामरागादयो दशविधा अपि जातीनां साक्षात्परम्परया वा जन्यरागा एव तेषामंशा अवयवाः। तथा च वक्ष्यति–'रागान्तरस्यावयवो रागांशः' इति। रागैकदेशा इत्यर्थः। तज्जनकजातिषु साक्षात्परम्परया स्वेषां जनकासु जातिषु रागभेदविद्भिर्दृश्यन्त उद्भाव्यन्त इत्यर्थः। अथ यथाविधि जातिगानैरदृष्टफलातिशयं दर्शयति–**ब्रह्मप्रोक्तेति**। प्राक् पूर्वं शंकरस्तुतौ शंकरस्तुतिं विषयीकृत्य ब्रह्मप्रोक्तपदैर्ब्रह्मणा चतुर्मुखेन(ण) प्रोक्तैर्ग्रथितैः पदैः 'तं भवललाट' इत्यादिभिर्योजयित्वा सम्यग्न्यूनातिरेकेणोक्ता गीताश्चेदमूः षाड्ज्यादयो जातयो ब्रह्महणमपि ब्रह्मघ्नमपि पुरुषं पापाद्ब्रह्महत्यारूपान्मोचयित्वा प्रपुनन्ति पूतं कुर्वन्ति। अनेन सम्यग्जातिगानस्य महापातकप्रायश्चित्तत्वमुक्तं भवति। एवं सामर्थ्ये जातीनामुक्तनियमयुक्तानामृगादिमन्त्रसादृश्यहेतुत्वेनाभिसंधाय तासामनियमप्रयोगं निषेधति–**ऋच इति**। ऋचो यजूंषि सामानि यथाऽन्यथा न क्रियन्ते स्वरवर्णोच्चारणादिवैपरीत्येन न प्रयुज्यन्ते तथा सामसमुद्भूता वेदसदृशा जातयोऽन्यथा न क्रियन्ते। स्वरपदतालादिवैपरीत्येन न प्रयोक्तव्या इत्यर्थः। एतेन विपरीतप्रयोगे प्रत्यवायः सूचितो भवति॥ ११२॥ ११३॥

इति प्रथमे स्वराध्याये जातिलक्षणाख्यं सप्तमं प्रकरणं समाप्तम्॥ ७॥

| जातिसंख्या | जातिनामानि | अंशाः | न्यासाः | अपन्यासाः | मूर्छनाः | षाडवद्वेषिस्वराः | औडुवद्वेषिस्वराः |
|---|---|---|---|---|---|---|---|
| १ | षाड्जी | सगमपध | स | गप | उत्तरायता | नि | ० |
| २ | आर्षभी | रिधनि | रि | रिधनि | शुद्धषड्जा | स | सप |
| ३ | गान्धारी | सगमपनी | ग | सप | पौरवी | रि | रिध |
| ४ | मध्यमा | सरिमपध | म | सरिमपध | कलोपनता | ग | गनि |
| ५ | पञ्चमी | रिप | प | रिपनि | कलोपनता | ग | गनि |
| ६ | धैवती | रिध | ध | रिमध | अभिरुद्गता | प | सप |
| ७ | नैषादी | सगनि | नि | सगनि | अभिरुद्गता | प | सप |
| ८ | षड्जकैशिकी | सगप | ग | सपनि | ......... | ० | ० |
| ९ | षड्जोदीच्यवा | समधनि | म | सध | अश्वक्रान्ता | रि | रिध |
| १० | षड्जमध्यमा | सरिगमपधनी | सम | सरिगमपधनि | मत्सरीकृता | नि | गनि |
| ११ | गान्धारोदीच्यवा | सम | म | सध | पौरवी | रि | ० |
| १२ | रक्तगान्धारी | सगमपनि | ग | ग | कलोपनता | रि | रिध |
| १३ | कैशिकी | सगमपधनि | गपनि | सगमपधनि | हारिणाश्वा | रि | रिध |
| १४ | मध्यमोदीच्यवा | प | म | सध | सौवीरी | ० | ० |
| १५ | कार्मारवी | रिपधनि | प | रिपधनि | शुद्धमध्या | ० | ० |
| १६ | गान्धारपञ्चमी | प | ग | रिप | हारिणाश्वा | ० | ० |
| १७ | आन्ध्री | रिगपनि | ग | रिगपनि | सौवीरी | स | ० |
| १८ | नन्दयन्ती | प | ग | मप | हारिणाश्वा | स | ० |

अथाष्टमं गीतिप्रकरणम् ।

अथोद्देशक्रमेण कपालानि लक्षयितुमादौ तदुत्पत्तिं दर्शयन्प्रतिजानीते—

शुद्धजातिसमुद्भूतकपालान्यधुना ब्रुवे ।
रागा जनकजातीनां तत्कपालेषु संमताः ॥ १ ॥
षड्जो ग्रहांशापन्यासो गोन्यासोऽतिबहू गमौ ।
अल्पा रिपनिधा लङ्घ्यो रिः कला द्वादशोदिताः ॥ २ ॥
यस्मिन्षाड्जीकपालं तद्वादितं मार्गवेदिभिः ।
यत्रर्षभोंऽशोऽपन्यासो मोऽन्तो गनिपधाल्पता ॥ ३ ॥
सोऽत्यल्पोऽष्टकलं तत्स्यात्कपालं त्वार्षभीगतम् ।
मध्यमोंऽशग्रहन्यासापन्यासो धैवतो बहुः ॥ ४ ॥
यत्राल्पाः सरिगा लोपाद्रिपयोरौडुवं भवेत् ।
तद्गान्धारीकपालं स्यात्कलाष्टकविनिर्मितम् ॥ ५ ॥
मध्यमोंऽशो निरिगपास्त्वल्पा यत्र कला नव ।
तन्मध्यमाकपालं स्यादिति निःशङ्क[1]कीर्तितम् ॥ ६ ॥
ऋषभांशं सग्रहं च निधषड्जगमाल्पकम् ।
कपालं पञ्चमीजातिजातमष्टकलं विदुः ॥ ७ ॥
अत्यल्पर्षभगान्धारं पन्यासं मधभूरि च ।
षाड्ज्या इव कपालं तद्धैवत्याः स्यात्कलाष्टकात् ॥ ८ ॥
ग्रहांशन्याससषड्जं च रिगाल्पमतिभूरिभिः ।
निधमैरष्टकलकं स्यान्नैषादीकपालकम् ॥ ९ ॥

शुद्धजातीति । अधुना जातिस्वरूपनिरूपणानन्तरं शुद्धजातिसमुद्भूतकपालानि शुद्धजातिभ्यः षाड्ज्यादिभ्यः सप्तभ्यः समुद्भूतानि कपालानि । एतेन संसर्गजजातिभ्यः कपालोत्पत्तिर्नेत्युक्तं भवति । ननु जातित्वाविशेषात्ताभ्योऽपि कपालोत्पत्तिः कुतो नेति चेत् । उच्यते । संसर्गजा अपि शुद्धाभ्यः समुत्पन्नाः । कपालान्यपि ताभ्य एव । उभयेषामप्येककारणादव्यवधानोत्पन्नत्वस्याविशिष्टत्वात्संसर्गजानां कपालजातीयं प्रति कारणत्वायोगादिति कपालपरिज्ञापनस्य दृष्टप्रयोजनं तावद्दर्शयति—रागा इति । जनकजातीनाम् । अत्र शुद्धजातयो जनकत्वेन विवक्षिताः । तासां रागा जन्या रागाः षड्जे षाड्जीसमुद्भूतं श्रीरागमित्यादिना वक्ष्यमाणप्रकारेण श्रीरागादयो रागाः । तत्कपालेषु तासां षाड्ज्यादीनां कपालेषु संमताः सदृशाकाराः प्रतीयन्ते । रागस्वरूपपरिज्ञानम-

१ घ. ङ. °ङ्कसंमतम् ।

प्रयोजनमित्यर्थः । यथा घटैकदेशत्वेन कपालानि घटप्रतीतिजनकान्येवमेतान्यपि रागैकदेशत्वेन रागप्रतीतिजननात्कपालानीव कपालानीति तेषां संज्ञाऽवगन्तव्या । अथवा पुरा भिक्षाटनसमये शंभुना षाड्ज्यादिषु गीयमानासु निरतिशयरसाभिव्यक्त्या रसात्मिकायां तन्मौलिगतचन्द्रकलायां च स्रवन्त्यां तदमृतरससिक्तानि तद्भूषणब्रह्मकपालानि तदा सजीवानि तद्गानमनुकृत्यागायन्किल । अतः कपालगीतत्वात्कपालसंज्ञानीत्यैतिह्यम् । षाड्जीकपालादिलक्षणानि स्पष्टार्थानि । एतेषां जातिभ्यः स्वरूपभेदस्तु न्यासादिभेदाद्द्रष्टव्यः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

**इति सप्त कपालानि गायन्ब्रह्मोदितैः पदैः ।**
**स्वरैश्च पार्वतीकान्तस्तुतौ कल्याणभाग्भवेत् ॥ १० ॥**

उच्यमाननियमेन कपालानां गातुरदृष्टफलयोगमाह—इति सप्त कपालानीति ॥ १० ॥

इति कपाललक्षणम् ।

---

अथ यथोद्देशक्रमं कंबलं लक्षयित्वा तस्योत्पत्तिं तद्भेदबाहुल्यं च प्रदर्श्य तद्गानस्य फलमाह—

**यत्र ग्रहोंऽशोऽपन्यासः पञ्चमो बहुलस्तु रिः ।**
**स न्यासो मधगान्धारास्त्वल्पास्तत्कंबलं मतम् ॥ ११ ॥**
**पञ्चमीजातिसंजातमल्पताबहुतावशात् ।**
**स्वराणां बहवो भेदास्तस्य पूर्वैरुदीरिताः ॥ १२ ॥**
**प्रीतः कंबलदानेन कंबलाय वरं ददौ ।**
**पुरा पुरारिरद्यापि प्रीयते तैरतः शिवः ॥ १३ ॥**

**यत्र ग्रहोंऽशोऽपन्यास** इत्यादिना । निगदव्याख्यातमेतत् । कंबलनाम्ना खण्डपरशुकर्णकुण्डलेन कुण्डलीन्द्रेण गीतत्वादस्य कंबलसंज्ञा ॥ ११ ॥ १२ ॥ १३ ॥

इति कंबललक्षणम् ।

---

गायन्ब्रह्मोदितैः पदैरिति कपालगाननियमे प्रसक्तानां ब्रह्मोदितपदानां स्वरूपकं हुमादिस्तोमाक्षरसहितं तत्तत्कपालोक्तकलासंख्याविभागेन दर्शयितुमाह—

**कपालानां क्रमाद्ब्रूमो ब्रह्मप्रोक्तां पदावलीम् ॥ १४ ॥**

**कपालानां क्रमाद्ब्रूम** इत्यादिना । तेषां स्वरयोजना तूक्तलक्षणानुसारेणोन्नेया ॥ १४ ॥

झण्टुं झण्टुम् ॥ १ ॥ खट्वाङ्गधरम् ॥ २ ॥ दंष्ट्राकरालम् ॥ ३ ॥ तडित्सदृशाजिह्वम् ॥ ४ ॥ हौ हौ हौ हौ हौ हौ हौ हौ ॥ ५ ॥ बहुरूपवदनं घनघोरनादम् ॥ ६ ॥ हौ हौ हा हौ हौ हौ हौ हौ ॥ ७ ॥ ॐ ॐ ह्रां रौं हौं हौं हौं हौं ॥ ८ ॥ नृमुण्डमण्डितम् ॥ ९ हूं हूं क ह क ह हूं हूं ॥ १० ॥ कृतविकटमुखम् ॥ ११ ॥ नमामि देवं भैरवम् ॥ १२ ॥

इति षाड्जीकपालपदानि ।

---

झण्टुं झण्टुम् ॥ १ ॥ दंष्ट्राकरालम् ॥ २॥ उँ उँ ह्रौं त्रैं हौ हौ हौ हौ ॥ ३ ॥ हौ हौ हौ ऐं हौ हौ हौ हौ ॥ ४ ॥ वरसुरभिकुसुम ॥५॥ चर्चितगात्रम् ॥ ६ ॥ कपालहस्तम् ॥ ७ ॥ नमामि देवम् ॥ ८ ॥

इत्यार्षभीकपालपदानि ।

---

चलत्तुरङ्ग ॥ १ ॥ भङ्गुरं अ ॥ २ ॥ नेकरेणु ॥ ३ ॥ पिञ्जरं सु ॥ ४ ॥ रासुरैः सुसेवितं पु ॥ ५ ॥ नातु जाह्न ॥ ६ ॥ वीजलं मां ॥ ७ ॥ बिन्दुभिः ॥ ८ ॥

इति गान्धारीकपालपदानि ।

---

शूलकपाल ॥ १ ॥ पाणित्रिपुराविनाशि ॥ २ ॥ शशाङ्कधारिणम् ॥ ३ ॥ त्रिनयनत्रिशूलम् ॥ ४ ॥ सततमुमया सहि ॥ ५ ॥ तं वरदं है है है है ॥ ६ ॥ है है है है है ॥ ७ ॥ है है है है है ॥ ८ ॥ नौमि महादेवम् ॥ ९ ॥

इति मध्यमाकपालपदानि ।

---

जय विषमनयन ॥ १ ॥ मदनतनुदहन ॥ २ ॥ वरवृषभगमन ॥ ३ ॥ पुरदहन ॥ ४ ॥ नतसकलभुवन ॥५॥ सितकमलवदन ॥ ६ ॥ भव मे भयहर ॥ ७ ॥ भव शरणम् ॥ ८ ॥

इति पञ्चमीकपालपदानि ।

---

अग्निज्वालाशि ॥ १ ॥ खावालि ॥ २ ॥ मांसशोणित ॥ ३ ॥ भोजिनि सर्वाहारि ॥ ५ ॥ णि निर्मांसे ॥ ६ ॥ चापर्णे ॥ ७ ॥ नमोस्तु ते ॥ ८ ॥

---

१ ङ. °पर्णे धर्ममुण्डे ॥ ७ ॥

इति धैवतीकपालपदानि ।

---

सरसगजचर्मपटम् ॥ १ ॥ भीमभुजङ्गमानद्धजटम् ॥ २ ॥ कह कह हुंकृतंविकृतमुखम् ॥ ३ ॥ नमं तं शिवं हरमजितम् ॥ ४ ॥ चन्द्रचूडमजेयम् ॥ ५ ॥ कपालमण्डितमुकुटम् ॥ ६ ॥ कामदर्पविध्वंसकरम् ॥ ७ ॥ नम तं हरं परमशिवम् ॥ ८ ॥

इति नैषादीकपालपदानि ॥

---

इति सप्त कपालपदानि ।

---

अथ जात्युपयोगिनी( नीं ) गीतिः(तिं) सामान्यविशेषलक्षणाभ्यां दर्शयति—

वर्णाद्यलंकृता गानक्रिया पदलयान्विता ।
गीतिरित्युच्यते सा च बुधैरुक्ता चतुर्विधा ॥ १५ ॥
मागधी प्रथमा ज्ञेया द्वितीया चार्धमागधी ।
संभाविता च पृथुलेत्येतासां लक्ष्म चक्ष्महे ॥ १६ ॥

**वर्णाद्यलंकृतेत्यादिना** । वर्णाद्यलंकृता वर्णाः स्थाय्यादयश्चत्वारः। आदिशब्देनालंकारा गृह्यन्ते । ते च प्रसन्नादयस्त्रिषष्टिः । प्रागुक्तलक्षणैस्तैर्वर्णादिभिरलंकृता भूषिता यस्यां गीत्यां यो ( ये ) वर्णो( र्णा ) येऽलंकाराश्चोदितास्तैर्युक्तेत्यर्थः । पदलयान्विता पदानि सुप्तिङन्तानि । लया विलम्बितमध्यद्रुतास्त्रयो वक्ष्यमाणलक्षणाः पदैश्च यथायोगं लयैश्चान्विता । एवं विशिष्टा गानक्रिया गीतिरित्युच्यते । इति सामान्यलक्षणम् । तद्विशेषांश्चतुर्धा विभजते—**सा चेत्यादिना** । ताः क्रमेण लक्षयितुमाह-**अथा(एता)सामिति** ॥१५॥१६॥

मागधीं लक्षयति—

गीत्वा कलायामाद्यायां विलम्बितलयं पदम् ।
द्वितियायां मध्यलयं तत्पदान्तरसंयुतम् ॥ १७ ॥
सतृतीयपदे ते च तृतीयस्यां द्रुते लये ।
इति त्रिरावृत्तपदां मागधीं जगदुर्बुधाः ॥ १८ ॥

**गीत्वेत्यादिना** । उदाहरणार्थं तावच्चतुर्मात्रिकाः कलाः कल्पनीयाः । तत्राऽऽद्यायां विलम्बितलयं विवक्षितकलाचतुर्गुणितविश्रान्तिकालं पदम् । अत्र देवमित्यक्षरद्वयात्मकं पदं गीत्वैकैकाक्षरे मात्राद्वयमितं गीत्वा द्वितीयायां कलायां मध्यलयं द्विगुणविश्रान्तिकालपदान्तरसंयुतं तं रुद्रामिति पदान्तरेण युक्तं तत्प्रथ-

१ ङ. हुंकृतिवि° । २ घ. °तविकृटमु° । ३ ख. ग. °मत शि° । ४ ख. चण्डतुण्डम° । ङ चण्डमुण्डम° ।

मकलागीतं देवमिति पदं गीत्वेत्यनुषञ्जनीयम् । गीत्वा देवं रुद्रमिति पदद्वयं द्विस्वरात्मिकयैकस्वरात्मिकया वा मितैकैकाक्षरं गायेदित्यर्थः । तृतीयस्यां कलायां द्रुते लये विलम्बितमध्यापेक्षया शीघ्रतमायां क्रियाविश्रान्तौ सतृतीयपदे वन्दे, इति तृतीयपदसहिते ते च द्वितीयकलागीते देवं रुद्रमिति पदे । चकारादत्रापि गायेदित्यनुषङ्गः । अस्यां कलायां प्रथममात्रया देवमिति, द्वितीयया रुद्रमिति, तृतीयया वमिति, चतुर्थ्या दे, इति योजयित्वा गायेदित्यर्थः । इत्युक्तप्रकारेण त्रिरावृत्तपदं( दां ) कलात्रये देवमिति पदस्य त्रिरावृत्तत्वात्त्रिरावृत्तपदां गीतिमित्यध्याहर्तव्यम् । बुधाः संगीतशास्त्रज्ञा मागधीं जगदुः ॥ १७ ॥ १८ ॥

उदाहरणम्—

| मागा | | माधा |
|---|---|---|
| दे० | | वं० |

| धनि | धनि | सनि | धा |
|---|---|---|---|
| दे० | वं० | रु० | द्रं |

| रिग | रिग | मग | रिसा |
|---|---|---|---|
| देवं | रुद्रं | वं० | दे० |

अत्र लिखितोदाहरणादन्यत्राप्येवमेवोहनीयम् । अस्या मगधदेशोद्भवत्वान्मागधीति निरुक्तिर्मतङ्गोक्ता ।

अर्धमागधीं लक्षयति—

**पूर्वयोः पदयोरर्धे चरमे द्वियंदोदिते ।**
**तदाऽर्धमागधीं प्राहुः**

**यथा—**

| मा | री | गा | सा |
|---|---|---|---|
| दे | ० | वं | ० |

| सा | सा | धा | नी |
|---|---|---|---|
| वं | रु | द्रं | ० |

| पा | धा | पा | मा |
|---|---|---|---|
| द्रं | वं | दे | ० |

**द्विरावृत्तपदां परे ॥ १९ ॥**

**यथा—**

| मा | मा | मा | मा |
|---|---|---|---|
| दे | ० | वं | ० |

| धा | सा | धा | नी |
|---|---|---|---|
| दे | वं | रु | द्रं |

| पा | निध | मा | मा |
|---|---|---|---|
| रु | द्रं० | वं | दे |

**पूर्वयोरिति** । उक्तेषु त्रिषु पदेषु पूर्वयोः पदयोर्देवं रुद्रमित्येतयोश्चरमेऽर्धे देवंपदस्य चरममर्धं वमिति । रुद्रंपदस्य चरममर्धं द्रमिति । ते वं द्रं, इत्युभे अर्धे यदा द्विरेव द्वयम्, उदिते उच्चारिते भवतस्तदाऽर्धमागधीं प्राहुः । अयमर्थः-प्रथमकलायां मागध्युक्तप्रकारेण देवमितिपदमुच्चार्य द्वितीयायां वं रुद्रमित्युच्चारयेत् । ततस्तृतीयायां द्रं वंदे, इत्युच्चारयेत् । एवं पूर्वपदद्वयचरमार्धयोर्द्विरावृत्तिर्भवतीति । **द्विरावृत्तपदां पर इति** । पर आचार्या द्विरावृत्तपदां प्रथमकलायामुक्तस्य देवमिति पदस्य द्वितीयकलायां देवं रुद्रमिति द्विरावृत्तिस्तृतीयायां रुद्रं वंदे, इति रुद्रपदस्य द्विरावृत्तिः । एवं द्विरावृत्तपदामर्धमागधीं प्राहुः । मतङ्गस्त्वेनां मागधीभेदत्वेनाऽऽह । यथा-' अन्ये तु द्विर्निवृत्तां मागधीं पठन्ति ' इति । अथो अर्धमागध्या मागध्यन्तर्भूतत्वात्क्वचिन्मागधीस्थानेऽर्धमागधीप्रयोगोऽपि संमत एव । अत्र पदावृत्त्या पुनरुक्तिदोषं पदार्थभागेनानर्थकत्वं वाऽऽशङ्क्य मतङ्गेन परिहृतम् । यथा-' सामवेदे गीतप्रधान आवृत्तिष्वर्था नाऽऽद्रियन्ते ' इति । तथा वेदेनैवोदाहृतं च-उदुत्यं जातवेदसमित्यत्र वेदशब्दपर्यन्तमावृत्तिपरम्परया गीत्वा जातवेदसामिति गीयते । पदखण्डनादर्थभङ्गो भवतीत्यपापीति । अतः सामवेदप्रकृतिके संगीते गानवशात्क्वचित्पदानां पुनरुक्तिरर्थोक्तिश्च न दोषायेति मन्तव्यम् ॥ १९ ॥

संभावितां लक्षयति-

**संक्षेपितपदा भूरिगुरुः संभाविता मता ॥**

**यथा-**

| धा | मा | री | गा |
|---|---|---|---|
| भ | ० | क्त्या | ० |

| री | गा | सा | सा |
|---|---|---|---|
| दे | ० | वं | ० |

| नी | धा | सा | नी |
|---|---|---|---|
| रु | ० | द्रं | ० |

| धा | नी | मा | मा |
|---|---|---|---|
| वं | ० | दे | ० |

**संक्षेपितपदेति** । संक्षेपितानि पदानि यस्यां सा तथोक्ता । अत्र प्रतिकलं यावत्स्वरमक्षरप्रयोगः पदानां विस्तरः । तत्संकोचः संक्षेपः । संक्षेपशब्दा-

त्करोतीत्यादिना निष्ठायां संक्षेपितेति रूपम् । एतेन कलागतस्वरेषु कतिपया-नामेवाक्षरयोगः कर्तव्य इत्युक्तं भवति । भूरिगुरुर्भूरीणि प्रचुराणि गुर्वक्षराणि यस्यां सा । तेन क्वचिद्विरललघ्वक्षरप्रयोगोऽप्यङ्गीकृतो भवति । तथा चतुर्मात्रिकासु कलासु प्रथमकलागतपञ्चस्वराणां प्रथमं युक्तपरतया गुरुणा भकारेण तृतीयस्वरं क्त्येति गुरुणा योजयित्वेतरस्वरत्रयं तच्छेषत्वेन गायेत् । द्वितीय-कलागतचतुःस्वराणां प्रथमतृतीयौ देवमितिगुर्वक्षराभ्यां तथा तृतीयकलागत-चतुःस्वराणां च प्रथमतृतीयौ रुद्रमित्यक्षराभ्यां तथा चतुर्थकलागतचतुःस्वराणां प्रथमतृतीयौ वन्दे, इत्यक्षराभ्यां च योजयित्वेतरस्वरांस्तत्तदक्षरशेषतया गायेत् । भक्त्या देवं रुद्रं वन्दे, इति संक्षेपितानि पदानि । एवं लिखितोदाहरणादन्य-त्राप्यूह्यम् । कलास्वरविशेषास्तु यां कांचिज्जातिमाश्रित्य तत्तत्कलागताः प्रयो-क्तव्याः । एवं गीयमाना गीतिः संभाविता मता । ' संक्षिप्तता संभाव्यते पदानां यत्र सा संभाविता ' इति निरुक्तिर्मतङ्गोक्ता ।

पृथुलां लक्षयति—

**भूरिलघ्वक्षरपदा पृथुला संमता सताम् ॥ २० ॥**

यथा—

| मा | गा | री | गा |
|---|---|---|---|
| सु | र | न | त |
| सा | धनि | धा | धा |
| ह | र० | प | द |
| धा | सा | धा | नि |
| यु | ग | लं | ० |
| पा | निधप | मा | मा |
| प्र | ण०० | म | त |

**भूरिलघ्वक्षरपदेति** । स्पष्टार्थः । सुरनतहरपदयुगलं प्रणमतेतिकलाचतुष्ट-यपदाभिप्रायेण प्रतिस्वरं प्रयुक्ताक्षराणि भूयस्त्वात्पदग्रामस्य पृथुलेत्युक्तेति मत-ङ्गोक्ता निरुक्तिः ॥ २० ॥

एवं पदाश्रितत्वेन गीतीर्लक्षयित्वा तालाश्रितत्वेनाप्येता लक्षयति—

**यद्वा यथाक्षरे[1] युग्मे गुर्वोः प्रथमयोर्यदा ।**
**एकैकं चित्रमार्गादि प्रयुज्य च गुणात्मकम्[2] ॥ २१ ॥**

१ ख. ग. °क्षरैर्युग्मैर्गुर्वोः । २ ख. गुणान्वितम् । ग. चगणान्वितम् ।

मात्राभिरष्टभिर्युक्तं दक्षिणे ध्रुवकादिभिः ।
प्रयुज्यते तदा गीतिर्मागधीत्यभिधीयते ॥ २२ ॥

**यद्वेत्यादिना** । यथाक्षरे गुरुद्वये लघुप्लुतात्मके युग्मे चञ्चत्पुटे प्रथमयोः प्रथमद्वितीययोर्गुर्वोर्द्विमातृकयोर्मध्य एकैकं गुरुं चित्रमार्गार्हे स्वत एव मात्राद्वयात्मकत्वाच्चित्रमार्गप्रयोगयोग्यं प्रयुज्य ध्रुवकापतितायुक्तं कृत्वा ततश्चगणात्मकम् । चगणचतुर्मात्रिको मात्रागणविशेषः । तथा च वक्ष्यति—तद्गणाः कुपचास्तदाविति । स चगण आत्मा यस्य तत्तथोक्तम् । प्रयुज्येत्यावर्तनीयम् । चगणात्मकं प्रयुज्य द्विकलीकृत्य चतुर्मात्रात्मकमेकैकं गुरुं वार्तिकमार्गाश्रयणाद्ध्रुवकासर्पिणीपताकापतिताख्याभिः कराक्रियाभिः प्रत्येकं प्रयोक्तव्यमित्यर्थः । ततो दक्षिणे दक्षिणमार्गे ध्रुवकादिभिर्ध्रुवकासर्पिणीकृष्णापद्मिनीविसर्जिताविक्षिप्तापताकापतिताख्याभिर्वक्ष्यमाणलक्षणाभिः । अत्रोपाध्युपाधिमतोरभेदोपचाराद्ध्रुवकादीनां मात्राव्यवहारो द्रष्टव्यः । ताभिर्युक्तमेकैकं गुरुं प्रत्येकं चतुष्कलीकृत्येत्यर्थः । यदा प्रयुज्यत इति संबन्धः । एवं यदा प्रयुज्यते तदा मागधी गीतिरित्यभिधीयते । गुरुद्वयस्य त्रिरावृत्तित्वादित्यभिप्रायः ॥ २१ ॥ २२ ॥

अथार्धमागधीं लक्षयति—

तृतीयं लघु युग्मस्य[1] छगणार्धयुतं यदा ।
आद्याभ्यामन्तिमाभ्यां च मात्राभ्यां संप्रयुज्यते ॥ २३ ॥
ततः प्लुतं सार्धगणयुक्तं कृत्वा प्रयुज्यते ।
ध्रुवकादिभिरष्टाभिर्द्विरुक्तान्त्यद्वयेन च ॥ २४ ॥
तदाऽर्धमागधी ते द्वे तद्वत्तालान्तरेष्वपि ।
संभाविता भूरिगुरुर्द्विकले वार्तिके पथि ।
चतुष्कले भूरिलघुर्दक्षिणे पृथुला मता ॥ २५ ॥

इति प्रथमे स्वराध्यायेऽष्टमं गीतिप्रकरणम् ॥ ८ ॥

---

इति श्रीमदनवद्यविद्याविनोदश्रीकरणाधिपतिश्रीसोढलदेवनन्दननिःशङ्कश्रीशार्ङ्गदेवविरचिते संगीतरत्नाकरे स्वरगताध्यायः प्रथमः समाप्तः ॥ १ ॥

---

**तृतीयमिति** । युग्मस्य चञ्चत्पुटस्य । यथाक्षरस्येति शेषः । तृतीयं तालावयवत्वेन गुरुद्वयानन्तरगं लघुच्छगणार्धयुतम् । छगणः षण्मात्रिको मात्रागणविशेषः । तस्यार्धं मात्रात्रयं तेन युतं स्वेन सह चतुर्लघ्वात्मकं कृतमित्यर्थः । आद्याभ्यां मात्राभ्यां ध्रुवकासर्पिणीभ्यामन्तिमाभ्यां च पताकापतिताभ्यां चेत्यर्थः ।

---

१ ख. ग. °स्य चरणा° । घ. °स्य चगणा° ।

एवं यदा संप्रयुज्यते ततोऽनन्तरं प्लुतं चश्चत्पुटान्तिमावयवं प्लुतं सार्धगणयुक्तम्। अत्र सामान्यगणशब्देन संनिहितश्छगणो गृह्यते । अर्धशब्देन च तदर्धं गृह्यते । अर्धसहितः सार्धमात्रात्रयसहितो गण इत्यर्थः । तेन सार्धगणेन युक्तच्छगणस्य षण्मात्राः । अर्धस्य त्रिमात्राः । एवं नवभिर्मात्राभिर्योगे त्रिमात्रिकस्य प्लुतस्य द्वादशमात्रात्मकत्वं भवति । प्लुतमेतद्रूपं कृत्वा ध्रुवकादिभिरष्टाभिः क्रमेण प्रयोगे सत्यवशिष्टमात्राचतुष्टयं द्विरुक्तान्त्यद्वयेन चेत्यन्त्ययोर्मात्रयोः पताकापतितयोर्द्वयोर्द्विरुक्तं द्विरावृत्तं द्विरुक्तं च तदन्त्यद्वयं च तेन च यदा प्रयुज्यते। अयमर्थः—अवशिष्टं मात्राचतुष्टयं पताकापतिताभिः क्रमेण प्रयुज्यते चेद्य(त्त)दाऽर्धमागधीत्यभिधीयते। ते द्वे मागध्यर्धमागध्यौ तालान्तरेष्वपि पञ्चपाण्यादिष्वपि तद्वच्चच्चत्पुटे यथा तथा योजनीये[इ]त्यर्थः। संभावितापृथुलयोर्लक्ष्मणी स्पष्टार्थे । एता गीतयः षाड्ज्यादिषु चित्रादिमार्गवशाद्यथास्वनियमं प्रयोक्तव्या इत्यवगन्तव्यम् ॥२३॥२४॥२५॥

भूमौ स्वरगताख्यातः(तोऽक्शास्त) कल्लिनाथः सुधीः स्वयम् ।
इति स्वरगताध्यायं व्याख्यालक्षणलक्ष्यवित् ॥ १ ॥

इतिश्रीमदभिनवभरताचार्यरायवयकार(?)तोडरमल्लक्ष्मणाचार्यनन्दनचतुरकल्लिनाथविरचिते संगीतरत्नाकरकलानिधौ प्रथमः स्वराध्यायः समाप्तः ॥ १ ॥

---

## अथ द्वितीयो रागविवेकाध्यायः ।

तत्राऽऽदिमं ग्रामरागोपरागरागभाषाविभाषान्तरभाषाविवेकाख्यं प्रकरणम् ।

स्वरगतप्रतिपादितजातिजन्यत्वेन प्रसक्तान्ग्रामरागादींस्तदनन्तरं विवेक्तुं प्रतिजानीते—

**अथ ग्रन्थेन संक्षिप्तप्रसन्नपदपङ्क्तिना ।**
**निःशङ्को निखिलं रागविवेकं रचयत्यमुम् ॥ १ ॥**

**अथ ग्रन्थेनेति** । संक्षिप्तप्रसन्नपदपङ्क्तिना । प्रसन्नानि शीघ्रं स्वाभिधेयबोधकानि च तानि पदानि तेषां पङ्क्तयो वाक्यानि । संक्षिप्ताः संकुचिताः प्रसन्नपदपङ्क्तयो यस्मिन्निति । अयमर्थः। बृहद्देशादिषु यत्र षड्जो न्यासः षड्जोंऽशक इत्यादिभिर्बहुभिर्वाक्यैर्योऽर्थोऽभिहितः स एवात्र षड्जग्रहांशन्यासोऽयमित्यादिभिः प्रसन्नैः कतिपयैर्वाक्यैराभिधीयत इति । अथवा संक्षिप्तानीति पदविशेषणं तेषां पङ्क्तयो यस्मिन्निति व्यधिकरणे बहुव्रीहिः । पदानां संक्षिप्तत्वं नाम ग्रन्थान्तरेषु षड्जग्रहांशन्यास इत्यादीत्युक्तेः । अत्र साद्यन्ता

---

१ च. °मेवं भूतं कृ° । २ ख. °सक्तैः क° ।

इत्यादिनाऽभिधानं यथायोगमुभयथाऽपि योजनीयम् । एवंभूततयाऽऽत्मना क्रियमा-
णेन ग्रन्थेन निखिलं समस्तं रागविवेकं रागाणां दशविधानां विवेकोऽसंकीर्णतया परस्परभेदस्तं रचयति निबध्नाति । अमुमित्यनुपदं वक्ष्यमाणस्य बुद्ध्यारूढतया पुरोवर्तिना रूपेण निर्देशः । निःशङ्कोऽहमनुपदमेव रागविवेकं रचयामीति संसृष्टोऽर्थः। दशविधानामेतेषां रागत्वं रञ्जनात् । रञ्जनं च रज्यते येन जनचित्तमिति करणव्युत्पत्त्या वा जनचित्तानि रञ्जयतीति कर्तरि वा ' अकर्तरि च कारके संज्ञायाम् ' इति सूत्रेण कर्तर्यप्यभ्यनुज्ञानादुभयार्थो घटत इत्यभिसंधायोक्तं मतङ्गेन ।

यथा—" स्वरवर्णविशिष्टेन ध्वनिभेदेन वा जनः ।
रज्यते येन कथितः स रागः संमतः सताम् " ।

अथवा—"योऽसौ ध्वनिविशेषस्तु स्वरवर्णविभूषितः ।
रञ्जको जनचित्तानां स रागः कथितो बुधैः " इति ।

स एव रागशब्दस्य रूढत्वादिना प्रयोगमप्याह—

अत एव—" अश्वकर्णादिवद्रूढो यौगिको वाऽधिमन्थवत् ।
योगरूढश्च वा रागो ज्ञेयः पङ्कजशब्दवत् " इति ।

रागशब्दस्य केवलरूढत्वं तु येन केनचिद्रागेण यः कश्चन न रज्यते तं प्रति तस्यारञ्जकत्वादयं रागो मह्यं न रोचत इति तद्वाक्यप्रयोगे द्रष्टव्यम् ॥ १ ॥

तत्राऽऽदौ ग्रामरागाः पञ्चविधगीतिभेदाश्रयणेन पञ्चधा भिद्यन्त इत्याह—

**पञ्चधा ग्रामरागाः स्युः पञ्चगीतिसमाश्रयात् ।**
**गीतयः पञ्च शुद्धाद्या भिन्ना गौडी च वेसरा ॥ २ ॥**
**साधारणीति शुद्धा स्यादवक्रैर्ललितैः स्वरैः ।**
**भिन्ना सूक्ष्मैः स्वरैर्वक्रैर्मधुरैर्गमकैर्युता ॥ ३ ॥**
**गाढैस्त्रिस्थानगमकैरो(रु)हाटीललितैः स्वरैः ।**
**अखण्डितस्थितिः स्थानत्रये गौडी मता सताम् ॥ ४ ॥**
**ओ(उ)हाटीकम्पितैर्मन्द्रैर्द्रुतद्रुततरैः स्वरैः ।**
**हकारोकारयोगेन(ण) हन्न्यस्ते चिबुके भवेत् ॥ ५ ॥**

**पञ्चधा ग्रामरागाः स्युरिति** । ताः पञ्चगीतीरुद्दिशति—**गीतय इति** । क्रमेण तासां लक्षणान्याह—**शुद्धा स्यादित्यादिना** । अवक्रैर्ऋजुभिः समैरित्यर्थः । ललितैर्मनोहरैः स्वरैर्युक्तत्वात्तदर्थतया शुद्धा स्यात् । वक्रैर्विषमैः । अत एव सूक्ष्मैर्द्रुतोच्चारितैः । स्वरैर्मधुरैर्गमकैश्च वक्ष्यमाणेषु पञ्चदशसु गमकेषु वक्रसूक्ष्मस्वरोचितत्वान्मधुरैः श्लाघ्यैः स्फुरितादिभिर्गमकैश्च युता वक्रसूक्ष्मस्वरत्वाद्भि-

१ च. हृदिस्थे चि° ।

त्येत्यर्थः । गाढैर्निबिडैः । त्रिस्थानगमकैर्मन्द्रमध्यतारेषु प्रयुक्तैर्यथोचितैर्गमकैः । अ(उ)हाटीललितैः, अ(उ)हाटचा ललितैः स्वरैश्च स्थानत्रयेऽखण्डितस्थितिरविच्छिन्नावस्थाना गीतिर्गौडीति सतां मता । अ(उ)हाटीलक्षणनिरुक्तिस्तु चिबुके हन्व्यस्ते सतीति मन्द्रस्वरपरम्पराप्रयोगे प्रयत्नोक्तिः । हकारोकारयोगेनो-(णो)पलक्षितैः । तदा हकारोकारानुकारप्रतीतिर्नप्र(तिर्भ)वतीति । ननु( तु ) साक्षात्तावेवोच्चारणीयावित्यर्थः । एतेन तूकारहकारावटति गच्छतीत्यो(त्यु)हाटीपदनिरुक्तिः सूचिता । एवं प्रयत्ने क्रियमाणे मृदु कोमलं यथा भवति तथा द्रुततरैरधराधरं शीघ्रैः कम्पितैः कम्पिताख्यगमकयुक्तैर्मन्द्रैः स्वरैरो(रु)हाटी भवेदिति लक्षणार्थः । गौडप्रियत्वाद्गौडीति संज्ञाऽवगन्तव्या ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

**वेगवद्भिः स्वरैर्वर्णचतुष्केऽप्यातिरक्तितः ।**
**वेगस्वरा रागगीतिर्वेसरा चोच्यते बुधैः ॥ ६ ॥**

**वर्णचतुष्केऽपीति** । स्थाय्यादिवर्णचतुष्टयेऽप्यतिरक्तितो रक्त्यतिशयवशाद्वेगवद्भिः शीघ्रप्रयोगवद्भिः स्वरैर्युता रागगीती रागाश्रयभूता गीतिर्वेगस्वरेत्यन्वर्थसंज्ञिका बुधैर्मतङ्गादिभिर्वेगस्वरा च वेसरसंज्ञिका चोच्यते । वेगस्वरेत्यत्र गवकारयोः परित्यागे स्वरसाम्याद्वेसरेति भवतीत्यर्थः ॥ ६ ॥

**चतुर्गीतिगतं लक्ष्म श्रिता साधारणी मता ।**
**शुद्धादिगीतियोगेन रागाः शुद्धादयो मताः ॥ ७ ॥**

चतुर्गीतिगतं समनन्तरोक्तशुद्धादिगीतिचतुष्टयगतं लक्ष्म लक्षणं श्रिता मिश्रणादाश्रिता । अतः साधारणेत्यन्वर्था मता । शुद्धादिगीतियोगेन शुद्धादिगीतिभिर्योग आश्रयाश्रयिभावलक्षणसंबधस्तेन । रागाः, अत्र रागा इति ग्रामरागा एव विवक्षिताः । शुद्धादयो मताः । आश्रयाश्रयिणोरभेदोपचाराच्छुद्धादिव्यपदेशेन वक्ष्यन्त इत्यर्थः । ननु पूर्वोक्ताभ्यो मागध्यादिगीतिभ्योऽधुनोक्तानां शुद्धादिगीतीनां को भेद इति चेत्। उच्यते । मागध्यादयः प्राधान्येन पदतालाश्रिताः शुद्धादयस्तु प्राधान्येन स्वराश्रिता इतीह ग्रन्थकार एताः पञ्च गीतीर्दुर्गामतानुसारेणालक्षयत् । मतङ्गस्तु भाषाविभाषाभ्यां सहिताः सप्त गीतीराचष्ट। भरतः पुनर्मागध्यादयश्चतस्र एव गीतीरुक्तवान् । भाषाविभाषान्तरभाषाख्यास्ति×
............ ॥ ७ ॥

**(*षड्जग्रामसमुत्पन्नाः षड्जकैशिकमध्यमाः ।**
**शुद्धसाधारितः षड्जग्रामो ग्रामे तु मध्यमः ॥ ८ ॥**

×अतोऽग्रे त्रुटितेयं टीका सर्वेष्वपि पुस्तकेषु । *धनुश्चिह्नान्तर्गतग्रन्थस्य टीका पुस्तकेषु त्रुटिता ।

१ घ. °ष्केष्वति° । २ च. प्रोच्यते ।

पञ्चमो मध्यमग्रामः षाडवः शुद्धकैशिकः ।
शुद्धाः सप्तेति भिन्नाः स्युः पञ्च कैशिकमध्यमः ॥ ९ ॥
भिन्नषड्जश्च षड्जाख्ये मध्यमे तानकैशिकौ ।
भिन्नपञ्चम इत्येते गौडकैशिकमध्यमः ॥ १० ॥
गौडपञ्चमकः षड्जे मध्यमे गौडकैशिकः ।
इति गौडास्त्रयः षड्जे टक्कवेसरषाडवौ ॥ ११ ॥
ससौवीरीमध्यमे तु बोट्टमालवकैशिकौ ।
मालवः पञ्चमान्तोऽथ द्विग्रामष्टक्ककैशिकः ॥ १२ ॥
हिन्दोलोऽष्टौ वेसरास्ते सप्त साधारणास्ततः ।
षड्जे स्याद्रूपसाधारः शको भम्माण[1]पञ्चमः ॥ १३ ॥
मध्यमे नर्तगान्धारपञ्चमौ षाड्जकैशिकः ।
द्विग्रामः ककुभस्त्रिंशद्ग्रामरागा अमी मताः ॥ १४ ॥
अष्टोपरागास्तिलकः शकादिष्टक्कसैन्धवः ।
कोकिला पञ्चमो रेवगुप्तः पञ्चमषाडवः ।
भावनापञ्चमो[2] नागगान्धारो[3] नागपञ्चमः ॥ १५ ॥
श्रीरागनट्टौ बङ्गालो भासमध्यमषाडवौ ।
रक्तहंसः कोल्हहासः प्रसवो भैरवध्वनिः ॥ १६ ॥
मेघरागः सोमरागकामोदौ चाम्र[4]पञ्चमः ।
स्यातां कन्दर्पदेशाख्यौ ककुभान्तश्च कैशिकः ॥ १७ ॥
नट्टनारायणश्चेति रागा विंशतिरीरिताः ।
सौवीरः ककुभष्टक्कः पञ्चमो भिन्नपञ्चमः ॥ १८ ॥
टक्ककैशिकहिन्दोलबोट्टमालवकैशिकाः ।
गान्धारपञ्चमो भिन्नषडजो वेसरषाडवः ॥ १९ ॥
मालवः पञ्चमान्तश्च तानः पञ्चमषाडवः ।
भाषाणां जनकाः पञ्चदशैते याष्टिकोदिताः ॥ २० ॥
भाषाश्चतस्रः सौवीरे सौवीरी वेगमध्यमा ।
साधारिता च गान्धारीककुभे भिन्नपञ्चमी ॥ २१ ॥

............ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

१ घ. भस्माण° । २ ङ. °मो राग° । ३ ङ. °रो राग° । ४ घ. चाम्रप° । ङ. चाप्रप° ।

काम्बोजी मध्यमग्रामा रगन्ती मधुरी तथा ।
शकमिश्रेति षट्तिस्रो विभाषा भोगवर्धनी ॥ २२ ॥
आभीरिका मधुकरी तथैकान्तरभाषिका ।
शालवाहनिकाटक्के त्रवणा त्रवणोद्भवा ॥ २३ ॥
वैरञ्जी मध्यमग्रामदेहा मालववेसरी ।
छेवाटी सैन्धवी कोलाहला पञ्चमलक्षिता ॥ २४ ॥
सौराष्ट्री पञ्चमी वेगरञ्जी गान्धारपञ्चमी ।
मालवी तानवलिता ललिता रविचन्द्रिका ॥ २५ ॥
ताना वाहेरिका दोह्या वेसरीत्येकविंशतिः ।
भाषाः स्युरथ देवारवर्धन्यान्ध्री च गुर्जरी ॥ २६ ॥
भावनीति विभाषाः स्युश्चतस्रः पञ्चमे पुनः ।
कैशिकी त्रावणी तानोद्भवाऽऽभीरी च गुर्जरी ॥ २७॥
सैन्धवी दाक्षिणात्यान्ध्री माङ्गली भावनी दश ।
इति भाषाविभाषे द्वे भम्माण्यन्धालिके ततः ॥ २८ ॥
चतस्रः पञ्चमे भिन्ने भाषाधैवतभूषिता ।
शुद्धा भिन्ना च वराटी विशालेत्यथ कौशली ॥२९॥
विभाषा मालवाभिन्नवलिते टक्ककैशिके ।
भाषे द्वे द्राविडीत्येका विभाषा प्रेङ्खके नव ॥ ३० ॥
भाषाः स्युर्वेसरी चूतमञ्जरी षड्जमध्यमा ।
मधुरी भिन्नपौराली गौडी मालववेसरी ॥ ३१ ॥
छेवाटी पिञ्जरीत्येका बोट्टे भाषा तु माङ्गली ।
बाङ्गाली माङ्गली हर्षपुरी मालववेसरी ॥ ३२ ॥
खञ्जिनी गुर्जरी गौडी पौराली चार्धवेसरी ।
शुद्धा मालवरूपा च सैन्धव्याभीरिकेत्यमूः ॥ ३३ ॥
भाषास्त्रयोदश ज्ञेया विज्ञैर्मालवकैशिके ।
विभाषे द्वे तु काम्बोजी तद्वद्देवारवर्धनी ॥ ३४ ॥
गान्धारपञ्चमे भाषा गान्धारीभिन्नषड्जका ।
गान्धारवल्ली कुच्छेल्ली स्वरवल्ली निषादिनी ॥ ३५ ॥

..........................॥२२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥२७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥

१ ङ. °गराजी गा° । २ ख. कौसली । ३ ख. °री भूत° । घ. °री पूत° । ४ च. खञ्जनी ।

रवणा मध्यमा शुद्धा दाक्षिणात्या पुलिन्दिका ।
तुम्बुरा षड्जभाषा च कालिन्दी ललिता ततः ॥३६॥
श्रीकण्ठिका च बाङ्गाली गान्धारी सैन्धवीत्यमूः ।
भाषाः सप्तदश ज्ञेयाश्चतस्रस्तु विभाषिकाः ॥ ३७ ॥
पौराली मा[2]लवा कालिन्द्यपि देवारवर्धनी ।
वेसरे षाडवे भाषे द्वे[3] बाह्या बाह्यषाडवा ॥ ३८ ॥
विभाषे पार्वतीश्रीकिण्ठ्यथ मालवपञ्चमे ।
भाषास्तिस्रो वे[4]दवती भाविनी च विभाविनी ॥ ३९ ॥
ताने तानोद्भवा भाषा भाषापञ्चमषाडवे ।
पोता भाषांशकामेके रेवगुप्त विदुर्विदुः ॥ ४० ॥
विभाषा पल्लवीभास[5]वलिता किरणावली ।
शङ्कायावलितेत्येतास्तिस्रस्त्वन्तरभाषिकाः ॥ ४१ ॥
चतस्रोऽनुक्तजनका बृहद्देश्यामिमाः स्मृताः ।
एवं षण्णवतिर्भाषा विभाषा विंशतिः स्मृताः ॥ ४२ ॥
चतस्रोऽन्तरभाषाः स्युः शार्ङ्गदेवस्य संमताः ।
भाषा मुख्या स्वराख्या च देशाख्या चोपरागजा ॥४३॥
चतुर्विधा मतङ्गोक्ता मुख्याऽन्योपजीविनी ।
स्वरदेशाख्यया ख्याता स्वराख्या देशजा क्रमात् ॥४४॥
अन्योपरागजाताभ्यो याष्टिकेनोदिताः पुनः ।
संकीर्णदेशजामूलाछायामात्रेतिनामभिः ॥ ४५ ॥
शुद्धाऽऽभि(भी)री रगन्ती च त्रिधा मालववेसरी ।
मुख्या षाडिति शेषास्तु सुज्ञाताः स्फुटलक्षणाः ।
नामसाम्यं तु कासांचिद्भिन्नानामपि लक्ष्मतः ॥ ४६ ॥

.............................. ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९
॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥

इति द्वितीये रागविवेकाध्याये ग्रामरागोपरागरागभाषाविभाषान्तरभाषाविवेकाख्यं प्रथमं प्रकरणम् ॥ १ ॥

---

१ ख. कालिङ्गी । २ ङ. मालवी । ३ ख. द्वे नाम्ये बा° । ङ. द्वे नाद्या बा° । ४ च. वेगवती । ५ ग. °भसतिका कि° । ६ ग. °शतिस्तथा ॥ ४२ ॥

अथ प्रसिद्धरागभाषाविभाषालक्षणाख्यं द्वितीयं प्रकरणम् ।

---

अथ रागाङ्गभाषाङ्गक्रियाङ्गोपाङ्गनिर्णयम् ।
केषांचिन्मतमाश्रित्य कुरुते सोढलात्मजः ॥ १ ॥
रञ्जनाद्रागता भाषा रागाङ्गादेरपीष्यते ।
देशीरागतया प्रोक्तं रागाङ्गादि चतुष्टयम् ॥ २ ॥
प्रसिद्धा ग्रामरागाद्याः केचिद्देशीत्यपीरिताः ।
तत्र पूर्वप्रसिद्धानामुद्देशः क्रियतेऽधुना ॥ ३ ॥
शंकराभरणो घण्टारव आहंसदीपकौ ।
रीतिः पूर्णाटिका लाटी पल्लवीति बभाषिरे ॥ ४ ॥
रागाङ्गान्यष्ट गाम्भीरी वेहाटी खशिकोत्पली ।
गोल्ली नादान्तरी नीलोत्पली छायातरङ्गिणी ॥ ५ ॥
गान्धारगातिकारञ्जावित्येकादश मेनिरे ।
भाषाङ्गान्यथ भावक्रीस्वभावक्रीशिवाक्रियः ॥ ६ ॥
मरुकक्रीत्रिनेत्रक्रीकुमुदक्रीदनुक्रियः ।
ओजक्रीन्द्रक्रियो नागकृतिर्धन्यकृतिस्तथा ॥ ७ ॥
विपायकरी क्रियाङ्गानि द्वादशेति जगुर्बुधाः ।
त्रीण्युपाङ्गानि पूर्णाटो देवालश्च गुरुञ्जिका ॥ ८ ॥
चतुस्त्रिंशदिमे रागाः प्राक्प्रसिद्धाः प्रकीर्तिताः ।
अथाधुना प्रसिद्धानामुद्देशः प्रतिपाद्यते ॥ ९ ॥
मध्यमादिर्मालवश्रीस्त्रो(स्तो)डी बङ्गालभैरवौ ।
वराटी गुर्जरी गौडकोलाहलवसन्तकाः ॥ १० ॥
धान्यासीदेशिदेशाख्या रागाङ्गानि त्रयोदश ।
डौम्बकत्र्यासावरी वेलावली प्रथममञ्जरी ॥ ११ ॥
आडिका मोदिका नागध्वनिः शुद्धवराटिका ।
नट्टा कर्णाटबङ्गालौ भाषाङ्गानि नवाब्रुवन् ॥१२॥

.............................. ॥ १ ॥ २ ॥ ३ ॥ ४ ॥
५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

---

१ ड. °रवो हंसकदी° । २ ङ. रीतिकर्णाटिका ला° । ३ च. वेहारी । ४ ख. °शिखोत्प° । ५ ख. गान्धारिका वेगर° । ६ ख. °जक्रीदाक्रि° । ७ च. °ति निरूपिताः । त्री° । ८ ङ. °श्च कुरु° । ९ ख. प्रकाशिताः ।

क्रियाङ्गत्रितयं रामकृतिर्गौडकृतिस्तथा ।
देवक्रीरित्यथोपाङ्गसप्तविंशतिरुच्यते ॥१३॥
कौन्तली त्राविडी सैन्धव्यथ स्थानवराटिका ।
हतस्वरवराटी च स्यात्प्रतापवराटिका ॥ १४ ॥
वराट्यः षडिति छाया तुरुष्काद्ये तु तोडिके ।
महाराष्ट्री च सौराष्ट्री दक्षिणा द्राविडीत्यमूः ॥ १५ ॥
उक्ताश्चतस्रो गुर्जर्यो भुञ्छिका स्तम्भतीर्थिका ।
छायाप्रतापोपपदे वेलावल्यौ च भैरवी ॥ १६ ॥

.................. ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

कामोदा सिङ्घली छायानट्टा रामकृतिस्तथा ।
वल्लातिका च मह्लारी मह्लारो गौडकास्ततः ॥ १७ ॥
कर्णाटो देशवालश्च तौरुष्कद्राविडाविति ।
एतेऽधुना प्रसिद्धाः स्युर्द्वापञ्चाशन्मनोरमाः ॥ १८ ॥
सर्वेषामिति रागाणां मिलितानां शतद्वयम् ।
चतुःषष्ट्याधिकं[1] ब्रूते शार्ङ्गी श्रीकरणाग्रणीः ॥ १९ ॥

......रामकृती रूपावलापर्यायः । देशवालः केदारगौरः । तौरुष्को मालवगौड एव । एते रागाङ्गादयः कतिचित्प्रसिद्धत्वेनोद्दिष्टा अन्येऽप्यप्रसिद्धा बहवः संभवन्त्येव । तथाऽऽह मतङ्गः—'देशजानां रागाणामानन्त्यादनिबद्धत्वाच्च संख्या नास्तीति मन्तव्यम्' इति ॥ १७ ॥ १८ ॥ १९ ॥

उद्देशानुक्रमेण लक्षयितुमाह—

तत्राऽऽदौ ग्रामरागाणां केषांचिल्लक्ष्म चक्ष्महे ।
देशीरागादिहेतूनां शेषाणां तत्र तत्र तु ॥ २० ॥

**तत्राऽऽदाविति** । तत्र ग्रामरागादिषु मध्य आदौ प्रथमं केषांचिद्ग्रामरागाणाम् । ये तु देशीरागादिहेतवो न भवन्ति तेषामित्यर्थः । देशीरागादिहेतूनाम् । देशीरागाङ्गादयः । अत्राऽऽदिशब्देन भाषा विभाषा अन्तरभाषाश्च गृह्यन्ते । तेषां हेतवो जनकास्तादृशानां शेषाणां तत्र तत्र जन्यतत्तद्देशीरागादिलक्षणावसरे लक्ष्म चक्ष्मह इत्यावृत्तिः । अयमभिप्रायः—देशीरागादीनामेव केषांचिदधुना प्रसिद्धत्वात्तत्प्रयोगा लक्ष्यन्त इति ॥ २० ॥

---

[1] ख. ङ. °षष्ठ्याऽधि° ।

शुद्धसाधारितं लक्षयति—

**षड्जमध्यमया जातस्तारषड्जग्रहांशकः ।**
**निगाल्पो मध्यमन्यासः पूर्णः षड्जादिमूर्छनः ॥ २१ ॥**

**षड्जमध्यमयेत्यादिना** । षड्जमध्यमया संसर्गजाविकृतजात्या जनकभूतया जातो जनित इत्यर्थः । तारषड्जग्रहांशकस्तारषड्ज(ड्जो) ग्रहोंऽशश्च यस्येति बहुपदबहुव्रीहिः । अत्र रागेषु क्वचिद्ग्रहांशयोर्भिन्नत्वेनान्यतरोक्तावुभयग्रहक इति न्यायः सर्वत्र न प्रसरेदिति ग्रहांशयोरुभयोर्ग्रहणं कृतम् । अन्यतरोक्तावुभयग्रहन्यायस्तु जातिष्वेव नियतो द्रष्टव्यः । रागलक्षणेष्वपि यत्रान्यतरस्यैवोक्तिस्तत्राप्यनुसंधेयः । निगाल्पो निगाभ्यामल्पोऽल्पनिषादगान्धारवानित्यर्थः । षड्जादिमूर्छनः षाड्जग्रामिकत्वादुत्तरमन्द्रायुत इति यावत् ॥ २१ ॥

**अवरोहिप्रसन्नान्तालंकृतो रविदैवतः ।**
**वीररौद्ररसे गेयः प्रहरे वासरादिमे ॥ २२ ॥**

अवरोहिप्रसन्नान्तालंकृतः। अवरोहिणि वर्णे प्रसन्नान्तालंकारेण भूषितः॥२२॥

**विनियुक्तो गर्भसंधौ शुद्धसाधारितो बुधैः ॥ २३ ॥**

गर्भसंधौ । नाटकेषु मुखं प्रतिमुखं गर्भो विमर्ष उपसंहृतिरिति पञ्च संधयः । तेषु तृतीयो गर्भसंधिः । तस्मिन्विनियुक्तः ॥ २३ ॥

सकलरागसाधारणानालापादीँल्लक्षयति—

**ग्रहांशमन्द्रताराणां न्यासापन्यासयोस्तथा ।**
**अल्पत्वस्य बहुत्वस्य षाडवौडुवयोरपि ।**
**अभिव्यक्तिर्यत्र दृष्टा स रागालाप उच्यते ॥ २४ ॥**

**ग्रहांशेत्यादिना** । यत्र यस्मिन्स्वरसंनिवेशविशेषे ग्रहांशादीनामुक्तलक्षणानां स्वराणामल्पत्वादीनां तद्धर्माणां च । अत्रैतेषामेवेत्यवधारणं कर्तव्यम् । तेनास्य धात्वङ्गबद्धेभ्यः प्रबन्धेभ्यो वैलक्षण्यं विवक्षितं भवति । तेषां ग्रहांशादीनामेवाभिव्यक्तिः स्वरूपप्रकाशनमाविर्भाव इत्यर्थः । न तु स्वरूपप्रकटीकरणमात्रम् । अनेन वक्ष्यमाणलक्षणयाऽऽलप्तेरस्य भेदो दर्शितः । साऽभिव्यक्तिर्दृष्टा ज्ञाता भवति । तज्ज्ञैरिति शेषः । स स्वरसंनिवेशविशेषो रागालाप इत्युच्यते ॥२४॥

**रूपकं तद्वदेव स्यात्पृथग्भूतविदारिकम् ॥ २५ ॥**

रूपकं तद्वदेवाऽऽलापवदेव स्यात् । विशेषस्तु—**पृथग्भूतविदारिकमिति**। पृथग्भूता विच्छिद्य विच्छिद्य प्रयुक्तविदार्यो गीतखण्डानि यस्मिन्निति तथोक्तम् । अयमर्थः । अपन्यासेष्वविरम्यैकाकारेण प्रवृत्त आलापः । स एवापन्यासेषु विरम्य प्रवृत्तं रूपकमिति ॥ २५ ॥

**चञ्चत्पुटादितालेन मार्गत्रयविभूषिता ।**
**आक्षिप्तिका स्वरपदग्रथिता कथिता बुधैः ॥ २६ ॥**

**आक्षिप्तिकेति** । निबद्धगीतभेदः । सा च चञ्चत्पुटादितालेन । आदिशब्देन चाचपुटादयो मार्गताला गृह्यन्ते । तेष्वन्यतमेन मार्गत्रयविभूषिता मार्गत्रये पूर्वोक्ते चित्रादौ विभूषिताऽलंकृता । जात्युक्तनियमेनेति द्रष्टव्यम् । स्वरपदग्रथिता षड्जादिस्वरभूषितैः पदैः पदार्थवाचकैः शब्दैर्ग्रथिता रचिता पदतालाद्याक्षिप्तत्वादाक्षिप्तिकेत्यन्वर्था । बुधैर्मतङ्गादिभिः कथिता ॥ २६ ॥

अत्र रागप्रस्तारेषु क्वचिल्लिख्यमानयोः करणवर्तिन्योर्निबद्धत्वेन प्रबन्धेषु परिगणितयोस्तत्रैव वक्ष्यमाणलक्षणत्वादिह ते न लक्षिते इत्याह—

**नोक्ते करणवर्तिन्यौ प्रबन्धान्तर्गते इह ।**
**मतङ्गादिमताद्ब्रूमो भाषादिष्वेव रूपकम् ॥ २७ ॥**

**नोक्ते इति** । लक्षितस्य रूपकस्य प्रयोगस्थलमाह—**मतङ्गादीति** । भाषादिष्वेवेत्यवधारणं ग्रामरागादित्रितयरागाङ्गादिचतुष्टयव्यवच्छेदार्थम् । आदिशब्देन विभाषान्तरभाषे गृह्येते ॥ २७ ॥

**सांपां धां रीपापाधारी पाधा सासा पाधानीधा पामांमां । रींपाधारी पाधापाधापापा सासा मा मा । सांगांरींमां । मगरि मासा सरिग पाधारीपाधारीपाधापाधासासा सारीगामाधापानीधापानी धापा सीं सीं—इत्यालापः ।**

**सस पप धध रिरि पप धस साम्२ रिरि पप धनि पप रिप धस सा सा२ धध मंमं गारी मंगं रिग मम मगरिग सासा पाधा निधप मम—इति करणम् ।**

अस्य शुद्धसाधारितस्य प्रस्तारो यथा—षाड्जग्रामिकशुद्धस्वरमेलने । तारे षड्जपञ्चमौ । मन्द्रे धैवतः । मध्ये रिपपधरिपधससपधनिधपाः । मन्द्रे मौ रिश्च । मध्ये पधौ । मन्द्रे रिः । मध्ये पधौ । मन्द्रे रिः । मध्ये पधपधपपससामाः । तारे सगरिमाः । एते प्रागुक्ताः स्वरा दीर्घाः प्रयोक्तव्याः । ततो मध्ये मगरीणां मेलनम् । ततः सौ दीर्घौ । ततः सरिगाणां मेलनम् । पधरिपधरिपधपधससरिगमधपनिधपनिपा दीर्घाः । मन्द्रे सौ दीर्घौ, इत्यालापः । मध्ये ह्रस्वयोः षड्जयोः पञ्चमयोर्धैवतयोर्ऋषभयोः पञ्चमयोर्धसयोश्च मेलनम् । ततो दीर्घः सः सानुस्वारश्च । एतेषां द्विरावृत्तिः । ततश्च ऋषभयोः पञ्चमयोर्धन्योः पञ्चमयो रिपयोर्धसयोश्च ह्रस्वयोर्मेलनम् । ततः सौ दीर्घौ । एतेषामपि द्विरावृत्तिः । ततो धैवतयोर्मन्द्रमध्यमयोर्मेलनम् । ततो गरी दीर्घौ । ततो मन्द्रगमयो रिगयोर्मयोश्च मेलनम् । ततो मगरिगाणां मेलनम् । सौ दीर्घौ । एतेषामपि द्विरावृत्तिः ।

षड्जयोर्धसयोर्मन्द्ररिगयोर्दीर्घषड्जयोर्दीर्घपधयोर्निधपानां च मेलनम् । ततो मन्द्र-मध्यमौ । इति करणम् ।

१ शुद्धसाधारितः ।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| सा | सा | धा | नी | पा | पा | पा | पा | |
| उ | द् | य | गि | रि | शि | ख | र | १ |
| धा | धा | नी | नी | रीं | रीं | पा | पा | |
| शे | ख | ० | र | तु | र | ग | खु | २ |
| री | पा | पा | पा | धा | नी | पा | मा | |
| र | ० | क्ष | त | वि | भि | ० | न्न | ३ |
| धा | मा | धा | सा | सा | सा | सा | सा | |
| घ | न | ति | मि | रः | ० | ० | ० | ४ |
| धा | धा | सा | धा | सा | री | गा | सा | |
| ग | ग | न | त | ल | स | क | ल | ५ |
| री | गा | पा | पा | पा | पा | पा | पा | |
| वि | लु | लि | त | स | ह | ० | स्र | ६ |
| धा | मा | धा | मा | सा | सा | सा | सा | |
| कि | र | ० | णो | ज | य | ० | तु | ७ |
| पा | धा | निध | पा | मा | पा | मा | मा | |
| भा | ० | ०० | ० | नुः | ० | ० | ० | ८ |

अथ जात्युक्तकलाप्रकारेण **प्रथमकलायां** मध्ये ससधनयश्चतुर्लघवश्चत्वारः पञ्चमाः । उदयगिरिशिखरेति प्रतिस्वरमक्षराणि ( १ ) । **द्वितीयस्यां** मध्ये धधनिनयः । मन्द्रऋषभौ । मध्ये च पञ्चमौ । शेखरतुरगखु, इत्यक्षराणि । तृतीयः स्वरः शेषः ( २ ) । **तृतीयस्यां** मध्ये रिरेकः । पास्त्रयः । धनिपमा-श्चत्वारः । रक्षतविभिन्नेत्यक्षराणि । द्वितीयोपान्त्यौ शेषौ ( ३ ) । **चतुर्थ्यां** मध्ये धमधास्त्रयः । षड्जाः पञ्च । घनतिमिर, इत्यक्षराणि । षड्जादधस्त्रयः ( अन्त्यास्त्रयः शेषाः ) ( ४ ) । **पञ्चम्यां** मध्ये धधसधसरिगसा अष्टौ । गगनतलसकलेत्यक्षराणि ( ५ ) । **षष्ठ्यां** मध्ये रिगौ द्वौ । पाः षट् । विलु-लितसहस्रेत्यक्षराणि । उपान्त्यः शेषः ( ६ ) । **सप्तम्यां** मध्ये धमधमाश्चत्वारः । साश्चत्वारः । किरणो जयतु, इत्यक्षराणि । तृतीयोपान्त्यौ शेषौ ( ७ ) । **अष्टम्यां** मध्ये पधौ द्वौ । निधावेकः । पमपास्त्रयः । मौ द्वौ । भानुरिति प्रथम-पञ्चमयोरक्षरे । तच्छेषा इतरे ( ८ ) ।

१ घ. °वि मु दि त° ।

उदयगिरिशिखरशेखरतुरगखुरक्षतविभिन्नघनतिमिरः ।
गगनतलसकलविलुलितसहस्रकिरणो जयतु भानुः ॥

**इत्याक्षिप्तिका इति शुद्धसाधारितः ।**

एवमेवोक्तरीत्या वक्ष्यमाणानां रागाणामपि प्रस्तारो मूलत एवावगन्तव्यः । ग्रन्थविस्तरभयादस्माभिः प्रस्तारा न प्रदर्श्यन्ते । एतेषां शुद्धादिरागभेदानां **मतङ्गोक्तानि** लक्षणानि संक्षिप्य प्रदर्श्यन्ते । तद्यथा, शुद्धानां तावत्—

" रूपकानन्यजातीनां स्वजातिमनुवर्तकाः ।
स्वजात्युद्द्योतकाश्चैव ते शुद्धाः परिकीर्तिताः " ॥

अथ भिन्नानाम्—

" श्रुतिभिन्नो जातिभिन्नः शुद्धभिन्नः स्वरैस्तथा ।
चतुर्भिर्गीयते यस्मात्तस्माद्भिन्नज ( न्नः स ) उच्यते " ॥

ननु भिन्नशब्देन किमभिधीयते, किं विदारितोऽर्थः किमेतदस्मा ( तस्मा ) दयं व्यतिरिक्त इत्यर्थो वा । एतन्न वाच्यम् । यतो भिन्नोऽत्र विकृत उच्यते । विकृतत्वं च पूर्वोक्तश्रुत्यादिलक्षणात् ।

तत्राऽऽदौ स्वरभिन्नस्य लक्षणम्—

" यदा वादी गृहीतः स्यात्संवादी च विमोक्ष्यते ।
विवादी चानुवादी च स्वरभिन्नः स उच्यते " ॥

विवादी चानुवादी च गृहीतः स्यादित्यनुषङ्गः । शुद्धषाडवापेक्षया भिन्नषड्जभिन्नपञ्चमयोः स्वरप्रयोगभेदात्स्वरभिन्नत्वम् ।

अथ जातिभिन्नस्य लक्षणम्—

"जातीनामंशकः स्थायां(कस्थानां?)स्वल्पकस्तु बहुस्तथा ।
स्वल्पत्वं च बहुत्वं च प्रयोगाल्पबहुत्वतः ॥
सूक्ष्मातिसूक्ष्मैर्वक्रैश्च जातिभिन्नः स उच्यते " ।

शुद्धकैशिकमध्यमापेक्षया भिन्नकैशिकमध्यमस्य ग्रहांशादिसाम्येऽपि स्वस्वजनकजातिगतवर्णभेदात्सूक्ष्मातिसूक्ष्मस्वरप्रयोगभेदाच्च भिन्नकैशिकमध्यमस्य जातिभिन्नत्वम्—

अथ शुद्धभिन्नस्य लक्षणम्—

" परित्यजन्नन्यगतिं स्वजातिकुलभूषणः ।
स्वकं कुलं तु संगृह्य शुद्धभिन्नः प्रकीर्तितः " ॥

शुद्धकैशिकयोः स्वरसंस्थानस्याविशेषेऽपि तारस्वरव्याप्तिमतः शुद्धकैशिकान्मन्द्रस्वरव्याप्तिमतो भिन्नकैशिकस्य शुद्धभिन्नत्वम् ।

अथ श्रुतिभिन्नस्य लक्षणम्—

" चतुःश्रुतिः स्वरो यत्र भिन्नद्विश्रुतिको भवेत् ।
गान्धारो द्विश्रुतिश्चैव श्रुतिभिन्नः स उच्यते ॥

भिन्नतानरागे हि षड्जस्य श्रुतिद्वयं गृह्णाति निषादः । भूतपूर्वन्यासेन षड्जोऽपि चतुःश्रुतिरित्युच्यते । गान्धारस्तु द्विश्रुतिरेव । अतोऽस्य श्रुतिभिन्नत्वम् ।

अथ गौडानां [ लक्षणम् ]—

" पूर्वोक्ताया मौडु( गौड )गीतेः संबन्धाद्गौडकाः स्मृताः " ।

अथ वेसराणाम्—

" स्वराः सरन्ति यद्वेगात्तस्माद्वेसरकाः स्मृताः " ॥

अथ साधारणानाम्—

" शुद्धा भिन्नाश्च गौडाश्च तथा वेगस्वराः परि—
कलिता यत्र तान्वक्ष्ये सप्त साधारणांस्ततः " इति ॥

एवं रागभेदप्रतिपत्तिदाढर्चाय विशेषप्रदर्शनाय च प्रासङ्गिकमुक्तम् । इदानीं प्रकृतमनुसरामः । अथ षड्जग्रामाभिधं रागं लक्षयति—

**षड्जमध्यमया सृष्टस्तारषड्जग्रहांशकः ।**
**संपूर्णमध्यमन्यासः षड्जापन्यासभूषितः ॥ २८ ॥**
**अवरोहिप्रसन्नान्तभूषः षड्जादिमूर्छनः ।**
**काकल्यन्तरसंयुक्तो वीरो रौद्रेऽद्भुते रसे ॥ २९ ॥**
**विनियुक्तः प्रतिमुखे वर्षासु गुरुदैवतः ।**
**गेयोऽह्नः प्रथमे यामे षड्जग्रामाभिधो बुधैः ॥ ३० ॥**

**षड्जमध्यमया सृष्ट इत्यादिना ।** स्पष्टोऽर्थः ॥ २८ ॥ २९ ॥३०॥

**संसंरी मंध मरिस सनिं धापा धांधरि गसां । रिगा सासगपनि धनि स । समा सा । सगरि गप निधप मामा—इत्यालापः ।**

**रींरीं गाधा गरि सासा नींधपापा । रींरीं गधा गरीं सांसांसां [षड्जं] संसांगांनिंधारीं रींगंधां गांरीं सांसां निधापापा। रीरी पापा निधानि सांसां सांसां रिसरि पांधानिधपामांमांमांमां—इति करणम् ।**

२ षड्जग्रामः ।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| री | री | गा | धा | गा | री | सा | सा | १ |
| स | ज | य | तु | भू | ० | ता | ० | |
| नी | धा | पा | पा | री | री | गा | धा | २ |
| धि | प | तिः | ० | प | रि | क | र | |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| गा | री | सा | सा | सा | सा | सा | सा | ३ |
| भो | ० | गीं | द्र | ० | कुं | ० | ड | |
| सा | सा | गा | धनि | नी | नी | नी | नी | ४ |
| ला | ० | भ | र० | णः | ० | ० | ० | |
| गा | रिग | धा | धा | गा | री | सा | सा | ५ |
| ग | ज० | च | ० | र्म | प | ट | नी | |
| नी | धा | पा | पा | री | री | पा | पा | ६ |
| व | स | नः | ० | श | शां | ० | क | |
| नी | धा | नी | सा | सा | सा | सा | रिसारि | ७ |
| चू | ० | डा | म | णिः | ० | ० | ००० | |
| पा | धा | निध | पा | मां | मां | मां | मां | ८ |
| शं | ० | ०० | ० | भुः | ० | ० | ० | |

इत्याक्षिप्तिका । इति षड्जग्रामरागः ।

**क(का)मारव्याश्च कैशिकयाः संजातः शुद्धकैशिकः ॥**
**तारषड्जग्रहांशश्च पञ्चमान्तः सकाकली ॥ ३१ ॥**

इतःप्रभृत्यशेषाणि रागलक्षणानि निगदेनैव व्याख्यातानि । किंतु केषांचिदुद्देशलक्षणयोः क्वचिल्लक्षणेषु च विरोधः प्रतीयते । सोऽपि **मतङ्गादिमुनिमता**नुसारेण परिह्रियते । यथा **शुद्धकैशिकमध्यमस्य**—" षड्जमध्यमया सृष्टः कैशिक्या चरिषो( ? ) तः " इति लक्षणं श्रूयते । तत्र षड्जमध्यमा षड्जग्रामसंबन्धा जातिः । कैशिकी तु मध्यमग्रामसंबन्धा । ताभ्यां सृष्टस्य द्विग्रामत्वेनोद्देशे कर्तव्ये षड्जग्रामसू( मसमु )त्पन्न इत्येकग्रामत्वेनोद्देशः कृत इति विरोधः । परिहारस्तु ऋषभपञ्चमहानौ( नेर ? )सत्त्वात्षड्जग्रामसंबन्ध एवायं मध्यमग्राम ऋषभपञ्चमयोर्लोपो नास्तीति भाव इति **मतङ्गोक्तिः(क्तः)**। **अस्यायमर्थः**—

" असपाभ्यां द्वैश्रुतिभ्यां रिपाभ्यां सप्तवर्जिताः ।
षड्जग्रामे पृथक्ताना एकविंशतिरौडुवी " ॥

इत्यौडुवशुद्धताललक्षणे षड्जग्राम एव रिपलोपस्य दृष्टत्वादत्र ग्रामभेदकपञ्चमाभावेऽप्यौडु[व]त्वं शुद्धतानविशेषस्यापि ग्रामभेदकत्वात्षड्जग्रामसंबन्ध एव तनायत्तमि(यमि ?)ति। तर्हि कैशिकजात्युत्पन्नक[त्व]मस्य कुतोऽवगतमिति चेत्क्रमो( म )लक्षणमाद्यमूर्छनया धुत इत्युच्यते । मध्यममध्यमाद्या मूर्छना सौवीरी

ग्राह्या । न मत्सरीकृता । अन्यथा तारषड्जग्रहांशत्वाव( भि )धानमस्यो ( स्यानु ) ×पपन्नं स्यात् । ग्रहांशभूतस्य स्वरस्य मूर्छनान्तःपातित्वनियमात् । अतः पञ्चमलोपेऽपि मध्यमग्रामधर्मेण तारव्यापकत्वेन मध्यमग्रामसंबन्धोऽनुमीयत इति युक्त्याऽनुगृहीताद्भरतादिवचनाच्च कैशिक्युत्पन्नत्वमप( व )गम्यत इति । एवं च सत्यनुमानतः प्रत्यक्षस्य प्राबल्यादत्र प्रत्यक्षावगतग्रामसंबन्ध एव व्यपदिश्यत इत्याचार्याणामभिप्रायोऽवगन्तव्यः । तथा गौडकैशिक्या उद्भूतः कैशिकीषड्जमध्यमाभ्यां ग्रहांशः स( शक ) इति लक्षणं श्रूयते । तेनास्यापि द्विग्रामत्वे वक्तव्ये मध्यमे गौडकैशिक इति मध्यमग्रामसंबन्धत्वेनाऽऽदेशो विरुद्धः । परिहारस्तु तथा प्रयोगे त्रिश्रुतिकत्वात्पञ्चमस्य चतुःश्रुतिकत्वाद्धैवतस्य मध्यमग्रामसंबन्ध एवासौ रागः । यद्यपि ग्रामद्विजातितोऽसौ रागस्तथाऽपि षड्जोऽस्य ग्रहो न मध्यमस्तथा दर्शनादिति **मतङ्गोक्तः** । अस्यार्थः—संपूर्णस्वरत्वादस्य क्रमात्त्रिचतुःश्रुतिकयोः पञ्चमधैवतयोरुपलम्भान्मध्यमग्रामसंबन्ध एवायम् । षड्जमध्यमोत्पन्नत्वं तु षड्जादिमूर्छन इत्यत्र मन्द्रोऽस्य ग्रहो न मध्यम इति **मतङ्ग**वचनेनोत्तरमन्द्राया एव विवक्षितत्वात् । तदायत्तमन्द्रव्याप्तिदर्शनेन षड्जग्रामसंबन्धानुमानादिति । तथा **बोट्टरागस्य**—' बोट्टः स्यात्पञ्चमीषड्जमध्यमाभ्यां ग्रहांशकः ' इति लक्षणं श्रूयते । अतोऽस्यापि द्विग्रामत्वे मध्यमे तु बोट्टपालवकैशिकावित्युद्देशोऽत्र कृत इति विरोधः । परिहारस्तु बोत्सा ( ट्टः ? ) यद्यप्युभयग्रामसंबन्धजातिद्वयसमुत्पन्नस्तथाऽपि पञ्चमस्य त्रिश्रुतिकत्वान्मध्यमग्रामसंबन्ध इति **मतङ्गोक्तः** । अस्यार्थः—त्रिश्रुतिके पञ्चमश्रवणादस्य मध्यमग्रामसंबन्धः साक्षादवगतः । पञ्चमादिकमूर्छन इत्यत्र पञ्चमादिकयोर्ग्रामद्वयमूर्छनयोः शुद्धषड्जाहष्यकयोरेकस्थानत्वेऽपि स्यात् । षड्जमध्यमाजातः पञ्चम्याश्चेति मतङ्गवचनादत्र शुद्धषड्जाया एव विवक्षितत्वेन तत्र प्रयुक्तमन्त्रव्याप्तिदर्शनात्षड्जग्रामसंबन्धोऽनुमेय इति । अथ **टक्ककैशिकरागस्य**—'धैवत्या मध्यमायाश्च संभूतष्टक्ककैशिकः' इतिलक्षणश्रवणाद्ग्रामद्वयजात्युत्पन्नत्वेऽपि षड्जकैशिकमध्यमादित्युक्तन्यायेन नैकग्रामव्यपदेशं हित्वा द्विग्रामष्टक्ककैशिक इत्युद्देशः कथमिति चेत् । सत्यम् । यद्यपि संपूर्णस्वरस्यास्य प्रयोगे च चतुःश्रुतिकस्य पञ्चमस्योपलम्भात्पूर्वोक्तन्यायेन षड्जग्रामसंबन्ध एवायमिति मतङ्गमतं, तथाऽपि **कश्यपमतेन** निषादगान्धारलोपाद्गाडुवित इति **मतङ्गे**नैवोक्तत्वात्तदा रिधाभ्यां द्विश्रुतिभ्यां च मध्यमग्रामगास्तु ते हीनाश्चतुर्दशैव स्युरित्युडुवशुद्धतानलक्षणमध्यमग्रामेऽपि द्विश्रुतिकस्वरलोपस्य दृष्टत्वादत्र तारव्याप्तिसहकृतेन निगलोपवता तानेन मध्यमग्रामसंबन्धोऽपि साक्षादवगम्यत इत्याचार्यद्वयमतानुसारिणा निःशङ्कसूरिणा " हि(द्वि)ग्रामष्टक्ककैशिकः " इति सुष्ठूद्दिष्टम् । तथा **हिन्दोलस्यापि**—

× अपपन्नमिति ग. पुस्तकपाठः ।

१ ख. ग. °शिकस्या उ° । २ ख. °न्त्रप्रयुक्तमन्त्रव्या° ।

" धैवत्यार्षभिकावर्ज्यस्वरनामकजातिद:(ज:) ।
हिन्दोलको रिधत्यक्तः षड्जन्यासग्रहांशकः " ।

इतिलक्षणवशादत्र स्वरनामकजातीनां षाड्जीगान्धारीमध्यमापञ्चमीनिषादीनां ग्रहणेन ग्रामद्वयजात्युत्पन्नत्वे सति रिधत्यक्तत्वानकत्वान्मध्यमग्रामसंबन्धे साक्षादवगते तथा च प्रयोगे चतुःश्रुतिकपञ्चमोपलम्भात्षड्जग्रामसंबन्धे च साक्षादवगते द्विग्राम इति विशेषणमुपपन्नम् । येषां मतेऽस्य धैवतलोपो नेष्टः पञ्चमलोप इष्यते तन्मते पूर्वोक्तन्यायेन षड्जग्रामाश्रित एवायं केवल ऋषभलोपपक्षेऽपि चतुःश्रुतिकपञ्चमोपलम्भात्षड्जग्रामसंबन्ध एव । यथाऽऽह **मतङ्गः**—' भरतकोहलादिभिराचार्यैर्धैवतलोपस्यानिष्टत्वात्केचित्षड्जग्रामाश्रित एवायमिति मन्यन्ते । चतुःश्रुतिकस्य पञ्चमस्यात्रोपलम्भात् । धैवतस्यास्तित्वं वा नास्तित्वं वा न विशेषप्रदर्शकं सर्वत्र । एवं च सति ग्राममूर्छनाभेदो वा तेन न स्यादिति भाव इति । **नर्तरागस्य**—तु 'मध्यमापञ्चमीजातो नर्तोऽशग्रहपञ्चमः ' इति कश्यपाभिमताल्लक्षणान्मध्यमग्रामसंबन्ध एव । 'धैवतीमपि तद्धेतुं दुर्गाशक्तिरभाषत ' इति लक्षणात्तदा पञ्चमस्य चतुःश्रुतिकत्वात्षड्जग्रामसंबन्ध एव । तथा चोक्तं **मतङ्गेन**—दुर्गाशक्तिमतेऽयमेव रागो यदा पञ्चमीमध्यमाधैवतीभ्यो जायते तदा षड्जग्रामसंबन्ध एव बोद्धव्यः । कुतः । पञ्चमस्य चतुःश्रुतिकत्वादिति, तदा मध्यमग्रामजात्युत्पन्नस्य तु पूर्वोक्त एव न्यायो द्रष्टव्यः । द्विग्रामककुभ इत्युपदेशेऽपि ककुभस्य ' मध्यमापञ्चमीधैवत्युद्भवः । **ककुभो** भवेत् ' इतिलक्षणाद्ग्रामद्वयजात्युत्पन्नत्वे सति पञ्चमस्य चतुःश्रुतिकत्वात्षड्जग्रामसंबन्धे साक्षादवगते लक्षणेषु निगलोपस्यानुक्तत्वेऽपि **मतङ्गेन** प्रस्तारावसरे केषांचिन्मते च ककुभकैशिकस्य वर्तनिकेत्युपक्रम्य निगौ परित्या(त्य)ज्यौडुविततत्वेनापि प्रस्तारे दर्शनात् । तत्र मध्यमग्रामसंबन्धश्च साक्षात्प्रतीयत इत्युपपन्न एव । उपरागेषु षड्जग्रामे **रेवगुप्तो** मध्यमार्षभिकोद्भव इत्यत्रापि रेवगुप्तस्य चतुःश्रुतिकपञ्चमोपलम्भात्षड्जग्रामसंबन्ध एव साक्षादवगतः। मध्यमग्रामसंबन्धस्तु तारव्यापकत्वेनानुमेय इति ।

"मध्यमग्रामसंबन्धो धैवत्यार्षभिकोद्भवः ।
रिन्यासांशग्रहे क्वापि मान्तः पञ्चमषाडवः " ।

इत्यत्र पञ्चमषाडवस्य षड्जग्रामजात्युत्पन्नत्वेऽपि कलोपनतयाऽन्वित इत्यनेन त्रिश्रुतिकस्य पञ्चमस्योपलम्भान्मध्यमग्रामसंबन्ध एव साक्षादवगतः । षड्जग्रामसंबन्धस्तु मन्द्रव्याप्त्याऽनुमेय इति सर्वमवदातम् । ग्रामरागादीनां मूर्छनाविशेषपरिज्ञाने विनियोगविशेषपरिज्ञाने च **मतङ्गोक्तम**नुसंधेयम् । तद्यथा——ननु पूर्वोक्तानां रागाणां मूर्छनाविशेषनिर्देशः कस्माज्ज्ञायत इति चेदुच्यते । आप्तवचनान्मूर्छना विज्ञायते । तथा चाऽऽह **कश्यपः**——

'ज्ञात्वा जात्यंशबाहुल्यं निर्देश्या मूर्छना बुधैः' इति ।

नन्वयं विनियोगविशेषः कस्माल्लभ्यते । **भरतवचनादेव** लभ्यते । **तथा** चाऽऽह **भरतः**—

'पूर्वरङ्गे तु शुद्धा स्याद्भिन्ना प्रस्तावनाश्रया ।
वेसरामुख्ययोः कार्या गर्भे गौडी विधीयते ॥
साधारिताऽवमर्षे स्यात्संधौ निर्वहणं तथा ।
मुखे तु मध्यमग्रामः षड्जः प्रतिमुखे तथा ॥
गर्भे साधारितश्चैव ह्यवमर्षे तु पञ्चमः ।
संहारे कैशिकः प्रोक्तः पूर्वरङ्गे तु षाडवम् ॥
चित्रस्याशादशाङ्गस्य त्वन्ते कैशिकमध्यमः ।
शुद्धानां विनियोगोऽयं ब्रह्मणा समुदाहृतः' इति ॥

ननु गीतरागयोः को भेद इति चेत् । उच्यते । दशलक्षणलक्षितं गीतं रागशब्देनाभिधीयते । गीतं चतुरङ्गोपेतं ध्रुवायोगात्पञ्चविधम् । कुत एतद्विज्ञायते । आप्तवचनात् । तथा चाऽऽह **कपश्यः**—

"क्वचिदंशः क्वचिन्न्यासः षाडवौडुविते क्वचित् ।
अल्पत्वं च बहुत्वं च ग्रहापन्यासंसंयुतम् ॥
मन्द्रतारौ तथा ज्ञात्वा योजनीया मनीषिभिः ।
ग्रामरागाः प्रयोक्तव्या विधिवद्दशरूपकाः ॥
प्रवेशाक्षेपनिष्क्रामप्रासादिकमथान्तरम् ।
गीतं पञ्चविधं यत्नाद्रागैरेभिः प्रयोजयेत्" ॥

इति रागगीतयोर्भेदो **मतङ्गोक्तः** । अस्यायमर्थः—ग्रहांशादिदशलक्षितस्वरमात्रसंनिवेशविशेषो रागः । तैः स्वरैः पदैस्तालैर्मार्गैरेवं चतुर्भिरङ्गैरुपेतं ध्रुवादिसंज्ञकं गीतमिति ॥ ३१ ॥

**सावरोहिप्रसन्नान्तपूर्णः षड्जादिमूर्छनः ।**
**वीररौद्राद्भुतरसः शिशिरो भौमवल्लभः ॥**
**गेयो निर्वहणे यामे प्रथमेऽह्नो मनीषिभिः ॥ ३२ ॥**

॥ ३२ ॥

**सां सां गामा गारि गामां सांनि सांरि साधा माधा माधा नी धा पामा गामा पापा—इत्यालापः ।**

**संसंसंसं रिरिससरीरी गागा संससंसं ममरि गम संसरी री सनि स**

---

१ ख. चित्तस्य साद° ।

ससससरिरिममप पधमधसं धनि संसससरिरि गग ससप पध मगम पपपप—इति वर्तनी ।

२ शुद्धकैशिकः ।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| सा | सा | सा | सा | सा | सा | नी | धा | १ |
| अ | ० | ग्नि | ० | ज्वा | ० | ला | शि | |
| सा | सा | री | मा | सा | री | गा | मा | २ |
| खा | ० | के | ० | शि | ० | ० | ० | |
| मा | गा | री | सा | सा | सा | सा | सा | ३ |
| मां | ० | ० | स | ० | शो | णि | त | |
| सा | सा | सा | सा | नी | सा | नी | नी | ४ |
| भो | ० | ० | जि | नि | ० | ० | ० | |
| मा | मा | गा | री | मा | मा | पा | पा | ५ |
| स | ० | र्वा | ० | हा | ० | रि | णि | |
| धा | नी | पा | मा | धा | मा | धा | सा | ६ |
| नि | ० | र्मी | ० | से | ० | ० | ० | |
| सा | सा | सा | सा | नी | धा | पा | पा | ७ |
| च | ० | ० | र्म | मुं | डे | न | ० | |
| धा | मा | गा | मा | पा | पा | पा | पा | ८ |
| मो | ० | ० | स्तु | ते | ० | ० | ० | |

इत्याक्षिप्तिका । इति शुद्धकैशिकः ॥

षड्जमध्यमिकोत्पन्नो भिन्नकैशिकमध्यमः ।
षड्जग्रहांशो मन्यासो मन्द्रसान्तोऽथवा भवेत् ॥ ३३ ॥
षड्जादिमूर्छनः पूर्णः संचारिणि सकाकली ।
प्रसन्नादियुतो दानवीरे रौद्रेऽद्भुते रसे ॥
दिनस्य प्रथमे यामे प्रयोज्यः सोमदैवतः ॥ ३४ ॥

॥ ३३ ॥ ३४ ॥

सां निधासामां । मम धम मम धम गामाधाधा नीधा सस सांगां माधानीधा सांसां धमा मगा स गास सांधा मांमां । सांगां माधानीधा सांसां मधा पमापं मामा—इत्यालापः ।

प्रबन्धेष्वेलाद्येषु । पदान्तरं नानागीतच्छायानुकारिगीतिनिर्माणम् ॥ ८ ॥

त्रिस्थानगमकप्रौढिर्विविधालप्तिनैपुणम् ।
अवधानं गुणैरेभिर्वरो वाग्गेयकारकः ॥ ९ ॥
विदधानोऽधिकं धातुं मातुमन्दस्तु मध्यमः ।
धातुमातुविदप्रौढः प्रबन्धेष्वपि मध्यमः ॥ १० ॥

गमकास्तिरिपाद्यो वक्ष्यमाणाः । विविधालप्तयो रागरूपकादिविशेषणयुक्ता वक्ष्यमाणाः । अवधानं चित्तैकाग्रता । एतानि शब्दानुशासनज्ञानादीनि समुदितानि वाग्गेयकारस्य लक्षणम् । न तु प्रत्येकं लक्षणानि ॥ ९ ॥ १० ॥

रम्यमातुविनिर्माताऽप्यधमो मन्दधातुकृत् ।
वरो वस्तुकविर्वर्णकविर्मध्यम उच्यते ॥
कुट्टिकारोऽन्यधातौ तु मातुकारः प्रकीर्तितः ॥

वस्तुकविः कथाकविः । वर्णकविर्वर्णनाकविः । अन्यधातौ मातुकारस्तु कुट्टिकारः प्रकीर्तित इत्यन्वयः । अत्र तुशब्देन कुट्टिकारस्याधमाधमत्वं द्योत्यते । तेन कुट्टिकारोऽत्यन्ताधम इत्यवगन्तव्यः ॥ ११ ॥

इति वाग्गेयकारलक्षणम् ।

गीतगुणदोषपरिज्ञातृतया सहृदयत्वेनोद्दिष्टौ गान्धर्वस्वरादी लक्षयति—

मार्गं देशीं च यो वेत्ति स गान्धर्वोऽभिधीयते ॥

इति गान्धर्वः ।

यो वेत्ति केवलं मार्गं स्वरादिः स निगद्यते ॥ १२ ॥

इति स्वरादिः ।

मार्गं देशीं चेति ॥ १२ ॥

अथ गायनं लक्षयति—

हृद्यशब्दः सुशारीरो ग्रहमोक्षविचक्षणः ।
रागरागाङ्गभाषाङ्गक्रियाङ्गोपाङ्गकोविदः ॥ १३ ॥
प्रबन्धगाननिष्णातो विविधालप्तितत्त्ववित् ।
सर्वस्थानोच्चगमकेष्वनायासलसद्गतिः ॥ १४ ॥

हृद्यशब्द इत्यादिना । शब्दशारीरयोर्लक्षणमनन्तरं वक्ष्यते । ग्रहमोक्षावत्र

---

१ च. °यासोऽस्खलद्ग°।

गीतस्याऽऽरम्भपरिसमाप्ती तयोर्विचक्षणः। तत्र विचक्षणत्वं नाम ग्रहताललयानुरोधेन गीतनिर्वाहकत्वम् ॥ १३ ॥ १४ ॥

आयत्तकण्ठस्तालज्ञः सावधानो जितश्रमः।
शुद्धच्छायालगाभिज्ञः सर्वकाकुविशेषवित् ॥ १५ ॥

आयत्तकण्ठः स्वाधीनध्वनिः ॥ १६ ॥

अपारस्थायसंचारः सर्वदोषविवर्जितः।
क्रियापरो जक्कलयः(?)सुघटो धारणान्वितः ॥ १६ ॥

क्रियापरोऽभ्यासतत्परः। सुघटः शोभनं यथा भवति तथा घटयतीति सुघटः। लौकिकदेशभाषया 'सुघड' इति वदन्ति ॥ १६ ॥

स्फूर्जन्निर्जवनो हारिरहःकृद्भजनोद्धुरः।
सुसंप्रदायो गीतज्ञैर्गीयते गायनाग्रणीः ॥ १७ ॥

स्फूर्जन्निर्जवनः। निर्जवनस्य लक्षणं स्थायेषु वक्ष्यते। अप्रतिहतप्रसरवेगवानित्यर्थः। रहःकृतगीतस्य श्रोतृजनमोहनत्वं रह इत्युच्यते। तं क(तत्क)रोतीति तथोक्तः। सुगममन्यत् ॥ १७ ॥

गुणैः कतिपयैर्हीनो निर्दोषो मध्यमो मतः।
महामाहेश्वरेणोक्तः सदोषो गायनोऽधमः ॥ १८ ॥
शिक्षाकारोऽनुकारश्च रसिको रञ्जकस्तथा।
भावुकश्चेति गीतज्ञः पञ्चधा गायनं जगुः ॥ १९ ॥
अन्यूनंशिक्षणे दक्षः शिक्षाकारो मतः सताम्।
अनुकार इति प्रोक्तः परभङ्ग्यनुकारकः ॥ २० ॥
रसाविष्टस्तु रसिको रञ्जकः श्रोतृरञ्जकः।
गीतस्यातिशयाधानाद्भावुकः परिकीर्तितः ॥ २१ ॥
एकल्लो(लो) यमलो वृन्दगायनश्चेति ते त्रिधा।
एक एव तु यो गायेदसावेकल्ल(ल)गायनः ॥ २२ ॥
सद्वितीयो यमलकः सवृन्दो वृन्दगायनः।
रूपयौवनशालिन्यो गायि(य)न्यो गातृवन्मताः ॥
माधुर्यधुर्यध्वनयश्चतुराश्चतुरप्रियाः ॥ २३ ॥

॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥

एवं सभेदं गायनं गायनीं च लक्षयित्वा तद्दोषान्धर्मिपरत्वेनोद्दिश्य लक्षयति—

संदष्टोद्घृष्टसूत्कारिभीतशङ्कितकम्पिताः।
कराली विकलः काकी वितालकरभोद्भडाः ॥ २४ ॥

---

१ ग. जक्कलगः। व्यक्तलयः (?)। २ ग. कम्पिलः।

संदष्टोद्घृष्टेत्यादिना । स्पष्टोऽर्थः । एते दोषा गायनीगतत्वेनाप्यूह्याः ॥२४॥

झोम्बकस्तुम्बकी वक्री प्रसारी विनिमीलकः ।
विरसापस्वराव्यक्तस्थानभ्रष्टाव्यवस्थिताः ॥ २५ ॥
मिश्रकोऽनवधानश्च तथाऽन्यः सानुनासिकः ।
पञ्चविंशतिरित्येते गायना निन्दिता मताः ॥ २६ ॥
संदश्य दशनान्गायन्संदष्टः परिकीर्तितः ।
उद्घृष्टो विरसोद्घोषः सूत्कारी सूत्कृतैर्मुहुः ॥ २७ ॥
भीतो भयान्वितो गाता त्वरया शङ्कितो मतः ।
कम्पितः कम्पनाज्ज्ञेयः स्वभावाद्गात्रशब्दयोः ॥ २८ ॥
कराली गदितः सद्भिः करालोद्घाटिताननः ।
विकलः स तु यो गायेत्स्वरान्न्यूनाधिकश्रुतीन् ॥ २९ ॥
काककूररवः काकी वितालस्तालविच्युतः ।
दधानः कन्धरामूर्ध्वां करभोऽभिहितो बुधैः ॥ ३० ॥
छागवद्वदनं कुर्वन्नुद्वडोऽधमगायनः ।
शिरालभालवदनग्रीवो गाता तु झोम्बकः ॥ ३१ ॥
तुम्बकी तुम्बकाकारोत्फुल्लगल्लस्तु गायनः ।
वक्री वक्रीकृतगलो गायन्धीरैरुदीरितः ॥ ३२ ॥
प्रसारी गीयते तज्ज्ञैर्गात्रगीतप्रसारणात् ।
निमीलको मतो गायन्निमीलितविलोचनः ॥ ३३ ॥
विरसो नीरसो वर्ज्यस्वरगानादपस्वरः ।
गद्गदध्वनिरव्यक्तवर्णस्त्वव्यक्त उच्यते ॥ ३४ ॥
स्थानभ्रष्टः स यः प्राप्तुमशक्तः स्थानकत्रयम् ।
अव्यवस्थित इत्युक्तः स्थानकैरव्यवस्थितैः ॥ ३५ ॥
शुद्धछायालगौ रागौ मिश्रयन्मिश्रकः स्मृतः ।
इतरेषां च रागाणां मिश्रको भूरिमिश्रणात् ॥ ३६ ॥
स्थाय्या(या?)दिष्ववधानेन निर्मुक्तोऽनवधानकः ।
गेयं नासिकया गायन्गीयते सानुनासिकः ॥ ३७ ॥

इति गायनदोषाः ।

॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥

---

१ ग. कपिलः ।

चतुर्भेदो भवेच्छब्दः खाहुलो नारटाभिधः ।
बोम्बको मिश्रकश्चेति तल्लक्षणमथोच्यते ॥ ३८ ॥

हृद्यशब्द इति गायनविशेषणत्वेन प्रसक्तं शब्दं सप्तभेदं लक्षयति—**चतुर्भेद इत्यादिना ते ग्रन्थविस्तरत्रासादस्माभिर्न समीरिता इत्यन्तेन ।** तत्र खाहुलादयः शब्दा रूढाः । मिश्रकशब्दोऽन्वर्थः । निगदव्याख्यातमन्यत् ॥ ३८ ॥

कफजः खाहुलः स्निग्धमधुरः सौकुमार्ययुक् ।
आडिल्ल एष एव स्यात्प्रौढश्चेन्मन्द्रमध्ययोः ॥ ३९ ॥
त्रिस्थानघनगम्भीरलीनः पित्तोद्भवो ध्वनिः ।
नाराटो बोम्बकस्तु स्यादन्तर्निःसारतायुतः ॥ ४० ॥
पुरुषोच्चैस्तरः स्थूलो वातजः शार्ङ्गिणोदितः ।
एतत्संमिश्रणादुक्तो मिश्रकः सांनिपातिकः ॥ ४१ ॥
तनुरूक्षगुणो बोम्बः खाहुलः स्निग्धतायुतः ।
कथं तयोर्मिश्रणं स्याद्विरुद्धगुणयोगिनोः ॥ ४२ ॥
अत्रोच्यते परित्यागात्पारुष्यस्य विरोधिनः ।
अविरुद्धस्य माधुर्यस्थौल्यादेर्मिश्रणं मतम् ॥ ४३ ॥
एतेन घननिःसारगुणनाराटबोम्बयोः ।
विरुद्धगुणताक्षेपसमाधाने निवेदिते ॥ ४४ ॥
मिश्रस्य भेदाश्चत्वारो युक्तौ नाराटखाहुलौ ।
नाराटाबोम्बकौ बोम्बखाहुलौ मिश्रितास्त्रयः ॥ ४५ ॥
निःसारतारूक्षताभ्यां हीनस्त्रितयमिश्रणात् ।
उत्तमोत्तम इत्युक्तः सुराणामिव शंकरः ॥ ४६ ॥
नाराटखाहुलोन्मिश्र उत्तमः खाहुलः पुनः ।
बोम्बयुक्तो मध्यमः स्याद्बोम्बो नाराटसंयुतः ॥ ४७ ॥
शब्दानामधमः प्रोक्तः श्रीमत्सोढलसूनुना ।
निःसारतारूक्षताभ्यां युक्तः सर्वोऽधमो मतः ॥ ४८ ॥
भवन्ति बहवो भेदा नानातद्गुणमिश्रणात् ।
कश्चित्स्यान्मधुरस्निग्धघनोऽन्यः स्निग्धकोमलः ॥४९॥

॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥

---

१ च. खाड्गलो । २ ग. घ. ङ. नारहट्टकः । ३ च. खाड्गलः । ४ च. °खाड्गलौ । ५ च. सर्वाध° ।

घनोऽपरस्तु मधुरमृदुत्रिस्थानकोऽन्यकः।
मृदुत्रिस्थानगम्भीरोऽपरः स्निग्धो मृदुर्घनः ॥ ५० ॥
त्रिस्थानोऽन्यस्तु मधुरमृदुस्त्रिस्थानको घनः।
अन्यस्तु मधुरस्निग्धमृदुत्रिस्थानकोऽपरः ॥ ५१ ॥
मधुरस्निग्धगम्भीरघनात्रिस्थानकोऽपरः।
स्निग्धकोमलगम्भीरघनात्रिस्थानलीनकः ॥ ५२ ॥
अपरः स्निग्धमधुरकोमलः सान्द्रलीनकः।
त्रिस्थानशोभी गम्भीर इति भेदा दशोदिताः ॥ ५३ ॥
खाहुलेऽन्मिश्रनाराटे ततः खाहुलबोम्बयोः।
स्निग्धकोमलनिःसार एकोऽन्यो मधुरो मृदुः ॥५४॥
रूक्षोऽन्यस्तु मृदुस्निग्धनिःसारोच्चतरः परः।
कोमलस्निग्धनिःसारः स्थूलोऽन्यः स्निग्धकोमलः ॥ ५५ ॥
रूक्षनिःसारपीनश्च भेदाः षडिति कीर्तिताः।
नाराटे बोम्बभेदाः स्युर्घनात्रिस्थानरूक्षकः ॥ ५६ ॥
एकोऽन्यो घनगम्भीररूक्षोऽन्या लीनपीवरः।
निःसाररूक्षोऽन्यो लीनघनोच्चतरपीवरः ॥ ५७ ॥
त्रिस्थानघनगम्भीरलीनरूक्षोऽपरः[1] परः।
त्रिस्थानलीननिःसाररूक्षस्थूलः षडित्यमी ॥ ५८ ॥
एते द्वंद्वजभेदाः स्युरथैते सांनिपातिकाः।
स्निग्धत्रिस्थाननिःसारोऽन्यो मृदुर्मधुरो घनः ॥ ५९ ॥
गम्भीरोच्चतरो रूक्षः परस्तु स्निग्धकोमलः।
घनलीनः पीवरोच्चतरोऽन्यः स्निग्धकोमलः ॥ ६० ॥
त्रिस्थानलीननिःसारपीवरोच्चतरोऽपरः[2]।
कीर्तितो मधुरो लीनात्रिस्थानो रूक्षपीवरः ॥ ६१ ॥
निःसारोच्चैस्तरोऽन्यस्तु मधुरस्निग्धकोमलः।
त्रिस्थानघनगम्भीरलीन उच्चैस्तरः परः ॥ ६२ ॥
मधुरो मृदुगम्भीरलीनात्रिस्थानरूक्षकः।
निःसारोच्चैस्तरोऽन्यस्तु कोमलो मधुरो घनः ॥ ६३ ॥

॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७
५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥

१ ग. °परोऽप°। २ च. °तरः प°।

लीनत्रिस्थानरूक्षोच्चतरपीवरतायुतः ।
अष्टाविति त्रिमिश्रस्य भेदाः सर्वे तु मिश्रजाः ॥ ६४ ॥
मिलिता मुग्धबोधाय त्रिंशान्निःशङ्ककीर्तिताः ।
अन्येषां सूक्ष्मभेदानां नान्तोऽस्ति गुणसंकरात् ।
ते ग्रन्थविस्तरत्रासादस्माभिर्न समीरिताः ॥ ६५ ॥

॥ ६४ ॥ ६५ ॥

इति शब्दभेदलक्षणम् ।

सौकुमार्यस्थौल्यादिगुणसांकर्येणाऽऽनन्त्येऽपि शब्दानां तत्र गीतोपयोगिगुणभेदभिन्नाञ्शब्दानुद्दिश्य लक्षयति—

मृष्टो मधुरचेहालत्रिस्थानकसुखावहाः ।
प्रचुरः कोमलो गाढः श्रावकः करुणो घनः ॥ ६६ ॥
स्निग्धः श्लक्ष्णो रक्तियुक्तश्छविमानिति सूरिभिः ।
गुणैरेभिः पञ्चदशभेदः शब्दो निगद्यते ॥ ६७ ॥
श्रोत्रनिर्वापको मृष्टस्त्रि(स्त्रि)षु स्थानेष्वविस्वरः ।
मधुरः कीर्तितस्तारः प्रौढो मधुररञ्जकः ॥ ६८ ॥

**मृष्ट इत्यादिना** । ननु मृष्टादयो गुणिन एवोद्दिष्टाः । एभिर्गुणैरिति कथं तत्परामर्श उपपद्यत इति चेदुच्यते । नागृहीतविशेषणे विशेष्ये बुद्धिरितिन्यायेन मृष्टादिषु वर्तमानानां श्रोत्रनिर्वापकत्वादिगुणानां पुरःस्फूर्तिकत्वेन बुद्धिस्थतयैभिर्गुणैरिति निर्देशो निर्दोष एव। इहान्वयप्रकारस्तु च्छविमानित्येतदन्तः शब्द एभिर्गुणैः पञ्चदशभेदो निगद्यत इति ॥ ६६ ॥ ६७ ॥ ६८ ॥

नातिस्थूलो नातिकृशः स्निग्धश्चेहालको घनः ।
आकण्ठकुण्ठनं स स्यात्पुंसां स्त्रीणां तु सर्वदा ॥ ६९ ॥

**आकण्ठकुण्ठनं स स्यात्पुंसां स्त्रीणां तु सर्वदेति** । अत्र यदातदाशब्दावध्याहार्यौ । यदा पुंसामाकण्ठकुण्ठनं भवति तदा स स्यादित्यन्वयः। स इति चेहालः परामृश्यते। पुंसामिति कर्तरि षष्ठी । आकण्ठकुण्ठनमिति कण्ठस्य ध्वनेरासमन्तात्स्थानत्रयेण कुण्ठनमनतिबहिर्मुखतया ग्रहणम् । तच्च मारुतस्य तादृशनिरोधाद्भवति । तदा हि ध्वनिर्नातिस्थूलकृशः सन्स्निग्धो भवति । **स्त्रीणां तु सर्वदेति** । स्त्रीभिस्त्वा( णां त्वा )कण्ठकुण्ठनमन्तरेणापि । तासां चेहालः स्वतः प्रवर्तत इत्यर्थः । अथवाऽऽकण्ठकुण्ठनमिति

---

१ ख. ग. °रैतैः प° । २ च. श्रोतृनि° ।

[+कण्ठस्य मध्यस्थान ईषत्कण्ठकुण्ठनमिति]। कण्ठस्य मध्यमस्थानस्याऽऽईषत्कुण्ठनं संकोचकरणम्। एवमपि ध्वनिः पूर्वोक्तरूपो भवति। अन्वयादिकमन्यत्समानमेव। अत्र कण्ठशब्दो मन्द्रतारस्थानयोर्हृन्मूर्ध्नोरप्युपलक्षणम्। तयोरपि तादृशस्य ध्वनेः संभवात्। आकण्ठकुण्ठने स स्यादिति पाठे त्वध्याहाराद्वाक्यभेदो न कर्तव्यः स्यात्। अर्थस्तु स एव। चेहालशब्दो रूढः। अन्येऽन्वर्थाः॥ ६९॥

त्रिषु स्थानेष्वेकरूपश्छविरक्तयादिभिर्गुणैः।
त्रिस्थानो मनसो यस्तु सुखदः स सुखावहः॥ ७०॥
श्रीशंकरप्रियेणोक्तः प्रचुरस्थूलतायुतः।
कोमलोऽन्वर्थनामैव कोकिलाध्वनिवन्मतः॥ ७१॥
गाढस्तु प्रबलो दूरश्रवणाच्छ्रावको मतः।
करुणः श्रोतृचित्तस्य करुणारसदीपकः॥ ७२॥
दूरश्रवणयोग्यस्तु घनोऽन्तःसारतायुतः।
अरूक्षो दूरसंश्राव्यो बुधैः स्निग्धो ध्वनिः स्मृतः॥ ७३॥
श्लक्ष्णस्तु तैलधारावदच्छिद्रो धीरसंमतः।
अनुरक्तेस्तु जनको रक्तिमानभिधीयते॥ ७४॥
धातुर्विमलकण्ठत्वाद्यः प्राज्ञैरुपलक्ष्यते।
उज्ज्वलोऽयमिति प्रोक्तश्छविमानिति स ध्वनिः॥ ७५॥

इति शब्दगुणाः।

---

रूक्षस्फुटितनिःसारकाकोलीकेटिकेणयः[1]।
कृशो भग्न इति प्रोक्ता दुष्टस्याष्टौ भिदा ध्वनेः॥ ७६॥
रूक्षः स्निग्धत्वनिर्मुक्तः स्फुटितोऽन्वर्थनामकः।
एरण्डकाण्डनिःसारो निःसार इति कीर्तितः॥ ७७॥
काकोलिकाख्यः काकोलकुलनिर्घोषनिष्ठुरः।
स्थानत्रयप्राप्तिमुक्तो निर्गुणः केटिरुच्यते॥ ७८॥
कृच्छ्रोन्मीलन्मन्द्रतारः केणिरित्यभिधीयते।
अतिसूक्ष्मः कृशो भग्नः खरोष्ट्रध्वनिनीरसः॥ ७९॥

इति शब्ददोषाः।

---

॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥७६॥७७॥ ७८ ॥७९॥

---

+ धनुश्चिह्नान्तर्गतो ग्रन्थोऽधिक इति भाति।

---

१ ग. °काकलीकाककोण°।

गीतहेतुतया गायनानन्तरोद्दिष्टं शारीरं लक्षयति—

**रागाभिव्यक्तिशक्तत्वमनभ्यासेऽपि यद्ध्वनेः ।**
**तच्छारीरमिति प्रोक्तं शरीरेण सहोद्भवात् ॥ ८० ॥**

**रागाभिव्यक्तीति** । अनभ्यासेऽपि ध्वनेर्यद्रागाभिव्यक्तिशक्तत्वं तच्छारीरमित्यनेन शब्दशारीरयोर्धर्मधर्मिभावेन भेदो दर्शितः । रागाभिव्यक्तिशक्तत्वमिति रागस्य ग्रहांशादिस्वरसंनिवेशवतः श्रीरागादेरभिव्यक्तिरवैस्वर्येणासांकर्येण च प्रकाशनम् । तत्र शक्तत्वं शक्तिमत्त्वम् । शक्तिर्नामात्र रागाभिव्यक्तिबीजरूपः संस्कारविशेषो यां विना राग एव न प्रसरेत् । प्रसृतं वा हसनीयं भवेत् । अत एवानभ्यासेऽपीत्युक्तम् । अयमभिप्रायः—शक्तौ सत्यामभ्यासे कृते रागाभिव्यक्तिः सुतरां भवति । असत्यां तु तस्यामभ्यासेनैव सा भवतीति । एतदेवाभिसंधाय शरीरेण सहोद्भवादिति शारीरशब्दस्य व्युत्पत्तिर्दर्शिता । यथा ध्वनिः शरीरेण सहोद्भूतो भवति तथा तस्य रागाभिव्यक्तिशक्तत्वमपि शरीरेण सहोद्भूतं भवति । न ह्यभ्यासेनाऽऽगन्तुकमित्यर्थः ॥ ८० ॥

**तारानुध्वनिमाधुर्यरक्तिगाम्भीर्यमार्दवैः ।**
**घनतास्निग्धताकान्तिप्राचुर्यादिगुणैर्युतम् ॥ ८१ ॥**
**तत्सुशारीरमित्युक्तं लक्ष्यलक्षणकोविदैः ।**
**अनुध्वानविहीनत्वं रूक्षत्वं त्यक्तरक्तिता ॥ ८२ ॥**
**निःसारता विस्वरता काकित्वं स्थानविच्युतिः ।**
**कार्श्यं कार्कश्यमित्याद्यैः कुशारीरं कुदूषणैः ॥ ८३ ॥**

तस्य गुणदोषान्क्रमेण दर्शयति—**तारानुध्वनीत्यादिना** ॥८१॥८२॥८३॥

**विद्यादानेन तपसा भक्त्या वा पार्वतीपतेः ।**
**प्रभूतभाग्यविभवैः सुशारीरमवाप्यते ॥ ८४ ॥**

सुशारीरप्राप्तौ हेतून्दर्शयति—**विद्यादानेनेत्यादिना** ॥ ८४ ॥

**इति शारीरलक्षणम् ।**

अथ गमकान्सामान्यविशेषाभ्यां लक्षयति—

**स्वरस्य कम्पो गमकः श्रोतृचित्तसुखावहः ।**
**तस्य भेदास्तु तिरिपः स्फुरितः कम्पितस्तथा ॥ ८५ ॥**
**लीन आन्दोलितवलित्रिभिन्नकुरुलाहताः ।**
**उल्लासितः प्लावितश्च गुम्फितो मुद्रितस्तथा ।**
**नामितो मिश्रितः पञ्चदशेति परिकीर्तिताः ॥ ८६ ॥**

---

१ ग. °रा तु ध्व° । २ च. °क्तिमा । निः° । ३ ग. °कुरला° ।

**स्वरस्य कम्प** इत्यादिना । श्रोतृचित्तसुखावह इत्यनेन विशिष्टस्यैव कम्पस्य गमकत्वमिष्टम् । अन्यथा विपरीतस्यापि तस्य गमकत्वं स्यात् ॥८५।८६॥

**लघिष्ठडमरुध्वानकम्पानुकृतिसुन्दरः ।**
**द्रुततुर्यांशवेगेन तिरिपः परिकीर्तितः ॥ ८७ ॥**

तिरिपादीनां लक्षणानि निगदव्याख्यातानि ॥ ८७ ॥

**वेगे द्रुततृतीयांशसंमिते स्फुरितो मतः ।**
**द्रुतार्धमानवेगेन कम्पितं गमकं विदुः ॥ ८८ ॥**
**लीनस्तु द्रुतवेगेनाऽऽन्दोलितो लघुवेगतः ।**
**वलिर्विविधवक्रत्वयुक्तवेगवशाद्भवेत् ॥ ८९ ॥**
**त्रिभिन्नस्तु त्रिषु स्थानेष्वविश्रान्तघनस्वरः ।**
**कुरुलो वलिरेव स्याद्ग्रन्थिलः कण्ठचकोमलः ॥ ९० ॥**
**स्वरमग्रगमाहत्य निवृत्तस्त्वाहतो मतः ।**
**उल्लासितः स तु प्रोक्तो यः स्वरानुत्तरोत्तरान् ॥ ९१ ॥**
**क्रमाद्गच्छेत्प्लावितस्तु प्लुतमानेन कम्पनम् ।**
**हृदयंगमहुंकारगम्भीरो गुम्फितो भवेत् ॥ ९२ ॥**
**मुखमुद्रणसंभूतो मुद्रितो गमको मतः ।**
**स्वराणां नमनादुक्तो नामितो ध्वनिवेदिभिः ॥ ९३ ॥**

॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ ९२ ॥ ९३ ॥

**एतेषां मिश्रणान्मिश्रस्तस्य स्युर्भूरयो भिदाः ।**

**एतेषां मिश्रणान्मिश्र** इति । एतेषां तिरु(रि)पादीनां मध्ये द्वित्रिचतुःप्रभृतीनां यथायोगं मिश्रणमत्र विवक्षितम्, न तु सर्वेषामेव मिश्रणं विवक्षितम् । अन्यथा 'तस्य स्युर्भूरयो भिदाः' इत्युत्तरं वचनमनुपपन्नं स्यात् । सर्वमिश्रणात्मकस्य तस्यैकत्वात् । ननु सर्वमिश्रणेऽपि मतिवेशा(?)विशेषबाहुल्यादनेकत्वमुपपद्यत इति चेत् । न । वक्ष्यमाणेषु स्थायिष्वेकानेकस्वराश्रयत्वाभ्यां यथायोगं द्वित्र्यादीनामेव मिश्रप्रयोगदर्शनात् ।

एतदेवाभिसंधाय तत्प्रयोगस्थलं दर्शयति—

**तासां(तेषां)तु स्थायवागेषु विवृतिः संविधास्यते ॥ ९४ ॥**

**तेषां त्विति** । तुशब्दो भिन्नक्रमः । विवृतिस्त्विति संबन्धः । विवृतिर्विवरणं प्रकाशनमित्यर्थः । स्थायवागेषु स्थायाश्रिता वागाः । स्थायो रागावयवः। वागो

१ च. °मग्रिममा° । २ च. मतः ।

गमक इति वक्ष्यते । तेषु रागावयवाश्रितगमकेषु । तेषां मिश्रभेदानां विवृतिस्तु संविधास्यते । समनन्तरमेतत्क(व क)रिष्यत इत्यर्थः ॥ ९४ ॥

**इति गमकलक्षणम् ।**

गमकाश्रयत्वेन तदन्तरमुद्दिष्टानां स्थायानां सामान्यलक्षणमाह—

**रागस्यावयवः स्थायो वागो गमक उच्यते ।**
**तत्रोक्तं लक्ष्म वागानां स्थायानां तूच्यतेऽधुना ॥ ९५ ॥**

**रागस्यावयव इति** । अवयव एकदेशः । सोऽप्यत्र न्यासापन्याससंन्यासविन्यासेष्वन्यतमस्वराविश्रान्तत्वेन प्रयुक्तोंऽशादिकतिपयस्वरसंदर्भो वेदितव्यः । **वागो गमक उच्यत इति** । गमक एव देशभाषया वाग इत्युच्यत इत्यर्थः ॥ ९५ ॥

**वागानामपि केषांचित्प्रसङ्गाद्वच्मि लक्षणम् ॥ ९६ ॥**

**वागानामपीति** । केषांचिद्वागानां मिश्रभेदानां लक्षणमपि प्रसङ्गात्स्थायलक्षणानन्तरं तन्मिश्रभेदप्रस्तावादित्यर्थः ॥ ९६ ॥

अथ स्थायभेदानुद्दिशति—

**ते च शब्दस्य ढालस्य लवन्या वहनेरपि ।**
**वाद्यशब्दस्य यन्त्रस्य च्छायायाः स्वरलङ्घितः ।**
**प्रेरितस्तीक्ष्ण इत्युक्ता व्यक्तासंकीर्णलक्षणाः ॥ ९७ ॥**

**ते च शब्दस्येत्यादिना** । अत्र शब्दस्येत्यादिकया षष्ठ्या प्रतिसंबन्धिनामुद्देशेन तत्संबन्धिनः स्थाया उद्दिष्टा वेदितव्याः । **व्यक्तासंकीर्णलक्षणा इति** । व्यक्ताः प्रसिद्धाश्चासंकीर्णानि विविक्तानि लक्षणानि स्वरूपाणि येषां ते चेति तथोक्ताः ॥ ९७ ॥

**इत्यसंकीर्णलक्षणाः प्रसिद्धा दश स्थायाः ।**

---

**भजनस्य स्थापनाया गतेर्नादध्वनिच्छवेः ।**
**रक्तेर्धृतस्य शब्दस्य भृतस्यांशावधानयोः ॥ ९८ ॥**
**अपस्थानस्य निकृतेः करुणाविविधत्वयोः ।**
**गात्रोपशमयोः काण्डारणानिर्जवनान्वितौ ॥ ९९ ॥**
**गाढो ललितगाढश्च ललितो लुलितः समः ।**
**कोमलः प्रसृतः स्निग्धचोक्षोचितसुदेशिकाः ॥ १०० ॥**

॥ ९८ ॥ ९९ ॥ १०० ॥

**अपेक्षितश्च घोषश्च स्वरस्यैते प्रसिद्धितः ।**
**स्थायानां गुणभेदेन व्यपदेशा निरूपिताः ।**

---

१ ग. गतिदानाध्वनां छवे । र° । २ घ. °योः । मात्रो° ।

गुणभेदेन व्यपदेशा इति । भजनस्येत्यादिनोद्दिष्टानां स्थायानां गुणभेदेन रागातिशयाधानरूपभजनादिगुणानां भेदेन प्रसिद्धितो गीतज्ञप्रसिद्धेर्हेतोर्व्यपदेशाः संज्ञा निरूपिता इत्यन्वितोऽर्थः । भजनस्थायादीनां प्राधान्याद्धर्मभेदेनैव भेदेनात्यन्तं धर्मिभेद इति भावः । तेनैतेऽसंकीर्णा इति भावः ॥ १०१ ॥

इति त्रयस्त्रिंशद्गुणकृतभेदाः प्रसिद्धाः स्थायाः ।

---

वहाक्षराडम्बरयोरुल्लासिततरङ्गितौ ।
प्रलम्बितोवस्खलितस्त्राटितः संप्रविष्टकः ॥ १०२ ॥
उत्प्रविष्टो निःसरणो भ्रामितो दीर्घकम्पितः ।
प्रतिग्राह्योल्लासितश्च स्यादलम्बविलम्बिकः ॥ १०३ ॥

॥ १०२ ॥ १०३ ॥

स्यात्त्रोटितप्रतीष्टोऽपि प्रसृताकुञ्चितः स्थिरः ।
स्यायुकः क्षिप्तसूक्ष्मान्तावित्यसंकीर्णलक्षणाः ॥१०४॥

असंकीर्णलक्षणा इति । वहाक्षरेत्यादिनोद्दिष्टा असंकीर्णलक्षणाः । असंकीर्णं पृथग्भूतं लक्षणं येषां ते तथोक्ताः । प्रथमोद्दिष्टानामेतेषां वाऽ(चा)-संकीर्णलक्षणत्वाविशेषेऽपि तेषां प्रसिद्धत्वमेतेषामप्रसिद्धत्वमिति भेदो द्रष्टव्यः । अत एव पृथगुद्देशोऽत्र युक्तः ॥ १०४ ॥

इतीषत्प्रसिद्धा विंशतिरसंकीर्णलक्षणाः[स्थायाः] ।

---

प्रकृतिस्थस्य शब्दस्य कलाक्रमणयोरपि ।
घटनायाः सुखस्यापि चोले जीवस्वरस्य च ।
वेदध्वनेर्घनत्वस्य शिथिलोऽवघटः प्लुतः ॥ १०५ ॥
रागेष्टोपस्वराभासो बद्धः कलरवस्य च ।
छान्दसः सुकराभासः संहितो लघुरन्तरः ॥ १०६ ॥
ह्रस्वः शिथिलगाढश्च दीर्घोऽसाधारणस्ततः ।
साधारणो निराधारो दुष्कराभासनामकः ॥ १०७ ॥

॥ १०५ ॥ १०६ ॥ १०७ ॥

---

१ ग. लासितो । २ च. °लम्बितः । स्था° । ३ ग. घाले । च. बाले । ४ ग. °वटरः प्लु° । ५ ङ. °गेऽष्टा( ष्टा )च स्व° । ६ ङ. °भासा ब° ।

**मिश्रश्चैतेऽपि संकीर्णा गुणैर्भिन्नाश्च पूर्ववत् ॥ १०८ ॥**

**एतेऽपि संकीर्णा इति** । एते प्रकृतिस्थस्येत्यादिनोद्दिष्टाः स्थाया अपि संकीर्णाः। अत्रापिशब्दः समुच्चये। तेनायमर्थः—भजनस्थायादयो यद्वत्संकीर्णास्तद्वदेते च संकीर्णा नात्यन्तं पृथग्भूतस्वरूपाः, किंतु पूर्ववद्भजनस्थायादय इव गुणैः प्रकृतिस्थशब्दवत्तादिभिर्भिन्नाः पृथग्भूताः। उभयेषामपि गुणभिन्नत्वाविशेषेऽपि तेषां प्रसिद्धित एतेषामप्रसिद्धितो भेदो द्रष्टव्यः। अतस्तेभ्यः पृथगुद्देशोऽप्येतेषामुपपन्न एव ॥ १०८ ॥

**इतीषत्प्रसिद्धास्त्रयस्त्रिंशद्गुणभिन्नाः ।**

---

**इति षण्णवतिः स्थायाः शार्ङ्गदेवेन कीर्तिताः ॥ १०९ ॥**

॥ १०९ ॥

अथैषां क्रमेण लक्षणान्याह—

**मुक्तशब्दप्रतिग्राह्याः स्थायाः शब्दस्य कीर्तिताः।**
**ढालो मुक्ताफलस्येव चलनं लुण्ठनात्मकम् ॥ ११० ॥**

**मुक्तशब्दप्रतिग्राह्या इत्यादिना** । मुक्तश्चासौ शब्दश्चेति मुक्तशब्दः। प्रतिग्रहीतुं योग्याः प्रतिग्राह्याः। अयमर्थः—पूर्वस्थायो यस्मिन्ध्वनौ मुच्यत उत स्थायचक्रवालरीत्या तत्रैव प्रतिगृह्यते चेत्तदा शब्दस्थाया इति व्यपदिश्यन्त इत्यर्थः ॥ ११० ॥

**स³ एषु ते स्युर्ढालस्य नमनं त्वतिकोमलम्।**
**लवनी तद्युजश्छा(स्था) या लवन्याः परिकीर्तिताः ॥१११॥**
**यत्तु कम्पनमारोहिण्यवरोहिणि वा भवेत्।**
**वदनी साऽथ संचारिण्यपि वा स्थिरकम्पनम् ॥ ११२ ॥**

॥ १११ ॥ ११२ ॥

**सा गीतालप्तिसंबन्धभेदेन द्विविधा मता।**
**पुनर्द्विधा स्थिरा वेगाढ्या पुनस्त्रिविधोदिता ॥ ११३ ॥**

वहन्यवान्तरभेदप्रदर्शनार्थं सा गीतालप्तिसंबन्धभेदेनेत्युक्तम् । तत्र गीतालप्त्योरुभयोरपि रञ्जकस्वरसंदर्भत्वाविशेषात्कथं भेदकत्वमिति चेत् । उच्यते । गीतशब्दो यद्यपि निबद्धानिबद्धसामान्यवचनस्तथाऽप्यनिबद्धाविशेषवचनालप्तिशब्दसमभिव्याहाराद्गोबलीवर्दन्यायेनात्र निबद्धत्वं(त्व) वचनत्वेन व्यवस्थापित इति ॥ ११३ ॥

**हृद्या कण्ठ्या शिरस्या च देहस्था हृदयोद्भवा।**
**वहनी स्यात्पुनर्द्वेधा खुत्तो(त्ता)त्फुल्लेति भेदतः ॥ ११४ ॥**

---

१ च. °यास्ते च शब्दस्य की°। २ ग. उरस्था°। ३ ख. घ. समेषु।

यस्यामन्तर्विशन्तीव स्वरा खुत्ते(सुप्ते?)ति सा मता ।
सोत्फुल्लेत्युदिता यस्यां निर्यान्तीवोपरि स्वराः ॥ ११५ ॥

॥ ११४ ॥ ११५ ॥

बलिर्या गमकेषूक्ता साऽप्येवंविधभेदभाक् ।
वहनी येषु ते स्थाया वहन्याः परिभाषिताः ॥ ११६ ॥
रागमग्ना वाद्यशब्दा येषु ते वाद्यशब्दजाः ।
ये यन्त्रेष्वेव दृश्यन्ते बाहुल्यात्ते तु यन्त्रजाः ॥ ११७ ॥

॥ ११६ ॥ ११७ ॥

छाया काकुः षड्जकाराः स्वररागान्यरागगा ।
स्याद्देशक्षेत्रयन्त्राणां तल्लक्षणमथोच्यते ॥ ११८ ॥

छाया काकुरिति । छायेत्यस्य विवरणं काकुरिति । काकुर्ध्वनेर्विकारः ॥ ११८ ॥

श्रुतिन्यूनाधिकत्वेन या स्वरान्तरसंश्रया ।
स्वरान्तरस्य रागे स्यात्स्वरकाकुरसौ मता ॥ ११९ ॥

श्रुतिन्यूनाधिकत्वेनेति । श्रुतीनां छन्दोवत्यादीनां पूर्वोक्तानां न्यूनत्वेन तत्तत्स्वरोक्तसंख्यातोऽल्पत्वेनाधिकत्वेन तादृशसंख्यातो बहुत्वेन वा स्वरान्तरसंश्रया छाया स्वरान्तरस्य यदि स्यादापाततः श्रवणसाम्येन कृता भवेदसौ स्वरकाकुरिति मता । यथा हि चतुःश्रुतिकस्य षड्जस्य निषादकर्तृकाक्रमणेन द्विश्रुतित्वे सति श्रुतिन्यूनत्वेन निषादवत्प्रतीतिः । यथा च द्विश्रुतिकस्य निषादस्य षड्जाद्यश्रुतिद्वयाश्रयणेन चतुःश्रुतित्वे सति श्रुत्यधिकत्वेन षड्जवत्प्रतीतिश्च यतो ध्वनिविकाराद्भवति सा स्वरकाकुरिति मन्तव्येत्यर्थः । एवं स्वरान्तरेष्वपि द्रष्टव्यम् ॥ ११९ ॥

या रागस्य निजच्छाया रागकाकुं तु तां विदुः ।
सा त्वन्यरागकाकुर्या रागे रागान्तराश्रया ॥ १२० ॥
सा देशकाकुर्या रागे भवेद्देशस्वभावतः ।
शरीरं क्षेत्रमित्युक्तं प्रतिक्षेत्रं निसर्गतः ॥ १२१ ॥
रागे नानाविधा काकुः क्षेत्रकाकुरिति स्मृता ।
वीणावंशादियन्त्रोत्था यन्त्रकाकुः सतां मता ॥ १२२ ॥
अन्यच्छायाप्रवृत्तौ ये छायान्तरमुपाश्रिताः ।
छायायास्ते मताः स्थाया गीतविद्याविशारदैः ॥ १२३ ॥

॥ १२० ॥ १२१ ॥ १२२ ॥ १२३ ॥

१ च. या रागान्त° ।

मध्ये मध्ये स्वरान्भूरीँल्लङ्घयन्स्वरलङ्घितः ।
तिर्यगूर्ध्वमधःस्थाच्च प्रेरितः प्रेरितस्वरैः ।
स्वरपूर्णश्रुतिस्तारे तीक्ष्णवत्तीक्ष्ण उच्यते ॥ १२४ ॥

॥ १२४ ॥

इत्यसंकीर्णाः स्थाया दश ।
रागस्यातिशयाधानं प्रयत्नाद्भजनं मतम् ।
तद्युक्ता भजनस्य स्युः स्थापनायास्तु ते मताः॥ १२५ ॥
स्थापयित्वा स्थापयित्वा येषां प्रतिपदं कृतिः ।
सविलासाऽस्ति गीतस्य मत्तमातङ्गवद्गतिः ॥ १२६ ॥
तद्युक्तास्तु गतेः स्थायाः स्निग्धो माधुर्यमांसलः ।
बहुलो[2] येषु नादः स्यात्ते नादस्य प्रकीर्तिताः ॥ १२७ ॥
अतिदीर्घप्रयोगास्तु स्थाया ये ते ध्वनेर्मताः ।
युक्ताः कोमलया कान्त्या छवेः स्थाया[3] निरूपिताः॥१२८॥
रक्तेरुत्कर्षतो रक्तेरुक्ताः स्थाया मनीषिभिः ।
[4]भृतस्यान्वर्थनामानो भृतस्य भरणाद्ध्वनेः ॥ १२९ ॥

॥ १२५ ॥ १२६ ॥ १२७ ॥ १२८ ॥१२९॥

रागान्तरस्यावयवो रागेंऽशः स च सप्तधा ।
कारणांशश्च कार्यांशः सजातीयस्य चांशकः ॥ १३० ॥

रागान्तरस्यावयवो रागेंऽश इति । बहुलीकोलाहलादिकार्यकारणादि-रागे रागान्तरस्य कोलबहुल्यादिकारणकार्यादिभूतान्यरागस्यावयवः स्वरसमुदाय-रूप एकदेशो रक्त्यर्थमुपादीयमानोंऽश इति परिभाष्यते, न तु प्रसिद्धः स्वर-विशेष उच्यते । नन्वन्यरागे काकोरंशस्य च को भेद इति चेत् । उच्यते । प्रकृतरागे समवायवृत्त्या वर्तमानेव च्छायाऽत्यन्तसादृश्याद्रागान्तराश्रया सती या प्रतीयते साऽन्यरागकाकुः । अंशस्तु प्रकृतरागे ह्यविद्यमान एव शोभातिशयाय याचितकमण्डनन्यायेन रागान्तरादुपादाय संयोगवृत्त्याऽत्र संबध्यत इति भेदो द्रष्टव्यः ॥ १३० ॥

सदृशांशो विसदृशो मध्यमस्यांशकोऽपरः[5] ।
अंशांशश्चेति यो रागे कार्येऽशः कारणोद्भवः ॥ १३१ ॥
कारणांशस्त्वसौ रामकृतौ कोलाहलांशवत् ।
कारणे कार्यरागांशः कार्यांशो भैरवे यथा ॥ १३२ ॥

॥ १३१ ॥ १३२ ॥

---

१ च. °रितैः स्व° । २ च. °लो यत्र ना° । ३ च. स्थायाः प्रकीर्तिताः । ४ च. धृता अन्व° । ५ च. °ध्यस्थानांश° ।

भैरव्यंशः समां जातिं गौडत्वाद्यां समाश्रिताः ।
कर्णाटाद्याः सजातीयास्तेष्वेकांशोऽपरत्र यः ॥ १३३ ॥
सजातीयांशकः स स्याद्ंशः सदृशरागयोः ।
सदृशांशो यथा नट्टावराट्योः शुद्धयोर्मिथः ॥ १३४ ॥
सादृश्यशून्ययोरंशोऽत्यन्तं विसदृशांशकः ।
वेलावल्याश्च गू(गु)र्जर्याः परस्परगतौ यथा ॥ १३५॥
मध्यस्थरागौ सादृश्यवैसादृश्यविवर्जितौ ।
मध्यस्थांशस्तयोरंशो नट्टादेशाख्ययोरिव ॥ १३६ ॥
अंशेंऽशान्तरसंचारादंशांश इति कीर्तितः ।
येष्वंशो दृश्यते स्थायास्तेंऽशस्य परिकीर्तिताः ॥ १३७ ॥
मनसा तत्कृतेनैव ये ग्राह्यास्तेऽवधानजाः ।
आयासेन विना यत्र स्थाने स्यात्प्रचुरो ध्वनिः ॥ १३८ ॥
स्वस्थानं तदपस्थानं त्वायासेन तदुद्गतेः ।
अपस्थानस्य ते स्थाया येऽपस्थानसमुद्भवाः ॥ १३९ ॥
निकृतेः करुणायाश्च स्थायास्त्वन्वर्थनामकाः ।
स्थाया नानाविधां भङ्गिं(ङ्गीं) भजन्तो विविधत्वजाः॥१४०॥
गात्रस्य गात्रे निरताः कृत्वा तीव्रतरं ध्वनिम् ।
येषूपशान्तिः क्रियते भवन्त्युपशमस्य ते ॥ १४१ ॥

॥ १३३ ॥ १३४ ॥ १३५ ॥ १३६ ॥ १३७ ॥ १३८ ॥ १३९ ॥ १४० ॥ १४१ ॥

काण्डारणा प्रसिद्धैव तस्याः स्थायास्तदुद्भवाः ।
सरलः कोमलो रक्तः क्रमान्नीतोऽतिसूक्ष्मताम् ॥ १४२ ॥

**काण्डारणा प्रसिद्धैवेति** । काण्डेषु मन्द्रमध्यतारेष्वासमन्ताद्रणतीति व्युत्पत्त्या प्रसिद्धेत्यर्थः । सुगममन्यत् ॥ १४२ ॥

स्वरस्याऽऽद्येषु ते स्थायाः प्रोक्ता निर्जवनान्विताः ।
गाढः शैथिल्यनिर्मुक्तः स एव मृदुतान्वितः ॥ १४३ ॥
भवेल्लालितगाढस्तु ललितस्तु विलासवान् ।
मार्दवाघूर्णितः प्रोक्तो लुलितः स्यात्स यः पुनः ॥ १४४ ॥

॥ १४३ ॥ १४४ ॥

---

१ च. °र्मितः सा° ।

हीनो वेगविलम्बाभ्यां यथार्थः कोमलो मतः।
प्रसृतः प्रसृतोपेतः स्निग्धो रूक्षत्ववर्जितः ॥ १४५ ॥
उज्ज्वलो गदितश्चोक्ष उचितस्तु यथार्थकः।
सुदेशिको विदग्धानां वल्लभोऽपेक्षितस्तु सः ॥ १४६ ॥
स्थायस्थायेन पूर्वेण पूर्त्यर्थं योऽभिकाङ्क्षितः।
बलौ बहेर्वहन्त्यां च यः स्निग्धमधुरो महान् ॥ १४७ ॥
मन्द्रे ध्वनिः सघोषः स्यात्तद्युक्ता घोषजा मताः।
गम्भीरमधुरध्वाना मन्द्रे ये स्युः स्वरस्य ते ॥ १४८ ॥

इति त्रयस्त्रिंशत्संकीर्णाः [स्थायाः]।

बहन्त इव कम्पन्ते स्वरा येषु वहस्य ते।
अक्षराडम्बरो येषु मुख्यास्ते स्युस्तदन्विताः ॥ १४९ ॥
वेगेन प्रेरितैरूर्ध्वं स्वरैरुल्लासितो मतः।
यत्र गङ्गातरङ्गान्ति स्वरांः स स्यात्तराङ्गितः ॥१५०॥
परितोऽर्धभृते कुम्भे जलं दोलायते यथा।
गीते तथाविधः स्थायः प्रोक्तस्तज्ज्ञैः प्रलम्बितः ॥ १५१ ॥
अवस्खलति[1]यो मन्द्रादवरोहेण वेगतः।
सोऽवस्खलित इत्युक्तस्त्रोटितस्तु स्वरे क्वचित् ॥ १५२ ॥
चिरं स्थित्वाऽभिवत्तारं स्पृष्ट्वा प्रत्यागतो भवेत्।
घनस्वरोऽवरोहे स्यात्संप्रविष्टस्तथाविधः ॥ १५३ ॥
आरोहिण्युत्प्रविष्टः स्यादन्वर्थाः स्युः परे त्रयः।
प्रतिगृ(ग्रा)ह्योल्लासितः स्यादसौ यः प्रतिगृह्यते ॥ १५४ ॥
उत्क्षिप्योत्क्षिप्यानिपतत्केलिकन्दुकसुन्दरः।
द्रुतपूर्वो विलम्बान्तः स्यादलम्बविलम्बकः ॥ १५५ ॥
स्यात्त्रोटितप्रतीष्टोऽसौ यत्र स्यात्तारमन्द्रयोः।
प्रथमं त्रोटयित्वैकमपरस्य प्रतिग्रहः ॥ १५६ ॥
प्रसृताकुञ्चितः स्थायः प्रसार्याऽऽकुञ्चितध्वनिः।
स्थायिवर्णस्थितिः कम्पः स्थिर इत्यभिधीयते ॥ १५७ ॥

॥ १४५ ॥ १४६ ॥ १४७ ॥ १४८ ॥ १४९ ॥ १५० ॥ १५१ ॥ १५२ ॥ १५३ ॥ १५४ ॥ १५५ ॥ १५६ ॥ १५७ ॥

---

१ ख. ग. ङ. °हे वह°। २ घ. °स्तज्ज्ञैर्झल°।

एकैकस्मिन्स्वरे स्थित्वा स्थित्वा वाऽथ द्वयोर्द्वयोः ।
त्रिषु त्रिष्वथवा स्थायो रचितः स्थायुको मतः ।
ऊर्ध्वं प्रसारितः क्षिप्तः सूक्ष्माङ्गो(न्तो)न्तेऽल्पतां गतः॥१५८॥
इत्यसंकीर्णा विंशतिः[ स्थायाः ] ।
शब्दः प्रकाशते येषु धृतिभृत्यादिवर्जितः ।
स्वभावादेव शब्दस्य प्रकृतिस्थस्य ते मताः ॥ १५९ ॥
येषु सूक्ष्मीकृताः शब्दास्ते कलायाः प्रकीर्तिताः ।
भृशं प्राणप्रतिग्राह्या ये स्युराक्रमणस्य ते ॥ १६० ॥
ते स्थाया घटनाया ये शिल्पिना घटिता इव ।
सुखदास्तु सुखस्य स्युश्चालिर्जक्केति कीर्तिताः ॥ १६१ ॥
स्थायास्तदन्विताश्चालेरंशो जीवस्वरो मतः ।
तत्प्राधान्येन ये गीताः स्थाया जीवस्वरस्य ते ॥ १६२ ॥
वेदध्वनिनिभध्वानाः स्थाया वेदध्वनेर्मताः ।
अन्तःसारो घनत्वस्य यथार्थः शिथिलो मतः ॥ १६३ ॥
दुष्करोऽवघटः प्रोक्तः प्लुतोऽत्यन्तविलम्बितः ।
रागेणेष्टः स्वपूर्त्यर्थं रागेष्ट इति कीर्तितः ॥ १६४ ॥
स स्यादपस्वराभासो भात्यपस्वरवत्तु यः ।
स्तब्धस्थायस्तु बद्धः स्याद्बहुत्वं मधुरध्वनेः ॥ १६५ ॥
यस्मिन्कलरवस्यासौ छान्दसश्चतुरप्रियः ।
सुकराभास इत्युक्तो दुष्करः सुकरोपमः ॥ १६६ ॥
घण्टानादवदायातस्तारान्मन्द्रं तु संहितः ।
लघुर्गुरुत्वरहितो ध्रुवकाभोगयोस्तु यः ॥ १६७ ॥
अन्तरे सा(सोऽ)न्तरो वक्रो यथार्थः सुकरस्तु यः ।
तारे दीप्तप्रसन्नोऽसौ सुकरः कोमलध्वनिः ॥ १६८ ॥
प्रसन्नमृदुरित्यक्तो गुरुरन्वर्थनामकः ।
ह्रस्वस्तोकः परौ द्वौ तु स्यातामन्वर्थनामकौ ॥ १६९ ॥
शब्दशारीरगुणतः सुकरः सुस्वरोऽथवा ।
यः कस्यचिन्न सर्वेषां सोऽसाधारण उच्यते ॥ १७० ॥

॥ १५८ ॥ १५९ ॥ १६० ॥ १६१ ॥ १६२ ॥ १६३ ॥ १६४ ॥ १६५ ॥ १६६ ॥ १६७ ॥ १६८ ॥ १६९ ॥ १७० ॥

---

१ ग. °षु वृत्तिभृ° । २ ग. °तो ह्यन्तर्विल° ।

सदृशो यस्तु सर्वेषामसौ साधारणः स्मृतः ।
न वाञ्छति वहन्यादि यः स्वनिर्वाहहेतवे ॥ १७१ ॥
उच्यते स निराधारः सुकरो दुष्करोपमः ।
दुष्कराभास इत्युक्तो मिश्रणान्मिश्रको मतः ॥ १७२ ॥

इति त्रयस्त्रिंशत्संकीर्णलक्षणाः [ स्थायाः ] ।

॥ १७१ ॥ १७२ ॥

आनन्त्यान्नैव शक्यन्ते भेदा मिश्रस्य भाषितुम् ।
दिक्प्रदर्शनमात्रार्थमुच्यन्ते तेषु केचन ॥ १७३ ॥
यो यस्मिन्बहुलः स्थायः स तेन व्यपदिश्यते ।
साम्ये तु मिश्रनामैव स त्विदानीं प्रपञ्च्यते ॥ १७४ ॥
तिरिपान्दोलितो लीनकम्पितः कम्पिताहतः ।
तिरिपस्फुरितो लीनस्फुरितः स्फुरिताहतः ॥ १७५ ॥
लीनकम्पितलीनश्च त्रिभिन्नकुरुलाहतः ।
प्लावितोल्लासितवलिर्वलिहुम्फितमुद्रितः ॥ १७६ ॥
नामितान्दोलितवलिर्वलिनामितकम्पितः ।
आन्दोलितप्लावितकसमुल्लासितनामितः ॥ १७७ ॥
तिरिपान्दोलितवलिस्त्रिभिन्नकुरुलोऽपरः ।
त्रिभिन्नलीनस्फुरितप्लावितान्दोलितः परः ॥ १७८ ॥
वहनीढालयोर्ढालवहन्योः शब्दढालयोः ।
वहनीयन्त्रयोश्छायायन्त्रयोः शब्दयन्त्रयोः ॥ १७९ ॥
वहनीछाययोर्यन्त्रवाद्यशब्दभवः परः ।
तीक्ष्णप्रेरितकस्तीक्ष्णप्रेरितः स्वरलङ्घितः ॥ १८० ॥
ढालशब्दोत्थयन्त्रोत्थवाद्यशब्दभवः परः ।
ढालच्छाया यन्त्रवाद्यशब्दशब्दभवोऽपरः ॥ १८१ ॥
झल्लम्बितावस्खलितस्त्राटितोल्लासितः परः ।
संप्रविष्टोत्प्रविष्टश्च संप्रविष्टतरङ्गितः ॥ १८२ ॥

॥ १७३ ॥ १७४ ॥ १७५ ॥ १७६ ॥ १७७ ॥ १७८ ॥ १७९ ॥ १८० ॥ १८१ ॥ १८२ ॥

---

१ ग. लक्षितुम । २ ग. °रः । उल्ल° ।

अन्यः प्रतिगृहीतोल्लोलितालम्बविलम्बकः ।
स्यात्रोटितप्रतीष्टोत्प्रविष्टनिःसरणः परः ॥ १८३ ॥
दीर्घकम्पितसूक्ष्मान्तभ्रामितस्थायुकोऽन्यकः ।
वहाक्षराडम्बरजप्रसृताकुञ्चितस्थिरः ॥ १८४ ॥
भ्रामितक्षिप्तसूक्ष्मान्ततरङ्गितझलम्बितः ।
एते षट्त्रिंशदन्येऽपि विज्ञातव्या दिशाऽनया ॥ १८५ ॥
॥ १८३ ॥ १८४ ॥ १८५ ॥

इति स्थायवागलक्षणम् ।

अथ सप्रभेदालप्तिं लक्षयिष्यन्प्रथमं तावदालप्तिशब्दं व्युत्पादयितुमाह—

रागालपनमालप्तिः प्रकटीकरणं मतम् ।
सा द्विधा गदिता रागरूपकाभ्यां विशेषणात् ॥१८६॥

**रागालपनमालप्तिरिति** । अत्र यदालपनं साऽऽलप्तिरित्यनेनाऽऽलप्तिशब्दोऽप्यालपनशब्दवद्भावसाधनत्वेन व्युत्पन्न इति दर्शितं भवति । नन्वालापशब्दस्यापि साधनत्वाविशेषात् ' स्याद्रागालाप आलप्तिः ' इति व्युत्पादनं कस्मान्न क्रियत इति चेत् । उच्यते । घञ्क्तिन्प्रत्यययोर्विलक्षणार्थत्वादिति । तथा हि-घञस्तावदाविर्भावोऽर्थः । क्तिनस्तु तिरोभावोऽर्थः । आविर्भावतिरोभावयोरत्यन्तवैलक्षण्यमेव स्फुटम् । तदुभयमध्यस्थस्थित्यर्थत्वात्तदन्ते घञ्क्तिन्नन्तयोर्व्युत्पादनमविरुद्धम् । ताभ्यां तु परस्परव्युत्पादनं विरुद्धमेव । अत एव भावावस्थाभेदाद्घञाद्यन्तानां लिङ्गभेदोऽप्युपपन्न एव । यथा घञर्थ आविर्भावः सत्त्वपरिणामरूपो मूर्तिधर्मः पुंस्त्वेन दृष्ट इति घञन्तस्य पुंलिङ्गता । क्तिन्नर्थस्तिरोभावो रजःपरिणामरूपो मूर्तिधर्मः स्त्रीत्वेन दृष्ट इति क्तिन्नन्तस्य स्त्रीलिङ्गता । ल्युडर्थस्याऽऽविर्भावतिरोभावोभयान्तरालस्य तमःपरिणामरूपस्य मूर्तिधर्मस्य नपुंसकत्वेन दर्शनाल्ल्युडन्तस्य नपुंसकलिङ्गतेति । तदेवं भावसाधनानां घञाद्यन्तानामालापादिशब्दानां सामान्येन भावार्थत्वेऽपि नावस्थाविशेषभूताविर्भावतिरोभावस्थितिपरतया तेषां घञ्क्तिँल्युडन्तानां क्रमेण पुंस्त्रीनपुंसकलिङ्गता द्रष्टव्या । भावो नाम साध्यरूपस्य धात्वर्थस्य सिद्धत्वाकारः । तदवस्थाविशेषा आविर्भावादयः । तथा चोक्तं **हरदत्तमिश्रैः**—

" आख्यातशब्दे भागाभ्यां साध्यसाधनवर्तिता ।
प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः ॥

१ च. °ल्लासिता° । २ ग. स्फुटस्तु त° ।

साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना ।
सत्त्वभावस्तु यस्तु स्यात्स वज्रादिनिबन्धनः ॥
न विना लिङ्गसंख्याभ्यां सत्त्वभूतोऽर्थ उच्यते ।
इत्यतन्त्रमुपादानं तयोर्न तु विवक्षितम् " ॥ इत्युपक्रम्य—
" स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः ।
उभयोरन्तरं यच्च तदभावे नपुंसकम् ॥
आविर्भावतिरोभावस्थितिश्चेत्यनपायिनः ।
धर्मा मूर्तिषु सर्वासु लिङ्गत्वेनानु( नु ? ) दर्शिताः ॥

अविर्भाव उपचयः पुंस्त्वं तिरोभाव उप( वोऽप )चयः स्त्रीत्वमन्तरालावस्थास्थितिर्नपुंसकत्वमित्यर्थः । कस्य पुनराविर्भावादिकं लिङ्गम् । सत्त्वरजस्तमसां गुणानां तत्परिणामरूपाणां च तदात्मकानां शब्दस्पर्शरूपरसगन्धानां शब्दादिवत्संघातरूपाश्च सर्वमूर्तयः क्षणपरिणामस्वभावाश्च सत्त्वादयो गुणा न स्वस्मिन्नात्मनि मुहूर्तमवतिष्ठन्ते । एवं शब्दादय आकाशादयो वटादयश्च ।

उक्तं च—" सर्वमूर्त्यात्मभूतानां शब्दादीनां गुणे गुणे ।
त्रयः सत्त्वादिधर्मास्ते सर्वत्र समवस्थिताः " इति ।
" क्वथितोदकवच्चैषामनवस्थितवृत्तिता ।
अजस्रं सर्वभावानां भाष्य एवोपवर्णितम् " इति ।
तथा—" रूपस्य चाऽऽत्ममात्राणां शुक्लादीनां प्रतिक्षणम् ।
काचित्प्रतीयते काचित्कथंचिदभिवर्तते " इति ।
" प्रवृत्तिमन्तः सर्वेऽर्थास्तिसृभिश्च प्रवृत्तिभिः ।
संततं न वियुज्यन्ते वाचश्चैवात्र संभवः " इति च ॥

टाबाद्यन्तशब्दा एवैतामवस्थां गोचरयन्तीत्यर्थः । पुरुषो यद्यप्यपरिणामी तथाऽपि—

" न चेतनेषु संक्रान्तं चैतन्यमिव दृश्यते ।
प्रतिबिम्बकधर्मेण यत्तद्वाचो निबन्धनम् " ॥
ततश्च—" यथा प्रवृत्तिधर्मार्थस्त्विति रूपेण गृह्यते ।
अनुयातीव सोऽन्येषां प्रवृत्तीर्विष्वगाश्रयाः ॥
सामान्यमपि गोत्वादिव्यक्तेरव्यतिरेकतः ।
प्रवृत्तिधर्मतद्द्वारा शशशृङ्गादिवाऽऽकुलम्[?] ॥
स्यादुत्तरपदार्थस्य सद्भावाल्लिङ्गयोगिता ।
प्रवृत्तेरपि विद्यन्ते तिस्रोऽप्येताः प्रवृत्तयः ॥
पुंस्त्वं पुंसां स्त्रीत्वमिति तेन स्यादन्यलिङ्गता " ॥

तदेवं सर्वपदार्थव्यापित्वोपसङ्गतः । उपचयापचयान्तरालावस्थास्त्रीणि लिङ्गानि । नक्षत्रं तारका, डिम्भः कुमारी, अर्थो वस्त्वित्येकस्याप्यर्थस्य नानालिङ्गयोग उपपद्यते । आविर्भावादित्रयस्यापि गुणभेदेन तस्मिन्नेवार्थे सर्वदाभावात् । न चेत्तद्वृत्तेः सर्वस्यैव शब्दस्य त्रिलिङ्गताप्रसङ्गः । न ह्यस्ति नियमः शब्दो यत्रार्थे पर्यवस्यति तत्र विद्यमानः सर्व एवाऽऽकारस्तेन शब्देनाभिधातव्य इति । किंतु य आकारोऽभिधीयते तेन सता भवितव्यमित्येतावत् । तद्यथा-तक्षा युवा कृष्णः कामुक इति तक्षादिशब्दानामेकार्थपर्यवसायिनामपि व्यवस्थित एवाऽऽकरो वाच्यः । तथा लिङ्गेष्वपि द्रष्टव्यम् ।

उक्तं च—" संनिधाने पदार्थानां किंचिदेव प्रवर्तकम् ।
यथा तक्षादिशब्दानां लिङ्गेषु नियमस्तथा " ॥

उपचीयते कुमारीत्यत्रापि कुमारी स्वमहिम्ना कस्यचिद्धर्मस्यापचयमेवाऽऽह । शब्दान्तरप्रयोगात्तु धर्मान्तरस्यापचयः प्रतीयते । एवं क्षीयते वृक्ष इत्यत्रापचयः । तदेवमनाकुलमिदं दर्शनम् । तत्राचेतनेषु सर्वत्रोपदेशादेवाभिव्यक्तिः । चेतनेष्वपि स्वयमव्यञ्जितस्य लिङ्गस्योपदेशादेवाभिव्यक्तिः । उपदेशः पुनर्लिङ्गानुशासनादिष्विति । नन्वेवमवस्थाभेदेनार्थभेदसिद्धेः कथं रागालपनालप्तिशब्दयोरेकार्थत्वेनोपन्यास उपपद्यत इति चेत् । उच्यते । स्थित्यवस्थभावार्थवदालपनशब्दस्य तिरोभावावस्थभावार्थवदालप्तिशब्दस्य चार्थभेदे सत्यपि स्थित्यवस्थाया आविर्भावतिरोभावावस्थयोरन्तरालत्वेनोभयसाधारणतया काकाक्षिन्यायेन यदाऽऽलपनशब्दस्य तिरोभावार्थप्रधानत्वं विवक्षितं तदाऽऽलप्तिशब्देन समानार्थत्वम् । यदा तु तस्यैवाऽऽविर्भावार्थप्रधानत्वं विवक्षितं तदाऽऽलापशब्देन समानार्थत्वमिति । अत एवाऽऽलपनमालप्तिरिति वाऽऽलपनमालाप इति वा व्युत्पादयितुं शक्यते नान्यथेति गतमेतत् । फलसाम्याभिप्रायेण प्रकारान्तरमपि क्रोडीकर्तुमाह—**प्रकटीकरणं मतमिति** । अत्र प्रकृतत्वाद्रागस्य प्रकटीकरणमिति गम्यते । रागप्रकटीकरणमप्यालप्तित्वेन संमतमित्यर्थः । प्रकटीकरणमित्यत्र प्रकटीति च्वेरभूततद्भावार्थत्वात्किंचित्प्रतीयमानार्थत्वं विवक्षितम् । आलपनमित्यत्रापि तिरोभावस्याप्रकटार्थावरणरूपत्वात्तत्रापि किंचित्प्रतीयमानार्थत्वं विवक्षितम् । तेनोभयत्रापि फलभूतं रागस्य किंचित्प्रतीयमानत्वमेवाऽऽलप्तिशब्दप्रवृत्तौ निमित्तमित्यवगन्तव्यम् । तथा ह्यालप्तौ प्रकारद्वयं न च(तच्च) पर्यायेण संभवति । यदा तावदाविर्भूतस्य रागस्य विचित्रवर्णालंकारगमकस्थायप्रयोगभङ्गिभेदेन तिरोभावः क्रियते तदाऽऽलप्तिशब्दस्याऽऽलपनशब्दसमानार्थता । यदा त्वत्र तस्य रागस्य तादृशेनैव प्रयोगभेदेन तद्भावः संपद्यते तदा प्रकटीकरणशब्दसमानार्थता चेति रहस्यमेतत् । एवमालप्तिशब्दार्थं प्रदर्श्य तद्भेदौ-प्र-

 १ ख. ग. °त्वाद्रूप° । २ ग. °योगाभे° ।

दर्शयति—सा द्विधेत्यादिना । रागरूपकाभ्यां विशेषणादिति । रागविशेषणाद्रागालप्तिः । रूपकाविशेषणाद्रूपकालप्तिरित्यर्थः ॥ १८६ ॥

**रागालप्तिस्तु सा या स्यादनपेक्ष्यैव रूपकम् ।**
**स्वस्थानैः सा चतुर्भिः स्यादिति गीतविदो विदुः ॥ १८७॥**

**रागालप्तिस्त्विति** । तुशब्दो रूपकालप्तेस्तस्या वैलक्षण्यद्योतनार्थः । **रूपकमनपेक्ष्यैवेति** । रूपकं प्रबन्धः । 'प्रबन्धो वस्तुरूपकम्' इति वक्ष्यमाणत्वात् । तन्मात्रयाऽप्यनाश्रितेत्यर्थः । स्वस्थानैः । रागालपनविश्रान्तिप्रदेशैश्चतुर्भिर्मुखचालादिभिर्वक्ष्यमाणलक्षणैः । स्यात् । उपलक्षिता स्यादित्यर्थः । स्वस्थानैरितीत्थंभूतलक्षणा(णे) तृतीया ॥ १८७ ॥

**यत्रोपावि(वे)श्यते रागः स्वरे स्थायी स कथ्यते ।**
**ततश्चतुर्थो द्व्यर्धः स्यात्स्वरे तस्मादधस्तने ॥ १८८ ॥**
**चालनं मुखचालः स्यात्स्वस्थानं प्रथमं च तत् ।**
**द्व्यर्धस्वरे चालयित्वा न्यसनं तद्द्वितीयकम् ॥ १८९ ॥**
**स्थायिस्वरादष्टमस्तु द्विगुणः परिकीर्तितः ।**
**द्व्यर्धद्विगुणयोर्मध्ये स्थिता अर्धस्थिताः स्वराः ॥ १९० ॥**

**यत्रेत्यादि** । यत्र यस्मिंस्तत्तद्रागांशभूते षड्जादिष्वन्यतमे स्वरे राग उपवेश्यते स्थाप्यते स स्वरो रागस्थितिहेतुत्वात्स्थायीति कथ्यते । ततः स्थायिनः स्वराच्चतुर्थ आरोहक्रमेण सत्यपि लोप्यस्वरे तेन सह गणनायां चतुर्थः स्वरो द्व्यर्धः स्यात् । द्विगुणस्वरापेक्षयाऽर्धत्वाद्द्व्यर्धसंज्ञको भवति । **तस्मादधस्तन इति** । तस्माद्द्व्यर्धस्वरात् । अधस्तने स्वर इति तदधोधःस्थानामप्युपलक्षणम् । ते स्थायिनोऽप्यधस्तना गृह्यन्ते । अन्यथैकस्मिन्नेव स्वरे रागप्रतीतेरभावात् । तेषु चालनं तत्तद्रागोचितस्फुरितकम्पितादिगमकयुक्तत्वेनोच्चारणं वादनं वा मुखचालः स्यात् । मुखचाल इत्यन्वर्थसंज्ञा । तदेव प्रथमं स्वस्थलम् । अयमर्थः-स्थायिनमारभ्य द्व्यर्धस्वरमर्यादावधिं कृत्वा तदधस्तनान्यथोचितं चालयित्वा स्थायिनि न्यासे कृते प्रथमं स्वस्थानमिति । **द्व्यर्धस्वरे चालयित्वेति** । पूर्वोक्तैः सह द्व्यर्धस्वरमपि चालयित्वा स्थायिन्यासे सति द्वितीयं स्वस्थानमित्यर्थः ॥ १८८ ॥ ॥ १८९ ॥ १९० ॥

**अर्धस्थिते चालयित्वा न्यसनं तु तृतीयकम् ।**
**द्विगुणे चालयित्वा तु स्थायिन्यासाच्चतुर्थकम् ।**
**एभिश्चतुर्भिः स्वस्थानै रागालप्तिर्मता सताम् ॥ १९१ ॥**

---

१ ग. °तुर्थाद्व्यर्थः स्यां° ।

**अर्धस्थिते चालयित्वेति** । अयमर्थः । द्विगुणं परित्यज्य तदधोधःस्थितेषु चालयित्वा स्थायिन्यासे सति तृतीयं स्वस्थानमिति । **द्विगुणे चालयित्वेति** । द्विगुण इति तदुत्तरेषामप्युपलक्षणम् । तेषु चालयित्वा स्थायिन्यासाच्चतुर्थकं स्वस्थानं भवति ॥ १९१ ॥

**स्तोकस्तोकैस्ततः स्थायैः प्रसन्नैर्बहुभाङ्गिभिः ।**
**जीवस्वरव्याप्तिमुख्यै रागस्य स्थापना भवेत् ॥ १९२ ॥**

**स्तोकस्तोकैरित्यादि** । जीवस्वरोंऽशस्वरः। उक्तस्वस्थानचतुष्टयप्रयुक्ताया-मालप्तावुक्तलक्षणैः स्वल्पै रागावयवैर्विस्तार्यमाणायामापाततोऽभिव्यक्तस्य रागस्य रागान्तरसाधारणस्थायादिप्रयोगात्स्वरूपतिरोभावे सति किंचित्प्रतीयमानता भवेदित्यभिप्रायः । यथा लोके सभां प्रत्यागच्छतो देवदत्तस्य स्वरूपेणाभिव्यक्तस्य ततः सभां प्रविश्योपविष्टस्य तस्य स्वसदृशरूपवेषभाषादिसांकर्यात्स्वरूपतिरोभावे सति यथा तस्य किंचित्प्रतीयमानत्वम् । यथा वा पृथगानीय भिन्नवर्णेषु मणिषु प्रोतस्य मुक्तामणेर्मण्यन्तरच्छायोपरागात्स्वरूपतिरोभावे सति यथा तस्य किंचित्प्रतीयमानत्वं तद्वदिति ॥ १९२ ॥

**इति रागालप्तिः ।**

अथाऽऽलप्तेरेव भागप्रगटीकरणात्मतां प्रकटीकर्तुं रूपकालप्तिं विवृणोति—

**रूपकस्थेन रागेण तालेन च विधीयते ।**
**या सोक्ता रूपकालप्तिः सा पुनर्द्विविधा भवेत् ॥ १९३ ॥**
**प्रतिग्रहणिकैकाऽन्या भञ्जनीत्यभिधीयते ।**
**विधाय स्थायमालप्तेः रूपकावयवो यदि ।**
**प्रतिगृह्येत सा प्रोक्ता प्रतिग्रहणिका बुधैः ॥ १९४ ॥**

**रूपकस्थेनेत्यादिना** । आलप्तेः स्थायं रागालप्तेरवयवं विधाय प्रथमं गीत्वा रूपकावयवः प्रकृतस्थायोचितत्वेन स्वाभिमतः प्रबन्धैकदेशो यदि प्रतिगृह्येतोपादीयेतेत्यर्थः । एषा प्रतिग्रहणिकालप्तिः ॥ १९३ ॥ १९४ ॥

**इति प्रतिग्रहणिका ।**

**भञ्जनी द्विविधा ज्ञेया स्थायरूपकभञ्जनात् ।**
**यदा तत्पदमानेन स्थायो रूपकसंस्थितः ।**
**नानाप्रकारः क्रियते सा ज्ञेया स्थायभञ्जनी ॥ १९५ ॥**

**तत्पदमानेनेति** । तच्छब्देनात्र प्रकृतत्वाद्रूपकं परामृश्यते । तस्य पदानि विदार्यवान्तरभागाः । तेषां मानेन प्रमाणेन तत्कालविश्रान्तियुक्तया क्रिययेत्यर्थः । तेन युक्तो रूपकसंस्थितोऽवयवत्वेन प्रबन्धेऽनुप्रविष्टः स्थायः । स्थायोऽत्र प्रब-

---

१ ग.°ञ्जकात् ।

न्धैकदेशः । नानाप्रकार(रो) विचित्ररीतियुक्तः क्रियते गातृवादकप्रतिभाविशेषेणोद्भाव्यते चेतसा स्थायभञ्जनी ॥ १९५ ॥

**तैः पदैस्तेन मानेन समग्रं रूपकं यदि ।**
**अन्यथा चान्यथा गायेदसौ रूपकभञ्जनी ॥ १९६ ॥**

**तैः पदैरित्यादि** । पदवत्पदानि यथा वाक्यस्य पदान्यवयवास्तथा प्रबन्धस्यावयवा विदारीभागाः पदानीत्युच्यन्ते, न तु वाचकानि सुबन्तादीनि वा भाषापदानि। **अन्यथा चान्यथा गायेदिति** । अत्रान्यथात्वं नाम प्रबन्धे प्रकृतधातोर्धात्वन्तरपरिग्रहः । तेनात्र वीप्सया समग्रप्रबन्धस्थं प्रकृततानस्थायानुकारिभिस्तानान्तरैस्तत्तद्रागोचितगमकादियुक्तैर्बहुधाऽवयविन एव पुनरावृत्तिभिर्गानमभिधीयते तदाऽसौ रूप[क]भञ्जनी भवति । अयं भावः । अस्यां रूपकालप्तौ प्रथममभिव्यक्तस्य रागस्य स्थायप्रतिग्रहभञ्जनी(ना)भ्यां प्रकटीकरणे सति किंचित्प्रतीयमानत्वं भवति। यथा जनसमाजे प्रविष्टत्वात्स्वरूपेणाप्रतीतस्य देवदत्तस्य कार्यवशादितस्ततः संचारेण प्रकटीकरणे सति किंचित्प्रतीयमानत्वम् । यथा वा भिन्नवर्णेषु मणिषु प्रोतत्वादप्रतीतस्य मुक्तामणेः सूत्रशैथिल्यादितस्ततः सरणेन स्वरूपप्रकटीकरणे सति किंचित्प्रतीयमानत्वं तद्वदिति । एवं रूपकालप्तौ रागस्य प्रकटीकरणं द्रष्टव्यम् ॥ १९६ ॥

सकलालप्तिव्यक्तिष्वनुगतं सामान्यलक्षणमाह—

**वर्णालंकारसंपन्ना गमकस्थायचित्रिता ।**
**आलप्तिरुच्यते तज्ज्ञैर्भूरिभङ्गिमनोहरा ॥ १९७ ॥**

**वर्णालंकारसंपन्नेत्यादि** । अत्र विशेषणसाम्यात्स्त्रीसमाधिर्ध्वन्यते । यथा वर्णालंकारादिसंपन्ना कामिनी कामुकदर्शने कदाचिदाविर्भूतं कुचकेशादिकं स्वाङ्गं किंचिद्दर्शयत्येवं सविलासं तत्तिरोभावयति कदाचित्तिरोभूतं तदेव सव्याजं प्रकटी करोति तथोक्तलक्षणाऽऽलप्तिरपि स्वस्थानचतुष्टयैश्च तत्र तत्र रागं किंचिद्दर्शयन्ती तं तिरोभावयति । कदाचित्तिरोभूतं तमेव प्रतिग्रहभञ्जनाभ्यां तत्र तत्र रागं प्रकटी करोतीति । स एष प्रतिमाविषय एवार्थः । आलापस्तु पुमान्श्मश्रुवादिकमिव सदा रागमाविर्भावयति । नपुंसकमिवाऽऽला(ल)पनं तदुभयसाधारणस्थितिं दर्शयतीति सूक्ष्मेक्षिकयाऽवगन्तव्यम् ॥ १९७ ॥

इत्यालप्तिलक्षणम् ।

**गातृवादकसंघातो वृन्दमित्यभिधीयते ।**
**उत्तमं मध्यममथो कनिष्ठमिति तत्त्रिधा ॥ १९८ ॥**

अथ वृन्दलक्षणमाह—**गातृवादकसंदर्भ(संघात) इत्यादिना** । तदकुतपे परिगणितासु बोधवत्यादिवीणासु कासांचिल्लक्षणानि **वाद्याध्याये** वक्ष्यन्ते ।

तत्रानुक्तलक्षणास्तु वीणा लोकत एवावगन्तव्याः । वंशादीनां गीतजनकत्वेन ततवाद्यसाधर्म्याद्वांशिकादिसुषिरवादकानां ततकुतपेऽनुप्रवेश उक्तः । एवं कांस्यतालादीनां गीतोपरञ्जकत्वाद्घनवाद्यवादकानामप्यवनद्धकुतपेऽनुप्रवेशः । तालस्य तु गीतादिमानहेतुतूर्यत्रयप्रतिमानत्वेन सर्वत्रानुप्रवेशो द्रष्टव्यः । सुगममन्यत् ॥ १९८ ॥

चत्वारो मुख्यगातारो द्विगुणाः समगायनाः ।
गायिन्यो द्वादश प्रोक्ता वांशिकानां चतुष्टयम् ॥ १९९ ॥
मार्दङ्गिकास्तु चत्वारो यत्र तद्वृन्दमुत्तमम् ।
मध्यमं स्यात्तदर्धेन कनिष्ठे मुख्यगायनः ॥ २०० ॥
एकः स्यात्समगातारस्त्रयो गायनिकाः पुनः ।
चतस्रो वांशिकद्वंद्वं तथा मार्दलिकद्वयम् ॥ २०१ ॥
उत्तमे गायनीवृन्दे मुख्यगायनिकाद्वयम् ।
दश स्युः समगायिन्यो वांशिकत्रितयं तथा ॥ २०२ ॥
भवेन्मार्दलिकद्वंद्वं मध्यमे मुख्यगायनी ।
एका स्यात्समगायिन्यश्चतस्रो वांशिकास्तथा ॥ २०३ ॥
इतो न्यूनं तु हीनं स्याद्यथेष्टमथवा भवेत् ।
उत्तमाभ्यधिकं वृन्दं कोलाहलमितीरितम् ॥ २०४ ॥
मुख्यानुवृत्तिर्मिलनंताललीलानुवर्तनम् ।
मिथस्त्रुटितनिर्वाहस्त्रिस्थानव्याप्तिशक्तता ॥ २०५ ॥
शब्दसादृश्यमित्येते प्रोक्ता वृन्दस्य षड्गुणाः ।
आह वृन्दविशेषं तु कुतपं भरतो मुनिः ॥ २०६ ॥
ततस्य चावनद्धस्य नाट्यस्यैते(स्येति) त्रिधा च सः।
ततस्य कुतपो ज्ञेयो गायनः सपरिग्रहः ॥ २०७॥
वीणा घोषवती चित्रा विपञ्ची परिवादिनी ।
वल्लकी कुब्जिका ज्येष्ठा नकुलोष्ठी च किंनरी ॥ २०८ ॥
जया कूर्मी पिनाकी च हस्तिका शततन्त्रिका ।
औदुम्बरी च षट्कर्णः पौणो रावणहस्तकः ॥ २०९ ॥
सारङ्ग्यालपनीत्यादेस्ततवाद्यस्य वादकाः ।
वांशिकाः पाविकाः पावकाहलाः शङ्खवादकाः ॥२१०॥

॥ १९९ ॥ २०० ॥ २०१ ॥ २०२ ॥ २०३ ॥ २०४ ॥ २०५ ॥ २०६ ॥ २०७ ॥ २०८ ॥ २०९ ॥२१०॥

---

१ ग. ङ. °शिकस्त° । २ ग. °का । उद्° । ३ च. षट्कर्णा ।

मुहुरीशृङ्गवाद्याद्यास्तथा तालधरा वराः ।
कुतपे त्ववनद्धस्य मुख्यो मार्दङ्गिक[1]स्ततः ॥ २११ ॥
पणवो दर्दुरो ढक्का मण्डिडक्का च डक्कुली ।
पटहः करटा ढक्का ढवसो घडसस्तथा ॥ २१२ ॥
हुडुक्का डमरू रुंञा[2] कुडुक्का कुडुवा तथा ।
निःस्वानस्त्रिवली भेरी[3] तम्बकी बोम्[4]बडी तथा ॥ २१३ ॥
पट्टवाद्यं पटः कम्रा[5]डावजावजसेल्लुकाः ।
जयघण्टा कांस्यतालो घण्टा च किरिकिट्टटकम् ॥२१४॥
वाद्यानामेवमादीनां पृथग्वादकसंचयः ।
वराटलाटकर्णाटगौडगुर्जरकौङ्कणैः ॥ २१५ ॥
महाराष्ट्रान्ध्रहम्मीरचौलैर्मलयमालवैः ।
अङ्गवङ्गकलिङ्गाद्यैर्नानाभिनयकोविदैः ॥ २१६ ॥
अङ्गहारप्रयोगज्ञैर्लास्यताण्डवकोविदैः ।
विचित्रस्थानकप्रौढैर्विषमेषु सुशिक्षितैः ॥ २१७ ॥
नाटस्य कुतपः पात्रैरुत्तमाधममध्यमैः ।
कुतपानाममीषां तु समूहो वृन्दमुच्यते ॥ २१८ ॥

इति वृन्दलक्षणम् ।

इति श्रीमदनवद्यविद्याविनोदश्रीकरणाधिपतिश्रीसोढलदेवनन्दननिःशङ्कशार्ङ्गदेवविरचिते संगीतरत्नाकरे तृतीयः प्रकीर्णकाध्यायः ॥ ३ ॥

---

॥ २११ ॥ २१२ ॥ २१३ ॥ २१४ ॥ २१५ ॥ २१६ ॥ २१७ ॥ २१८ ॥

प्रत्यक्षभरताचार्यः कल्लिनाथो विदांवरः ।
विप्रसंकीर्णविषयः प्रकीर्णकमवर्णयत् ॥ १ ॥

इति श्रीमदभिनवभरताचार्यरायवयकारतोडरमल्ललक्ष्मणाचार्यनन्दनचतुरकल्लिनाथविरचिते संगीतरत्नाकरकलानिधौ तृतीयोऽध्यायः ॥ ३ ॥

---

१ च. मार्दलिक° । २ ग. संज्ञा । ३ च. °री तुम्ब° । ४ ग. °म्बकी त° । ५ ग. °भ्राडावडवहल्लका: । घ. °डावजावजसेल्लरी । ज° ।

## अथ चतुर्थः प्रबन्धाध्यायः ।

एवमुक्तलक्षणानां वाग्गेयकारादीनां व्यापारविषयत्वेन प्रसक्तान्गीतविशेषान्प्रबन्धाह्लिँलक्षयिषुरादौ गीतसामान्यलक्षणमाह—

**रञ्जकः स्वरसंदर्भो गीतमित्यभिधीयते ।**
**गान्धर्वं गानमित्यस्य भेदद्वयमुदीरितम् ॥ १ ॥**

**रञ्जकः स्वरसंदर्भो गीतमिति** । संदर्भो गुम्फः । ननु स्वरसंदर्भो गीतमित्येतावतैव गीतस्य रञ्जकत्वं सिद्धं यतः 'स्वतो रञ्जयति श्रोतृचित्तं स स्वर उच्यते' इति स्वरशब्दनिरुक्तेः स्वराणां स्वत एव रञ्जकत्वात्तत्संदर्भस्यापि रञ्जकत्वसिद्धेः पुनरपि रञ्जकेति विशेषणमनर्थकं व्यवच्छेद्याभावादिति । नैतदस्ति । स्वराणां स्वत एव रञ्जकत्वेऽपि तत्संदर्भस्य कदाचिदरञ्जकत्वं भवति । यं कंचिद्रागं प्रकृत्य प्रवेशनिग्रहाभ्यामन्तरेण तत्र विवादिस्वरप्रयोगे सति प्रकृतरागहानेररञ्जकः संदर्भः स्यात् । तद्व्यच्छेदेन रञ्जकग्रहणमर्थवद्भवति । अतो रञ्जकेति संदर्भविशेषणं न स्वराणां विशेषणम् । तथा सत्यरञ्जकस्वराभावेन व्यवच्छेद्याभावाद्वैयर्थ्यमेव भवति । गीतभेदान्दर्शयितुमाह—**गान्धर्वं गानमित्यादिना** । गान्धर्वं मार्गः । गानं तु देशीत्यवगन्तव्यम् ॥ १ ॥

**अनादिसंप्रदायं यद्गन्धर्वैः संप्रयुज्यते ।**
**नियतं श्रेयसो हेतुस्तद्गान्धर्वं जगुर्बुधाः ॥ २ ॥**
**यत्तु वाग्गेयकारेण रचितं लक्षणान्वितम् ।**
**देशीरागादिषु प्रोक्तं तद्गानं जनरञ्जनम् ॥ ३ ॥**

अनादिसंप्रदायमित्यनेन गान्धर्वस्य वेदवदपौरुषेयत्वमिति सूचितं भवति । गानं तु वाग्गेयकारादिपरतन्त्रत्वात्पौरुषेयमेव ॥ २ ॥ ३ ॥

**तत्र गान्धर्वमुक्तं प्रागधुना गानमुच्यते ।**
**निबद्धमनिबद्धं तद्द्वेधा निगदितं बुधैः ॥ ४ ॥**

**तत्र गान्धर्वमुक्तं प्रागिति** । स्वरगतरागविवेकयोर्जात्याद्यन्तरभाषान्तं यदुक्तं तद्गान्धर्वमित्यर्थः । **अधुना गानमुच्यत इति** । अस्मिन्नध्याये गानविशेषः प्रबन्धः प्रतिपाद्यत इत्यर्थः ॥ ४ ॥

**बद्धं धातुभिरङ्गैश्च निबद्धमभिधीयते ।**
**आलप्तिर्बन्धहीनत्वादनिबद्धमितीरिता ॥ ५ ॥**
**सा चास्माभिः पुरा प्रोक्ता निबद्धं त्वधुनोच्यते ।**
**संज्ञात्रयं निबद्धस्य प्रबन्धो वस्तु रूपकम् ॥ ६ ॥**

---

१ घ. °दि च प्रो° ।

**बद्धं धातुभिरङ्गैश्चेति** । धातवोऽङ्गानि च समनन्तरमेव वक्ष्यन्ते ॥४॥५॥

**प्रबन्धावयवो धातुः स चतुर्धा निरूपितः ।**
**उद्ग्राहः प्रथमस्तत्र ततो मेलापकध्रुवौ ॥**
**आभोगश्चेति तेषां च क्रमाल्लक्ष्माभिदध्महे ॥ ६ ॥**

**प्रबन्धावयवो धातुरिति** । पूर्वं(र्वे)धातुशब्देन गेयमुक्तम् । अत्र प्रबन्धावयवो विवक्षितः । गेयं नाम सकलप्रबन्धानुगतो धर्मः । प्रबन्धावयवस्तु धर्मैकदेश इति तयोर्भेदो द्रष्टव्यः ॥ ७ ॥

**उद्ग्राहः प्रथमो भागस्ततो मेलापकः स्मृतः ।**
**ध्रुवत्वाच्च ध्रुवः पश्चादाभोगस्त्वन्तिमो मतः ॥ ८ ॥**

**उद्ग्राहः प्रथमो भाग इति** । उद्गृह्यते प्रारभ्यते येन गीतं स उद्ग्राह इति प्रबन्धस्य प्रथमावयवोऽन्वर्थसंज्ञः । **ततो मेलापकः स्मृत इति** । उद्ग्राहध्रुवयोर्मेलकारकत्वान्मेलापक इति द्वितीयोऽवयवोऽन्वर्थो द्रष्टव्यः । **ध्रुवत्वादिति** । नित्यत्वादित्यर्थः । तृतीयावयवस्य नित्यत्वं तावदुद्ग्राहव्यतिरिक्ततरापेक्षया सकलप्रबन्धेष्वनपायात् । तेन द्विधातुषु प्रबन्धेषु मेलापकाभोगयोस्त्रिधातुषु प्रबन्धेषु सर्वत्र मेलापकस्यैव परित्यागो ध्रुवस्य न क्वचिदपि परित्याग इत्यर्थः । **आभोगस्त्वन्तिमो मत इति** । अन्तिमो धातुः प्रबन्धस्य परिपूर्णताहेतुत्वादाभोग इति कारणे कार्योपचार उक्तः । 'आभोगः परिपूर्णता' इत्यभिधानादाभोगस्य परिपूर्णतावाचकत्वम् ॥ ८ ॥

**ध्रुवाभोगान्तरे जातो धातुरन्योऽन्तराभिधः ।**
**स तु सालगसूडस्थरूपकेष्वेव दृश्यते ॥ ९ ॥**

**ध्रुवाभोगान्तरे जात इति** । ध्रुवाभोगान्तरे ध्रुवाभोगयोर्मध्ये जात उत्पन्नो निर्मित इत्यर्थः । अनेन गानकाले ध्रुवस्याऽऽवृत्तिषु कृतासु ततः परमाभोगजिज्ञासायां चरमावृत्त्यन्ते ज्ञातव्या इति गम्यते । **स त्विति** । सालगसूडस्थरूपकेषु वक्ष्यमाणेषु ध्रुवमण्ठादिष्वेवेतिनियमेनैलादिषु शुद्धसूडक्रमस्थेषु वा वर्णादिष्वदलक्रमेषु वा श्रीरङ्गादिषु विप्रकीर्णेषु वा न कार्य इत्यर्थः । अत्र दृश्यत इति दृशिग्रहणेन ध्रुवादिष्वपि यत्र चिरंतनप्रयोगादन्तरो दृष्टस्तत्रैव कार्यो नान्यत्रेति नियमान्तरस्यापि सूचितत्वान्मण्ठादिषु दर्शनात्तत्रैव कार्यः । ध्रुवे त्वदर्शनात्तत्र न कार्य इति मन्तव्यम् ॥ ९ ॥

उद्ग्राहादिषु धातुशब्दप्रवृत्तौ निमित्तं दर्शयति—

**वातपित्तकफा देहधारणाद्धातवो यथा ।**
**एवमेते प्रबन्धस्य धातवो देहधारणात् ॥ १० ॥**

**वातपित्तेत्यादिना** । एतेनाङ्गेभ्यो धातूनां व्यापारभेदो दर्शितः ॥ १० ॥

**तत्र मेलापकाभोगौ न भवेतां क्वचित्क्वचित् ।**
**स द्विधातुस्त्रिधातुश्च चतुर्धातुरिति त्रिधा ॥ ११ ॥**

**तत्रेत्यादि । मेलापकाभोगौ क्वचिन्न भवेतामिति ।** यत्रोभावपि युग-पन्न भवेतां तत्रोद्ग्राहध्रुवयोरेव विद्यमानत्वात्स प्रबन्धो द्विधातुः । द्विती[illegible] क्वचिच्छब्दस्यासहायस्यानुपयोगा[illegible]दर्थं पूर्वा(र्वः) स्यात् (?) । मेलापकाभोगौ [illegible] येण न भवेतामित्यर्थभेदेनानुषङ्गः कर्तव्यो भवति । तेन यद्यप्युभयथाऽपि [illegible]न्धस्य त्रिधातुत्वं सिध्यति तथाऽप्युत्तरत्र प्रबन्धलक्षणेषु यत्र कुत्राप्याभोगा[illegible] त्रिधातुत्वस्यादृष्टत्वादनुषङ्गेऽपि वचनविपरिमाणं कृत्वा क्वचिन्मेलापको न [illegible]दिति वाक्यमुन्नेयम् । तदा स प्रबन्धो मेलापकाभावात्त्रिधातुर्भवतीत्येष दृष्टो[illegible] लभ्यते । एवमनुषङ्गन्यायं हृदि निधाय केवलं क्वचिच्छब्दं प्रयुञ्जानस्य ग्र[illegible]कारस्याभिप्रायोऽवगन्तव्यः । यत्र तूभावपि मेलापकाभोगौ भवतस्तत्रोद्ग्राहादि[illegible] चतुर्णामपि विद्यमानत्वात्स प्रबन्धश्चतुर्धातुरित्ययं प्रकारस्तात्पर्यतोऽवगम्यते । तच्च तात्पर्यं चतुर्धातुरित्यनेनाभिव्यज्यते ॥ ११ ॥

**प्रबन्धोऽङ्गानि षट् तस्य स्वरश्च बिरुदं पदम् ।**
**तेनकः पाटतालौ च प्रबन्धपुरुषस्य ते ॥ १२ ॥**

**प्रबन्धोऽङ्गानीत्यादि ।** प्रबन्ध इति पूर्वेण त्रिधेत्यनेनोन्नीयते । त्रि[illegible] प्रबन्ध इति । अङ्गानीत्यस्योक्तौ रागान्वयः कर्तव्यः । **तस्याङ्गानि षडिति** तस्य द्विधातुत्वादिप्रकारभेदभिन्नस्य प्रबन्धस्य । तानि षडङ्गान्युद्दिशति— **स्वरश्चेत्यादि ॥ १२ ॥**

**भवन्त्यङ्गवदङ्गानि मङ्गलार्थप्रकाशके ।**
**तत्र तेनपदे नेत्रे स्तः पाटबिरुदे करौ ॥ १३ ॥**

अङ्गवदङ्गानीत्येतदेव प्रतिपादयन्नाह—**मङ्गलार्थप्रकाशक इत्यादिना ।** तत्र मङ्गलप्रकाशकस्तेनकः । अर्थप्रकाशकं पदम् ॥ १३ ॥

**कराभ्यामुद्भवात्कार्ये कारणत्वोपचारतः ॥ १४ ॥**
**प्रबन्धगतिहेतुत्वात्पादौ तालस्वरौ मतौ ।**
**स्वराः षड्जादयस्तेषां वाचकाः सरिगादयः ॥ १५ ॥**
**स्वराभिव्यक्तिसंयुक्ताः स्वरशब्देन कीर्तिताः ।**
**बिरुदं गुणनाम स्यात्ततोऽन्यद्वाचकं पदम् ॥ १६ ॥**

**कराभ्यामुद्भवादिति ।** पाटस्य तावत्करोद्भवत्वमवनद्धवाद्याक्षरौककर-रूपस्य तस्य करव्यापारजातत्वात् । शङ्खादिसुषिरवाद्योद्भवस्य(÷मुखवाद्यो-द्भवस्य) मुखोद्भवत्वेन करोद्भवत्वाभावेऽपि क्वचित्साहचर्याच्छत्रिन्यायेन करोद्भ-वत्वं लक्षणया विरुद्धमपि करोद्भवं(वत्वं) प्रायेण वितरणहेतुकस्य तस्य करस्य

÷धनुश्चिह्नान्तर्गतो ग्रन्थोऽधिकः ।

करव्यापारजातत्वात् । रूपादिहेतुकस्यापि करजत्वं पूर्ववत् । अतः कार्य(र्ये)कारणत्वोपचारात्पाटबिरुदे हस्तौ स्त इत्युक्तम् । **पादौ तालस्वरौ मताविति ।** तालस्य तु सकलप्रबन्धगतत्वेऽप्यगतत्वं भवति। स्पर्शनस्य सकलशरीरगतत्वेऽपीन्द्रियत्वं च । स्वरस्य च सकलप्रबन्धगतत्वेऽपि । षड्जादिवाचकानां सरिगादीनामेव स्वराभिव्यक्तेरेव हेतुत्वादसाधारण्ये भागव्यपदेशः[?] । +प्रकाशस्य सकलशरीरहेतुत्वेऽपि कर्णशष्कुल्यवच्छिन्नस्यैव शब्दग्राहकत्वेन श्रोत्रव्यपदेशः ॥ १४ ॥ १५ ॥ १६ ॥

तेनेतिशब्दस्य मङ्गलप्रकाशकत्वं प्रतिपादयितुमाह—

**तेनेतिशब्दस्तेनः स्यान्मङ्गलार्थप्रकाशकः ।**
**×ॐ तत्सदिति निर्देशस्तत्त्वमस्यादिवाक्यतः ॥ १७ ॥**
**तदिति ब्रह्म तेनायं ब्रह्मणा मङ्गलात्मना ।**
**लक्षितस्तेन तेनेति पाटो वाद्याक्षरोत्करः ।**
**तालस्तालप्रकरणे सप्रपञ्चो निरूप्यते ॥ १८ ॥**

**तेनेतिशब्द इत्यादि ।** तेन कारणेन तेनेतिशब्दो मङ्गलस्य प्रकाशकः स्यात् । अ(य)तो महावाक्यादौ तदिति ब्रह्म प्रकाश्यते । तेन तेनेति लक्षितोऽङ्कित इति सिंहावलोकन्यायेन योजना ॥ १७ ॥ १८ ॥

प्रबन्धानां जातिभेदान्दर्शयति—

**मेदिन्यथाऽऽनन्दिनी स्याद्दीपनी[1] भावनी तथा ।**
**तारावलीति पञ्च स्युः प्रबन्धानां तु जातयः ॥ १९ ॥**
**अङ्गैः षड्जा(डा)दिभिर्व्यन्तैः केषांचन मते श्रुतिः ।**
**नीतिः सेना च कविता चम्पूरित्युदितास्तु ताः ॥ २० ॥**

**मेदिनीत्यादि । षडादिभिर्द्व्यन्तैरङ्गैरिति ।** षड्भिरङ्गैर्बद्धा मेदिनी जातिः । पञ्चभिरानन्दिनी। चतुर्भिर्दीपनी । त्रिभिर्भावनी। द्वाभ्यां तारावती[ली)ति क्रमो द्रष्टव्यः । मतान्तरेण श्रुत्यादिकाः संज्ञास्तासामेव क्रमेण योजनीयाः ॥ १९ ॥ २० ॥

**अनिर्युक्तश्च निर्युक्तः प्रबन्धो द्विविधो मतः ।**
**छन्दस्तालाद्यनियमादाद्यः स्यान्नियमात्परः ॥ २१ ॥**

**छन्दस्तालाद्यनियमादिति।** छन्दांसि त्रिष्टुबादि(दीनि) । तालाश्चच्च(श्च)त्पुटादयः । आदिशब्देनाङ्गधातुरागरसभाषादयो गृह्यन्ते । तेषामनियमादाद्यः । अनिर्युक्त इत्यर्थः । तेषां नियमात्तु परो निर्युक्तः स्यादित्यर्थः ॥ २१ ॥

+ एतट्टीकानुरोधेन मूले किंचित्त्रुटितमिति भाति । ×इदमुत्तरं चार्धं च. पुस्तके नास्ति ।

1 घ. °णाऽव्यक्तजन्मना । २ ख. ग. घ. °नी पाव°।

पुनः प्रबन्धास्त्रिविधाः सूडस्था आलिसंश्रयाः ।
विप्रकीर्णाश्च तत्राऽऽदौ सूडलक्षणमुच्यते ॥ २२ ॥

॥ २२ ॥

एलाकरणढेङ्कीभिर्वर्तन्या झोम्बडेन च ।
लम्भरासैकतालीभिरष्टभिः सूड उच्यते ॥ २३ ॥

अष्टभिः सूड उच्यत इति । सूड इति गीतविशेषसमूहवाची देशी शब्दः । मा[अ]त्रोद्दिष्टानामेलादिशब्दानां मध्ये केषांचिद्रूढत्वैव केषांचिदन्वर्थत्वं चेत्यवगन्तव्यम् ॥ २३ ॥

वर्णो वर्णस्वरो गद्यं कैवाडश्चाङ्कचारिणी ।
कन्दस्तुरगलीला च गजलीला द्विपद्यपि ॥ २४ ॥
चक्रवालः क्रौञ्चपदः स्वरार्थो ध्वनिकुट्टिनी ।
आर्या गाथा द्विपथकः कलहंसश्च तोटकम् ॥ २५ ॥
घटो वृत्तं मातृका च तथा रागकदम्बकः ।
पञ्चतालेश्वरस्तालार्णव इत्येषु कश्चन ॥ २६ ॥
सूडक्रमस्य मध्ये चेदसावालिक्रमो भवेत् ।
सूडालिक्रमसंबन्धाद्द्वात्रिंशादिति कीर्तिताः ॥ २७ ॥
ततोऽन्ये विप्रकीर्णास्तान्प्रसिद्धान्कातिचिद्ब्रुवे ।
श्रीरङ्गः श्रीविलासः स्यात्पञ्चभङ्गिरतः परम् ॥ २८ ॥
पञ्चाननोमातिलकौ त्रिपदी च चतुष्पदी ।
षट्पदी वस्तुसंज्ञश्च विजयस्त्रिपथस्तथा ॥ २९ ॥
चतुर्मुखः सिंहलीलो हंसलीलोऽथ दण्डकः ।
×झुम्बडः कन्दुकः स्यात्त्रिभङ्गिर्हरविलासकः ॥ ३० ॥
सुदर्शनः स्वराङ्कः श्रीवर्धनो हर्षवर्धनः ।
वदनं चञ्चरी चर्या पद्धडी राहडी तथा ॥ ३१ ॥
वीरश्रीर्मङ्गलाचारो धवलो मङ्गलस्तथा ।
ओवी लोली ढोल्लरी च दन्ती षट्त्रिंशादित्यमी ॥ ३२ ॥

॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

---

×उत्तरत्रैतल्लक्षणश्लोकस्थपाठानुरोधेनात्रापि झम्पट इति पठितुं युक्तम् ।

---

१ ख. घ. °र्णसरो । २ ख. द्विपथगः । ३ ख. जम्बडः । ग. झम्बडः । घ. ङ. झोम्बडः । ४ ग. °नं वञ्च° । ५ ख. ऊवी । ग. ुकवी । ङ तुंवी ।

प्रथमोद्दिष्टमेलां लक्षयति—

> अङ्घ्रौ खण्डद्वयं सानुप्रासमेकेन धातुना ।
> ततः प्रयोगस्तदनु पल्लवाख्यं पदत्रयम् ।
> द्वे स्तो विलम्बिते तत्र तृतीयं द्रुतमानतः ॥ ३३ ॥

**अङ्घ्रौ खण्डद्वयमित्यादिना** । एलायां प्रथमं तावत्पादत्रयं गेयम् । तदङ्घ्रौ प्रथमपादे समनुप्रासालंकारसहितम् । 'वर्णसाम्यमनुप्रासः' इति तस्य लक्षणम् । तथाभूतं खण्डद्वयमेकेन धातुनैकरूपेण गेयेन गेयं स्याज्ज्ञातव्यं भवेत् । एतेन खण्डद्वयोर्मा(ये मा)तुभेदः कर्तव्य इत्यर्थः । अन्यथैकमेव खण्डं द्विर्गेयं स्यादिति वदेत् । एतत्खण्डद्वयं मिलित्वा वक्ष्यमाणेषु षोडशसु पदेषु कामपदमिवगन्तव्यम् । **ततः प्रयोग इति** । ततः प्रयोगान्तरम् । प्रयोगोऽक्षरवर्जिता गमकालप्तिः । कार्यतया वक्ष्यति—

> "आलापो गमकालप्तिरक्षरैर्वर्जिता मता ।
> सैव प्रयोगशब्देन शार्ङ्गदेवेन शब्दिता" इति ।

अयं प्रयोगो मन्मथवत्संज्ञकं द्वितीयं पदम् । **तदन्विति** । प्रयोगान्तरं पल्लवाख्यं प्रतीत्येकं पल्लवशब्दसंज्ञं पदत्रयं ज्ञेयम् । तत्र पदद्वये द्वे क्रमात्कान्तजिसंज्ञके प्रथमद्वितीये पादविलम्बिते माने स्तः । तृतीयं मित्रसंज्ञितं पदं द्रुतमानो भवति । द्रुतादिमानानां स्वरूपं तालाध्याये वक्ष्यते ॥ ३३ ॥

> एवं पादत्रयं गेयमुद्ग्राहे तुल्यधातुकम् ।
> केवलं तु तृतीयेऽङ्घ्रौ संबोधकपदान्वितः ॥ ३४ ॥
> प्रयोगोऽन्त्यो विधातव्यो न पल्लवपदस्थितिः ।
> अमुं प्रयोगं(ग)मेलापं(ख्यं) प्राहुः सोमेश्वरादयः ॥ ३५ ॥

**एवं पादत्रयमिति** । पञ्चपदानि मिलित्वैकः पादः । एवं प्रथमपादोक्तलक्षणयुक्तं तुल्यधातुकमित्यनेन भिन्नमातुकमिति गम्यते । **उद्ग्राहे गेयमिति** । पादत्रयं मिलित्वोद्ग्राहो भवतीत्यर्थः । द्वितीयपादस्थितानां पदानां क्रमेण विकारी मांधाता सुमती शोभी सुशोभीति संज्ञा वेदितव्याः । एवमित्यतिदेशेन तृतीयेऽपि पादे प्रथमपादलक्षणे प्राप्ते विशेषं दर्शयितुमाह—**केवलं त्विति** । तुशब्दो भिन्नक्रमः । **तृतीयेऽङ्घ्रौ त्विति** । तृतीयेऽङ्घ्रौ तु सानुप्रासकधातुकखण्डद्वयानन्तरं केवलं संबोधनपदान्वितोऽन्ते संबोधनार्थेन पदेन युक्तः । अत्र केवलशब्देनासंबोधनार्थपदान्तरयोगो निषिध्यते । एतेन प्रथमद्वितीयाङ्घ्रिगत-

१ ख. कार्यविधा । २ ख. ग. °न्नधातु° ।

प्रयोगस्यासंबाधनार्थैकैकपदयोगात्यनुज्ञा विज्ञायते (?)। अन्यथाऽक्षरवर्जितत्वात्प्रयोगाणामनर्थत्वाभावात्पदत्वं न सिध्येदिति भावः। **अन्त्यो विधातव्य इति।** पूर्व(र्व) प्रयोगद्वयापेक्षया भिन्नधातुकः कर्तव्य इत्यर्थः। तुशब्दाद्द्योतितं विशेषं लक्षयति—**न पल्लवपदस्थितिरिति।** तृतीये पादे त्रीण्यपि पल्लवपदानि कर्तव्यानीत्यर्थः। अतस्तृतीयेऽङ्घ्रौ पदद्वयमेव। तत्र प्रथमं गीतकसंज्ञं द्वितीयमुपचितसंज्ञं वेदितव्यम्। एलाप्रबन्धस्य त्रिधातुकत्वमभ्युपगच्छतैतानि द्वादश पदान्युद्ग्राहो भवतीति मन्तव्यम्। चतुर्धातुकमभ्युपगच्छन्तः सोमेश्वरादयस्त्वेकादशता(शाना?)मेवोद्ग्राहत्वमुक्त्वा द्वादशपदं मेलापकमा(पदामेलामा)हुरित्याह—**अमुं प्रयोगमिति** ॥ ३४ ॥ ३५ ॥

**स्तुत्यनामाङ्कितो मध्यविलम्बितपदत्रयः।**
**ध्रुवस्ततस्तत्र पूर्वमेकधातुपदद्वयम् ॥ ३६ ॥**
**भिन्नधातु तृतीयं स्यादाभोगस्तदनन्तरम्।**
**गेयो वाग्गेयकारेण स्वाभिधानाविभूषितः ॥ ३७ ॥**

**स्तुत्यनामाङ्कित इत्यादि।** ततोऽनन्तरं मध्यविलम्बितयोः पदत्रयं यस्येति स तथोक्तः। एतदुक्तं भवति। त्रिषु पदेष्वाद्यं पदद्वयं मध्यमाने गेयम्। तृतीयं विलम्बिते गेयमिति। अन्यथा तत्र पूर्वमेकधातु पदद्वयं भिन्नधातु तृतीयं स्यादित्युत्तरवचनं विरुध्येत। पूर्वपदद्वयस्य मिथोऽपि मानभेदे सत्येकधातुत्वासंभवात्। एवं पदत्रयात्मको ध्रुवो भवति। त्रिषु पदेषु मध्ये यत्र कुत्रापि स्तुत्यनामाङ्कितः स्तुत्यस्येष्टदेवताराजादेर्नाम्नाऽङ्कितः कर्तव्य इत्यर्थः। एतानि त्रीणि ध्रुवपदानि क्रमेण विचित्रवासवमृदुसंज्ञकानि वेदितव्यानि। **आभोगस्तदनन्तरमिति।** तदनन्तरं ध्रुवस्थानानन्तरम्। आभोगो वाग्गेयकारेण स्वाभिधानविभूषितो गेयः स्वनामाङ्कितः कर्तव्यः। अयमाभोगः सुचित्रसंज्ञकं षोडशं पदम् ॥ ३६ ॥ ३७ ॥

**पुनर्गीत्वा ध्रुवे त्यागो ग्रहस्तु विषमो भवत्।**
**एलासामान्यलक्ष्मैतत्पूर्वाचार्यैरुदीरितम् ॥ ३८ ॥**

**पुनर्गीत्वा ध्रुवे त्याग इति।** एतानि षोडशपदानि द्वितीयवारं(द्विवारं) गीत्वा ध्रुवे त्रयोदशपदस्याऽऽदौ त्यागो न्यासः कर्तव्य इत्यनेन गाने नियम उक्तः। **ग्रहस्तु विषमो भवेदिति।** ग्रहः समातीतानागतभेदेन त्रेधा वक्ष्यते। तुशब्दः प्रबन्धान्तरापेक्षयाऽस्य विशेषद्योतनार्थः। प्रबन्धान्तरेषु ग्रहाणामानियमोऽत्र नियम [इति] विशेषः। विषमो **भवेदिति।** विषमः समादन्योऽतीतानागतयोरेकतर इत्यर्थः। वाग्गेयकारेच्छयाऽतीतो वाऽनागतो वा ग्रहः कर्तव्य इत्युक्तं भवति ॥ ३८ ॥

---

१ ख. °योगोऽस्यानुज्ञाय°।

तालनियमं दर्शयति—

मण्ठद्वितीयकङ्कालप्रतितालेषु कश्चन ।
तालोऽस्यां त्यागसौभाग्यशौर्यधैर्यानुवर्णनम् ॥ ३९ ॥

मण्ठद्वितीयेति । गणादिनियमस्यापि वक्ष्यमाणत्वादयं निर्युक्तः प्रबन्धः ।

एलानां बहवः सन्ति विशेषास्तेषु केचन ।
व्युत्पत्तये निरूप्यन्ते मतङ्गादिमतोदिताः ॥ ४० ॥
अकारे दैवतं विष्णुरिकारे कुसुमायुधः ।
लक्ष्मीर्लकार एलानामिति वर्णेषु देवताः ॥ ४१ ॥
काममन्मथवत्कान्तजितमत्तविकारिणः ।
मांधातृसुमती शोभी सुशोभी गीतको नुतः ॥ ४२ ॥
विचित्रो वासवमृदुसुचित्रा इति षोडश ।
नामान्येलापदानां स्युः षोडशानामनुक्रमात् ॥ ४३ ॥
पद्मालया पात्रिणी च रञ्जनी सुमुखी शची ।
वरेण्या वायुवेगा च वेदिनी मोहिनी जया ॥ ४४ ॥
गौरी ब्राह्मी च मातङ्गी चण्डिका विजया तथा ।
चामुण्डैलापदेष्वेताः क्रमात्षोडश देवताः ॥ ४५ ॥

॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥

समानो मधुरः सान्द्रः कान्तो दीप्तः समाहितः ॥ ४६ ॥
अग्राम्यः सुकुमारश्च प्रसन्नौजस्विनाविति ।
मांधात्रादिपदेषु स्युः प्राणा दश दशस्विमे ॥ ४७ ॥

समानो मधुर इत्यादिना दश प्राणानुद्दिश्यमे दश प्राणा दशसु मांधात्रादिपदेषु स्युरित्यस्यायमभिप्रायः । एते दशैव प्राणाः षोडशस्वपि पदेषु वर्तन्त इति । कथं तेषां मध्ये केषांचिदेकधातुत्वादेकधातुकयोर्द्वयोस्त्रयाणां वैक एव प्राणः । तथा हि—द्वितीयाङ्घ्रौ प्रयोगात्मकस्य मांधातृसंज्ञकद्वितीयपदस्य प्रथमाङ्घ्रौ प्रयोगात्मकस्य मांधातृसंज्ञकाद्वितियपदस्य प्रथमाङ्घ्रौ प्रयोगात्मकस्य मन्मथवत्संज्ञकद्वितियपदस्य चैकत्वाद्द्वयोरप्येक एव समानो नाम प्राणः । तथा सुमतिशोभी(भि)सुशोभी(भि)संज्ञकानां द्वितीयाङ्घ्रिपल्लवपदानां कान्तजितमित्रसंज्ञितानां प्रथमाङ्घ्रिपल्लवपदानां तुल्यधातुकत्वात्क्रमेण द्वयोर्द्वयोर्मधुरः सान्द्रः कान्त इति त्रयः प्राणाः । तथा तृतीयाङ्घ्रौ द्विखण्डात्मकप्रथमपादस्य द्वितीयप्रथमाङ्घ्रिगतयोर्द्विखण्डात्मनोः प्रथमपदयोश्च त्रयाणामपि समा-

१ ग. वेदना । घ. मेदिनी ।

नधातुकत्वादिक एव दीप्तसंज्ञकः प्राणः । एवमेकादशसु पदेषु पञ्च प्राणाः । ततो द्वादशादिषु पञ्चसु पदेषु यथासंख्यं समाहितादयः पञ्च प्राणा योजनीयाः । अत एव द्वादशपदे प्राणस्य समाहिताख्या स्यात् । न तु साधारणत्वात् । 'प्रयोगोऽन्यो विधातव्यः' इत्यत्रान्य इत्यस्य भिन्नधातुक इति व्याख्यातमुपपन्नम् । एवं षोडशसु पदेषु दश प्राणा वेदितव्याः ॥ ४६ ॥ ४७ ॥

**समानोऽल्पाक्षरध्वानो मधुरस्त्वनादजः (रः स्वल्पनादया)।**
**अल्पमूर्छनया युक्तः सान्द्रस्तु निबिडाक्षरः ॥ ४८ ॥**

समानादीनां प्राणानां क्रमेण लक्षणान्याह—**समानोऽल्पाक्षरेत्यादिना** । अल्पाक्षरः स्था(रध्वा)नः । अक्षराणि च ध्वानश्चेति द्वंद्वः । [ अल्पा ] अक्षरध्वाना यस्येति तथोक्तः । समानस्याल्पाक्षरत्वं तावत्प्रयोगात्मकपदानि(न्वि)-[तत्वात्] । तत्राक्षरवर्जितत्वात्प्रयोगस्याल्पाक्षरत्वं कथं घटत इति चेत् । उक्तमेवैतत्संबोधनपदान्वित इति तृतीयाङ्घ्रिगतप्रयोगलक्षणेन प्रथमद्वितीयाङ्घ्रिगतयोः प्रयोगयोः किंचिद्संबोधनपदान्वितत्वमभ्यनुज्ञायत इति । अल्पध्वानत्वं च तस्य प्रयोगात्मकपदान्वितत्वादेव । प्रयोगे हि गमकालप्तिरूपस्वराणां परिपूर्णत्वाभावादिति भावः । समानो नामायं प्राणः प्रथमद्वितीयाङ्घ्रिगतयोः प्रयोगात्मनोर्मन्मथवन्मांधातृसंज्ञयोः पदयोर्योजनीयः । **मधुर इत्यादि** । स्वल्पनादयाऽल्पमूर्छनया युक्तः प्राणो मधुर इत्युच्यते । मूर्छनाया अल्पत्वं तानीकरणाद्भवति । तानीकरणं नाम पूर्वमतानस्य तानत्वसंपादनम् । तच्च तानादिमं स्वरमुच्चार्याऽऽरोहेण वाऽवरोहेण वा क्रमेण मध्यस्थितानां स्वराणां स्पर्शमात्रेणातीतस्वरोच्चारणे सति भवतीति मन्तव्यम् । अत एव स्वल्पनादयेति विशेषणम् । तस्यैव साक्षीकरणार्थमयं प्राणः प्रथमद्वितीयाङ्घ्रिगतयोर्विलम्बितमानयोः कान्तसुमती(ति)संज्ञयोः पल्लवपदेष्वादिमयोः पदयोर्योजनीयः। **सान्द्रास्त्वित्यादि**। निबिडाक्षर इत्यनेनात्र धात्वपेक्षया मातोराधिक्यं प्रतीयते ॥ ४८ ॥

**अल्पध्वनिस्तारगतिः कान्तः कान्तध्वनिर्मतः ।**
**दीप्तस्तु दीप्तनादः स्यात्स्थायिस्थस्तु समाहितः ॥ ४९ ॥**

**अल्पध्वनिरिति** । मात्वपेक्षया धातोरल्पत्वादिति भावः । **तारगतिरिति** । तारस्थाने गतिः प्रवेशो यस्येति । अनेन प्रथमद्वितीयाङ्घ्रिगतयोर्विलम्बितमानयोः पल्लवमध्यस्थितयोर्जितशोभी( भि )संज्ञयोः पूर्वपदापेक्षया किंचिदुच्चत्वेन सान्द्रप्राणाश्रयत्वं कर्तव्यमित्यर्थः । **कान्त इत्यादि** । कान्तध्वनिरिति तस्य लक्षणम् । ध्वनेः कान्तत्वं नाम रक्त्यतिशययुक्तत्वम् । अङ्घ्रि[प?]द्पल्लवान्तिमयोर्द्रुतमानयोर्मत्तसुशोभी( भि)संज्ञयोः पदयोः कान्तो नाम प्राणो योजनीयः । **दीप्तस्त्वित्यादि** । दीप्तनादस्तारस्वरत्वात्पूर्णस्वरत्वाच्चेत्यर्थः । अयं प्राणोऽङ्घ्रित्रयादिमेषु द्विखण्डात्मकेषु कामविकारिगीतकसंज्ञकेषु योजनीयः ।

**स्थायिस्थस्त्वित्यादि** । तुशब्दो भिन्नक्रमः। समाहितास्त्वित्यन्वयः। स्थायिस्थ इति लक्षणम् । स्थायिनि वर्णे तिष्ठतीति स्थायिस्थः । पूर्वप्रयोगद्वयोर( या? ) न्यप्रयोगात्मके सुचित( के नुत )संज्ञके द्वादशे पदे तत्र तत्रोचितान्स्थायिनः कृत्वाऽक्षरवर्जितायां गमकालप्तौ कृतायां समाहिताख्यः प्राणस्तत्र योजितो भवति ॥ ४९ ॥

अग्राम्योऽक्षरनादानामावृत्त्या समुदाहृतः ।
सुकुमारो वर्णनादमूर्छनाकोमलत्वतः ॥ ५० ॥

**अग्राम्य इत्यादि। अक्षरनादानामावृत्त्येति**। तत्राक्षराणामावृत्तिस्तावद्गीते वाक्यावयवेषु पदेषु यान्यक्षराणि तेषां मध्ये पूर्वपूर्वपदान्तिमयोर्द्वयोस्त्रयाणां वाऽक्षराणां चक्रवालरीत्योत्तरोत्तरपदादिमत्वेनोच्चारणम् । एवं तत्तदक्षरगतानामेव स्वराणामुच्चारणं नादानामावृत्तिः । एवं द्विविधयाऽऽवृत्त्या निष्पन्नोऽग्राम्यो नाम प्राणो ध्रुवखण्डादिमे मध्यलययुक्ते चित्राख्ये पदे योजनीयः । **सुकुमार इत्यादि । वर्णनादमूर्छनाकोमलत्वत इति** । वर्णानामक्षराणां नादानां स्वराणां मूर्छनानां मूर्छनाविकाररूपत्वादुपचारेण तथा व्यपदेशः। एतेषां वर्णादीनां कोमलत्वतः सुकुमार इत्यर्थः। अयं वासवाख्ये मध्यलययुक्ते ध्रुवखण्डस्य द्वितीये पदे योजनीयः ॥ ५० ॥

प्रसन्नः स्यात्पदस्थानस्वरादीनां प्रसादतः ।
ओजोबहुल ओजस्वीत्येभिः सर्वगुणैर्युतः ॥ ५१ ॥

**प्रसन्नः स्यादित्यादि** । पदानां तावत्प्रसादेऽविलम्बेनार्थप्रकाशः । स्थानादीनां तु प्रसन्नत्वं विविक्तस्वरूपत्वम्। अत्राऽऽदिशब्देन तानगमकादयो गृह्यन्ते । अयं प्राणो ध्रुवखण्डान्तिमे विलम्बितयुक्ते मधु( मृदु )संज्ञके पदे योजनीयः । **ओज इत्यादि । ओजोबहुल इति** । ओजो नाम समासभूयस्त्वम् । तच्च पदेषु तानेष्वपि द्रष्टव्यम् । तेन बहुलः प्रचुरः प्राण ओजस्वीत्यन्वयः । अविनाभोगात्मनि सुचित्त(र) संज्ञके षोडशे पदे योजनीयः ॥ ५१ ॥

एला श्रोतुः प्रयोक्तुश्च धर्मकामार्थसिद्धिदा ।
गणमात्रावर्णदेशविशिष्टास्ताश्चतुर्विधाः ॥ ५२ ॥

एवमेलासामान्यलक्षणमुक्त्वा तद्भेदान्दर्शयितुमाह- **गणमात्रेत्यादिना**॥५२॥

गणः समूहः स द्वेधा वर्णमात्राविशेषणात् ।
गुरुर्लघुरिति द्वेधा वर्णोऽनुस्वारसंयुतः ॥ ५३ ॥
सविसर्गो व्यञ्जनान्तो दीर्घो युक्तपरो गुरुः ।
वा पदान्ते त्वसौ वक्रो द्विमात्रो मात्रिको लघुः ॥५४॥
ऋजुर्लिपौ भ्रे ष्के ष्पे च रहोर्योगे स वा लघुः ।
ए ओइं हिं पदान्ते वा प्राकृते लघवो मताः ॥ ५५ ॥

पदमध्येऽप्यपभ्रंशे[1] हुंहे ए ओइमित्यमी ।
तत्र वर्णगणो वर्णैस्त्रिभिरष्टविधश्च सः ॥ ५६ ॥

तत्र गणस्य सामान्यलक्षणमाह—गणः समूह इति ॥५३॥५४॥५५॥५६॥

वर्णगणानां लक्षणमाह—

मस्त्रिगुः पूर्वलो यः स्यान्मध्यलो रोऽन्तगुस्तु सः ।
तोऽन्तलो मध्यगो जः स्याद्भादिर्भस्त्रिलघुस्तु नः ॥ ५७ ॥

मस्त्रिगुरित्यादि । त्रिगुस्त्रयो गुरवो यस्मान्निति त्रिगुः । मगण इत्यर्थः । अत्र गुरुलघ्वोराद्याक्षराभ्यां तयोः संज्ञा मन्तव्या । पूर्वलो य इति । पूर्वलः पूर्वं लघुर्यस्मिन्नसौ पूर्वलः । अनेन द्वितीयतृतीयौ च गुरू इति गम्यते । तेन वर्णत्रयात्मकेषु गणेष्वेकस्मिन्गुरुलघ्वोरेकेन विशेषिते तदितरयोस्तदितररूपता द्रष्टव्या ॥ ५७ ॥

इत्येषां देवता भूमिजलाग्निमरुतोऽम्बरम् ।
सूर्यचन्द्रसुरावासाः[2] क्रमात्कुर्युः फलानि ते ।
श्रीवृद्धिनिधनस्थानभ्रंशानिर्धनतारुजः ॥ ५९ ॥

॥ ५८ ॥ ५९ ॥

कीर्तिमायुश्च वर्णस्य[3] श्लोकगीतादियोगतः ।
सोमो भौमो बुधो जीवः शुक्रः सौरी रविस्तमः ॥ ६० ॥
क्रमादकचटानां तपयशानां च देवताः ।
वर्गाणां च फलान्येषामायुष्कीर्ती असद्यशः ॥ ६१ ॥
संपत्सुभगता कीर्तिर्मान्द्यं मृत्युश्च शून्यता ।
प्रयोगे श्लोकगीतादौ स्तुत्यस्योक्तानि सूरिभिः ॥ ६२ ॥

श्लोकगीतादियोगत इति । श्लोकगीतयोरादावुपक्रमे योगः प्रयोगः । तस्मात् श्लोके वा गीते वा प्रथमोच्चार्यमाणत्वादित्यर्थः ॥ ६० ॥ ६१ ॥६२॥

मात्रागणान्दर्शयितुमाह—

मात्रा कला लघुर्लः स्यात्तद्गणाश्छपचास्तदौ ।
स्युः षट् पञ्च चतुस्त्रिद्विसंख्यमात्रायुताः क्रमात् ॥ ६३ ॥

यथा—ऽ ऽ ऽ इति च्छगणः, ऽ ऽ । इति पगणः, ऽ ऽ इति चगणः, ऽ । इति तगणः, ऽ इति दगणः, इति पञ्च मात्रागणाः

मात्रा कलेत्यादि । तद्गणा मात्रागणाश्छपचास्तदौ क्रमात्षट्पञ्चचतुस्त्रिद्विसंख्यमात्रायुताः स्युरिति । षण्मात्रायुतश्छगणः । पञ्चमात्रायुतः पगणः

१ ख. ग. °शे हुं हे ऊ ए इमि° । घ. °शे हुं हमे ओ इमि° । २ ख. ञ. °मित्यादि त° । ३ ग. °सुराधीशाः क्र° । ४ ग. °र्णश्च श्लो° ।

चतुर्मात्रायुतश्चगणः। त्रिमात्रायुतस्तगणः। द्विमात्रायुतो दगण इति क्रमो द्रष्टव्यः। अत्र पचतादिष्वाद्याक्षरैः संज्ञाः कृताः। छगणस्तु सांकेतिकः॥६३॥

मतभेदप्रदर्शनार्थमन्यानपि मात्रागणान्दर्शयितुमाह—

**अत्युक्तायास्तु चत्वारो भेदा रतिगणा मताः।**
**किंतु तत्र लपूर्वा ये तेष्वादावधिको लघुः॥ ६४॥**

+यथा—

ऽ ऽ ऽ **अत्युक्तायास्त्वित्यादि**। अत्युक्ता नामाक्षरद्वयात्म-
। ऽ ऽ कैकपादश्छन्दोभेदः। तस्याः। **चत्वारो भेदा इति**।
ऽ । ऽ "पादे सर्वगुरावाद्याल्लघून्न्यस्य गुरोरधः।
। । ऽ यथोपरि तथा शेषं भूयः कुर्यादमुं विधिम्॥
ऽ ऽ । ऊने दद्याद्गुरूनेव यावत्सर्वलघुर्भवेत्"
। ऽ । इति च्छन्दःशास्त्रोक्तप्रकारेण प्रस्तारे कृते गुर्वक्षरद्वया-
ऽ । । त्मकः प्रथमो भेदः। लघुगुर्वक्षरद्वयात्मको द्वितीयः। गुरु-
। । । लघ्वक्षरद्वयात्मकस्तृतीयः। लघ्वक्षरद्वयात्मकश्चतुर्थः। इत्येते

चत्वारो भेदाः प्रत्येकं रतिगणा रतिगणाख्या मात्रागणा मताः। तत्र विशेषं दर्शयितुमाह—**किंत्वित्यादि**। तत्र तेषु चतुर्षु भेदेषु मध्ये ये लपूर्वा लघुपूर्वा भेदास्तेषु लघुपूर्वेषु भेदेष्वादौ प्रथमं लघुराधिकः। कर्तव्य इति शेषः। अयमर्थः। अत्युक्तायाश्चतुर्षु भेदेषु द्वितीयचतुर्थौ लघुपूर्वौ। तयोरेकैकलघ्वाधिक्ये सति प्रथमं त्रिमात्रो द्वितीयश्चतुर्मात्रो[1] भवति। प्रथमं द्विमात्रश्चतुर्थस्त्रिमात्रो भवति। एवमुत्तरत्रापि द्रष्टव्यम्। तत्र तु द्वावेव लघुपूर्वौ भेदौ। लपूर्वा ये तेष्विति बहुवचननिर्देशः कथमिति चेत्सत्यम्। वक्ष्यमाणानामपि मध्याप्रतिष्ठयोर्भेदाद्बु( न्बु )द्धौ संगृह्य तथा निर्देशः कृत इत्यदोषः। तत्रापि लघुपूर्वेष्वादावधिको लघुः कर्तव्य इत्यर्थः॥ ६४॥

इममेवार्थमतिदिशन्मध्याप्रतिष्ठयोर्भेदान्गणान्तरव्यपदेशभाक्त्वेन दर्शयति—

**एवं मध्याभवा भेदा अष्टौ कामगणाः स्मृताः।**
**तद्वद्बाणगणा भेदाः प्रतिष्ठायास्तु षोडश॥ ६५॥**

यथा—

ऽ ऽ ऽ ऽ **एवं मध्येत्यादिना**। मध्याभवा मध्या
। ऽ ऽ ऽ नामाक्षरत्रयात्मिककपादश्छन्दोविशेषः। तस्यां
ऽ । ऽ ऽ भवाः। **अष्टौ भेदा इति**। पूर्ववत्प्रस्तारे

+ इदमुदाहरणं 'कामगणाः स्मृताः' इत्येतस्य पुरतः स्थापनीयमिति भाति।

[1] ख. ग. °श्चतुर्मात्रो।

| | |
|---|---|
| ।।ऽऽ | कृते सति त्रिगुर्वादयो मयरसतजभना अष्टौ |
| ऽऽ।ऽ | वर्णगणा भवन्ति । तत्र पूर्वेषु मसजेनेष्वेव- |
| ।ऽ।ऽ | मित्यतिदेशेनैकैकलघ्वधिकेषु कृतेष्वेत एवाष्टौ |
| ऽ।।ऽ | भेदाः कामगणाः । प्रत्येकं कामगणाख्या |
| ।।।ऽ | मात्रागणाः स्मृताः । **प्रतिष्ठायास्त्विति ।** |
| ऽऽऽ। | प्रतिष्ठा नामाक्षरचतुष्टयात्मकैकपादश्छन्दो- |
| ।ऽऽ। | विशेषः । तस्याः । **षोडश भेदा इति ।** |
| ऽ।ऽ। | पूर्ववत्प्रस्तारे कृते चतुर्गुर्वादयश्चतुर्लघ्वन्ताः |
| ।।ऽ। | षोडश भवन्ति । तद्वदित्यतिदेशेनात्रापि |
| ऽऽ।। | द्वितीयादयः समसंख्याका अष्टौ लघुपूर्वा |
| ।ऽ।। | भेदा एकैकलघ्वधिकाः कृताश्चेत्षोडशापि |
| ऽ।।। | प्रत्येकं बाणगणाख्या मात्रागणा भवन्ति |
| ।।।। | ॥ ६५ ॥ |

**इति मात्रागणाः ।**

प्रथमोपदिष्टां गणैलां सप्रभेदां लक्षयितुमाह—

**तत्र वर्णगणैर्जाता गणैला परिकीर्तिता ।**
**सा भवेत्त्रिविधा शुद्धा संकीर्णा विकृता तथा ॥६६॥**
**शुद्धा चतुर्विधा नादावती हंसावती तथा ।**
**नन्दावती च भद्रावत्यथाऽऽसां लक्ष्म कथ्यते ॥**
**गणादिनियमस्त्वासामङ्घ्रिखण्डद्वयाश्रयः ॥ ६७ ॥**

**तत्र वर्णगणैरित्यादि।** वर्णगणाः पूर्वोक्ता मयरसतजभनाः। तैः ॥६६॥६७॥

नादावती **पञ्चभिर्भैर्नान्तैः स्याट्टकमण्ठयोः ।**
**ऋग्वेदोच्छ्रवासिता विप्रा कैशिकीवृत्तिमाश्रिता ॥**
**पाञ्चाली रीतिर्भारत्याः प्रीत्यै शृङ्गारवर्धनी ॥ ६८ ॥**

नादावत्यादीनां शुद्धानां चतसृणां लक्षणेषु कैशिक्याश्चतस्रो वृत्तयः पाञ्चाल्यादयश्चतस्रो रीतयश्च क्रमेण योजिताः । तासां लक्षणानि संक्षिप्योच्यन्ते । तत्र वृत्तिर्नाम वाङ्मनःकायजा चेष्टा पुरुषार्थोपयोगिनीति सामान्यलक्षणम् ।

" अत्यर्थसुकुमारार्थसंदर्भा कैशिकी मता ।
अत्युद्धतार्थसंदर्भा वृत्तिरारभटी मता ॥
ईषत्प्रौढार्थसंदर्भा सात्वती वृत्तिरिष्यते ।
ईषन्मृद्वर्थसंदर्भा भारती वृत्तिरिष्यते " इति ।
" रीतिर्नाम गुणाश्लिष्टपदसंघट्टना मता "

इति सामान्यलक्षणम् ।

" पाञ्चालरीतिवैदर्भगौडरीत्युभयात्मिका ।
लाटी समासानुप्रासप्राया तात्पर्यभेदभाक् ॥
ओजःकान्तिगुणोपेता गौडी या रीतिरिष्यते ।
बन्धपारुष्यरहिता शब्दकाठिन्यवर्जिता ॥
नातिदीर्घसमासा च वैदर्भी रीतिरिष्यते " इति ।

पाञ्चालादिरीतीनां शब्दगुणाश्रितानामर्थविशेषनिरपेक्षतया केवलसंदर्भसौकुमार्यप्रौढत्वमात्रविषयत्वात्कैशिक्यादिभ्यो भेदोऽवगन्तव्यः ॥ ६८ ॥

इति नादावती ।

रगणैः पञ्चभिः सान्तैः प्रोक्ता हंसावती बुधैः ।
द्वितीयताले हिन्दोले क्षत्रिया यजुरुद्भवा ॥ ६९ ॥
लोहितारभटीवृत्तिं लाटीरीतिं च संश्रिता ।
रौद्ररसे चण्डिकायाः प्रीतये विनियुज्यते ॥ ७० ॥

इति हंसावती ।

पञ्चभिस्तगणैर्जान्तैरेला नन्दावती मता ।
प्रतितालेन सा गेया रागे मालवकैशिके ॥ ७१ ॥
सामवेदोद्भवा पीता वैश्या सात्त्वतवृत्तिजा ।
गौडीयरीतिरिन्द्राण्याः प्रीत्यै वीररसाश्रिता ॥ ७२ ॥

इति नन्दावती ।

भद्रावती पञ्चभिर्मैर्यान्तैः कङ्कालतालतः ।
ककुभेऽथर्ववेदोत्था कृष्णा शूद्रा च भारतीम् ॥ ७३ ॥
वृत्तिं वैदर्भरीतिं च श्रिता बीभत्ससंभृता ।
वाराहीदेवताप्रीत्यै शार्ङ्गदेवेन कीर्तिताः ॥ ७४ ॥

इति भद्रावती ।

बहुधासंकरादासां संकीर्णा बहुधा मताः ।
अप्रसिद्धास्तु ता लक्ष्ये तेन नेह प्रपञ्चिताः ॥ ७५ ॥

॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥

---

१ ग. घ. सान्तैरुक्ता ।

**शुद्धाः स्युर्विकृतास्तिस्र आद्या गणविकारतः ।**
**वासवी संगता त्रेता चतुरा बाणसंज्ञिका ॥ ७६ ॥**

**शुद्धाः स्युर्विकृतास्तिस्र इत्यादि** । आद्यास्तिस्रो नादावती हंसावती नन्दावती च । गणविकारतः शुद्धेतावस्थायां [स्व]स्वोक्तगणानां विकारतोऽन्यथाभावात् । अन्यभावश्च प्रकृतगणस्थितगुरुलघुविपर्यासेन प्रकृतगणस्य गणान्तरत्वप्राप्तिः । तत्र नादावत्यां भगणस्य विकाराज्जगणो वा सगणो वा भवति । हंसावत्यां रगणस्य विकाराद्भगणो वा यगणो वा भवति । नन्दावत्यां नगणस्य विकाराद्यगणो वा रगणो वा भवति ॥ ७६ ॥

**एकद्वित्रिचतुष्पञ्चविकारात्पञ्चधेति ताः ।**
**प्रत्येकं वासवी पञ्चविधा रामा मनोरमा ॥ ७७ ॥**
**उन्नता शान्तिसंज्ञा च नागरेत्युच्यते बुधैः ।**
**गणानां प्रथमादीनां विकारात्पञ्चमावधि ॥ ७८ ॥**

**एकद्वित्रिचतुष्पञ्चविकारादिति** । तत्र नादावत्यां तावत्सु भगणेषु मध्य एकभगणविकारे सति वासवी नाम विकृता भवति । भगणद्वयविकारे संगता नाम । भगणत्रयविकारे त्रेता नाम । भगणचतुष्टयविकारे चतुरा नाम । भगणपञ्च[क]विकारे बाणसंज्ञिका । प्रत्येकमिति पूर्वेण संबन्धः । नादावती हंसावती नन्दावती चेत्यर्थः । **वासवी पञ्चविधेत्यादि** । गणानां प्रथमादीनां[1] विकारात्पञ्चमावधीति । तत्र प्रथमगणविकाराद्रामा नाम वासवीभेदो द्वितीयगणविकारान्मनोरमा तृतीयगणविकारादुन्नता चतुर्थगणविकाराच्छान्तिः पञ्चमगणविकारान्नागरेति क्रमेण योजनीयम् । पञ्चमावधीत्यनेनान्तिमस्य गणस्य विकारनिषेधो गम्यते । तस्यापि विकारे हि नादावत्यादीनां प्रत्यभिज्ञैव न भवेदिति भावः । तस्मात्पूर्वं जातिषु 'विकृता न्यासवर्ज्यैतल्लक्ष्महीना भवन्त्यमूः' इत्यत्र न्याय उक्तः सोऽत्राप्यनुसंधेयः । यद्यपि नादावत्यामन्तिमस्य गणस्य विकारो न संभवतीति तथाऽपि हंसावतीनन्दावत्योः सगणजगणयोरन्तिमयोर्विकारसंभवात्तत्प्रतिषेधार्थं सामान्येनोक्तमिति मन्तव्यम् ॥ ७७ ॥ ७८ ॥

**रमणीया च विषमा समा लक्ष्मीश्च कौमुदी ॥ ७९ ॥**
**कामोत्सवा[2] नन्दिनी च गौरी सौम्या ततः परम् ।**
**रतिदेहेति दशधा संगता गदिता बुधैः ॥ ८० ॥**

**रमणीयेत्यादि** ॥ ७९ ॥ ८० ॥

**आद्यस्य स्युर्द्वितीयादिसहितस्य विकारतः ।**
**चतस्रस्ता द्वितीयस्य तृतीयादियुजस्त्रयम् ॥ ८१ ॥**

---

१ ख. °द्धभावस्थायाः स्वरस्योक्त° । २ ग. छ. कामुकी ।

आद्यस्य स्युर्द्वितीयादिसाहितस्य विकारतः, चतस्र इति । आद्यद्वितीययोर्भगणयोर्विकाराद्रमणीया नाम संगताभेदः । आद्यतृतीययोर्विकाराद्विषमा । आद्यचतुर्थयोर्विकारात्समा । आद्यपञ्चमयोर्विकाराल्लक्ष्मीः । इति चतस्रः । द्वितीयस्य तृतीयादियुजस्त्रयामिति । द्वितीयतृतीययोर्विकारात्कौमुदी । द्वितीयचतुर्थयोर्विकारात्कामोत्सवा । द्वितीयपञ्चमयोर्विकारान्नन्दिनी । इति तिस्रः ॥ ८१ ॥

विकारेण तृतीयस्य चतुर्थादियुजो द्वयम् ।
तुर्यपञ्चमयोस्त्वेको(का) लक्ष्म तासां क्रमादिति ॥ ८२ ॥

विकारेण तृतीयस्य चतुर्थादियुजो द्वयामिति । तृतीयचतुर्थयोर्विकारेण गौरी । तृतीयपञ्चमयोर्विकारेण सौम्या । इति द्वे । तुर्यपञ्चमयोर्विकाराद्रतिदेहा । एवं दश संगताभेदाः ॥ ८२ ॥

त्रेता दशविधा प्रोक्ता मङ्गला रतिमङ्गला ।
कलिका तनुमध्या च वीरश्रीर्जयमङ्गला ॥ ८३ ॥
विजया रत्नमाला च गुरुमध्या रतिप्रभा ।
आद्याक्षरेण ग्रहणं प्रथमादेरिहेष्यते ॥ ८४ ॥
प्रद्वित्रि(तृ)णां प्रद्विचानां प्रद्विपानां प्रचत्रि(तृ)णाम् ।
प्रत्रि(तृ)पानां(णां) प्रचपानां द्वित्रि(तृ)चानां द्विपत्रि(तृ)णाम् ।
चद्विपानां चत्रि(प्तृ)पानां(णां) विकृतेः स्युः क्रमादिमाः ॥ ८५ ॥

त्रेता दशविधेत्यादि । प्रद्वित्रि(तृ)णां प्रथमद्वितीयतृतीयाणां भगणानां विकृतेर्मङ्गला नाम त्रेताभेदः । प्रद्विचानां विकृते रतिमङ्गला । प्रद्विपानां विकृतेः कलिका । प्रचत्रि(तृ)णां विकृतेस्तनुमध्या । प्रत्रि(तृ)पानां(णां) विकृतेर्वीरश्रीः । प्रचपानां विकृतेर्जयमङ्गला । द्वित्रि(तृ)चानां विकृतेर्विजया । द्विपत्रि(तृ)णां विकृते रत्नमाला । द्वित्रि(तृ)पानां(णां) विकृतेर्गुरुमध्या । पत्रि(तृ)चानां विकृते रतिप्रभा, इति क्रमोऽनुसंधेयः ॥ ८३ ॥ ८४ ॥ ८५ ॥

त्यक्त्वैकैकं गणं त्वाद्याच्चतुर्णां स्याद्विकारतः ।
चतुरा पञ्चधा तत्र प्रथमा तूत्सवप्रिया ।
महानन्दा मलहरी जया च कुसुमावती ॥ ८६ ॥

त्यक्त्वैकैकमित्यादि । आद्यादिति ल्यब्लोपे पञ्चमी । आद्यमारभ्येत्यर्थः । एकं गणं त्यक्त्वा विकृतमकृत्वेत्यर्थः । चतुर्णां पञ्चसु मध्ये त्यक्त्वा तदन्येषां चतुर्णां विकारतश्चतुरा पञ्चधा भवति । तत्राऽऽद्यं भगणं त्यक्त्वा द्वितीयादीनां चतुर्णां विकारादुत्सवप्रिया नाम चतुराभेदः । द्वितीयं त्यक्त्वेतरगणविकारान्म-

हानन्दा । तृतीयं त्यक्त्वेतरविकारान्मलहरी । चतुर्थं त्यक्त्वेतरविकारतो जया । पञ्चमं त्यक्त्वेतरविकारतः कुसुमावती ॥ ८६ ॥

**आद्यात्पञ्चविकारेण बाणा स्यात्पार्वतीप्रिया ॥ ८७ ॥**

**आद्यात्पञ्चेत्यादि** । आद्यमारभ्य पञ्चानां गणानां विकारे पार्वतीप्रिया नाम बाणसंज्ञिता ॥ ८७ ॥

**प्रत्येकमेकत्रिंशत्ते नादावत्यादिषु स्थिताः ।**
**भेदास्त्रिनवतिर्युक्ता अन्ये पञ्चदश त्विमे ॥ ८८ ॥**

**प्रत्येकमेकत्रिंशदिति** । यथा मगणविकारान्नादावतीभेदास्तथा रगणविकाराद्धंसावतीभेदा एकत्रिंशत् । तथा तगणविकाराच्चन्दावतीभेदा अप्येकत्रिंशत् । **अन्ये पञ्चदश त्विमे** । अन्य उक्तेभ्यस्त्रिनवतिभेदेभ्योऽन्ये त्विमे वक्ष्यमाणाः ॥ ८८ ॥

**सावित्री पावनी वातसावित्री च त्रिधा मता ।**
**संगता सवितुः क्षिप्ते पवनस्य गणे क्रमात् ॥ ८९ ॥**

नादावत्यां तावद्गणद्वयविकारवती संगता भगणद्वयस्य स्थाने सवितुर्गणे सवितृदेवताके जगणे क्षिप्ते भगणविकारत्वेन जगणद्वये न्यस्त इत्यर्थः । तदा सावित्री नाम संगताभेदः । तथा पवनस्य गणे सगणे क्षिप्ते सति पावनी नाम संगताभेदः [द्वयोः स्थाने द्वितये च क्षिप्ते वातसावित्री नाम संगताभेदः] ॥८९॥

**द्वितीये चाऽऽद्यभेदाभ्यां द्विविधा वासवी मता ।**
**नादावत्यामिमे भेदा हंसावत्यामपि त्रिधा ॥ ९० ॥**
**व्योमजा वारुणी व्योमवारुणी चेति संगताः ।**
**तद्दैवत्यगणोपेता तथा स्याद्वासवी द्विधा ॥ ९१ ॥**

**आद्यभेदाभ्यां द्विविधा वासवी मतेति** । एकगणविकारवती वासवी यदा भगणविकारत्वेन जगणवती स्यात्तदा सावित्री नाम वासवीभेदः । यदा तु सगणवती तदा पावनी नाम वासवीभेदः । वासव्यां गणद्वयविकाराभावात्तृतीयभेदाभावो द्रष्टव्यः । एवं नादावत्यां विकृतभेदाः पञ्च । हंसावत्यामपि त्रिधेति । हंसावत्यां रगणद्वयस्थाने तगणद्वये क्षिप्ते व्योमजा नाम संगताभेदः । तस्मिन्नेव यगणद्वये क्षिप्ते वारुणी नाम संगताभेदः । द्वयोः स्थाने द्वितये च क्षिप्ते व्योमवारुणी नाम संगताभेदः । **तद्दैवत्यगणोपेतेति** । व्योमगणेन वरुणगणेन व्योमवरुणगणाभ्यां चेत्यर्थः । **तदा( था ) स्याद्वासवी द्विधेति** । हंसावत्यां वासवी व्योमजावारुणीतिभेदद्वयवतीत्यर्थः ॥ ९० ॥ ९१ ॥

**नन्द्यावत्यां वह्निजा च वारुणी वह्निवारुणी ।**
**तद्गणैः संगता त्रेधा तथा द्वेधा च वासवी ॥ ९२ ॥**

---

१ घ. तद्गद्वेधा ।

**नन्दावर्त्यां वह्निजेत्यादि** । पूर्ववदनुसंधेयम् । भद्रावर्त्यास्तु सगणात्मकत्वान्मगणस्य विकारासंभवाद्विकृतभेदाभाव इति ग्रन्थकाराभिप्रायो बोद्धव्यः॥९२॥

**इत्येते विकृता भेदा अष्टोत्तरशतं मताः ॥ ९३ ॥**

**+पार्वतीमतात्** ।

**इत्येत इति** । एभिः पञ्चदशगणैः सह गणैलाया अष्टोत्तरशतं विकृतभेदाः ॥ ९३ ॥

**इति गणैलालक्षणम्** । पार्वतीमतात् ।

**मात्रागणैस्तु मात्रैला सा च ज्ञेया चतुर्विधा ।**
**रतिलेखा कामलेखा बाणलेखा तथाऽपरा ॥ ९४ ॥**

मात्रैलां लक्षयितुमाह—**मात्रागणैस्त्वित्यादि** ॥ ९४ ॥

**चन्द्रलेखेति तत्राऽऽद्ये पादे रुद्राः कला यदि ।**
**द्वितीये च तृतीये तु मात्रा दश तदा भवेत् ॥ ९५ ॥**
**रतिलेखा रतिगणैः कामलेखा तु मान्मथैः ।**
**द्विगुणाभिः कलाभिः स्यान्मात्रात्रैगुण्यतो भवेत् ॥ ९६ ॥**
**बाणलेखा बाणगणैश्चन्द्रलेखा तु मिश्रितैः ।**
**गणैश्चतुर्गुणकलाश्चतस्रोऽन्या ब्रुवेऽधुना ॥ ९७ ॥**

**तत्राऽऽद्य इति** । तत्र रतिलेखादिषु चतसृषु मात्रैलादिषु मध्य आद्यपादे पञ्चपदात्मक उद्ग्राहावयवे प्रथमपादे रुद्राः कला एकादश मात्राः । **द्वितीये चेति** । तादृशे द्वितीये पादे । चकारेणात्राप्येकादश कलाः समुच्चीयन्ते । **तृतीये त्विति** । पदद्वयात्मके तृतीयपादे । तुशब्दोऽत्र पादद्वयाद्विशेषं दर्शयति । स विशेषो मात्रा दशेति यथा( तदा ) भवेदित्युत्तरेण संबन्धः । तथा पादत्रयोक्तमात्रासंख्यया रतिगणैरुक्तविशेषैरत्युक्ताभेदः( दैः ? ) रतिगणैरितीत्थंभावलक्षणे तृतीया । तत्र यैर्मिलितैः प्रथमद्वितीययोः पादयोः प्रत्येकमेकादश मात्रास्तृतीये तु दश मात्राः संमिता भवन्ति तैरित्यर्थः । रतिलेखा भवेदिति योजना । **कामलेखा त्वित्यादि । द्विगुणाभिः कलाभिरिति** । रतिलेखोक्तमात्रासंख्यापेक्षया प्रथमद्वितीययोः पादयोः प्रत्येकं द्वाविंशत्या मात्राभिस्तृतीये तु विंशत्या मात्राभिरित्यर्थः । ताभिर्निष्पन्नैर्मान्मथैः कामगणैः पूर्वोक्तैर्मध्याभवैर्भेदैर्यथायोगं योजितैः कामलेखा स्यात् । **मात्रात्रैगुण्यत इत्यादि** । रतिलेखापेक्षया प्रथमद्वितीययोः पादयोः प्रत्येकं त्रयस्त्रिंशता मात्राभिस्तृतीये पादे त्रिंशन्मात्राभिरित्यर्थः । बाणगणैः पूर्वोक्तैः प्रतिष्ठाभेदैर्यथायोगं योजितैर्बाणलेखा भवेत् ।

---

\+ ख. ग. पुस्तकयोः पार्वतीमतादिति नास्ति ।

१ ङ. तथा।

**चन्द्रलेखा त्वित्यादि।** **मिश्रितैर्गणैरिति।** रतिकामबाणपूर्वैः पूर्वोक्तमात्रासंख्यानुगुण्येन योजितैरित्यर्थः। **चतुर्गुणकलेति।** रतिलेखापेक्षयाऽत्रापि चतुर्गुणत्वम्। तेन प्रथमद्वितीययोः पादयोः प्रत्येकं चतुश्चत्वारिंशन्मात्रायुक्ते-(क्ता) तृतीये पादे चत्वारिंशन्मात्रायुक्ता चन्द्रलेखा भवतीत्यर्थः। नन्दिमतादन्यां मात्रैलां लक्षयितुमाह—**चतस्रोऽन्या इत्यादि॥** ९५ ॥ ९६ ॥ ९७ ॥

**आद्येन्दुमत्यथो ज्योतिष्मती पश्चान्नभस्वती।**
**वसुमत्यपि तत्रेन्दुमती छैः पञ्चभिः सतैः॥ ९८॥**

**सतैरिति।** तगणेन सहितैः। तगणोऽत्र मात्रात्रयात्मको मात्रागणः। तस्याप्रधानत्वादन्ते निवेशः कर्तव्यः। छैश्छगणैः षण्मात्रात्मकैर्मात्रागणैरिन्दुमती नाम मात्रैला भवति॥ ९८॥

**पञ्चभिः पैः सचगणैराहुर्ज्योतिष्मतीं बुधाः।**
**त्रिभिश्चैः पगणेनापि छाद्यन्ता स्यान्नभस्वती॥ ९९॥**

**पञ्चभिः पैरिति।** पैः पगणैः पञ्चमात्मकैर्मात्रागणैः। सचगणैः। चगणोऽत्र चतुर्मात्रात्मको मात्रागणस्तेन सहितैः। ज्योतिष्मती नाम मात्रैलामाहुर्बुधा मतङ्गादयः। छाद्यन्ता। आदौ छगण एकः। ततश्चगणास्त्रयः। ततः पगण एकः। अन्ते छगणश्च। एतैर्युक्ता नभस्वती स्यात्॥ ९९॥

**सा स्याद्वसुमती यस्यां दपचाः पत्रयं छतौ॥ १००॥**
**नन्दिमतात्।**

**सा स्यादिति।** यस्यां दपचा दगणपगणचगणाः। दगणो मात्राद्वयात्मकः। पत्रयं पगणत्रयं छतौ छगणतगणौ च क्रमेण भवन्ति चेत्सा वसुमती स्यात्॥१००॥

अर्जुनमतान्मात्रैलां लक्षयितुमाह—

**नादावत्यादयो मात्राश्चाद्यैः स्वगणभङ्गजैः।**
**गणाः पञ्च त्रिमात्रोऽन्ते गणाः सप्तान्तिमो लघुः॥१०१॥**
**गणाः सप्त लघुश्चान्ते त्रिमात्रोऽन्ते गणाष्टकः।**
**लक्ष्माणीति क्रमात्तासामित्यूचे सव्यसाचिना॥ १०२॥**

**नादावत्यादय इत्यादि।** मात्रा मात्रैलाः पूर्वं गणैलात्वेनोक्ता नादावत्यादय एव मात्रैला भवन्तीत्यर्थः। कथमित्याकाङ्क्षायामाह—**स्वगणभङ्गजैश्चाद्यैरिति।** स्वगणभङ्गजैः। स्वासां गणा इति तत्पुरुषः। स्वे च ते गणाश्चेति कर्मधारयो वा। यथा नादावत्या भगणाः पञ्चान्ते नगणः। हंसावत्या रगणाः पञ्चान्ते सगणः। नन्दावत्या तगणाः पञ्चान्ते नगणः। भद्रावत्याः सगणाः पञ्चान्ते

पगणः, इत्येते स्वगणाः। एतेषां भङ्गः। भङ्गो नाम तत्र ये गुरवस्तेषामेकैकस्य गुरोः पृथग्लघुद्वयात्मकतया प्रयोगः। तस्माज्जातैः। चाद्यैश्चकाराद्यैश्चगणैरित्यर्थः चाद्यैरिति(ती)[त्थंभूत]लक्षणे तृतीया। तैर्लक्षिता इत्यर्थः। तानि लक्षणानि दर्श यति-**गणाः पञ्चेत्यादिना**। **तासामिति**। नादावत्यादीनां मात्रैलानाम्। **क्रमाल्लक्ष्माणीति**। नादावत्या भगणेषु भग्नेष्वन्त्येन नगणेन सह त्रयोविंशतिर्लघवो भवन्ति। तत्र चतुर्मात्रात्मकांश्चगणान्कृत्वा तद्गणनायां कृतायां गणाश्चगणा **पञ्च**। अन्ते त्रिमात्रं त्रि( त्रस्ति )सृणां मात्राणां समाहारोऽत्र विवक्षितः। न तु प्लुतः। सर्वेषां लघुरूपत्वात्। एवं चेत्तदा नादावत्या नाम मात्रैलाया लक्षणम्। **गणाः सप्तेति**। हंसावत्याः सगणान्तेषु रगणेषु भग्नेष्वेकोनत्रिंशल्लघवो भवन्ति पूर्ववद्गणनायां चगणाः सप्त। अन्तिमो लघुरेकः। तदा हंसावत्या लक्षणम्। पुनरपि। **गणाः सप्तेति**। नन्दावत्या जगणान्तेषु भग्नेषु मात्रागणसंख्या पूर्ववदेव। एतन्नन्दावत्या लक्षणम्। **त्रिमात्रोऽन्ते गणाष्टक इति**। भद्रावत्यां यगणान्तेषु मगणेषु[1] भग्नेषु पञ्चत्रिंशल्लघवो भवन्ति। पूर्ववद्गणनायामष्टौ चगणाः। अन्ते त्रिमात्र इति भद्रावत्या लक्षणमिति क्रमोऽनुसंधेयः॥ १०१ ॥ १०२ ॥

अर्जुनमतादेव भेदान्तराणि दर्शयितुमाह—

**एकद्वित्रिचतुष्पञ्चमात्रावृद्धिर्यदाऽङ्घ्रिषु।**
**तदा विचित्रमात्रैलां तां जगाद धनंजयः॥ १०३ ॥**

**एकद्वित्रीत्यादिना**। नादावत्यादिसंज्ञा मात्रैला एकादिपञ्चान्तं यथेष्टं मात्रावृद्धौ कृतायां विचित्रमात्रैला विचित्रमात्रोपपदा इत्यर्थः॥ १०३ ॥

मतान्तरेणान्याश्चतस्रो मात्रैला लक्षयितुमाह—

**नन्दिनी चित्रिणी चित्रा विचित्रेत्यभिधानतः।**
**रतिलेखादयः प्रोक्ताः क्रमादनियतैर्गणैः॥ १०४ ॥**

**नन्दिनी चित्रिणीत्यादि**। **रतिलेखादय इति**। पूर्वोक्ता रतिलेखादय एवानियतैर्गणैः पूर्वोक्त इत्यादिगुणनियमं( ? )विहाय केवलं तत्तन्मात्रासंख्यया युक्ताश्चेत्क्रमेण नन्दिन्याद्यभिधानतः प्रोक्ता इति संबन्धः॥ १०४ ॥

तासु कचिद्विशेषान्तरं दर्शयति—

**एलयोराद्ययोरङ्घ्री व्यत्यस्तावयुजाविह॥ १०५ ॥**

**इति विंशतिर्मात्रैलाः।**

**एलयोराद्ययोरिति**। इह चतसृषु मध्य आद्ययोरेलयो रतिलेखाकामलेखयोः। अयुजावङ्घ्री प्रथमतृतीयपादौ व्यत्यस्तौ भवत इति। रतिलेखायां प्रथमपादे दश मात्राः। तृतीय एकादश। एवं कामलेखायां प्रथमे विंशतिर्मात्रास्तृतीये द्वाविंशति-

[1] ग. भगणेषु।

मात्राः कर्तव्या इति। एतास्वपि विंशतौ मात्रैलासु मात्रागणनियमोऽङ्घ्रिखण्डद्वयाश्रयः कर्तव्य इत्यनुषञ्जनीयम्। अङ्घ्रिखण्डद्वयाश्रय इति। अङ्घ्रिषु त्रि[षु?] पादेषु खण्डद्वयात्मकानि पदानि कामविकारिगीतकसंज्ञकानि त्रीणि तान्येवाऽऽश्रयो यस्येति तथोक्तः। तत्रैकैकखण्डाश्रयः कर्तव्य इत्यर्थः॥१०५॥

इति मात्रैलालक्षणम्।

अथ वर्णैलां लक्षयितुमाह—

**गणमात्राद्यनियता वर्णैला वर्णसंख्यया।**
**षडक्षरादङ्घ्रिखण्डादेकोनत्रिंशदक्षरम्।**
**यावदेकैकवृद्ध्यैलाश्चतुर्विंशतिरीरिताः॥ १०६॥**

**गणमात्राद्यनियतेत्यादि।** वर्णसंख्यया वर्णानां गुरुलघुरूपाणामक्षराणां संख्यया। **यावदेकैकवृद्ध्येति।** यावत्पदस्यैकोनविं( त्रिं )शदक्षरामिति पूर्वेण संबन्धः। यावदेकोनविं( त्रिं )शदक्षरामिति। एकैकवृद्ध्या। एकैकोत्तरवृद्ध्या॥ १०६॥

**प्रथमा मधुकर्युक्ता सुस्वरा करणी ततः॥ १०७॥**
**चतुर्थी सुरसा प्रोक्ता पञ्चमी तु प्रभञ्जनी।**
**षष्ठी मदनवत्युक्ता शशिनी च प्रभावती॥ १०८॥**
**मालती ललिताख्या च मता भोगवती ततः।**
**ततः कुसुमवत्याख्या कान्तिमत्यपरा भवेत्॥ १०९॥**
**ततः कुमुदिनी ख्याता कलिका कमला तथा।**
**विमला नलिनी संज्ञा कालिन्दी विपुला ततः॥ ११०॥**
**विद्युल्लता विशाला च सरला तरलेति ताः।**
**अत्रान्त्या वर्णमात्रैला द्वादशेत्यपरे जगुः॥ १११॥**

**प्रथमा मधुकरीति।** प्रत्येकं(प्रथमा) षडक्षराङ्घ्रिखण्डद्वयवती वर्णैला मधुकरी नाम। एवं सप्ताक्षरादिषु वर्णैलासु सुस्वरादिकाः संज्ञा योजनीयाः॥ १०७॥ १०८॥ १०९॥ ११०॥ १११॥

**मण्ठद्वितीयकङ्कालप्रतितालेषु कश्चन।**
**तालस्तासु विधातव्यो रागादिनियमो न तु[१]॥ ११२॥**

**मण्ठद्वितीयेयादि।** मण्ठादितालानां लक्षणानि तालाध्याये वक्ष्यन्ते तत एव तान्यवगन्तव्यानि। **रागादिनियमो न त्विति।** तासु वर्णैलासु मण्ठ-

१ ख. ग. °यमेन तु।

द्वितीयकङ्कालप्रतितालेषु कश्चनेत्येतावानेव नियमः। न तु नादावत्यादिषूक्तो रागरसरीतिवृत्तिदेवतानियमः कर्तव्य इत्यर्थः। अत्रानेन रागादिनियमनिषेधेन पूर्वासु विकृतासु गणैलासु रतिलेखादिषु मात्रैलासु च प्रथमं शुद्धासु नादावत्यादिषूक्तस्तालरागरसरीतिवृत्तिदेवतानियमः सर्व एव कर्तव्य इत्युक्तं भवति। तत्र तु गणमात्राविकारत एव भेदो द्रष्टव्यः॥ ११२॥

**रमणी चन्द्रिका लक्ष्मीः पद्मिनी रञ्जिनी तथा।**
**मालती मोहिनी सप्त मतङ्गेनेति कीर्तिताः।**
**यतिमात्रेण भिन्नास्ता इत्यस्माभिर्न दर्शिताः॥ ११३॥**

**इति वर्णैला।**

**यतिमात्रेण भिन्ना इति।** यतिरत्र पदविच्छेदः। तन्मात्रस्याभेदकत्वादिति भावः। **इति वर्णैलालक्षणम्॥ ११३॥**

अथ देशैलां लक्षयति—

**कर्णाटलाटगौडान्ध्रद्राविडानां तु भाषया।**
**देशाख्यैला बुधैः पञ्च प्रोक्ता मण्ठादितालतः॥ ११४॥**

**कर्णाटलाटेत्यादिना। मण्ठादितालत इति।** अत्राऽऽदिशब्देन द्वितीयकङ्कालप्रतिताला गृह्यन्ते। मण्ठादिषु चतुर्षु तालेष्वन्यतमेन गातव्या इत्यर्थः॥ ११४॥

**कर्णाटैलाऽऽदिमध्यान्तवर्त्यनुप्रासभूषिता।**
**नादावत्यादिका एव कर्णाटीरपरे विदुः॥ ११५॥**

**आदिमध्यान्तवर्त्यनुप्रासभूषितेति।** कर्णाटैलानां मिथः सामान्यलक्षणम्। इतराभ्यो विशेषलक्षणं च। **नादावत्यादिका इत्यादि।** अपर आचार्या नादावत्यादिका एव कर्णाटीर्विदुरिति। अत्रैवकारेण शुद्धानां नादावत्यादीनां चतसृ(सृ)णां यल्लक्षणमुक्तं तत्सर्वमत्रापि कर्तव्यमिति गम्यते। किंतु कर्णाटीरित्यनेन भाषया भेदो द्रष्टव्यः॥ ११५॥

**षट्प्रकारत्वमेतासां वक्ष्यमाणैर्विशेषणैः।**
**ब्रह्मणः पूर्ववदनाज्जन्म शंभुर्गणाधिपः॥ ११६॥**
**आद्याङ्घ्री आद्यनुप्रासो[1] रत्यन्तं मदनद्वयम्।**
**प्रत्येकं च तयोरादिमध्यप्रासस्तृतीयकः॥ ११७॥**
**चतुष्कामो रतिप्रान्तः सुरे(ले?)खा स्यात्तदाऽऽदिमा।**
**दक्षिणास्याज्जनुर्यस्याः सावित्री देवता हरिः॥ ११८॥**

---

१ ख. ग. ङ. °प्रासौ र°।

गणाधिपश्चतुष्कामं प्रत्येकं चरणद्वयम् ।
आदिमध्यस्थितं प्रासं त्रिप्रासोऽङ्घ्रिस्तृतीयकः ॥ ११९ ॥
अष्टौ कामाः कामलेखा प्रोक्ता हंसावती च सा ।
पश्चिमाद्वदनाज्जन्म ब्रह्मा यस्या गणाधिपः ॥ १२० ॥
गायत्री देवताऽप्यादिमध्यप्रासास्त्रयोऽङ्घ्रयः ।
पृथक्चतुःस्मरा नन्दावती सा स्वरलेखिका ॥ १२१ ॥
जन्मोत्तरस्याद्गन्धर्वो गणेशः षट् च मन्मथाः ।
बाणान्ताः पादयो यस्याः प्रत्येकं स्युस्तृतीयके ॥ १२२ ॥
अष्टौ कामा आदिमध्यप्रान्तप्रासास्त्रयोऽङ्घ्रयः ।
भद्रावती भद्रलेखा सा स्यात्कर्णाटसंमता ॥ १२३ ॥

**षट्प्रकारत्वमित्यादि** । एतासां कर्णाटीनां वक्ष्यमाणैर्विशेषणैरुपलक्षितानां षट्प्रकारत्वं द्रष्टव्यम् । तत्र नादावत्यादिका एवेत्यनेनोक्त एकः प्रकारः । इतरे पञ्च प्रकारा वक्ष्यमाणैर्विशेषणैर्द्रष्टव्याः । उक्तेन प्रथमप्रकारेण चतस्रः कर्णाट्यो भवन्ति । ब्रह्मणः पूर्ववदनादित्यारभ्य सा म्या(स्या)त्कर्णाट*संमितेत्यनेन ग्रन्थेन द्वितीयप्रकारस्य विशेषणान्युक्तानि । एतैर्युक्ता रतिलेखाद्यपरपर्याया नादावत्यादय एव पुनश्चतस्रः कर्णाट्यः । **सुलेखेति** । रतिलेखेत्यर्थः । आदिमा नादावती ॥ ११६ ॥ ११७ ॥ ११८ ॥ ११९ ॥ १२० ॥ १२१ ॥ १२२ ॥ १२३ ॥

पञ्च कामा रतिश्चैका कामोऽन्ते चरणत्रये ।
प्रत्येकं तासु चेदेताश्छन्दस्वत्योऽखिला मताः ॥ १२४ ॥

**पञ्च कामा रतिश्चैकेत्यादि** । तृतीयप्रकारस्य विशेषणवचनम् । **एताश्छन्दस्वत्य इति** । एता अनन्तरोक्ता रतिरेखादयश्छन्दस्वत्यो नामान्याश्चतस्रः कर्णाट्यः ॥ १२४ ॥

चतुर्थपञ्चमप्रकारयोर्विशेषणानि संभूयाऽऽह—

गणादेर्न्यूनताधिक्यादेलाभासा इमा मताः ॥ १२५ ॥

**गणादेरित्यादि** । अत्राऽऽदिशब्देन मात्रा गृह्यन्ते । इमाश्छन्दस्वत्य एव गणादेर्न्यूनतये(ताऽऽधिक्यं चे)त्यनेन प्रकारेणैलाभासा इत्यन्याश्चतस्रः कर्णाट्यः । न्यूनताधिक्यादित्यादि । न्यूनता चाऽऽधिक्यं चेति द्वंद्वैकवद्भावः ॥ १२५ ॥

× मूलानुरोधेन संमतेति पाठो युक्तः ।

१ च. ब्रह्मणोऽस्या । २ ख. तासु वेदाकाश्छ° । ग. तासु वेदेकाश्छ° । च. ङ. तासु वेदे ता° ।

सकलैलाभासानुगतानि विशेषान्तराणि दर्शयति—

**यदेकस्य द्वयोरङ्घ्र्योस्त्रयाणां चान्ततः कृतम् ।**
**अङ्घ्रिपूर्त्यै तदन्यच्चेत्तृतीयाङ्घ्रिमितं पदम् ।**
**शिखापदं तत्तृतीये त्वङ्घ्रौ मेलापकादयः ॥ १२६ ॥**

**इति कर्णाटैला ।**

**यदेकस्येत्यादि** । पूर्वं छन्दस्वतीष्वेकस्य पादस्य द्वयोः पादयोस्त्रयाणां पादानामन्ततोऽन्ते यत्कृतं कामोऽन्ते चरणत्रय इत्यङ्घ्रिपूर्त्यै तदन्यच्चेदित्यन्वयः। अन्यत्वं च न्यूनतयाऽऽधिक्याद्वा भवतीति । अन्यदिति साधारणो निर्देशः । तृतीयाङ्घ्रिमितं शिखापदं नाम पदं तृतीयेऽङ्घ्रौ तृतीयपादान्ते कर्तव्यमित्यर्थः । ततो मेलापकादय इत्यध्याहार्यम् । आदिशब्देन ध्रुवाभोगौ गृह्येते । एतेन मेलापकादीनां भाषाकृताद्विशेषादन्यो विशेषो नास्तीति सूचितं भवति । एवं पञ्चभिः प्रकारैः कर्णाटैला विंशतिः ॥ १२६ ॥

अथ लाटयादीनां सामान्यविशेषलक्षणानि—

**प्रान्तप्रासा तु लाटी स्याद्भूयो रसविराजिता ।**
**गमकप्रासनिर्मुक्ता गौडी त्वेकरसा मता ॥ १२७ ॥**
**नानाप्रयोगरागांशरसभावोत्कटाङ्घ्रिका ।**
**भूरिभावरसोत्कर्षा द्राविडी प्रासवर्जिता ॥ १२८ ॥**

**प्रान्तप्रासा तु लाटी स्यादिति** । स्पष्टार्थानि ॥ १२७ ॥ १२८ ॥

**इति देशाख्यैला ।**

**तत्तल्लक्ष्मा यदा तासु पादस्तुर्यो निबध्यते ।**
**तदैता गदिताः सर्वाश्छन्दस्वत्यः पुरातनैः ॥ १२९ ॥**

तत्तल्लक्ष्मयुतस्त्वा( क्ष्मा यदा ता )स्वित्यनेन लाटयादिच्छन्दस्वतीनां लक्षणं कर्णाटीभ्यश्छन्दस्वतीभ्यो विशेषात्पृथगुक्तम् । इतरत्तु समानम् । तेन लाटयादयोऽपि कर्णाटीवत्प्रत्येकं विंशतिभेदवत्य इत्यवगन्तव्याः ॥ १२९ ॥

षष्ठस्य प्रकारस्य विशेषणानि सामान्येन दर्शयति—

**द्वावङ्घ्री प्रासहीनौ स्तस्तृतीयः प्राससंयुतः ।**
**ध्रुवाभोगौ च तेषु स्युश्चतस्रो यतयः पृथक् ।**
**वर्णैलावत्परं यस्यां सा वस्त्वेला निरूपिता ॥ १३० ॥**

---

१ ख. ग. घ. ङ. °दधः । इ°।

**द्वावङ्घ्री इत्यादिना** । ध्रुवाभोगौ चेत्यत्र चकारेण ध्रुवाभोगयोरपि तृतीयाङ्घ्रिवत्प्रासयुक्तत्वमभ्युपगम्यते । तेनाऽऽद्यप्रकारद्वयाश्रितास्वेलासूक्तसमुच्चयार्थश्चकारो द्रष्टव्यः । छन्दस्वत्यादिषु तु परास्वेलासु चतुर्थपादस्यापि सद्भावादनुक्तस्य तस्य समुच्चयार्थश्चकारो द्रष्टव्यः । तेन तासु चतुर्थपादोऽपि प्राससंयुतः कर्तव्य इत्यर्थः । **तेषु स्युरित्यादि** । तेषु त्रिषु वा चतुर्षु वा पादेषु पृथक्प्रत्येकं पादे पादे चतस्रो यतयश्चत्वारो विच्छेदाः स्युः । प्रतिपादं चतुरो विच्छेदान्कुर्यादित्यर्थः । **वर्णैलावदिति** । यथा वर्णैलासु रागरसरीतिवृत्तिदेवतानामनियमस्तथाऽत्रापि तेषामनियम इत्यतिदेशार्थः । एवं विशिष्टा वस्त्वेला निरूपिता । अत्र जातिविवक्षयैकवचनम् । एवं षट्प्रकाराश्रयणेन पूर्वपरिगणितानां द्वैगुण्ये सति देशाख्यैलाद्विशतं भवति ॥ १३० ॥

सकलैलाभेदगतां संख्यामाह—

> **षट्पञ्चाशद्युतं प्रोक्तमित्येलानां शतत्रयम् ।**
> **अनन्तत्वात्तु संकीर्णा न संख्याति हरप्रियः ॥ १३१ ॥**

**षट्पञ्चाशदिति** । इत्युक्तप्रकारेण । तथा हि—गणैलास्तावच्छुद्धा नादावत्यादयश्चतस्रः ४ । विकृतास्त्रिनवतिः ९३ । प्रकारान्तरेण विकृताः पञ्चदश १५ । मात्रैला विंशतिः २० । वर्णैलाश्चतुर्विंशतिः २४ । देशैलाः(ला)सु कर्णाट्या(ट्य)श्चत्वारिंशत् ४० । लाटयश्चत्वारिंशत् ४० । गौडयश्चत्वारिंशत् ४० । आन्ध्र्यश्चत्वारिंशत् ४० । द्राविडयश्चत्वारिंशत् ४० । एवमेलानां षट्पञ्चाशद्युतं शतत्रयम् ३५६ । **अनन्तत्वादिति** । हरप्रियः शार्ङ्गदेवः संकीर्ण(र्णा) गणमात्रैलादिसंकरोत्पन्नाः संकीर्णैला अनन्तत्वाद्क्रमशक्यत्वादिति भावः । न संख्याति न परिगणयति । अयमेलाप्रबन्धस्तालादिनियमान्निर्युक्तः । मतान्तरेण मेलापकस्य सद्भावाच्चतुर्धातुः । मतान्तरेण तदभावात्त्रिधातुर्वा । पदतालबद्धत्वेन द्व्यङ्गस्तारावलीजातिमान् ॥ १३१ ॥ **इत्येलालक्षणम्** ।

अथ करणभेदानुद्दिश्य लक्षयति—

> **अष्टधा करणं तत्र स्वराद्यं पाटपूर्वकम् ।**
> **बन्धादिमं पदाद्यं च तेनाद्यं बिरुदादिमम् ।**
> **चित्राद्यं मिश्रकरणमित्येषां लक्ष्म कथ्यते ॥ १३२ ॥**

**अष्टधा करणमित्यादिना** ॥ १३२ ॥

> **यत्रोद्ग्राहध्रुवौ सान्द्रस्वरबद्धौ पदैः पुनः ।**
> **आभोगस्तत्र नाम स्याद्गातुर्नेत्रोर्ग्रहः पुनः ॥ १३३ ॥**

इष्टस्वरेंऽशे न्यासः स्याद्रासतालो द्रुतो लयः ।
करणं स्वरपूर्वं तत्तद्वदन्यान्यपि स्फुटम् ।
किंतु तेषां स्वरस्थाने भेदकानि प्रचक्ष्महे ॥ १३४ ॥

**ग्रहः पुनरिष्टस्वर इति** । अत्र ग्रहशब्देन गीतारम्भ उच्यते । स त्विष्टस्वर इति रागग्रहांशस्वरयोस्तदन्येषु वैकस्मिन्कर्तव्यः स्यादित्यानियमः प्रदर्शितः । अत्र न्यासशब्देन गीतमोक्ष उच्यते, न तु स्वरविशेषः । तेनोद्ग्राहखण्डमारभ्यांशस्वरे गीतमोक्षः कर्तव्य इत्युक्तं भवति । **स्वरस्थाने भेदकानीति** । स्वराणां स्थानमत्रोद्ग्राहध्रुवकौ । भेदकानि वक्ष्यमाणानि हस्तपादादीनि ॥ १३३ ॥ १३४ ॥

स्वरकरणातिरिक्तपाटकरणादीनां स्वरूपभेदं दर्शयितुमाह—

स्वरैः सहस्तपाटैस्तु स्यात्पाटकरणं ध्रुवम् ।
क्रमव्यत्यासभेदेन तद्द्विधा परिकीर्तितम् ॥ १३५ ॥

**स्वरैः सहस्तपाटैस्त्वित्यादिना** । हस्तपाटा नागबन्धादयः पटहोद्भवा वाद्याक्षरोत्करा **वाद्याध्याये** वक्ष्यन्ते । तैः सहिताः सहस्तपाटा इति स्वरविशेषणम् । अतः स्वराणां प्राधान्येन प्रथमप्रयोगे( गो )ऽवसीयते । तेन पाटकरणे स्वरैरुद्ग्राहः स्यादनन्तरं हस्तपाटैर्ध्रुवः स्यादिति क्रमः । व्यत्यासो नाम तद्वैपरीत्यम् । स च हस्तपाटैरुद्ग्राहः स्वरैर्ध्रुव इति ॥ १३५ ॥

स्वरैर्मुरजपाटैर्यत्तद्बन्धकरणं मतम् ।
स्वरैः पदैश्च बद्धं यत्करणं तत्पदादिमम् ॥ १३६ ॥

बन्धकरणे स्वरैरुद्ग्राहः । मुरजपाटै ध्रु( टैर्ध्रु? )वः । पदकरणे स्वरैरुद्ग्राहः । पदैर्ध्रुवः ॥ १३६ ॥

यत्स्वरैर्बिरुदैर्बद्धं करणं बिरुदादि तत् ।
स्वरैः सतेनकैर्यत्तु तत्तेनकरणं मतम् ॥ १३७ ॥

बिरुदकरणे स्वरैरुद्ग्राहो बिरुदैर्ध्रुवः । तेनकरणे स्वरैरुद्ग्राहस्तेनकैर्ध्रुवः ॥ १३७ ॥

स्वरैः सकरपाटैर्यन्निबद्धं मुरजाक्षरैः ।
पदैस्तच्चित्रकरणमभिधत्ते हरप्रियः ॥ १३८ ॥

चित्रकरणे स्वरैर्हस्तपाटैश्चोद्ग्राहः । मुरजाक्षरैः पदैश्च ध्रुवः ॥ १३८ ॥

स्यान्मिश्रकरणं बद्धं स्वरैः पाटैः सतेनकैः ॥ १३९ ॥

मिश्रकरणे स्वरपाटतेनकैरुद्ग्राहः । तैरेव ध्रुवोऽपि स्यात् । तिलतण्डुलवदवयविसांकर्यं चित्रत्वं, क्षीरनीरवदवयवसांकर्यं मिश्रत्वमिति भेदो द्रष्टव्यः । इह स्वरकरणादीनां भेदकानि स्वरादीनि विहाय मेलापकाभावेन त्रिधातुत्वम् । इष्टस्वरे गीतारम्भोंऽशस्वरे मोक्षः । रासस्तालो द्रुतो लय इत्येतैर्युक्तत्वं च करणप्रबन्धस्य

सामान्यलक्षणत्वेन पृथगुक्तमप्युन्नेयम् । अत्र तालादिनियमस्य विद्यमानत्वादयं नैर्युक्तः प्रबन्धः । मेलापकाभावात्त्रिधातुषु भेदेषु पर्यायेण यथायोगं षडङ्गबन्धवान्मेदिनीजातिमान् ॥ १३९ ॥

एतानि नवापि करणानि गानप्रकारभेदेन प्रत्येकं त्रिधा भवन्तीत्याह—

**मङ्गलारम्भ आनन्दवर्धनं कीर्तिपूर्विका ।**
**लहरीति त्रिधा तानि प्रत्येकं गानभेदतः ॥ १४० ॥**
**द्विरुद्ग्राहं ध्रुवाभोगौ सकृद्गीत्वा पुनः सकृत् ।**
**गीयते चेद्ध्रुवोद्ग्राहो मङ्गलारम्भकस्तदा ॥ १४१ ॥**
**उद्ग्राहध्रुवकौ प्राग्वद्ध्रुवार्धं पश्चिमं ततः ।**
**आभोगध्रुवकोद्ग्राहाः सकृदानन्दवर्धने ॥ १४२ ॥**
**उद्ग्राहस्य द्वितीयार्धं ध्रुवार्धस्थानगं यदि ।**
**इतरत्पूर्ववत्कीर्तिलहरी कीर्तिता तदा ॥ १४३ ॥**

**इति सप्तविंशतिः करणानि ।**

**मङ्गलारम्भ इत्यादि** । **कीर्तिपूर्विका लहरीति** । कीर्तिलहरीत्यर्थः । सुगममन्यत् । एवं करणानि सप्तविंशतिर्भवन्ति॥१४०॥१४१॥१४२॥१४३॥

**इति करणप्रबन्धः ।**

अथ ढेङ्कीं लक्षयति—

**द्विर्गीत्वोद्ग्राहपूर्वार्धमुत्तरार्धं सकृत्ततः ।**
**मेलापकः प्रयोगात्मा न वा स्यात्तावुभावपि ।**
**अतालौ ढेङ्किकाताले कङ्काले वा विलम्बिते ॥ १४४ ॥**

**द्विर्गीत्वेत्यादि** । प्रयोगात्मा मेलापकः स्यान्न वेति प्रयोगस्वरूपस्यात्र वैकल्पिकत्वमुच्यते । एलायां स्वरूपेण स्वत एव प्रयोगस्य मतभेदेनोद्ग्राहव्यपदेशो वा मेलापकव्यपदेशो वेति व्यपदेशविकल्पो द्रष्टव्यः । **तावुभावपीति** । मेलापकसद्भावपक्षमाश्रित्येदं वचनम् । तावुद्ग्राहमेलापकावुभावप्यतालौ तालरहिताविर्त्येकः पक्षः । विलम्बितढेङ्किकाताले विलम्बिते **कङ्काले** वा तौ भवतः । इत्येतत्पक्षद्वयम् ॥ १४४ ॥

**लयान्तरेऽन्यतालेन ध्रुवाभोगौ ध्रुवस्त्विह ॥ १४५ ॥**
**त्रिखण्डस्तत्र खण्डे द्वे गीयेते समधातुनी ।**
**तृतीयमुच्चमेष द्विराभोगस्तु सकृत्ततः ॥ १४६ ॥**

---

१ ख. ग. घ. विलम्बितौ ।

**लयान्तरेऽन्यतालेनेति** । ध्रुवाभोगौ लयान्तरे विलम्बितादन्यस्मिँल्लये मध्यलये द्रुतलये वेत्यर्थः । **अन्यतालेनेति** । ढेङ्किकाकङ्कालाभ्यामन्येन येन केनचित्तालेनेत्यर्थः । समधातुनी इति एकधातुक इत्यर्थः । **एष द्विरिति** । एष ध्रुवो द्विर्द्विवारं गेय इत्यर्थः । ततो ध्रुवानन्तरमाभोगस्तु सकृद्गातव्यः ॥ १४५ ॥ १४६ ॥

**पुनर्गीत्वा ध्रुवे न्यासो यस्यां सा ढेङ्किका मता।**
**चतुर्धा ढेङ्किका मुक्तावल्ली स्याद्वृत्तबन्धिनी ।**
**युग्मिनी वृत्तमाला च तासां लक्ष्माण्यमून्यथ ॥ १४७ ॥**

**पुनर्गीत्वेति** । एवमुक्तलक्षणं सकलं प्रबन्धं द्वितीयवारमपि गीत्वा ध्रुवे ध्रुवखण्डादौ न्यासः कर्तव्य इति गाननियम उक्तः ॥ १४७ ॥

**अभावश्छन्दसां वृत्तं वृत्ते वृत्तानि च क्रमात् ॥ १४८ ॥**

**अभाव इत्यादि** । छन्दसामभावो मुक्तावल्या लक्षणम् । **वृत्तमिति** । वृत्तबन्धिन्या लक्षणम् । वृत्तबन्धिनीमेकेनैव वृत्तेन गायेदित्यर्थः । एवमुत्तरयोरपि द्रष्टव्यम् । **वृत्ते इति** । युग्मिन्या लक्षणम् । **वृत्तानीति** । वृत्तमालाया लक्षणम् । अत्र वृत्तानीति बहुवचनेन त्रिप्रभृतीनि गृह्यन्ते ॥ १४८ ॥

**त्रिधा तिस्रो द्वितीयाद्या वर्णिका गणिका तथा ।**
**मात्रिका वर्णजैर्वृत्तैर्गणजैर्मात्रिकैरपि ॥ १४९ ॥**

**द्वितीयाद्यास्तिस्र इति** । वृत्तबन्धिनी युग्मिनी वृत्तमाला उच्यन्ते । त्रिधेति वक्ष्यमाणेन प्रकारेण । तमेवाऽऽह—**वर्णिकेत्यादि** । वर्णजैर्वृत्तैर्वर्णिका । गणजैर्वृत्तैर्गणिका । मात्रिकैर्वृत्तैर्मात्रिकेति तिसृणां लक्षणानि । तत्र वर्णसंख्यामात्रनिर्वृत्तानि वृत्तानि वर्णजानि समानीप्रभृतीनि गणैर्निवृ(र्वृ)त्तानि गणजानि भुजंगप्रयातादीनि । मात्रासंख्ययैव निवृ(र्वृ)त्तानि मात्रिकाणि वैतालीयादीनि । **यथोक्तं छन्दोविचितौ—**

"आदौ तावद्गणच्छन्दो मात्राछन्दस्ततः परम् ।
तृतीयमक्षरच्छन्दश्छन्दस्त्रेधा तु लौकिकम्" ॥

आर्याद्यार्यागीतिपर्यन्तं गणच्छन्दः । वैतालीयादि चूलिकापर्यन्तं मात्राछन्दः । समान्यादिकमुत्कृतिपर्यन्तमक्षरच्छन्दः । इति तेषां त्रिविधानां वृत्तानां लक्षणानि छन्दःशास्त्रत एवावगन्तव्यानि । दिङ्मात्रप्रदर्शनार्थं किंचिदुदाह्रियते—

" ॐ नमो जनार्दनाय दुष्टदैत्यमर्दनाय ।
पापबन्धमोचनाय पुण्डरीकलोचनाय " इति समानी ।
" पथ्याशी व्यायामी स्त्रीषु जितात्मा नरो न रोगी स्यात् ।
यदि मनसा वचसा च प्रद्रुह्यति न भूतेभ्यः " ॥

---

१ ख. ग. °मूनि तु ॥ १४७ ॥

इति पथ्या ।

" तव तन्वि कटाक्षवीक्षितैः प्रसरद्भिः श्रवणान्तगोचरैः ।
विशिखैरिव तीक्ष्णकोटिभिः प्रहृतं प्राणनदुष्करं मनः ॥

इति वैतालीयम् । एवं प्रथमया मुक्तावल्या सह दश ढेङ्क्यो भवन्ति॥१४९॥
एतासां पुनस्त्रैविध्यमाह—

**दशापि स्युः पुनस्त्रेधा समालंकरणा तथा ।**
**विषमालंकृतिश्चित्रालंकृतिर्लक्षणानि तु ॥ १५० ॥**

**दशापीत्यादिना** ॥ १५० ॥

**समालंकारसंख्या च विषमा मिश्रिता क्रमात् ॥ १५१ ॥**

**इति त्रिंशड्ढेङ्क्यः ।**

**अलंकारसंख्या समेति** । समालंकरणाया लक्षणम् । सैव विषमेति विषमालंकृतेर्लक्षणम् । सैव मिश्रितेति विचित्रालंकृतेर्लक्षणं क्रमेण योजनीयम् । अत्रालंकारशब्देन सानुप्रासयमकादयो गृह्यन्ते । एवं त्रिंशड्ढेङ्क्यः ३० । अयं प्रबन्धश्छन्दस्तालादिनियमान्नियुक्तो मेलापकस्य वैकल्पिकत्वाच्चतुर्धातुस्त्रिधातुर्वा पदतालबद्धत्वेन व्यङ्गत्वात्तारावलीजातिमान् ॥ १५१ ॥

**इति ढेङ्कीप्रबन्धः ।**

अथ वर्तनीं लक्षयति—

**स्वराद्यकरणस्येव वर्तन्या लक्ष्म किंत्विह ।**
**रासकादन्यतालः स्याल्लयो ज्ञेयो विलम्बितः ॥ १५२ ॥**

**स्वराद्येत्यादि । स्वराद्यकरणस्येवेति** । स्वरकरणस्य यथा लक्ष्म लक्षणमुद्ग्राहध्रुवयोः स्वरबद्धत्वमाभोगे पदबद्धत्वमित्यादि सर्वमतिदेशतः प्राप्तं द्रष्टव्यम् । भेदकं दर्शयितुमाह—**किंत्विति** । इह वर्तन्यां रासकादन्यतालः करणप्रबन्धोक्ताद्रासकादन्यो यः कश्चन तालो विलम्बितो लयश्चेति विशेषः ॥१५२॥

गानप्रकारविशेषमाह—

**द्विरुद्ग्राहो ध्रुवाभोगौ सकृन्मोक्षो ध्रुवे भवेत् ।**
**कङ्काले प्रतिताले च कुडुक्के द्रुतमण्ठके ॥**
**रचिता चेत्तदा ज्ञेया वर्तन्येव विवर्तनी ॥ १५३ ॥**

**इति वर्तनी ।**

**द्विरुद्ग्राह इत्यादि** । मोक्षो न्यासः । **कङ्काल इत्यादि** । कङ्काला-

१ ङ. प्राणिति द्रु° ।

दिषु चतुर्षु तालेष्वन्यतमेन रचिता चेदियमेव वर्तनीसंज्ञा भवति । अयं प्रबन्ध-स्तालादिनियमान्निर्युक्तो मेलापकाभावात्रिधातुः स्वरपदतालबद्धत्वेन त्र्यङ्गत्वाद्भा-वनीजातिमान् ॥ १५३ ॥

इति वर्तनीलक्षणम् ।

अथ झोम्बडं लक्षयति—

द्विर्यत्रोद्ग्राहपूर्वार्धमुत्तरार्धं सकृत्ततः ॥ १५४ ॥
मेलापकः प्रयोगाढ्यः सर्वा स्याद्द्विस्ततो ध्रुवः ॥
आभोगं तु सकृद्गीत्वा ध्रुवे न्यासः स झोम्बडः ॥१५५॥

द्विर्यत्रेत्यादि । प्रयोगाढ्यः प्रयोगप्रचुर इत्यनेन मेलापकस्य किंचिद्वाचक-पदयुक्तत्वमभ्युपगम्यते । सर्वा स्यादिति । मेलापको वा स्यात् । पक्षे भवति न भवतीत्यर्थः । ततोऽनन्तरं ध्रुवं द्विवारं गीत्वाऽऽभोगं तु सकृद्गीत्वा ध्रुवे न्यासः कृतश्चेत्स झोम्बडः ॥ १५४ ॥ १५५ ॥

झोम्बडे तालनियममाह—

निःसारुकः कुडुकश्च त्रिपुटप्रातिमण्ठकौ ।
द्वितीयो गारुगीरासयतिलैम्भोड्डतालिका ॥ १५६ ॥
एकतालीत्यमी ताला झोम्बडे नियता दश ।
केचिन्मण्ठमपीच्छन्ति नैष लक्ष्येषु लक्ष्यते ॥ १५७ ॥
तारजोऽतारजश्चेति झोम्बडो द्विविधो मतः ।
तारो ध्वनिस्थानकं स्यात्तद्युक्तस्तारजो मतः ॥ १५८ ॥

निःसारुक इत्यादि । निःसारुकादिषु दशस्वेकेन तालेन गातव्य इति नियमो द्रष्टव्यः ॥ १५६ ॥ १५७ ॥ १५८ ॥

स चतुर्धा स्थानकस्योद्ग्राहादिषु निवेशने ।
अतारजस्तारहीनः सर्वोऽप्येष द्विधा मतः ॥ १५९ ॥

स चतुर्धेत्यादि । स तारजः । उद्ग्राहादिषु निवेशन इति । उद्ग्रा-हस्य तारजत्व एको भेदः । मेलापकस्य तारजत्वे द्वितीयः । ध्रुवस्य तारजत्वे तृतीयः । आभोगस्य तारजत्वे चतुर्थः । एवं चतुर्धा तारजः । तारहीनत्वादतारज एको भेदः । सर्वोऽप्येष इति । उक्तप्रकारेण पञ्चविध एष झोम्बडः ॥१५९॥

त्रिधातुश्च चतुर्धातुरिति भूयो भवेद्द्विधा ।
प्रभूतगमकः स्तोकगमकश्चेत्यमी स्फुटाः ॥ १६० ॥

---

१ ख. ग. घ. °यो गोरु° । २ ङ. °लम्रोड्डता° । ३ ख. ग. घ. °म्राड्डता° । ४ ग. घ. नैव ।

**त्रिधातुश्च चतुर्धातुरिति । द्विधा मत इति ।** तारजाश्चतुर्धातवश्चत्वारो मेलापकाभावपक्षे तारजास्त्रिधातवस्त्रय एव । अतारजश्चतुर्धातुकोऽतारजस्त्रिधातुक एवं संभूय नव झोम्बडा भवन्ति । भूय इति । **प्रभूतगमकस्तोकगमक इति ।** नवानां प्रत्येकं द्वैविध्येनाष्टादश झोम्बडाः स्फुटा व्यक्तरूपाः । अत्र त्रिधातूनां भेदानां मेलापकाभावेऽप्युद्ग्राहध्रुवान्तर्भूतप्रयोगवत्त्वेन प्रभूतगमकत्वं च द्रष्टव्यम् । अनेन भेदकथनेनैव । त्रिधातुष्वपि झोम्बडेषु प्रयोगो विधातव्य इत्युक्तं भवति ॥ १६० ॥

> **प्रागोगिकः क्रमाख्यश्च ततः क्रमविलासकः ।**
> **चित्रो विचित्रलीलश्चेत्यमी स्युः पञ्चधा पृथक् ।**
> **चतुराद्यष्टपर्यन्तं गणनिष्पादिताः क्रमात्[1] ॥ १६१ ॥**
> **मातृकः श्रीपतिस्तद्वत्सोमो रुचिरसंगतौ ।**
> **ते लक्ष्येष्वप्रवृत्तत्वादस्माभिर्न प्रपञ्चिताः ॥ १६२ ॥**

**प्रयोगिक इत्यादि ।** अमी अष्टादश झोम्बडाः पृथक्प्रत्येकम् । **क्रमाच्चतुराद्यष्टपर्यन्तं गणनिष्पादिता इति** चतुर्गणनिष्पादितः प्रायोगिकः पञ्चगणनिष्पादितः क्रमाख्यः षड्गणनिष्पादितः क्रमविलासः सप्तगणनिष्पादितश्चित्रोऽष्टगणनिष्पादितो विचित्रलीलश्चेति पञ्चधा स्युः । एवं च सति नवतिर्झोम्बडा भवन्ति ॥ १६१ ॥ १६२ ॥

> **विनियोगवशादेषां त्रयोदश भिदाः पृथक् ॥ १६३ ॥**

**विनियोगवशादित्यादि ।** विनियुज्यत इति विनियोगः । शृङ्गारादयो रसा उपमादयोऽलंकाराश्चात्र विवक्षितास्तद्वशादित्यर्थः । एषां नवतिसंख्याकानां झोम्बडानां पृथक्प्रत्येकं ब्रह्मादयो वक्ष्यमाणास्त्रयोदश भेदा भवन्ति ॥ १६३ ॥

ब्रह्मादींस्त्रयोदश भेदाँल्लक्षयति—

> **उपमारूपकश्लेषैर्ब्रह्मा वीरविलासयोः ।**
> **विष्णुश्चक्रेश्वरो वीरे बीभत्से चण्डिकेश्वरः ॥ १६४ ॥**
> **नरसिंहोऽद्भुतरसे भैरवस्तु भयानके ।**
> **हास्यशृङ्गारयोर्हंसः सिंहो वीरभयानके ॥ १६५ ॥**
> **विप्रलम्भे तु सारङ्गः शेखरः करुणे रसे ।**
> **सशृङ्गारे पुष्पसारः शृङ्गारे परिकीर्तितः ।**
> **रौद्रे प्रचण्डो नन्दीशः शान्ते धीरैरुदीरितः ॥ १६६ ॥**

**उपमारूपकेत्यादि ।** उपमारूपकश्लेषैरुपमारूपकश्लेषाख्यैरेवालंकारैर्लक्षितो ब्रह्माभिधो भेदो भवति । तत्र साधर्म्यमुपमा भेद इत्युपमालक्षणम् । चन्द्रवत्का-

---

१ च. क्रमात् ।

न्तं मुखमित्युदाहरणम् । तद्रूपकमभेदो य उपमानोपमेययोरिति रूपकलक्षणम् । मुखमेव चन्द्र इत्युदाहरणम् । 'श्लेषः स वाक्य एकस्मिन्यत्रानेकार्थता भवेत्' इति श्लेषलक्षणम् । चन्द्रनृपयोर्वाचको राजेतिशब्द उदाहरणम् । वीरविलासयोर्विष्णुः । वीरे चक्रेश्वर इत्यादि योजनीयम् । वीरविलासयोरित्यत्र वीरशब्दसाहचर्याद्विलासशब्देन संभोगशृङ्गारो लक्ष्यते । तदनुभावत्वाद्विलासस्य । शृङ्गारादयो रसा **नृत्याध्याये** निरूपयिष्यन्ते । एवं त्रयोदशभिर्भेदैर्झोम्बडानां नवतौ पृथग्गुणितायां सप्तत्युत्तरशतसहितं सहस्रं झोम्बडा भवन्ति ॥ १६४ ॥ १६५ ॥ १६६ ॥

**गद्यजाः पद्यजा गद्यपद्यजा इति ते त्रिधा ॥ १६७ ॥**

**गद्यजा इत्यादि** ॥ १६७ ॥

उक्तसंख्यानां झोम्बडानां गद्यजादिभिर्भेदैः पुनस्त्रैविध्ये सति तद्भेदजां संख्यामाह—

**झोम्बडा इति संख्याता वियच्चन्द्रशराग्नयः ॥ १६८ ॥**

इति झोम्बडाः ।

**वियच्चन्द्रशराग्नय इति** । वियच्छून्यं बिन्दुरित्यर्थः । प्रथमं बिन्दुर्लेखनीयः । चन्द्रशब्देनैकसंख्या लभ्यते । चन्द्रस्यैकत्वेन प्रसिद्धेः । लेखकापेक्षया बिन्दोर्वामपार्श्वे एकाङ्को लेखनीयः । शरशब्देन पञ्चसंख्या लक्ष्यते । मदनबाणानां पञ्चत्वेन प्रसिद्धेः । एकाङ्कवामपार्श्वे पञ्चाङ्को लेखनीयः । अग्निशब्देन त्रिसंख्या लक्ष्यते । यज्ञियानामग्नीनां त्रित्वेन प्रसिद्धेः । पञ्चमाङ्कवामपार्श्वे त्रिसंख्याङ्को लेखनीयः । इति चतुर्ष्वङ्केषु लिखितेष्वेकं दश शतं सहस्रमित्यादिकया गणितपरिभाषया बिन्द्वादिक्रमेण योजितेषु दशोत्तरपञ्चशतीयुतानि त्रीणि सहस्राणि झोम्बडाः संख्याता भवन्ति । अयं प्रबन्धस्तालादिनियमान्निर्युक्तो मेलापकस्य वैकल्पिकत्वाच्चतुर्धातुस्त्रिधातुश्च । पदतालबद्धत्वेन द्व्यङ्गत्वात्तारावलीजातिमान् ॥ १६८ ॥

इति झोम्बडलक्षणम् ।

अथ लम्भं लक्षयति—

**उद्ग्राहो द्विः सकृद्वैकखण्डो द्विशकलोऽथवा ।**
**यत्र ध्रुवो द्विर्वाऽऽभोगो ध्रुवे मुक्तिः स लम्भकः ॥१६९॥**

**उद्ग्राहो द्विरित्यादि** । एकखण्ड उद्ग्राहो द्विः सकृद्वा गीयतेऽथवा द्विशकल उद्ग्राहो द्विः सकृद्वा गीयत इति प्रत्येकं द्वैविध्यं योजनीयम् । यत्र यस्मिँल्लम्भे ध्रुवो द्विर्गेयो भवति । **वाऽऽभोग इति** । आभोगो वा क्वचिद्भवति क्वचिन्न भवतीत्यर्थः । **ध्रुवे मुक्तिरिति** । ध्रुवखण्डमारभ्य न्यासः कर्तव्य इत्यर्थः ॥ १६९ ॥

लम्भझोम्बडयोर्मतान्तरेण लक्षणान्तरं दर्शयति—

**भागोऽस्मिञ्झोम्बडेऽप्यूर्ध्वं ध्रुवादुद्ग्राहसंनिभः।**
**ध्रुवाभोगध्रुवा गेयास्तत इत्यूचिरे परे॥ १७०॥**

**भोगोऽस्मिन्नित्यादि**। यस्मिल्लँम्भे झोम्बडेऽपि ध्रुवस्योर्ध्वभागः कर्तव्यः। ततो ध्रुवान्तरम्। **ध्रुवाभोगध्रुवा गेया इति**। ध्रुवं द्विवारं गीत्वाऽनन्तरमाभोगं सकृद्गीत्वा पुनरपि ध्रुवमेकवारं गीत्वा ध्रुवमारभ्य न्यासः कर्तव्यः॥ १७०॥

लम्ब(म्भ)भेदान्दर्शयति—

**उद्ग्राहस्तालशून्यश्चेत्स स्यादालापलम्भकः।**
**स प्रलम्भो ध्रुवस्थाने यत्रोद्ग्राहोऽन्यधातुकः॥ १७१॥**

**उद्ग्राहस्तालशून्यश्चेत्यादिना**। उद्ग्राहस्य तालरहितत्वेन रागालापसाम्यादालापलम्भकसंज्ञाऽन्वर्था द्रष्टव्या। **स प्रलम्भ इति**। यत्र यस्मिल्लँम्भे ध्रुवस्थान उद्ग्राहानन्तरमन्यधातुक उद्ग्राह इत्यनेन प्रथममुद्ग्राहो यैर्मातुभिः कृतस्तैरेव मातुभिरन्येन धातुना गीयते चेत्स प्रलम्भो नाम भेदः॥ १७१॥

**यत्र भागो भवेल्लम्भे भागलम्भः स भण्यते[1]।**
**त्रिश्चतुष्पञ्चवारं वा भिन्नोद्ग्राहसमान्वितः।**
**ध्रुवको गीयते यत्र स लम्भपदमुच्यते॥ १७२॥**

**यत्र भागो भवेदिति**। इतरलम्भापेक्षया तत्साम्येनोद्ग्राहस्य प्रथमं भागं गीत्वा तद्द्वितीयभागस्थाने ध्रुवद्वितीयभागो गीयते चेदन्वर्थतया भागलम्भो भण्यते। **भिन्नोद्ग्राहसमान्वित इति**। एक एव ध्रुवः प्रतिवारं भिन्नेनोद्ग्राहेण सह गीयते चेल्लम्भपदमिति तस्य नाम॥ १७२॥

**ध्रुवभेदेऽनुलम्भोऽसौ[2] द्विभेदे तूपलम्भकः॥ १७३॥**

**ध्रुवभेद इति**। एक एवोद्ग्राहः प्रतिवारं भिन्नेन ध्रुवेण गीयते चेदनुलम्भो नाम। **द्विभेदे ने(त्वि)ति**। प्रतिवारं भिन्नावुद्ग्राहध्रुवौ गीयते चेदुपलम्भो नाम॥ १७३॥

**एते त्रयोऽप्यनाभोगा विलम्भस्तु स उच्यते।**
**उद्ग्राहा बहवो यस्मिन्ध्रुवाभोगविवर्जिताः।**
**एते सालगसूडस्थैस्तालैराकलिता मताः॥ १७४॥**

**इत्यष्टौ लम्भकाः।**

**एते त्रयोऽपीति**। लम्भपदानुलम्भोपलम्भाः। अनाभोगा न विद्यत आभोगो येषां ते। एतेन भोगान्तरेष्वाभोगः कर्तव्य इत्युक्तं भवति। तेनात्राऽऽभोगस्य

---

१ च. गण्यते। २ ख. ग. °देऽतिल°।

वैकल्पिकत्वं विषयव्यवस्थया द्रष्टव्यम् । विलम्भास्त्विति । ध्रुवाभोगविवर्जिता उद्ग्राहा बहव इत्यनेन धातुभेदाभावो मातुभेदश्च गम्यते । तेनैकधातुभिन्नधातुका उद्ग्राहा एव बहवो गीयन्ते चेद्विलम्भो नाम लम्भभेदः । अत्रैकस्मिन्भेदे ध्रुवस्याभावेऽपि भेदान्तरेषु सद्भावात्तस्य न नित्यत्वहानिः । एवमनन्तरोक्तेन सहाष्टौ लम्भकाः । अयं प्रबन्धस्तालाद्यनियमादनिर्युक्तः । आभोगस्य विकल्पत्वेन विषयेषु व्यवस्थितत्वात् । यत्राऽऽभोगसद्भावस्तत्र त्रिधातुः । यत्राऽऽभोगाभावस्तत्र द्विधातुः। विलम्भलक्षणे ध्रुवाभोगविवर्जिता इत्यनेन धात्वन्तराभावश्रुतावपि प्रबन्धस्य भेदगतत्वेनापि पाक्षिकमेकधातुत्वमापादयितुं न शक्यते। यत उद्ग्राहा बहव इत्युक्तम्। तेन ध्रुवस्थान उद्ग्राह एव तत्प्रतिनिधित्वेन प्रयुक्त इति नैकधातुत्वम्। यदा तूद्ग्राह एवैकवारं द्विवारं वा प्रयुज्य त्यज्यते तदैष दोषः प्रसज्येत नान्यथेति । अयं पदतालबद्धत्वाद्व्यङ्गस्तारावलीजातिमान् ॥ १७४ ॥

इति लम्भलक्षणम् ।

अथ रासं लक्षयति--

**यो झोम्बडगतं लक्ष्म गमकस्थानकैर्विना ।**
**भजते रासकः सोऽयं रासतालेन गीयते ।**
**गणैर्वर्णैश्च मात्राभिः केचिदेनं त्रिधा जगुः ॥ १७५ ॥**
**स्याद्रासवलयो हंसतिलको रतिरङ्कः ।**
**चतुर्थस्तत्र मदनावतारश्छगणादिजाः ॥ १७६ ॥**
**षडक्षराङ्घ्रितास्त्रिंशदक्षरावधिवर्णजाः ।**
**पञ्चविंशतिराख्याताश्चरणादष्टमात्रिकात् ॥ १७७ ॥**
**षष्टिमात्रावधि प्रोक्तास्त्रिपञ्चाशत्तु मात्रिकाः ।**
**लक्ष्ये प्रसिद्धिवैधुर्यात्तेष्वस्माकमनादरः ॥ १७८ ॥**

इति रासकलक्षणम् ।

**यो झोम्बडगतं लक्ष्मेत्यादि । छगणादिजा इति ।** तत्र छगणजो रासवलयः । पगणजो हंसतिलकः । चगणजो रतिरङ्कः । तगणजो मदनावतारः। इत्यादिशब्दग्राह्या गणा द्रष्टव्याः। एवं गणजाश्चत्वारः। वर्णजाः पञ्चविंशतिः । मात्रिकास्त्रिपञ्चाशत् । इति रासा व्यशीतिर्भवन्ति । तालादिनियमादयं निर्युक्तो गमकस्थानकव्यतिरिक्तझोम्बडलक्षणातिदेशेन मेलापकाभावात्त्रिधातुः पदतालबद्धत्वाद्व्यङ्गस्तारावलीजातिमान् ॥ १७५॥ १७६ ॥ १७७ ॥ १७८ ॥

इति रासलक्षणम् ।

अथैकतालीं लक्षयति—

द्विरुद्ग्राहो ध्रुवोऽपि द्विराभोगध्रुवकौ ततः ।
गीत्वा न्यासो यत्र सा स्यादेकताल्येकतालिका ॥ १७९ ॥

**द्विरुद्ग्राह इत्यादि** । तत आभोगध्रुवकौ गीत्वेत्यनेन तयोः सकृद्गानं गम्यते । यतः पूर्वमेव ध्रुवोऽपि द्विरिति ध्रुवस्य द्विर्गानं विहितम् । अत्र द्विरित्यनुक्तत्वाच्च । न्यास इति स्थानविशेषनिर्देशाभावेनोक्तेऽपि संनिहितध्रुवेण न्यासः कर्तव्य इत्यवगम्यते । एकतालीति संज्ञा । **एकतालिकेति** । एकतालेन निर्वृत्तेत्यत्रार्थे ठकि विहिते रूपम् ॥ १७९ ॥

अस्यामालापमात्रेण केचिदुद्ग्राहमूचिरे ॥ १८० ॥
इत्येकताली । इति सूडक्रमः ।

**आलापमात्रेणेति** । आलापोऽत्र प्रयोगः । मात्रपदेन तस्य वाचकपदरहितत्वमुच्यते । केवलालापेनोद्ग्राहः कर्तव्य इति केषांचिन्मतम् । मतान्तरे तु वाचकपदैरेवोद्ग्राहः कर्तव्य इत्यर्थः । तालनियमानियुक्तोऽयं मेलापकाभावात्त्रिधातुः पदतालबद्धत्वे[ न ] व्यङ्गस्तारावलीजातिमान् ॥ १८० ॥

इत्येकतालीलक्षणम् ।

इति शुद्धसूडक्रमः ।

अथाऽऽलिक्रमेषु प्रथमोद्दिष्टवर्णप्रबन्धं लक्षयति—

बिरुदैर्वर्णतालेन वर्णः कर्णाटभाषया ।
तालत्रैविध्यतस्तस्य त्रैविध्यं गदितं बुधैः ॥ १८१ ॥
इति वर्णः ।

**बिरुदैरित्यादि** । **तालत्रैविध्यत इति** । तालस्य वर्णतालस्य त्र्यस्रमिश्रचतुरस्रत्वभेदेन वक्ष्यमाणत्वात्त्रैविध्यं तस्मात् । अत्रोद्ग्राहादीनामनुक्तावप्युद्ग्राहध्रुवयोः सकलप्रबन्धेषु नियतत्वात्तयोरावश्यकत्वेनात्र तौ बिरुदबद्धौ कर्तव्यौ । अनुक्ताभोगवस्तूनां पदैराभोगकल्पनेति परत्र परिभाष्यमाणत्वादत्र पदैराभोगः कर्तव्यः । तेनायं त्रिधातुर्भवति । तालभाषानियमान्नियुक्तो बिरुदपदतालबद्धत्वात्त्र्यङ्गो भावनीजातिमान् ॥ १८१ ॥

इति वर्णप्रबन्धः ।

वर्णस्वरं लक्षयति—

स्वरैः पाटैः पदैस्तेनै रचना वाञ्छितक्रमात् ।
यस्य स्यात्तेनकैर्न्यासः स वर्णस्वर उच्यते ॥ १८२ ॥

स्वरैः पाटैरित्यादि । वाञ्छितक्रमाद्रचनेति । अत्र स्वरपाटपदतेनानां क्रम ऐच्छिक इत्यर्थः ॥ १८२ ॥

**स्वरादेरादिविन्यासभेदादेष चतुर्विधः ॥ १८३ ॥**

स्वरादेरादिविन्यासभेदादिति । स्वरस्याऽऽदौ विन्यासादेको भेदः । पाटस्याऽऽदौ विन्यासाद्द्वितीयः । पदस्याऽऽदौ विन्यासात्तृतीयः । तेनस्याऽऽदौ विन्यासाच्चतुर्थः । स्वरादिष्वेकैकस्मिन्नादौ विन्यस्ते तदन्येषामनियमेन विन्यासो भवति । अत्र स्वरादिषु चतुर्षु द्वाभ्यामुद्ग्राहः कर्तव्यः। द्वाभ्यां ध्रुवः कर्तव्यः। आभोगस्तु पदैः कर्तव्यः । अयमपि त्रिधातुस्तालनियमान्निर्युक्तो बिरुदाभावात्पञ्चाङ्ग आनन्दिनीजातिमान् ॥ १८३ ॥

इति वर्णस्वरः ।

अथ गद्यं लक्षयति—

**गद्यं निगद्यते छन्दोहीनं पदकदम्बकम् ॥**
**तत्षोढोत्कलिका चूर्णं ललितं वृत्तगन्धि च ।**
**खण्डं चित्रं च तेषां च प्रभवः सामवेदतः ॥ १८४ ॥**
**गातव्योत्कलिका वीरे रक्ता रुद्राधिदेवता ।**
**गौडीयरीतिरुचिरा वृत्तिमारभटीं श्रिता ॥ १८५ ॥**
**चूर्णं शान्ते रसे पीतं गातव्यं ब्रह्मदैवतम् ।**
**वैदर्भरीतिसंपन्नं सात्वतीं वृत्तिमाश्रितम् ॥ १८६ ॥**
**सितं मदनदैवत्यं शृङ्गाररसरञ्जितम् ।**
**ललितं कैशिकीं वृत्तिं पाञ्चालीं रीतिमाश्रितम् ॥ १८७ ॥**
**वृत्तगन्धि रसे शान्ते पीतं च मुनिदैवतम् ।**
**पाञ्चालरीतौ भारत्यां पद्यभागविमिश्रितम् ॥ १८८ ॥**
**खण्डं गणेशदैवत्यं सात्वतीं वृत्तिमाश्रितम् ।**
**श्वेतं हास्यकृदारब्धं वैदर्भीभङ्गिसंभवम् ॥ १८९ ॥**

गद्यं निगद्यत इत्यादि ॥१८४॥१८५॥१८६॥१८७॥१८८॥१८९॥

**शृङ्गारे वैष्णवं चित्रं चित्रकैशिकवृत्तिजम् ।**
**वैदर्भ्या रचितं रीत्या नानारीतिविचित्रया ॥ १९० ॥**

चित्रकैशिकवृत्तिजमिति । कैशिकी चासौ वृत्तिश्चेति । अतः(त्र) स्त्रियः-

---

१ च. रक्ता । २ ब. वैभर्वं ।

(या:) पुंवदित्यादिसूत्रेण पुंवद्भावे कैशिकं(क)वृत्तिरिति कर्मधारयः । चित्रा चासौ कैशिकी(क)वृत्तिश्चेत्यत्रापि पूर्ववत्समासपुंवद्भावौ । कैशिकवृत्तेश्चित्रत्वं भारत्यादिभिर्वृत्त्यन्तरैः सह सांकर्येणेति वेदितव्यम्। तस्या जातमिति तत्॥१९०॥

**वेणी मिश्रमिति प्राहुरन्ये भेदद्वयं परम् ।**
**वेणी सर्वैः कृता मिश्रं चूर्णकैर्वृत्तगन्धिभिः ॥ १९१ ॥**
**द्रुता विलम्बिता मध्या द्रुतमध्या तथा परा ।**
**गतिर्द्रुतविलम्बा स्यात्षष्ठी मध्यविलम्बिता ।**
**इति गद्यस्य षट् प्रोक्ता गतयः पूर्वसूरिभिः ॥१९२॥**

**वेणी सर्वैः कृतेति** । सर्वैः कलिकादिभिः षड्भिर्भेदैः कृता वेणी । वृत्तगन्धिभिश्चूर्णकैः कृतं मिश्रम् ॥ १९१ ॥ १९२ ॥

द्रुतादिगतिषट्कं लक्षयति—

**लघुभिर्बहुलैरल्पैः समैराद्यत्रयं क्रमात् ।**
**पृथग्लगत्वे मिश्रैस्तु लगैस्तद्वत्परं त्रयम् ॥ १९३ ॥**

**लघुभिरित्यादि** । बहुलैर्लघुभिर्द्रुता । स्वल्पैर्लघुभिर्विलम्बिता। समैर्लघुभिर्मध्येति क्रमः । अत्र लघोः प्रतियोगित्वेन गुरुर्द्रष्टव्यः । तस्याल्पत्वबहुत्वसमत्वानि द्रुतादिगतिषु क्रमेण कर्तव्यानीत्यन्वयः । **पृथग्लगत्व इत्यादि** । अत्र लघूनां गुरूणां च पृथग्भूतानां भावः पृथग्लगत्वम् । तस्मिन्सति । तद्वत्पूर्ववत् । अपृथग्भूतत्वेनेत्यर्थः । एवं मिश्रैर्लगैस्तु परं त्रयं द्रुतमध्यादिकं गतित्रयं भवति । अयमर्थः । प्रथमार्धे लघूनेव प्रयुज्य द्वितीयार्धे पूर्ववत्समत्वेन मिश्रिता लगाः प्रयुज्यन्ते चेत्तदा द्रुतमध्या गतिर्भवति । प्रथमार्धे लघूनेव प्रयुज्य द्वितीयार्धे गुरवः प्रयुज्यन्ते चेत्तदा मध्यविलम्बिता गतिर्भवतीति ॥ १९३ ॥

**प्रत्येकं गतिषट्केन षट्त्रिंशद्गद्यजा भिदाः ॥ १९४ ॥**

एवं कलिकादयः षड् भेदाः प्रत्येकं गतिभेदेन षड्विधाः सन्तः षट्त्रिंशद्गद्यानि भवन्तीत्याह—**प्रत्येकमित्यादि** ॥ १९४ ॥

सकलभेदानुगतं सामान्यलक्षणमाह—

**प्रणवाद्यमतालं च गमकैरखिलैर्युतम् ।**
**वर्णैश्चातालशब्दानां स्वरैरन्तेऽन्तराऽन्तरा ॥ १९५ ॥**
**प्रबन्धाङ्कं सतालं च पदद्वंद्वं पृथक्कृतः ।**
**द्विर्गीत्वा गीयते यत्र प्रयोगोऽपि विलम्बितः ॥ १९६ ॥**

---

१ ग. पूर्ववेदिभिः ।

**प्रणवाद्यमित्यादि** । प्रणव ओंकारः । अतालं तालरहितम् । अखिलैर्गमकैस्तिरिपादिभिः पञ्चदशभिः । वर्णैश्चेत्यत्राप्यखिलैरिति विशेषणीयम् । अत्र वर्णशब्देन स्थायादयश्चत्वारो वर्णा उच्यन्ते । तैश्च युतमिति चकारार्थः । अतालशब्दानामन्तेऽन्तराऽन्तरा स्वरैर्युतमित्यन्वयः । अतालशब्दानां तालरहितानां वाचकपदानामन्तेऽवसाने वाक्यसमाप्तावन्तराऽन्तरा मध्ये मध्ये पदावसानेषु तत्र स्वरैः सरिगादिभिर्युतं यथा तथा गातव्यमित्यर्थः । ततोऽनन्तरं प्रबन्धाङ्कं प्रबन्धनामाङ्कितं सतालं येन केनापि तालेन सहितं पदद्वंद्वमवान्तरानेकपदसमुदायात्मकमेकैकविभक्त्यन्तमेकैकक्रियान्वितं वा शब्दरूपं(प) द्वितयम् । पृथग्द्विर्गीत्वेत्यनेन प्रथमं पदं द्विवारं गीत्वा द्वितीयपदमपि द्विवारं गायेदित्यर्थः । प्रबन्धाङ्कमित्यस्य पदद्वंद्वस्य समुदायविशेषणत्वेन द्वयोः पदयोरेकतरस्मिन्प्रबन्धस्य नामाङ्कयेदित्यर्थः । सतालमित्यस्यापि तथात्वेन द्वयोरेक एव तालः कर्तव्यः । **यत्रेति** । यत्र यस्मिन्गद्ये प्रयोगोऽपि विलम्बितो गीयत इति । अत्रापिशब्दः समुच्चयिते तेन प्रयोगस्यापि पदद्वयप्रयुक्तत्वं द्योत्यते । अत एव विलम्बित इति लयनियम उक्तः । अनेन पदद्वयस्यापि विलम्बितत्वं सूचितं भवतीति ॥१९५॥ १९६ ॥

**गातृनाम सतालं च सतालं वर्ण्यनाम च ।**
**विलम्बितेन मानेन पुनरप्यविलम्बितम् ।**
**गीत्वा विलम्बितालेन न्यासो गद्यं तदिष्यते ॥ १९७ ॥**

**इति गद्यम् ।**

**गातृनाम सतालं चेति** । प्रयोगानन्तरं गातृनाम वाग्गेयकारः स्वनाम निबध्नीयादित्यर्थः । पुनः सतालमिति विशेषणेन प्रयोगप्रकृतकृतातालादन्यस्तालः कर्तव्य इत्यर्थः । सतालं वर्ण्यनाम चेत्यत्रापि ततोऽप्यन्यस्तालः कर्तव्य इत्यवगन्तव्यम् । सतालं वर्ण्यनाम चेत्यत्रापि ततोऽप्यन्यस्तालः कर्तव्य इत्यव्यगन्तव्यम् । अथवा पूर्व एव तालो लयान्तरेण प्रयोक्तव्य इत्यवगन्तव्यम् । **पुनरप्यविलम्बितं गीत्वेति** । अविलम्बितं द्रुतं यथा भवति तथा । अत्र विलम्बितान्यत्वेन मध्यस्य च ग्राह्यत्वेऽप्यविलम्बितपदेन हठाद्द्रुतप्रतीतेः स एव गृह्यते । पुनर्गीत्वेत्यत्र विशेषानुक्तेः पूर्वोक्तक्रमेण सकल एव प्रबन्धः पुनर्गेय इति गम्यते । **विलम्बितालेन न्यास इति** । विलम्बितालस्य प्रथमं पदद्वये प्रयुक्तत्वात्तत्र पदद्वयादौ तालेनेति तृतीयतालापवर्गे न्यासः कर्तव्य इति गम्यते । प्रथमस्याऽऽदिमारभ्य विलम्बितलयान्वितं तालमेकवारं प्रयुज्य न्यासं कुर्यादित्यर्थः । अत्र गद्यप्रबन्धे तालरहितो भाग उद्ग्राहत्वेन ग्राह्यः । पदद्वयात्मकः सतालः पृथग्द्विरावृत्तौ भागो ध्रुवत्वेन ग्राह्यः । प्रयोगादिः सतालश्चरमो भाग आभोगत्वेन

ग्राह्य इत्यनुक्तोऽप्युद्ग्राहादिविभागश्चैवमूहनीयः । अतोऽयं त्रिधातुस्तालाद्यनि-नियमादनिर्युक्तः पदस्वरतालबद्धत्वात्त्र्यङ्गो भावनीजातिमान् ॥ १९७ ॥

इति गद्यप्रबन्धः ।

अथ कैवाडं लक्षयति—

**पाटैः स्यातां ध्रुवोद्ग्राहौ कैवाडे न्यसनं ग्रहे ॥ १९८ ॥**
**सार्थकैरर्थहीनैश्च पाटैः स द्विविधो मतः ।**
**स शुद्धैर्मिश्रितैः पाटैः शुद्धो मिश्र इति द्विधा ॥ १९९ ॥**

**पाटैः स्यातामिति** । ध्रुवोद्ग्राहावित्यत्र पाठे( ट )क्रमो न विवक्षितः । किंत्वग्निहोत्रं जुहोति यवागूः(गूं) पचतीतिवदर्थक्रमोऽनुसंधेयः । यथा तत्र यवागूपाकात्पूर्वं द्रव्याभावाद्धोमस्यासंभवस्तथेहाप्युद्ग्रात्पूर्वं गीतारम्भाभावाद्ध्रुवस्यासंभव एव । वृत्तानुरोधेन तत्रैव पाटाः कृता इति मन्तव्यम् । **न्यसनं ग्रह इति** । गृह्यते सः । ग्रहशब्देनात्रोद्ग्राह उच्यते । तत्र न्यासः कर्तव्यः । कैवाड इति करपाटप्रधानत्वात्तद्भवत्वादेशपदेनेयं संज्ञा । करपाटास्तु **वाद्याध्याये** वक्ष्यन्ते । स शुद्धैर्मिश्रितैः पाटैरित्यत्र पाठानां शुद्धत्वं मुखवाद्याक्षरामिश्रितत्वं मिश्रितत्वं तु मिश्रत्वम् । तत्राहितत्वम् । एवं सार्थकः शुद्धकैवाड एकः । अर्थहीनः शुद्धकैवाडो द्वितीयः । सार्थकमिश्रकैवाडस्तृतीयः । अर्थहीनमिश्रकैवाडश्चतुर्थ इति चतुर्धा भवति । तत्र नेतृगातृप्रबन्धनामाङ्कितैः पदैराभोगो गातव्यः । तेनायं त्रिधातुस्तालाद्यनियमादनिर्युक्तः पाटपदतालबद्धत्वात्त्र्यङ्गो भावनीजातिमान् ॥ १९८ ॥ १९९ ॥

इति कैवाडः ।

अथाङ्कचारिणीं लक्षयति—

**वीररौद्राश्रितैर्बद्धा बिरुदैरङ्कचारिणी ।**
**वर्ण्यनामान्विताभोगा तालेनेष्टेन गीयते ॥ २०० ॥**

**वीररौद्रेति** । केवलं बिरुदैरित्युक्ते शृङ्गाराद्याश्रितान्यपि बिरुदानि प्रसज्यन्ते । तद्व्यवच्छेदाय वीररौद्राश्रितैरिति विशेषणम् । अत्र वीरशब्देन दानवीरो दयावीरो युद्धवीर इति त्रिविधोऽपि गृह्यते । तेन त्रिविधवीराश्रितानि बिरुदानि ग्राह्याणि । एवंविधैर्बिरुदैरुद्ग्राहध्रुवौ बद्ध्नीयादित्यर्थः । **वर्ण्यनामान्विताभोगेति** । अत्र वर्ण्यनामेति गातृप्रबन्धनाम्नोरप्युपलक्षणम् । तेनाऽऽभोगो वर्ण्यादित्रितयनामाङ्कितैः पदैः कर्तव्यः ॥ २०० ॥

तद्भेदानाह-

वासवी कलिका वृत्ता ततो वीरवती भवेत् ।
वेदोत्तरा जातिमती षट्प्रकारेति सा मता ॥ २०१ ॥
एकद्वित्रिचतुष्पञ्च तालाः स्युर्बिरुदानि तु ।
अष्टौ षोडश तद्वच्च द्वात्रिंशद्द्व्याधिका क्रमात् ॥२०२॥
पञ्चाशच्च चतुर्युक्तं शतमाद्यासु पञ्चसु ।
नियमो जातिमत्यां तु न तालविरुदाश्रयः ॥ २०३ ॥

**वासवीत्यादि** । यत्रैकेन तालेनाष्टौ बिरुदानि गीयन्ते सा वासवी । यत्र द्वाभ्यां तालाभ्यां षोडश बिरुदानि गीयन्ते सा कलिका। यत्र त्रिभिस्तालैर्द्वाविं- (त्रिं)शद्बिरुदानि गीयन्ते सा वेदोत्तरा । एवमाद्यासु पञ्चसु योजनीयम् । **जातिमत्यां तु तालबिरुदाश्रयो नियमो नेति** । तालबिरुदाश्रयो नियमो नास्तीत्यर्थः। तेनाऽऽद्यास्वपि तालादिसंख्यानियम एव, न तालादिस्वरूपनियमः। अतोऽयमनिर्युक्तो मेलापकाभावात्त्रिधातुर्बिरुदपदतालबद्धत्वात्त्यङ्गो भावनीजातिमान् ॥२०१॥२०२ ॥२०३॥

इत्यङ्कचारिणी ।

अथ कन्दं लक्षयति-

कर्णाटादिपदैः पाटैर्बिरुदैस्तालवर्जितः ।
आर्यागीतौ रसे वीरे कन्दः स्यात्पाटमुक्तिकः ॥ २०४ ॥

**कर्णाटादीत्यादि** । कर्णाटादिपदैरित्यनेनात्र देशभाषापदान्येव गृह्यन्ते, न संस्कृतपदानि । **आर्यागीताविति** । आर्यागीतेर्हि लक्षणं **छन्दोविचितौ**- ' प्रथमार्धसमा गीतिरिति ' । अस्यार्थः । द्वितीयमर्धं प्रथमार्धेन समं यस्याः साऽऽर्यागीतिरिति ।

उदाहरणं च-

" मधुरं वीणारणितं पञ्चमसुभगश्च कोकिलालापः ।
गीतिः पौरवधूनां मधुरा कुसुमायुधं विबोधयति " ॥

**वृत्तरत्नाकरेऽपि**-

" आर्याप्रथदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः ।
दलयोः कृतयतिशोभां तां गीतिं गीतवान्भुजंगेशः " ॥

इत्येतल्लक्षणमुदाहरणं च । आर्यायां तावत्प्रथमार्धे त्रिंशन्मात्राः। द्वितीयार्धेऽष्टाविंशतिर्मात्राः । आर्यागीतौ तु द्वितीयार्धेऽपि त्रिंशन्मात्रा भवन्ति । एवंविधायामार्यागीतौ प्रथमार्धमुद्ग्राहं कृत्वा पदैर्गायेत् । द्वितीयार्धं ध्रुवं पादैर्बिरुदैश्च गाये-

लघुद्वयरूपता । इतरेषां गुरुरूपतैव । आ द्विगुरोरित्यनेनाऽऽद्यगुरोर्भङ्गो न कर्तव्य इत्यर्थः । छन्दोनिबद्धत्वादयं निर्युक्तः । मेलकाभावात्त्रिधातुः । पदपाटबिरुदबद्धत्वात्त्र्यङ्गो भावनीजातिमान् ॥ २०८ ॥

इति कन्दः ।

अथ तुरगलीलां लक्षयति—

**हयलीलेन तालेन हयलीला द्विधा च सा ।**
**गद्यजा पद्यजा चेति पद्यजा तु चतुर्विधा ॥ २०९ ॥**

**हयलीलेन तालेनेत्यादि** । "विरामान्तद्रुतत्रयात् । द्रुतौ तुरगलीलः स्यात्" इति हयलीलातालस्य लक्षणं वक्ष्यते तदिहानुसंधेयम् । **पद्यजेति** । पद्यं पादबद्धं [पद?] कदम्बकं यथोक्तं पदं(द्यं) चतुष्पदं तच्चेति । गद्यं त्वपादबद्धम् ॥ २०९ ॥

**पूर्वार्धमुत्तरार्धं वा द्वेधा तालयुत(तं) यदि ।**
**आर्यायाः स्युस्तदा तिस्रश्चतुर्थी त्वादिमे दले ।**
**स्वरैः पदैस्तु बिरुदैः सताले रचिता मता ॥ २१० ॥**

**पूर्वार्धमित्यादि । आर्याया इति ।**

"लक्ष्मैतत्सप्त गणा गोपेता भवति नेह विषमे जः ।
षष्ठोऽयं च नलघु वा प्रथमार्धे नियतमार्यायाः" ॥

इत्येवमादिलक्षणयुक्तमेवंविधलक्षणरूपाया आर्यायाः पूर्वार्धं तालयुक्तं चेदेका हयलीला । उत्तरार्धं वा तालयुक्तं चेद्द्वितीया । द्वयोरेकस्मिंस्तालयुतेऽन्यत्तालहीनमित्यर्थः । द्वे वा पूर्वोत्तरार्धे वा यदि तालयुते तदा तृतीया । **चतुर्थी त्विति** । आदिमे दले प्रथमार्धे सतालैः स्वरैः पदैर्बिरुदैश्च रचिता चतुर्थी हयलीला मता । अत्र तुशब्देनाऽऽद्यानां तिसृणां केवलपदरचितत्वं द्योत्यते । एवं पद्यजाश्चतस्रः ॥ २१० ॥

**केचित्तु हयलीलेन च्छन्दसा तां विदुर्बुधाः ॥ २११ ॥**

इति नव तुरगलीलाः ।

**केचित्त्वित्यादि । हयलीलेन च्छन्दसेति** । तस्य लक्षणं तु विकृतौ छन्दसि—'अश्वललितं न्जौ भ्जौ भ्जौ भ्लौ ग्रुद्रादित्याः' इति । अस्यार्थः । यस्य पादे नकारजकारौ भकारजकारौ पुनर्भकारजकारौ भकारलकारौ गकारश्च भवति तद्वृत्तमश्वललितं नामेत्यश्वललितमेव हयलीलम् । एकादशभिर्द्वादशभिश्च यतिः । तत्रोदाहरणम्—

"पवनविधूतवीचिचपलं विलोकयति जीवितं तनुभृताम् ।
वपुरपि जीर्यमाणमनिशं जराबनितया वशीकृतमिदम् ॥

ादि निपीडनव्यतिकरं यमादिवाधिपाञ्चरपशुः ।
नेतामवेक्ष्य कुरुते तथाऽपि हतबुद्धिरश्वललितम् " इति ।
' छन्द आर्यास्थाने प्रयुज्य पूर्वार्धमुत्तरार्धं चेत्यादिषु भेदेषु
ापि चतस्रः *पद्यजगद्यजया सहैवं नव हयलीला भवन्ति ।
ह्यलील एव । अत्राऽऽर्याया हयलीलाछन्दसो वा पूर्वार्धं
ग्राहः कल्पनीयः। तदुत्तरार्धं तदुत्तरभागो वा ध्रुवः कल्प-
गस्यानुक्तत्वाद्गातृनेतृप्रबन्धनामाङ्कितैः पदैराभोगः कर्तव्यः ।
न्दस्तालनियमत्वान्नियुक्तः । क्वचित्स्वरपदबिरुदतालबद्ध-
ोजातिमान् । क्वचित्पदतालबद्धत्वाद्व्यङ्गस्तारावलीजाति-

इति हयलीलालक्षणम् ।

लक्षयति—

**न गजलीलेन गजलीला निगद्यते ।**
**ोहीनेतरल्लक्ष्म हयलीलागतं मतम् ॥ २१२ ॥**

ालेनेत्यादि । ' गजलीले विरामान्तमुक्तं लघुचतुष्टयम् '
ान तालेन निबद्धा गेयेत्यर्थः । **छन्दोहीनेतरादिति** । हय-
ामितरल्लक्ष्म प्रथमं गद्यपद्यजत्वेन द्विविधम् । पद्यजाया
चतुर्विधत्वं च हयलीलागतं लक्षणं मतमत्राप्यनुसंधेयमि-
ोलाः पञ्च भवन्ति । अनयोर्लीलापदार्थप्राधान्यात्स्त्रीलिङ्ग-
ुक्तत्वादिकं हयलीलावद्द्रष्टव्यम् ॥ २१२ ॥

इति गजलीलालक्षणम् ।

पूर्वकं लक्षयति—

**ा खण्डा च मात्रादिः संपूर्णेति चतुर्विधा ।**
**दी करुणाख्येन तालेन परिगीयते ॥ २१३ ॥**

**करुणाख्येन तालेनेति** । ' गुरुणा करुणो मतः ' इति
क्ष्यते ॥ २१३ ॥

क्षणमाह—

**छः पञ्च भा गोऽन्ते जौ स्तः षष्ठद्वितीयकौ ।**
**भिरीदृशैः पादैः शुद्धा द्विपदिकोच्यते ।**
**ान्तिऽन्ये स्वरानाहुः खण्डा स्याच्छुद्धयाऽर्धया ॥ २१४ ॥**

* पद्यजेत्यधिकम् ।

**पादे छ इत्यादि** । पादे चतुर्षु पादेष्वेकस्मिंश्छश्छगणः षण्मात्रिको मात्रागणः । पञ्च भाः । भगणा आदिगुरवो वर्णगणाः पञ्च प्रयोक्तव्याः । गोऽन्ते । अन्तेऽवसाने गो गुरुः । एवं सामान्येन गणानुक्त्वा विशेषमाह—**जौ स्तः षष्ठद्वितीयकाविति** । षष्ठद्वितीयकौ गणौ जौ स्तः । मध्यगुरुजगणौ भवतः । अन्य आचार्या अर्धान्ते पादद्वयावसाने स्वरानाहुः स्वराः प्रयोक्तव्या इति वदन्ति । **खण्डा स्यादिति** । अयमर्थः । उक्तेषु चतुर्षु पादेषु प्रथमं पादद्वयं नियतलक्षणमुत्तरं पादद्वयमनियतलक्षणं कृतं चेत्खण्डा नाम द्विपदी भवेत् ॥२१४॥

**षष्ठेनैकेन गुरुणा मात्राद्विपदिका मता ।**
**ज्ञेया शुद्धैव संपूर्णा गुरुणाऽन्तेऽधिकेन तु ॥ २१५ ॥**

**षष्ठेन गुरुणेति** । प्रतिपादं षष्ठगणस्थान एक एव गुरुः प्रयुज्यते चेन्मात्राद्विपदिकेति संमता । **ज्ञेयेत्यादि** । प्रतिपदमप्यधिकेन गुरुणा तु शुद्धैव संपूर्णा विज्ञेया । शुद्धायाः प्रतिपादान्तमेकैको गुरुराधिकः कर्तव्य इत्यर्थः ॥ २१५ ॥

**पुनश्चतुर्धा द्विपदी मानवी चन्द्रिका धृतिः ।**
**तारेति मानवी छेन तद्द्वयेन कृताङ्घ्रिका ॥ २१६ ॥**

**पुनश्चतुर्धेत्यादि** । छेन षण्मात्रिकेण गणेन तद्द्वयेनान्त्यलघुयुक्तौ(क्तयोः) पञ्चमात्रिकयोस्तगणयोर्द्वयेन । अत्र पूर्वोत्तरोक्तभगणयगणसाहचर्यात्तगण इति वर्णगण एव गृह्यते । ÷वर्णमात्रिकामात्रागण ए( णैर )तैः कृताङ्घ्रिका मानवी ॥ २१६ ॥

**यद्वयं नगणश्चान्ते लगौ चेच्चन्द्रिका मता ।**
**छगणेन चतुर्मात्रैस्त्रिभिश्च धृतिरुच्यते ।**
**तारा छेन चतुर्भिश्च यगणैरन्तिमे गुरौ ॥ २१७ ॥**

**इति द्विपदी ।**

**पद्(य)द्वयमिति** । पञ्चमात्रिकयोर्यगणयोर्द्वयम् । +तगण इत्यत्रापि वर्णगणः । **अन्ते लगौ चेदिति** । प्रतिपदमित्यवगन्तव्यम् । तदा चन्द्रिका । **चतुर्मात्रैरिति** । भगणैर्जगणैः सगणैरेवेत्यर्थः । तैस्त्रिभिरादौ छगणेन च कृताङ्घ्रिका धृतिरुच्यते । अन्तिमे गुरौ सति च्छगणे[न] चतुर्भिर्यगणैश्च कृताङ्घ्रिका तारा । एतासां पदचतुष्टययुक्तत्वेऽप्येकैकार्धस्य पादत्वविवक्षया द्विपदीव्यपदेशो द्रष्टव्यः । **इत्यष्टौ द्विपद्यः** । अत्र प्रथमार्धमुद्ग्राह उत्तरार्धं ध्रुवः पृथक्पदैराभोगो गातृनेतृप्रबन्धनामाङ्कितः कर्तव्यः । अतोऽयं त्रिधातुस्तालानियमान्नियुक्तः पदतालबद्धत्वाद्द्व्यङ्गस्तारावलीजातिमान् । मतान्तरेण स्वरेणापि बद्धत्वात्त्र्यङ्गो भावनीजातिमांश्च ॥ २१७ ॥

**इति द्विपदी ।**

---

÷मात्रिकेत्यधिकमिव भाति । +मूलानुरोधेनात्र नगण इति युक्तं पठितुम् ।

क्षयति—

**रव्राते योऽन्त्यो वर्णचयः स चेत् ।**

**संघादौ चक्रवालस्तदोच्यते ।**

**भेदेन स द्विधा गदितो बुधैः ॥ २१८ ॥**

**इति चक्रवालः ।**

इति । पूर्वपूर्वेति वीप्सायां द्विर्वचनम् । अक्षरव्रातो वर्ण- । तस्मिन्योऽन्त्यो वर्णचयोऽक्षरसमुदायो द्वौ त्रयो वा वर्णा उत्तरोत्तरसंघादावुत्तरोत्तरपदादौ भवति चेत्तदा चक्रवाल वृत्तिनियम उद्ग्राहध्रुवयोरवश्यं कर्तव्यः। आभोगे त्वनि- वेदितव्यः । तेनायं त्रिधातुस्तालादि(द्य)नियमादनिर्युक्तः न्स्तारावलीजातिमान् ॥ २१८ ॥

इति चक्रवालः ।

क्षयति—

**रैः क्रौञ्चपदः प्रतितालेन गीयते ।**

**सः स तन्नाम्ना छन्दसा मुक्तकोऽथवा ॥ २१९ ॥**

**इति क्रौञ्चपदः ।**

**ादि । प्रतितालेनेति ।** लद्रुतौ प्रतितालः स्यादिति तस्य स्वरैरुद्ग्राहः पदैर्ध्रुवः। स्वरन्यास उद्ग्राहमारभ्य न्यसनीय **ना छन्दसेति ।** स क्रौञ्चपदः। तन्नाम्ना क्रौञ्चपदाभिधाने- हीन इत्यर्थः। क्रौञ्चपदलक्षणं त्वतिकृतौ छन्दसि 'क्रौञ्चपदा तेन्द्रियवस्वृषयः ' इति । अस्यार्थः । यस्य पदे भकारमका- नकाराश्चत्वारो गकारश्च भवति तत्क्रौञ्चपदा नाम पञ्चसु पञ्च- तिरिति । तत्रोदाहरणम्—

ठाक्षी पिङ्गलकेशी कलिरुचिरनुदिनमनुनयकठिना ।

भिः स्थूलशिराभिः परिवृत्तवपुरतिशयकुटिलगतिः ॥

ङ्घा निम्नकपोला लघुतरकुचयुगपरिचितहृदया ।

ार्या क्रौञ्चपदा स्त्री ध्रुवमिह निरवधिसुखमभिलषता "इति।

भोगः पदैः कर्तव्यः । तेनायं त्रिधातुस्तालादिनियमान्निर्युक्तः ग्यङ्गो भावनीजातिमान् ॥ २१९ ॥

**इति क्रौञ्चपदलक्षणम् ।**

अथ स्वरार्थं लक्षयति—

**यत्र स्वराक्षरैरेव वाञ्छितोऽर्थोऽभिधीयते ।**
**स स्वरार्थो द्विधा शुद्धो मिश्रस्तैः शुद्धमिश्रितैः ॥ २२० ॥**
**ग्रहन्यासोऽस्य भूयोऽसौ सप्तधैकादिकैः स्वरैः ।**
**क्रमोत्क्रमाभ्यां बहुशो भिद्यन्ते द्विस्वरादयः ॥ २२१ ॥**

इति स्वरार्थः ।

**यत्र स्वराक्षरैरेवेत्यादि** । स्वराक्षरैरेव षड्जादिस्वरवाचकैः सरिगमपधनिभिरेव वाचकपदत्वमापन्नैर्वाञ्छितोऽर्थो वाग्गेयकारस्याभीष्टोऽर्थोऽभिधीयत उच्यते [स] स्वरार्थो नाम प्रबन्धः। **शुद्धमिश्रितैरिति** । शुद्धाश्च मिश्रिताश्चेति द्वंद्वः। अत्र केवलं स्वरा एव शुद्धा वा विकृता वा शुद्धत्वेन विवक्षिताः । अक्षरान्तरसहितास्तु मिश्रिताः । ग्र(तास्तैर्ग्र)हे न्यास इत्यर्थः । **अस्येति** । स्वरार्थस्य । **भूयोऽसौ सप्तधैकादिकैः स्वरैरिति** । असौ शुद्धो मिश्रोऽपि स्वरार्थ एकादिकैः स्वरैर्भूयः सप्तधेति । अयमर्थः । एकस्वर एकार्थवाचकपदं द्वौ स्वरावेकार्थवाचकं पदं त्रयः स्वरा एकार्थवाचकं पदमित्येवमादयः सप्त शुद्धभेदा द्रष्टव्याः । एवमेकस्वरयुक्तं त्रिस्वरयुक्तं पदमित्यादिना मिश्रोऽपि सप्तधा द्रष्टव्य इति । भूय इत्यनेन प्रत्येकमित्यवगन्तव्यम् । **क्रमोत्क्रमाभ्यामित्यादि** । **द्विस्वरादय इति** । शुद्धैः षणिमिश्रैश्च षणिमलित्वा द्वादश भेदाः क्रमोत्क्रमाभ्यां सरिगादिना क्रमेण सरिगा(निधा?)दिना व्युत्क्रमेण च बहुशो भिद्यन्ते। संख्यातुमशक्या इत्यर्थः । अत्र शुद्धमिश्राश्रितयोरेकस्वरयोः क्रमाद्यसंभवाद्द्विस्वरादय एवोक्ता इत्यवगन्तव्यम् । एवं नियमेनोद्ग्राहध्रुवौ गातव्यौ। आभोगस्त्वन्यपदैः पूर्ववद्गातव्यः। तेनायं त्रिधातुस्तालाद्यनियमादनिर्युक्तः पदतालबद्धत्वादद्व्यङ्गस्तारावलीजातिमान् । अत्र सरिगादिस्वरप्रयोगेऽपि तेषां वाचकपदत्वेनोपस्थापितत्वादत्र स्वरबद्धत्वं नाऽऽशङ्कनीयम् ॥ २२० ॥ २२१ ॥

इति स्वरार्थलक्षणम्।

अथ ध्वनिकुट्टिनीं दर्शयति—

**ध्रुवोद्ग्राहौ भिन्नतालौ मण्ठकङ्कालवर्जितौ ॥ २२२ ॥**
**यस्यां समासु मात्रासु यतिर्मेलापको न च ।**
**तालद्वयेन सा गेया ढेङ्कविद्ध्वनिकुट्टिनी ॥ २२३ ॥**

इति ध्वनिकुट्टिनी ।

**ध्रुवोद्ग्राहावित्यादि** । **भिन्नतालाविति** । उद्ग्राहे प्रयुक्तस्तालो ध्रुवे न प्रयोक्तव्य इत्यर्थः। **मण्ठकङ्कालवर्जिताविति** । मण्ठकङ्कालव्यतिरिक्ततालान्तरयुक्तौ भवत इति नियमः क्रियते । समासु समसंख्यासु मात्रासु यतिः

पदविरतिः कर्तव्या । मेलापको न चेति। अनन्तरं ढेङ्कीवदित्यतिदेशः करिष्यते, तत्रापि वैकल्पिको मेलापकः प्राप्नोतीति नित्यतया तन्निषेधः क्रियते । सा ध्वनिकुट्टिनी । ढेङ्कीवत्तालद्वयेन गेयेति । यथा ढेङ्की मिथो लयान्तरयुक्तेन तालद्वयेन गीयते तथेयमपि मिथो भिन्नलयेन तालद्वयेन गातव्येत्यतिदेशार्थः । मेलापकनिषेधादयं त्रिधातुः । तालनियमान्निर्युक्तः । पदतालबद्धत्वादव्यङ्गस्तारावलीजातिमान् ॥ २२२ ॥ २२३ ॥

इति ध्वनिकुट्टनी ।

अथाऽऽर्यां लक्षयति—

अर्धान्ते चरणान्ते वा स्वरान्न्यस्यार्धमादिमम् ।
द्विरार्याच्छन्दसो गीतं सकृद्गीतं दलान्तरम् ।
यत्राऽऽभोगे गातृनाम साऽऽर्या स्याद्ग्रहमुक्तिका ॥२२४॥

अर्धान्त इति । आर्याप्रबन्धेऽर्धान्ते चरणान्ते च स्वरान्सरिगादीन्न्यस्येत् । तत्रार्धचरणशब्दयोः साकाङ्क्षत्वादनन्तरं(र)वाक्यगत(ता)या आर्याछन्दसं इति षष्ठ्याः संबन्धोऽवगम्यते । आर्याछन्दस आदिममर्धं द्विर्गीतं भवेत् । दलान्तरं द्वितीयमर्धं सकृद्गीतं भवेत् । अत्र प्रथमार्धमुद्ग्राहो द्वितीयार्धं ध्रुव इत्यवगन्तव्यम् । आभोगे गातृनाम भवेदिति । गातृनामेति नेतृप्रबन्धनाम्नोरप्युपलक्षणम् । तेनाऽऽभोगो गातृनेतृप्रबन्धनामाङ्कितः कर्तव्य इत्यर्थः । ग्रहमुक्तिका ग्रहन्यासवती साऽऽर्या स्यादिति सामान्यलक्षणम् ॥ २२४ ॥

तद्भेदानुद्दिशति—

लक्ष्मीः स्याद्वृद्धिबुद्धी च लीला लज्जा क्षमा तथा ।
दीर्घा गौरी ततो राजी ज्योत्स्ना छाया च कान्तिका॥२२५॥
मही मतिस्ततः कीर्तिरथ ज्ञेया मनोरमा ।
स्याद्रोहिणी विशाला च वसुधा शिवया सह ॥२२६॥
हरिणी चाथ चक्राख्या सारसी कुररी तथा ।
हंसी वधूरिति प्रोक्ता आर्याः षड्विंशतिः क्रमात् ॥२२७॥

लक्ष्मीः स्यादित्यादि ॥ २२५ ॥ २२६ ॥ २२७ ॥

तेषां लक्षणानि संक्षिप्याऽऽह—

षष्ठादन्यैर्गणैः सर्वगुरुभिः प्रथमा पराः ।
एकादिगुरुभङ्गेन(ण) क्रमाल्लक्ष्माण्यमूनि तु ॥२२८॥

षष्ठादन्यैरित्यादि । अत्र तावदार्याच्छन्दसि प्रथमेऽर्धे ' लक्ष्मैतत्सप्त

गणाः ' इत्यादिलक्षणवशाद्गणाः सप्तान्ते गुरुश्च कर्तव्यो भवति । अत्र गणास्तु-

" ज्ञेयाः सर्वादिमध्यान्तगुरवोऽत्र चतुष्कलाः ।
गणाः सप्त लघूपेताः पञ्च आर्यादिसंस्थिताः " ॥

इति वचनाच्चतुर्मात्रिका भवन्ति । तत्र प्रथमादिगणानामनियमेऽपि 'षष्ठोऽयं नलघु वा ' इति वचनात्षष्ठो गणोऽयमिति प्रकृतत्वाज्जगणः परामृश्यते । जगणो भवतीत्यर्थः । वा पक्षान्तरे । नलघु नगणश्च लघुश्च तौ भवतः । चत्वारः पृथग्लघवो भवन्तीत्यर्थः । एवं प्रथमार्धे षष्ठस्यैव गणस्य नियमो नान्येषाम् । तथा द्वितीयेऽपि चरमेऽर्धे पञ्चमके तस्मादिह भवति षष्ठो ल इति वचनात्षष्ठो गणो ल एक एव लघुर्भवतीति षष्ठस्यैव नियमो नान्येषाम् । तस्मादार्याया विशेषलक्षणं प्राधान्येन षष्ठगणगतं द्रष्टव्यम् । अत्रार्धे षष्ठगणस्य विकारपरिहारेणेतरगणविकारा एव भेदानां लक्षणान्युक्तानीति मन्तव्यम् । **षष्ठादन्यैरिति** । प्रत्येकं गोपितसप्तगणात्मनोः पूर्वोत्तरार्धयोः षष्ठाद्गणादन्यैर्गणैर्द्वादशसंख्याकैः । **सर्वगुरुभिरिति** । एकैकस्य गणस्य गुरुद्वयसंख्यया चतुर्विंशतिगु(र्गु)रवो भवन्ति । अधिकगुरुभ्यां सह षड्विंशतिर्भवन्ति । एवं सर्वगुरुभिर्गणैः प्रथमा लक्ष्मीसंज्ञा भवति । परा वृद्ध्यादयः पञ्चविंशतिः क्रमादेकादिगुरुभङ्गेण भवन्तीत्यध्याहार्यम् । **एकादिगुरुभङ्गे[णे]ति**। एकद्वित्रिचतुरादिपञ्चविंशतिगुरुपर्यन्तं भङ्गेनेत्यर्थः । गुरोर्भङ्गो नाम लघुद्वयकरणम् । अत्रैकादिगुरुभङ्गेणेत्येतावत्युच्यमाने यत्र कुत्रापि स्थितस्यैकस्य तादृशयोर्द्वयोस्तादृशानां त्रयाणामेव(वं) चतुरादीनामप्यनियतानां गुरूणां भङ्गे(ङ्गे) वृद्ध्यादिलक्षणत्वं प्राप्नोति तन्मा भूदिति क्रमादित्युक्तम् । तेनात्रैकशब्दः संख्यावाच्येव प्रथमे नियम्यते। ततश्चाऽऽदिशब्दोऽपि । एकस्य भङ्गे वृद्धिः, द्वयोर्भङ्गे बुद्धिः, त्रयाणां भङ्गे लीला, चतुर्णां भङ्गे लज्जा, एवं पञ्चगुरुभङ्गप्रभृत्यापञ्चविंशतिगुरुभङ्गेन(ण) क्षमादयः क्रमेण योजनीयाः । एवं पञ्चविंशतिगुरुभङ्गन्त एवोद्दिष्टभेदपरिसमाप्तेरान्तिमस्य षड्विंशस्य गुरोर्भङ्गो नास्त्येवेत्यवगम्यते । **लक्ष्माण्यमूनि त्विति** । अत्र तुशब्दोऽवधारणार्थेऽमून्येवेति । षष्ठगणव्यतिरिक्तसर्वगुरुमारभ्यैकादिगुरुभङ्ग एव (ङ्गन्तान्येव) लक्षणानि लक्ष्मीवृद्ध्याद्यार्याभेदानां लक्षणानीतो व्यतिरिक्तानि लक्षणान्तराणि न सन्तीत्येवकारार्थः । अमूनीति प्रतिनिर्देश्यगानलक्ष्मपदलिङ्गापेक्षया नपुंसको निर्देशः ॥ २२८ ॥

**छन्दोलक्षणतो ज्ञेयाः शेषा भूरितरा भिदाः ॥ २२९॥**

**इत्यार्या ।**

**छन्दोलक्षणत इत्यादि शेषा भूरितरा भिदा इति (?)** । आर्यायाः पथ्याविपुलादयो बहवो भेदाश्छन्दोलक्षणतः-

"त्रिष्वंशकेषु पादो दलयोराद्येषु दृश्यते यस्याः ।
पथ्येति नाम तस्याः प्रकीर्तितं नागराजेन "।

इत्यादिकाच्छन्दःशास्त्रादेव ज्ञेयम्( ज्ञेयाः )। आर्यासामान्यस्वरूपमपि तत एव ज्ञेयमिति भावः। मेलापकस्यानुक्तत्वादयं त्रिधातुश्छन्दोनियमान्नियुक्तः स्वरपाटतालबद्धत्वात्त्र्यङ्गो भावनीजातिमान् ॥ २२९ ॥

इत्यार्या ।

अथ गाथां लक्षयति—

**आर्यैव प्राकृते गेया स्यात्पञ्चचरणाऽथवा ।**
**त्रिपदी षट्पदी गाथेत्यपरे सूरयो जगुः ॥ २३० ॥**

**इति गाथा ।**

**आर्येत्यादि**। उक्तलक्षणाऽऽर्यैव प्राकृते प्राकृतपदं विषयीकृत्य गीयते चेत्तदा गाथा स्यादिति । अनेनाऽऽर्यायाः संस्कृतपदविषयत्वमुक्तं भवति । पदव्यतिरिक्तमन्यदार्यागतं लक्षणमनुसंधेयम् । केषांचिन्मतेन पदभेदाभावादार्यैव चरणन्यूनाधिकभावेन गाथा भवतीति लक्षणान्तराणि दर्शयति—**पञ्चचरणाऽथवेति** ॥ २३० ॥

**इति गाथा ।**

अथ द्विपथकं लक्षयति—

**छन्दसा द्विपथेन स्याद्द्विपथः स्वरमुक्तिकः ।**
**तालहीनः सतालो वा स च ज्ञेयश्चतुर्विधः ॥ २३१ ॥**

**छन्दसेत्यादि। द्विपथेनेति**। द्विपथं दोधकमिति पर्यायशब्दौ । तेन दोधकलक्षणमेव द्विपथलक्षणं वेदितव्यम् । दोधकलक्षणं तु 'दोधकं भौ भगौ गिति'। अस्यार्थः । यस्य पादे भकारौ भकारगकारौ गकारश्च तद्दोधकं नामेति। अत्रोदाहरणम्—

'दोधकमर्थविरोधनमुग्रं स्त्रीचपलं युधि कातरचित्तम् ।
स्वात्मपरं मतिहीनममात्यं मुञ्चति यो नृपतिः स सुखी स्यात् "

अत्र पादान्ते यतिः । द्विपथक[ स्य ] दोधकपर्यायत्वं प्राकृते दोहसंज्ञोऽसाविप्यनन्तरं वक्ष्यमाणस्य तद्भेदस्य दोहशब्दस्य च्छायाशब्दत्वेन दोधकशब्दप्रतीति( ते )रवगम्यते । तेन दोधकेन छन्दसेत्यर्थः । स्वरमुक्तिकः स्वरन्यासवान् । पक्षे तालहीनः । पक्षान्तरे सतालः । अनियतैकतालसहितः । स च द्विपथप्रबन्धश्च [ च ]तुर्विधो ज्ञेयः । वक्ष्यमाणप्रकारैरित्यर्थः ॥ २३१ ॥

तानेव दर्शयति—

**स्वरैरेकोऽन्यः प्रयोगैः सोभयानुभयौ परौ ।**
**प्राकृते दोहसंज्ञोऽसौ तस्य भेदा नव त्विमे ॥ २३२ ॥**
**सारसो भ्रमरो हंसः कुररश्चन्द्रलेखकः ।**
**कुञ्जरस्तिलको हंसक्रीडोऽप्यथ मयूरकः ॥ २३३ ॥**

**स्वरैरित्यादि** । एकः प्रथम उद्ग्राहध्रुवयोः स्वरैर्बद्धः स्यादित्यर्थः । अन्यो द्वितीयः पूर्ववत्प्रयोगैर्बद्धः स्यात् । परौ तृतीयचतुर्थौ सोभयानुभयौ । तृतीयः सोभयः । उभयैः स्वरैः प्रयोगैश्च सहितः । तृतीये स्वरैरुद्ग्राहः प्रयोगैर्ध्रुवः कर्तव्य इत्यर्थः । चतुर्थोऽनुभयः । स्वरप्रयोगाभ्यां रहितः । चतुर्थे पदैरेवोद्ग्राहध्रुवौ कर्तव्यावित्यर्थः । एतेषु पदैराभोगः कर्तव्य इत्यर्थः। **प्राकृत इत्यादि** । असौ द्विपथकः प्राकृतपदविषयश्चेत्तदा दोहसंज्ञो भवति । संस्कृते द्विपथसंज्ञो दोधकसंज्ञो वेत्यर्थः । नन्वत्र स्वरमुक्तिक इत्युक्तम् । चतुर्णां मध्ये द्वयोरेव स्वरा उक्तास्तन्नोपपद्यते । द्वयोस्तु नोक्तास्तत्र कथमिति चेत् । सत्यम् । तत्र भेदद्वयेऽप्युद्ग्राहस्य स्वरबद्धत्वाद्भेदान्तरे स्वराभावेऽपि स्वरशब्देन तत्रोद्ग्राह उपलक्ष्यते । नोद्ग्राहे न्यासः स्यादित्यभिप्रायाददोषः । **तस्य भेदा इत्यादि** । तस्य द्विपथस्येमे तु वक्ष्यमाणाः सारसादयस्तु नव [ भेदा ] भवन्ति ॥ २३२ ॥ २३३ ॥

सारसादीनां लक्षणान्याह—

**त्रयोदशायुजि समे मात्रा द्वादश सारसे ।**
**ओजेऽङ्घ्रौ मनवो मात्रा भ्रमरे रवयः समे ॥ २३४ ॥**
**मात्राः पञ्चदशायुग्मे हंसे युग्मे त्रयोदश ।**
**त्रयोदशायुजि कलाः कुररे मनवो युजि ॥ २३५ ॥**
**ओजे कलाश्चन्द्रलेखे तिथयो रवयः समे ।**
**त्रयोदशायुजि कलाः कुञ्जरे तिथयः समे ॥ २३६ ॥**
**मात्राः पञ्चदशायुग्मे तिलके मनवः समे ।**
**त्रयोदशासमे हंसक्रीडे युग्मे कलाः कलाः ॥ २३७ ॥**

**त्रयोदशेत्यादिना** । सारसेऽयुजि विषमपादे त्रयोदश मात्राः । छन्दोगतत्वादेव मात्राशब्देन लघ्वक्षरमुच्यते । तालगतत्वे तु पञ्चलघ्वक्षरोच्चारमितकालो द्रष्टव्यः । समे पादे द्वादश मात्रा भवन्ति । भ्रमरादीनां लक्षणानि ग्रन्थत एव सुबोधानि । तत्र वसव इत्यादीनां शब्दानामष्टादिसंख्यापरत्वं तु प्रसिद्धमेव । एते सारसादयो नव भेदाः प्रथमोक्तेषु चतुर्षु भेदेषु प्रत्येकं योजनीयाः ॥२३४ ॥ २३५ ॥ २३६ ॥ २३७ ॥

यद्येषामर्धयोरन्ते पञ्चादिलघुभिः शिखा।
तं शिखाद्विपथं प्राहुर्मयूरमपि सूरयः।
एतेषु व्यत्ययेनापि चरणानां स्थितिर्भवेत् ॥ २३८ ॥

**यद्येषामित्यादि**। एषां भेदानामर्धयोरन्ते वा मध्येऽपि वा पादान्ते वेत्यर्थः। पञ्चादिलघुभिः। आदिशब्देन षट्सप्तादयो गृह्यन्ते। यथा पादमितिमात्राधिकं न भवति तथा शिखा कर्तव्येति भावः। **एतेष्वित्यादि**। एतेषु शिखाद्विपथेषु चरणानां पादानाम्। **व्यत्ययेनापीति**। विषमपादोक्तमात्रासंख्या समपादे भवेत्। समपादोक्तमात्रासंख्या विषमपादे भवेदित्यर्थः ॥ २३८ ॥

भवन्त्येकादिपादानां सकृद्द्विर्गानभेदतः।
द्विपथा भूरिभेदास्ते लक्ष्या लक्ष्येषु सूरिभिः ॥ २३९ ॥
इति द्विपथः।

**भवन्तीत्यादि**। एकादिपादानां सकृद्द्विर्गानभेद[त] इति। एकपादस्य प्रथमपादस्येत्यर्थः। तस्य सकृद्गानमितरेषां द्विर्गानं प्रथमस्य द्विर्गानमितरेषां सकृद्गानम्। एवं प्रथमद्वितीययोः सकृद्गानं द्विर्गानं च पूर्ववद्द्रष्टव्यम्। तथा त्रयाणां चतुर्णामपि। एवं गानभेदतो द्विपथा भूरिभेदा भवन्तीत्यन्वयः। एते भेदा लक्ष्येषु लक्ष्या नामोद्देशादिना न लक्ष्यन्त इत्यर्थः। अयं मेलापकाभावात्रिधातुश्छन्दोनियमान्नियुक्तः क्वचित्स्वरपदतालबद्धत्वात्त्र्यङ्गो भावनीजातिमान्। क्वचित्पदतालबद्धत्वाद्व्यङ्गस्तारावलीजातिमान्। अत्र प्रबन्धस्यैकाङ्गतापत्तेः सप्रयोगानुभयौ तालहीनौ कर्तव्यौ। तेन तालहीनः सतालो वेति विकल्पो भागव्यवस्थया द्रष्टव्यः। यथा सप्रयोगानुभयौ सतालावेव सस्वरसोभयौ तालहीनौ सतालाविति सर्वं समञ्जसम् ॥ २३९ ॥

इति द्विपथः।

अथ कलहंसं लक्षयति—

छन्दसः कलहंसस्य पादैरन्ते स्वरान्वितैः।
कलहंसः स्वरे न्यासो गेयो झम्पादितालतः ॥ २४० ॥

**छन्दसः कलहंसस्येत्यादि**। कलहंसस्य च्छन्दसो लक्षणं भारतीये जगत्यां नकुटभेदेषु मुनिनोक्तं यथा—

द्वितीयसप्तमान्त्यं चतुर्थकं(र्थं) [यदा] गुरुर्यदा च षष्ठो दशमोऽपि वा।
अथोदिता हि पादे त्वथ जागते भवेदिदं तु हंसाख्यमिति स्मृतम् ॥

इदमेव लक्ष(वोदाहर)णं च। अस्यार्थः। जागते पादे द्वादशाक्षरात्मके चरणे

---

१ ख. ग. °रमिति सू°। २ ख. ग. °तालौ वेति। ३ ख. ग. स्वरान्तरैः।

द्वितीयचतुर्थषष्ठसप्तमदशमद्वादशाक्षराणि यदा गुरवो भवन्ति तदा हंसाख्यं नाम च्छन्दः। हंसाख्यमेव कलहंसम्। तेन बद्धः प्रबन्धः कलहंस उच्यते। **अन्ते स्वरान्वितैः पादैरिति**। प्रतिपादान्तं स्वरान्प्रयुञ्ज्यादित्यर्थः। **स्वरे न्यास इति**। प्रथमपादयुक्तेषु स्वरेषु प्रथमस्वरान्कतिचिदारभ्य न्यासं कुर्यादित्यर्थः। **झम्पादितालतो गेय इति**। झम्पातालौ विरामान्तं द्रुतद्वंद्वं लघुस्तथेति झम्पातालस्य लक्षणं वक्ष्यते। आदिशब्देन तन्मात्रासंमितदेशीतालान्तरं गृह्यते॥२४०॥

**वर्णजो मात्रिकश्चेति कलहंसो द्विधा मतः।**
**गद्यात्मा चेत्स्वरान्गीत्वा ततः पदनिवेशनम्॥ २४१॥**

इति कलहंसः।

**वर्णजो मात्रिकश्चेति**। वर्णजः पद्यरूपः। मात्रिको गद्यरूपः। वर्णजस्योक्तलक्षणानुसारेण नियतगणबद्धत्वात्पद्यरूपत्वम्। मात्रिकस्यानियतगणबद्धत्वाद्गद्यरूपत्वम्। मात्रासंख्या भू( तु )तयोः समानैव। अन्यथा कलहंसप्रकृतिकत्वाभावा( व )[ प्रसङ्गा ]त्। **गद्यात्मा चेति**। मात्रिकश्चेदित्यर्थः। **स्वरान्गीत्वा ततः पदनिवेशनमिति**। प्रतिपादानामा( पादमा )दौ स्वराः प्रयोक्तव्या इत्यर्थः। अत्र प्रथमार्धमुद्ग्राहः। उत्तरार्धं ध्रुवः। पूर्ववदाभोगः पृथक्कर्तव्यः। तेनायं त्रिधातुश्छन्दस्तालनियमान्नियुक्तः स्वरपदतालबद्धत्वात्त्यङ्गो भावनीजातिमान्॥ २४१॥

इति कलहंसः।

अथ तोटकं लक्षयति—

**तोटकच्छन्दसा न्यस्तस्वरोऽङ्घ्यन्ते तु तोटकः।**
**ननु वृत्ते वक्ष्यमाणे पुनरुक्तोऽत्र तोटकः॥ २४२॥**
**सत्यं किंतु मते येषां वृत्तं वृत्ताख्यवृत्ततः।**
**तन्मते तोटकस्येह नैवास्ति पुनरुक्तता॥ २४३॥**

इति तोटकः।

**तोटकच्छन्दसेत्यादि**। तोटकच्छन्दसो लक्षणं तु ‘ तोटकं सः ’ इति। अस्यार्थः। जगत्यधिकारे प्रस्तुते यावद्भिः सकारैर्जगतीपादः पूर्यते तावन्त एव सकारा यत्र पादे भवन्ति तत्तोटकं नाम वृत्तमिति। द्वादशाक्षरात्मकस्य जगतीपादस्य चतुर्भिः सगणैः पूरितत्वाच्चत्वारः सगणास्तोटकमित्यर्थः। सूत्रे जातिविवक्षयैकवचनं द्रष्टव्यम्।

तत्रोदाहरणम्—

“ त्यज तोटकमर्थवियोगकरं प्रमदाधिकृतं व्यसनोपहतम्।
उपधाभिरशुद्धमतिं सचिवं नरनायक भीरुकमायुधिकम् ” इति॥

अत्र पादान्ते यतिः। तोटकच्छन्दसेतीत्थंभूतलक्षणे तृतीया। तेन बद्धः प्रबन्धोऽपि तोटक इत्युच्यते। अङ्घ्र्यन्ते न्यस्तस्वरस्तु। अत्र तुशब्दो यद्यर्थः। तोटकं छन्द एव प्रतिपादान्तं न्यस्तस्वरं चेत्तोटकप्रबन्ध इत्यर्थः। वक्ष्यमाणेन वृत्ताख्यप्रबन्धेनास्य पौनरुक्त्यमाशङ्क्य चोदयति--**नन्विति**। वृत्ते वृत्ताख्यप्रबन्धे वक्ष्यमाणे सत्यत्र तोटकः पुनरुक्तो भवतीति। अयमभिसंधिः। वक्ष्यमाणे वृत्ताख्यप्रबन्धलक्षणे छन्दसा येन केनापीति सामान्येन वृत्तमात्रोपादानात्तदन्तर्भूतत्वेन तोटकस्यापि तत्र प्राप्तेरत्र पृथग्वचनं पुनरुक्तेति। किंचात्र तोटक इत्युपलक्षणम्। तेन कन्दतुरगलीलाक्रौञ्चपदार्यागाथाद्विपथकलहंसानां छन्दोरूपाणां वृत्तेऽन्तर्भावात्तेषामपि पुनरुक्तेति चोद्यार्थः। अर्धाङ्गीकारेण परिहरति--**सत्यमिति**। अनङ्गीकारे विशेषं दर्शयति--**किंत्विति**। येषां मते वृत्ताख्यवृत्ततो वृत्तं भवेत्। वृत्ताख्यवृत्तस्य लक्षणं तु--'ग्लिति वृत्तम्' इति। अस्यार्थः। कृतौ छन्दसि विंशत्यक्षरात्मके यस्य पादे गकारलकाराः क्रमेण विंशतिर्भवन्ति तद्वृत्तं वृत्तं नामेति। तत्रोदाहरणम्--

'गात्रदुःखकारि कर्म निर्मितं भवत्यनर्थहेतुरत्र।
तेन सर्वमात्मतुल्यमीक्ष्यमाणमुत्तमं सुखं भजस्व।
विद्धि बुद्धिपूर्वकं ममोपदेशवाक्यमेतदादरेण।
साधुवृत्तमुत्तमं महाकुलप्रसूतमेति नो हि जन्म' इति।

पादान्ते यतिः। येषामाचार्याणां मत एवंविधेन वृत्ताख्यवृत्तेन वृत्तप्रबन्धो भवति तन्मत इह प्रबन्धविषये तोटकस्य पुनरुक्तता [ ना ]स्त्येवेति। अत्रापि तोटकस्येत्युपलक्षणम्। तेन पूर्वोक्तानां कन्दादीनामपि पुरुक्तता नास्त्येवेति परिहारार्थः। एतेन मतान्तरे वृत्तप्रबन्धस्य वृत्तसामान्यविषयत्वे तु तोटकादीनां पुनरुक्तैवेति दर्शितं भवति। अत्र तोटकस्य पूर्वार्धमुद्ग्राहः। उत्तरार्धं ध्रुवः। पूर्ववत्पदैराभोगः कर्तव्यः। तेनायं त्रिधातुश्छन्दोनियमान्नियुक्तः स्वरपदतालबद्धत्वात्त्र्यङ्गो भावनीजातिमान् ॥ २४२ ॥ २४३ ॥

**इति तोटकलक्षणम्।**

अथाऽऽलिक्रमप्रबन्धानां क्रमो न विवक्षित इति दर्शयितुमुद्देशक्रममुल्लङ्घ्य घटं लक्षयति--

**तेनैरर्धं द्विपद्यर्धं घटे तेनकमुक्तिके ॥ २४४ ॥**

**इति घटः।**

---

१ एतदनु मूले क्वचिदेतल्लक्षणं व्युत्क्रमेण मूले स्यादित्यनुमीयते[?]।

**तेनैरित्यादि** । तेनकमुक्तिक इति विधेयविशेषणम् । घटे तेनके न्यासः कर्तव्य इत्यर्थः । **तेनैरर्धमिति** । द्विपद्यां पादे छः पञ्च भा गोऽन्त इत्यादिना यावन्मात्रमर्धमुक्तं तावन्मात्रमेव पूर्वार्धमुद्ग्राहसंज्ञकं घटे तेनैर्बद्धं कर्तव्यमित्यर्थः । द्विपद्यर्धमिति प्रत्यासत्तेरयमर्थोऽवगम्यते । अन्यथा सापेक्षसा(स्या)-र्धशब्दस्य प्रतिसंबन्ध्यभाविनाऽऽकाङ्क्षाया अपूरणाद्द्विपद्यर्धमिति तादृशमेव द्वितीयमर्धं द्विपद्यामिव पदैर्बद्धं कर्तव्यमित्यर्थः । किंच 'अर्धान्तेऽन्ये स्वरानाहुः' इत्यनेनात्रापि वैकल्पिकस्वरप्रयोगो द्रष्टव्यः । त्रिधातुत्वादिकं द्विपदीवद्द्रष्टव्यम् ॥ २४४ ॥

इति घटलक्षणम् ।

अथ वृत्तं लक्षयति—

**छन्दसा येन केनापि तालेनेष्टेन गीयते ।**
**वृत्तं तस्य च पादान्ते वृत्तान्ते वा स्वरान्क्षिपेत् ॥२४५॥**
**स्वरहीनं तदित्यन्ये वृत्तं छन्दसि चापरे ।**
**+छन्दश्चित्यां विचेतव्याश्छन्दसां बहवो भिदाः ॥ २४६ ॥**

इति वृत्तम् ।

**छन्दसा येन केनापीति** । **छन्दश्चित्येति** । छन्दोविचितिसंज्ञकेन ग्रन्थेनेत्यर्थः । **विचेतव्या इति** । अत्र समार्धसमविषमवृत्तप्रकरणेषु विचित्योपादेया इत्यर्थः । सुगममन्यत् ॥ २४५ ॥ २४६ ॥

इति वृत्तम् ।

अथ मातृकां लक्षयति—

**एकैकमातृकावर्णपूर्वकाणि पदानि चेत् ।**
**क्रमेण परिगीयन्ते मातृका सा त्रिधा मता ॥ २४७ ॥**
**दिव्या च मानुषी दिव्यमानुषी चेति तत्र तु ।**
**दिव्या संस्कृतया वाचा मार्गतालैश्च गीयते ॥ २४८ ॥**
**मानुषी प्राकृतगिरा देशीतालैश्च निर्मिता ।**
**उभयोर्मिश्रणादुक्ता मातृका दिव्यमानुषी ॥ २४९ ॥**

**एकैकेत्यादि** । **एकैकमातृकावर्णपूर्वकाणीति** । मातृका वर्णाः । मातृका[या?] मन्त्रस्य वर्णा अकारादिक्षकारान्तास्तेष्वेकैकवर्णपूर्वकाणि क्रमेणाकारादिक्रमेण प्रथममकारादि पदं द्वितीयमाकारादि तृतीयमिकारादि चतुर्थमीकारादि

+'छन्दश्चित्या' इति टीकाकारसंमतः पाठः ।

पञ्चममुकाराद्येवं क्रमेण क्षकारादिपदपर्यन्तं पदानि गीयन्ते चेत्सा मातृका। **उभयोर्मिश्रणादिति** । संस्कृतप्राकृतवाचोर्मार्गदेशीतालयोश्च सहप्रयोगादित्यर्थः । मिश्रणं च द्विधा संभवति । एकैकपदान्तरितत्वेन संस्कृतप्राकृतवाचोर्मार्गदेशीतालयोश्च प्रयोगेण वोद्ग्राहे संस्कृतवाङ्मार्गतालयोर्ध्रुवे प्राकृतवाग्देशीतालयोश्च प्रयोगेण वोभयोरेकतरेण प्रकारेण मातृका दिव्यमानुषीत्युक्तम् ॥ २४७ ॥ २४८ ॥ २४९ ॥

**अनिबद्धा निबद्धा च द्विधा सा गद्यपद्यजा ।**
**सर्वमन्त्रमयी ह्येषा सर्वसिद्धिप्रदायिनी ।**
**गातव्या नियतैर्नित्यं गीर्वाणगणवल्लभा ॥ २५० ॥**

**इति मातृका ।**

**अनिबद्धेत्यादि** । सा त्रिविधा मातृकाऽनिबद्धा छन्दोहीना सती गद्यजेत्युच्यते । निबद्धा छन्दोबद्धा सती पद्यजेति । अत्रोद्ग्राहादिविभागस्त्वकारादीनि षोडश पदान्युद्ग्राहत्वेन गेयानि । ककारादीनि पञ्चत्रिंशत्पदानि ध्रुवत्वेन गेयानीति । आभोगस्तु दिव्यादिभेदानुसारेणानियतवर्णपूर्वकैः संस्कृतादिपदैर्गातृनेतृप्रबन्धनामाङ्कितो गातव्यः । तेनायं प्रबन्धस्त्रिधातुः । तालादिनियमान्निर्युक्तः पदतालबद्धत्वाद्व्यङ्गस्तारावलीजातिमान् ॥ २५० ॥

**इति मातृकालक्षणम् ।**

अथ भेदनिर्देशपूर्वकं रागकदम्बं लक्षयति—

**नन्द्यावर्तः स्वस्तिकश्च द्विधा रागकदम्बकः ।**
**चतुर्वृत्तश्चतुस्तालो रागराजिविराजितः ।**
**नन्द्यावर्तो भवेत्तस्य तालमानद्वयेन वा ॥ २५१ ॥**

**नन्द्यावर्तेत्यादि** । अत्र नन्द्यावर्तस्य लक्षणमाह—**चतुर्वृत्त इत्यादिना** । चतुर्वृत्तश्चत्वारि वृत्तानि यस्य सः । **चतुस्ताल इति** । प्रतिवृत्तं भिन्नतालः कर्तव्य इत्यर्थः । **रागराजिविराजित इति** । प्रतिपादं प्रत्यर्धं वा प्रतिवृत्तं वा रागभेदः कर्तव्य इत्यर्थः । **तालमानद्वयेनेति** । यस्मिन्वृत्ते यस्तालः प्रयुक्तस्तस्य तालस्य मानं प्रमाणं तद्द्वयेनाऽऽवृत्तिद्वयेनेत्यर्थः ॥२५१॥

अरुच्या पक्षान्तरमाह—

**उद्ग्राहेणाथवा न्यासो गद्येनैनं परे जगुः ॥ २५२ ॥**

**उद्ग्राहेणाथवेति** । अत्रेयमरुचिः । यत्राल्पमात्रो झम्पादितालः प्रयुज्यते तत्र तालमानद्वयेन न्यास उपपद्यते । यत्र त्वधिकमात्रः सिंहनन्दनादिः प्रयुज्यते तत्र

नोपपद्यत इत्युद्ग्राहमारभ्य न्यासश्चेदुभयत्राप्युपपद्यत इति भावः । एवं रागकदम्बं पर आचार्या गद्येन जगुरिति मतभेदो दर्शितः ॥ २५२ ॥

स्वस्तिकस्य लक्षणमाह—

**तालेनैकेन केचित्तु स्वस्तिको द्विगुणस्ततः ।**
**अब्जपत्रोऽब्जगर्भश्च भ्रमराम्रेडितौ मते ।**
**केषांचित्पूर्वपूर्वस्माद्द्विगुणः स्यात्परः परः ॥२५३॥**

**इति रागकदम्बकः ।**

**स्वस्तिक इत्यादि** । ततो नन्द्यावर्तात् । द्विगुण इत्यष्टवृत्तोऽष्टतालोऽष्टरागो वेत्यर्थः । **अब्जपत्र इत्यादि** । केषांचिन्मत उक्तलक्षणः स्वस्तिक एवाब्जपत्र इत्युच्यते । **परः पूर्वस्माद्द्विगुण इति** । अयमर्थः । पूर्वस्मादब्जपत्रात्परोऽब्जगर्भो द्विगुण इति षोडशवृत्तः षोडशतालः षोडशराग इत्यर्थः । अब्जगर्भाद्भ्रमरो द्विगुण इति द्वात्रिंशद्वृत्तो द्वात्रिंशत्तालो द्वात्रिंशद्राग इत्यर्थः । भ्रमरादाम्रेडितो द्विगुण इति चतुःषष्टिवृत्तश्चतुःषष्टितालश्चतुःषष्टिराग इत्यर्थः । अब्जपत्रादीनां स्वस्तिकभेदानां चतुर्णामपि मतान्तरेण गद्यरूपमप्यवगन्तव्यम् । अत्रोद्ग्राहाद्यवयवविभागस्तु प्रतितालं प्रतिरागं पद्ये वा गद्ये वा पूर्वार्धमुद्ग्राह उत्तरार्धं ध्रुवः । एवं रागतालाश्रयत्वेन यावन्तो गद्यरूपाः पद्यरूपा वा गीयन्ते तावन्तोऽवयवभूता द्विधातवः । अवयवी तु रागकदम्बाख्यो महाप्रबन्धः । यथा परार्थानुमाने प्रतिज्ञादीनामवान्तरवाक्यादीनां समुदाय एव पञ्चावयववाक्यमित्युच्यते तदपेक्षया प्रतिज्ञादीनि यथा तत्र पदानीत्युपचर्यन्ते तथाऽत्रापि तालादियुता यावन्तो रागास्तावन्ति पदानीत्युपचारादुच्यन्ते । अवयवकृतं लिङ्गं समुदायस्यापि विशेषकं भवति तद्वदिति भावः । अत्राऽऽभोगाभावेऽप्यन्तिमे रागे पदैर्गातृनेतृप्रबन्धनामाङ्कितः कर्तव्यः । तत्रोद्ग्राहध्रुवयोः स्वरादिकाङ्गनियमस्यानुक्तत्वेन तदभावाद्वाग्गेयकारेच्छयाऽत्राङ्गयोजना कर्तव्येति लक्ष्यतेऽप्यवगम्यते । तथा हि **गोपालनायकेन** । गीतद्वाविं(त्रिं)शद्रागा(ग?)नामयुक्ते गद्यात्मके भ्रमराख्ये स्वस्तिकभेदे रागकदम्बे प्रथमसिंहनन्दनतालबद्धे मालवश्रीपदे पदतालावेवोद्ग्राहध्रुवयोर्योजिताविति व्यङ्गत्वम् । तथा दर्पणतालयुक्ते वेलावलीपदे पदाभावात्पञ्चाङ्गता धनासीपदादिषु क्वचिद्बिरुदाभावात्पञ्चाङ्गता, इतरेषु तु षडङ्गत्वमित्यनियताङ्गत्वान्मेदिन्यादिजातिमान् । छन्दस्तालाद्यनियमादनिर्युक्तः । अ[त्र] वृत्ततालरागाणां प्रत्येकं बाहुल्याविशेषेऽपि रागाणां प्राधान्याद्रागकदम्बव्यपदेशो न तालकदम्बव्यपदेशो न वृत्तकदम्बव्यपदेशो वा । यद्वा वृत्ततालयोश्चतुर्वृत्तश्चतुस्ताल इत्यादिनियममारभ्य चतुःषष्टिवृत्ततालपर्यन्तं नियमस्योक्तत्वाद्रागराजिविराजित इत्यनियमद्योतकेन चतुःषष्टिनियमापेक्षया प्रतिवृत्तं प्रत्यर्धं प्रति-

१ ग. °ता धनाश्रीप° ।

पादं राजिपदसामर्थ्याद्रागाणामा(म)धिक्य(क)त्वेऽपि न दोष इति दर्शितम् । तादृगर्थद्योतकत्वाद्रागकदम्बो व्यपदिश्यते न वृत्तकदम्बो न तालकदम्बो वा ॥ २५३ ॥

इति रागकदम्बलक्षणम् ।

अथ पञ्चतालेश्वरं लक्षयति—

**आलापः प्रागतालः स्यात्पृथग्द्विः पदपञ्चकम् ।**
**चच्चत्पुटेन तेनैव स्वराः पाटास्ततः परम् ॥ २५४ ॥**

**आलापः प्रागतालः स्यादिति** । अताल इति विशेषणेनात्राऽऽलापशब्देन रागालाप उच्यते । न गमकालप्तिः । तस्या अप्यालापशब्दवाच्यत्वेन वक्ष्यमाणत्वेऽपि सतालत्वात् । प्राक्प्रथममतालस्तालरहित आलापो गेय इत्यर्थः । चच्चत्पुटेन 'ताले चच्चत्पुटे ज्ञेयं गुरुद्वंद्वं लवुप्लुतम्' इति लक्षितेन । **पृथक्पदपञ्चकं द्विरिति** । पृथगिति भिन्नधातुकमित्यर्थः । तादृशं पदपञ्चकं द्विवारं गेयमित्युक्तं भवति । **तेनैवेति** । चच्चत्पुटेनैवेत्यर्थः । **स्वराः पाटा इति** । स्वराः सरिगादयः । पाटा वाच्याक्षराणि । अयमर्थः । आलापान्तरमेकं पदं गीत्वा तदवयवत्वेन स्वरान्पाटांश्च गायेत् । अनन्तरं द्वितीयं पदं गीत्वा पूर्ववत्स्वरान्पाटान्गायेत् । एवं पदपञ्चकं गातव्यमित्येतदपि पृथक्पदेन द्योत्यत इति । अत्र स्वरपाटयोः क्रमो न विवक्षितः । तेन क्वचित्प्रथमं पाटान्गीत्वा ततः स्वरा गातव्या इति मन्तव्यम् । एवं च पञ्चमपदानन्तरं पाटान्गीत्वा स्वरेषु प्रयुक्तेषु सत्सु वक्ष्यमाणस्य पाटात्मकान्तरस्य पदावयवस्य च पाटस्य प्रत्यासत्त्या प्रतीतं सांकर्यं परिहृतं भवति । स्वरैर्व्यवहितत्वादिति भावः । **ततः परमित्यादि** ॥ २५४ ॥

**द्विचच्चत्पुटमानेन पाटैः पटहसंभवैः ।**
**कार्योऽन्तरस्ततश्चाचत्पु(पु)टेन पदपञ्चकः ॥ २५५ ॥**
**तद्वृत्तेन स्वराः पाटास्तद्विमानेन चान्तरः ।**
**हुडुक्कपाटैस्तदनु षट्पितापुत्रकेण च ॥ २५६ ॥**
**पृथक्पदानि पञ्च द्विस्तेनैव स्वरपाटकम् ।**
**तद्विमानाच्छङ्खपाटैरन्तरः स्यात्ततस्तु षट् ॥ २५७ ॥**
**प्रत्येकं द्विः पदानि स्युः संपक्वेष्टाकतालतः ।**
**ततस्तद्वत्स्वराः पाटास्तद्विमानेन चान्तरः ॥ २५८ ॥**

**द्विचच्चत्पुटमानेनेति** । चच्चत्पुटस्याऽऽवृत्तिद्वयेनेत्यर्थः । **पटहसंभवैः पाटैरिति** । 'ङवर्जितः कवर्गश्च टतवर्गौ रहावपि' इति वक्ष्यमाणैरक्षरैरन्तराख्यो

१ ख. ग. °दपङ्कजः । च° । च. °दपञ्चकम् । च° । २ ग. घ. तत्तालाः स्युः स्वराः ।

गीतावयवः कार्यः। एवमन्तरे पाटनियमस्य कृतत्वादनन्तरोक्तानां पाटानामनियमो वेदितव्यः। तेन यस्य कस्यापि वाद्यस्यानुकरणाक्षराणि शुद्धानि मिश्राणि वा तत्र प्रयोक्तव्यानीत्यर्थः। एवं वक्ष्यमाणेष्वन्तरेषु तालावृत्तिनियमात्सस्वरपाटेषु पदेषु तालावृत्तिनियमो न विद्यत इति मन्तव्यम्। **ततश्चाचपुटेनेत्यादि।** तद्वदित्यतिदेशेनात्र पृथग्द्विरित्यनुषञ्जनीयम्। **हुडुक्कपाटैरित्यादि।**

'कुर्वीत पाटहान्वर्णानिह ङकारवर्जितान्।
अत्रान्यैरधिकावुक्तौ मन्द्रकारौ मनीषिभिः' इति।

वक्ष्यमाणैर्हुडुक्कोद्भवैः। **तदन्विति।** **स्वरपाटकमिति।** द्वंद्वकवद्भावान्नपुंसको निर्देशः। **शङ्खपाटैरिति।** धुंधुंथोदिगित्यादि प्रचुरैर्वर्णैः। **ततस्तु षडिति।** अत्र तुशब्दः संपक्केष्टाकस्य पूर्वेभ्यस्तालेभ्यो विशेषद्योतनार्थः। सोऽप्यत्र षट्पदानीत्येतत्॥ २५५॥ २५६॥ २५७॥ २५८॥

**कांस्यतालोद्भवैः पाटैरथोद्घट्टे पदानि षट्।**
**प्राग्वत्तथा स्वराः पाटाः पाटैर्मुरजसंभवैः॥ २५९॥**
**अन्तरः पूर्ववत्पश्चादाभोगश्चाविलम्बितः।**
**प्रबन्धनाम्ना प्राङ्मानं नेतृनामाथ मङ्गलम्।**
**वाक्यमालापके न्यासः पञ्चतालेश्वरो भवेत्॥ २६०॥**

**कांस्यतालोद्भवैरिति**[1]। ततकटप्रमुखैर्वर्णैः। **उद्घट्ट इत्यादि।** **मुरजसंभवैरिति।** तकितोटेमित्येतत्प्रधानैः पटहाक्षरैरित्यर्थः[2]। **पूर्ववदिति।** तालद्विमानेनेत्यर्थः। **तस्मादित्यादि।** तस्मादन्तरादनन्तरम्। **आभोगश्चेति।** चकारेणाऽऽभोगोऽप्युद्घट्टेन गीयत इत्यर्थः। **अविलम्बित इति।** विलम्बादत्यन्तविलक्षणेन द्रुतलयेन प्रयुक्त इत्यर्थः। लोकेऽप्यविलम्बाचिरशब्दाभ्यां शीघ्रप्रतीतेः। एतेन पदेष्वन्तरेषु च मध्यो वा विलम्बो वा लयः कर्तव्य इत्यवगम्यते। एवमाभोगः प्रबन्धनाम्नोपलक्षितो गेयः। अत्रैव गातृनामापि कर्तव्यमित्यनुक्तमपि गम्यते। कुतः। अमुकः प्रबन्धोऽनेन गीत इति तत्कर्तृत्वसंगतेः। **नेतृनामप्राङ्मानमिति।** प्रथममुद्घट्टपदेषु तदन्तरेषु च यन्मानं कृतं तन्मानयुक्तं स्तुत्यनाम कर्तव्यमित्यर्थः। **अथ मङ्गलं वाक्यमिति।** तेनेतिशब्दप्रयोग उच्यते। मङ्गलस्य ब्रह्मणः प्रकाशकत्वेनोक्तत्वात्तस्यापि मङ्गलत्वमुपचारान्मङ्गलप्रकाशकं वाक्यमित्यर्थः। एकस्यापि तेनशब्दस्य बहुशः प्रयोगादनेकपदात्मकतया तत्समुदायस्य वाक्यवद्वाक्यत्वम्। अथवाऽन्विताभिधानमतेन वाक्यत्वं द्रष्टव्यम्। **आलापके न्यास इति।** प्रबन्धादावारब्धमालापमारभ्य गीतमोक्षः कर्तव्य इत्यर्थः। पञ्चभिश्चच्चत्पुटादिभिर्मार्गतालैः प्रयुक्तत्वात्प्रबन्धेषूत्कृष्टतयेश्वर इत्युक्तः॥ २५९॥ २६०॥

---

1 ख. एवं मतान्त°। २ ख. ग. °त पटहा°। ३ छ. °ति। न हि क प्र°।

**वीरावतारः शृङ्गारतिलकश्चेति स द्विधा।**
**वीरशृङ्गारयोस्तेन प्रीयन्ते सर्वदेवताः ॥ २६१ ॥**
**इति पञ्चतालेश्वरः।**

**वीरावतार इत्यादि। वीरशृङ्गारयोरिति।** वीररसे गीतो वीरावतारः। शृङ्गाररसे गीतः शृङ्गारतिलकः। **तेन प्रीयन्त इति।** तेन पञ्चतालेश्वरेण। चाचपुटादीनां लक्षणानि तालाध्यायादेवावगन्तव्यानि। अत्र पञ्चसु तालेषु मिलित्वा सस्वरपाटादीनि पदानि सप्तविंशतिः। तत्तत्तालपदान्तरेष्वन्तरास्तत्तत्ताला: पाठनिर्मिताः पञ्च। एतेष्वालापान्तराणि दश पदान्युद्ग्राहः कल्पनीयः। इतराणि ध्रुवः कल्पनीयः। आभोगस्तूक्त एव। तेनायं त्रिधातुः। अथवाऽन्तरशब्देनात्र पृथगवयवो गृह्यते। तदा प्रतितालमाद्यपदद्वयमुद्ग्राहः। उत्तरपदत्रयं ध्रुवः। ध्रुवानन्तरमन्तरः। यद्यपि तस्य सालगसूडस्थरूपकेष्वेति नियमस्तथाऽप्यत्र वचनप्रामाण्याद्भविष्यन्ती(ती?)ति। त्रिधातवोऽवान्तरप्रबन्धाः पञ्च। महाप्रबन्धस्त्वाभोगेन सह चतुर्धातुरित्यवगन्तव्यः। तालनियमान्नियुक्तो बिरुदहीनत्वात्पञ्चाङ्ग आनन्दिनीजातिमान् ॥ २६१ ॥

इति पञ्चतालेश्वरः।

इत्यालिक्रमप्रबन्धाः।

अथ तालार्णवं लक्षयति—

**तालार्णवो भूरितालः स द्वेधा गद्यपद्यतः ॥ २६२ ॥**
**इति तालार्णवः।**

**तालार्णव इत्यादि। भूरिताल इति।** भूरिता(रयस्ता)ला यस्येति सः। अत्रैकाऽऽवृत्तिर्मता तालानां बाहुल्यं विवक्षितमिति भूरितालेभ्योऽपि पञ्चतालेश्वरादिभ्योऽस्य भेदो द्रष्टव्यः। तत्र कामतः केषुचित्तालेषूद्ग्राहः केषुचिद्ध्रुवः कर्तव्य इति मन्तव्यम्। आभोगो गातृनेतृप्रबन्धनामाङ्कितः कर्तव्यः। तत्र भूरितालत्वनियमाभावोऽपि द्रष्टव्यः। तेनायं त्रिधातुः। तालाद्यनियमादनिर्युक्तः। अत्र पदादिनियमस्यानुक्तत्वात्कामतः षडादिद्व्यन्ताङ्गबद्धः कर्तव्यः। अतो रागकदम्बवन्मेदिन्यादिजातिमान् ॥ २६२ ॥

**इति तालार्णवः।**

**इत्यालिक्रमप्रबन्धलक्षणानि।**

अथ विप्रकीर्णेषु प्रथमोद्दिष्टं श्रीरङ्गं लक्षयति—

**तालै रागैश्चतुर्भिः स्याच्छ्रीरङ्गोऽन्ते पदान्वितः ॥ २६३ ॥**
**इति श्रीरङ्गः।**

तालैरिति । चतुर्भिरिति प्रत्येकं संबध्यते । चतुर्भिस्तालैश्चतुर्भी रागैश्चतुर्भिर्गीतैरिति । अन्ते पदान्वित इति । सर्वाङ्गकाम इति वक्ष्यमाणत्वात्स्वरादिषु षडङ्गेष्वेवान्ते पदं प्रयोक्तव्यमिति नियमः क्रियते । तेन स्वरादीनीतराणि वाञ्छितक्रमेण प्रयोक्तव्यानीति दर्शितं भवति । एवं प्रतिरागं पदान्तत्वेन षडङ्गयोजना कर्तव्या । अत्रोद्ग्राहादिविभागः प्रबन्धादिनामाङ्कश्च रागकदम्बवत्कर्तव्यः तेनायं त्रिधातुस्तालाद्यनियमादानिर्युक्तः । अत्र चतुर्भिस्तालै रागैरिति संख्याया एव नियमो न स्वरूपनियमः । अतस्तालादिनियमशङ्का न कर्तव्या । षडङ्गबद्धत्वान्मेदिनीजातिमान् ॥ २६३ ॥

इति श्रीरङ्गः ।

अथ श्रीविलासं लक्षयति—

स्वरान्तः श्रीविलासः स्यात्ताले रागैश्च पञ्चभिः ॥२६४॥

इति श्रीविलासः ।

स्वरान्त इत्यादि । स्पष्टार्थः । अनुक्तमन्यच्छ्रीरङ्गवदनुसंधेयम् ॥२६४॥

इति श्रीविलासः ।

अथ पञ्चभङ्गी(ङ्गि)पञ्चाननौ लक्षयति—

तेनकान्तः पञ्चभाङ्गिः पाटैः पञ्चाननोऽन्तगैः ॥ २६५ ॥

रागाभ्यामपि तालाभ्यां

इति पञ्चभाङ्गिपञ्चाननौ ।

तेनकान्त इति । अन्तिमैस्तेनकैः पञ्चभाङ्गिः । अन्तिमैः पाटैः पञ्चाननः स्यात् । रागाभ्यां तालाभ्यामित्युभयोर्योजनीयम् । इतरत्तु पूर्ववत् ।

इति पञ्चभङ्गिपञ्चाननयोर्लक्षणे ।

अथोमातिलकं लक्षयति—

स्यादुमातिलकः पुनः ।

विरुदान्तस्त्रिभिस्ताले रागैः सर्वाङ्गिका इमे ॥ २६६ ॥

इत्युमातिलकः ।

स्यादुमातिलक इत्यादि । स्पष्टार्थः । पूर्ववदन्यत् । अत्र केचन श्रीरङ्गादीनां पदाद्यन्तत्वमात्रानियमेनेतराङ्गक्रमस्यानुक्तत्वात्कूटतानवत्प्रस्तारं कल्पय-

न्ति । अत्र( तत्र? )स्वराणां क्रमस्य सिद्धत्वात्तच्छोभते । अत्र त्वङ्गानां तद्भावादभित्तिचित्रप्रायमेतत् ॥ २६५ ॥ २६६ ॥

इत्युमातिलकः ।

अथ त्रिपदीं लक्षयति—

**आद्यौ द्विद्विगणौ पादौ तृतीयश्च चतुर्गणः ।**
**चतुर्थस्त्रिगणः पादेष्वेकादश गणा इमे ॥ २६७ ॥**

**आद्यावित्यादि** । आद्यौ प्रथमद्वितीयौ पादौ । **द्विद्विगणाविति** । द्वौ द्वौ गणौ ययोस्तौ । अत्र वीप्सया प्रत्येकं द्विगणावित्यर्थः । शेषाः स्युर्मान्मथा गणा इति वक्ष्यमाणत्वात्पादद्वयेऽपि चत्वारो मान्मथगणा भवन्ति । ते च " एवं मध्याभवाभेदा अष्टौ कामगणाः स्मृताः " इति प्रागेवोक्ताः । **तृतीयश्चेति** । तृतीयपादश्चतुर्गणः । चकारेणात्रापि कामगणा इत्यवगम्यते । अत्र रतेः षष्ठ इति वक्ष्यमाणत्वाद्द्वितीयो रतिगणः । इतरे त्रयोऽपि कामगणाः । **चतुर्थ इत्यादि** । चतुर्थः पादश्च त्रिगणः । चकारेणात्रापि कामगणा इति गम्यते । तत्र दशमश्चेति वक्ष्यमाणत्वादत्र पादे द्वितीयो रतिगण इतरौ कामगणौ । **एकादशेत्यादि** । इम इति पादचतुष्टयेऽप्युक्ताः संभूयैकादश गणा भवन्ति ॥ २६७ ॥

**रतेः षष्ठश्च दशमः शेषाः स्युर्मान्मथा गणाः ।**
**गीत्वाऽऽद्यपादौ तदनु किंचिच्छेषं तृतीयकम् ॥२६८॥**
**ततः समग्रं तं गीत्वा चतुर्थो यदि गीयते ।**
**तदा स्यात्त्रिपदी तालहीना कर्णाटभाषया ॥ २६९ ॥**

इति त्रिपदी ।

**रतेरित्यादि** । षष्ठो दशमश्च । रतेरिति संबन्धे षष्ठी । रतिगण इत्यर्थः । सोऽपि " अत्युक्तायास्तु चत्वारो भेदा रतिगणा मताः " इत्यत्र प्रागुक्तेषु चतुर्षु भेदेष्वेक एकः । षष्ठ इति चतुर्गणात्मकस्य तृतीयपादस्य द्वितीयो गण उच्यते । दशम इति त्रिगणात्मकस्य चतुर्थपादस्य द्वितीयो गण उच्यते । एतौ रतिगणौ कर्तव्यावित्यर्थः । **शेषा इति** । एकादशसु मध्ये षष्ठदशमौ हित्वेतरे नव गणा मान्मथाः कर्तव्या इत्यर्थः। गाने नियममाह—**गीत्वेत्यादि** । **किंचिच्छेषं तृतीयकमिति** । तृतीयपादमादौ किंचिदवशिष्टं गीत्वा ततोऽनन्तरं तृतीयपादं समग्रमशेषं गीत्वा चतुर्थः पादो गीयते चेत्सा त्रिपदी स्यात् । अस्या

१ ख. ग. तृतीयो ।

लक्षणतश्चतुष्पादप्रयुक्तत्वेऽप्याद्ययोरेकपादत्वप्रतीतेः श्रुतिकृतत्वात्तामनुरुध्य त्रिपदीव्यपदेश उपपद्यत एव । तत्राऽऽद्यं पादद्वयमुद्ग्राहः । द्वितीयं पादद्वयं ध्रुवः । विप्रकीर्णेषु ' ओव्यादयश्च चत्वारो भवन्त्याभोगवर्जिताः ' इति वक्ष्यमाणेन वचनेन चतुर्णामेवाऽऽभोगनिषेधात् । इतरेषां पुनः " अनुक्ताभोगवस्तूनां पदैराभोगकल्पना " इति वक्ष्यमाणत्वादत्र पदैराभोगः कल्पनीयः । तेनायं त्रिधातुः । गणभाषानियमान्निर्युक्तः । अस्या द्विपदीप्रकृतिकत्वात् । ' अनुक्तमन्यतो ग्राह्यम् ' इतिन्यायेन तत्रोक्तः स्वरप्रयोगोऽपि प्रबन्धतासिद्धये ध्रुवानन्तरमध्याहार्यः । अन्यथा तालादिहीनत्वेन पदैकाङ्गतया तारावल्यादिप्रबन्धजात्ययोगादप्रबन्धतैव स्यात् । अतोऽयं पदस्वरबद्धत्वाद्व्यङ्गस्तारावलीजातिमान् ॥ २६८ ॥ २६९ ॥

इति त्रिपदी ।

अथ चतुष्पदीं लक्षयति—

**समे षोडश मात्राः स्युः पादे पञ्चदशायुजि ।**
**+यस्यां भिन्नौ च यमकावर्धयोः सा चतुष्पदी ॥**
**स्वरतेनकसंयुक्ता तेनकन्याससंयुता ॥ २७० ॥**

इति चतुष्पदी ।

**सम इत्यादि** । अस्याश्चतुष्पद्याः समपादे द्वितीये चतुर्थे च प्रत्येकं षोडश मात्राः स्युः । अयुजि विषमे प्रथमे तृतीये च पादे पञ्चदश मात्रा भवन्ति । **यस्यामर्धौ भिन्नार्थयमकाविति** । भिन्नोऽर्थोऽभिधेयं यस्य तत् । भिन्नार्थ(र्थं) यमकं ययोरिति तथोक्तौ । यमकं नाम—

" अर्थे सत्यर्थभिन्नानां वर्णानां वा पुनः श्रुतिः ।
यमकं पादतद्भागवृत्ति तद्यात्यनेकताम् " ॥

इत्युक्तलक्षणम् । ननु च यमकलक्षणेनैव भिन्नार्थत्वे सिद्धे भिन्नार्थेऽपि यमकविशेषणं व्यवच्छेद्याभावाद्व्यर्थ[ता]मापद्यत इति चेत्सत्यम् । येषां मते त्वभिन्नार्थानामपि तात्पर्यभेदेन यमकत्वमङ्गी क्रियते तन्मते व्यवच्छेद्यस्य विद्यमानत्वेनार्थवत्त्वाददोषः । **अर्धाविति** । अत्रार्धयोर्मात्रासामान्येन 'अर्धं समेंऽशके' इत्यभिधानान्नपुंसकत्वे कर्तव्येऽपि स्वरतेनकयोगस्य वक्ष्यमाणत्वादर्धयोस्तद्द्वारकवैषम्यसंभवादर्धाविति पुंलिङ्गनिर्देश उपपन्नो द्रष्टव्यः । **स्वरतेनकसंयुक्तेति** । पूर्वार्धे स्वरयुक्तोत्तरार्धे तेनकयुक्तेत्यवगन्तव्यम् । एवं चा( तच्चा )र्धाविति पुंलिङ्गनिर्देशादेव ज्ञायते । **तेनकन्याससंयुतेति** । पुनस्तेनकमारभ्य न्यासं कुर्यादित्यर्थः। त्रिपद्यादीनां तिसृणां समानधर्मत्वाद्विशेषलक्षणव्यतिरेकेणैकत्रोक्तमन्यत्रानुक्तमन्यतो ग्राह्यमिति न्यायेन द्विपदीषट्पद्योरुक्तं तालहीनत्वं कर्णाटभा-

+ अत्र टीकानुरोधेन यस्यां भिन्नार्थयमकावर्धौ सा तु चतुष्पदीति पाठो भवेदिति भाति ।

षानिर्मितत्वं च चतुष्पद्यामनुक्तमपि ताभ्यामानेतव्यम् । अत्र सस्वरः पूर्वार्धं उद्ग्राहः । सतेनक उत्तरार्धो ध्रुवः । आभोगः पूर्ववत्कल्पनीयः । तेनायं त्रिधातुः । मात्रासंख्याभाषानियमान्निर्युक्तः पदस्वरतेनकबद्धत्वात्त्र्यङ्गो भावनीजातिमान् ॥ २७० ॥

इति चतुष्पदी ।

अथ षट्पदीं लक्षयति—

**षष्ठस्तृतीयस्त्रिगणः पृथग्द्विद्विगणाः परे ।**
**चत्वारश्चरणा बाणप्रान्तौ षष्ठतृतीयकौ ॥ २७१ ॥**

इति षट्पदी ।

**षष्ठ इत्यादि** । अत्र षट्सु पादेषु षष्ठस्तृतीयश्च पादस्त्रिगणो वक्ष्यमाणगणत्रययुक्तः । परे चत्वारश्चरणाः प्रथमद्वितीयचतुर्थपञ्चमाः पादाः पृथक्प्रत्येकं द्विद्विगणा वक्ष्यमाणगणद्वययुक्ताः कर्तव्याः । तमेव गणविशेषं दर्शयति—**बाणप्रान्तावित्यादिना** । षष्ठतृतीयकौ पादौ बाणप्रान्तौ बाणगणः प्रान्ते ययोस्तौ गणत्रयात्मकयोः षष्ठतृतीययोः पादयोः शेषास्तु मान्मथा गणा इति वक्ष्यमाणत्वात्प्रत्येकं प्रथमद्वितीयौ कामगणौ कृत्वा तृतीयो बाणगणः कर्तव्यः । सोऽपि तद्बाणगणभेदः प्रतिष्ठायास्तु षोडशेत्यत्र प्रागुक्तेषु षोडशस्वेकः ॥ २७१ ॥

**शेषास्तु मन्मथगणा यस्यां सा षट्पदी मता ।**
**कर्णाटभाषया तालवर्जिता नादमुक्तिका ॥ २७२ ॥**

**शेषास्त्विति** । पादषट्कं मिलित्वा च चतुर्दशसु गणेषु सप्तमचतुर्दशयोर्बाणगणत्वेनोपयुक्तयोरन्ये द्वादश गणाः शेषास्ते च कामगणाः कर्तव्या इत्यर्थः । **नादमुक्तिकेति** । नादशब्देनात्र स्थायिस्वरो विवक्ष्यते । तं सरिगादिवर्णोच्चाररहितं नादरूपमेवोच्चार्य न्यासं कुर्यादित्यर्थः । चतुष्पदीषट्पद्योर्व्यपदेशोऽन्वर्थो द्रष्टव्यः । अत्र पूर्वं पादत्रयमुद्ग्राहः । उत्तरं तु ध्रुवः । पूर्ववदाभोगः कल्पनीयः । तेनायं त्रिधातुः । गणभाषानियमान्निर्युक्तः । त्रिपदीवदन्ते स्वरप्रयोगस्य कर्तव्यत्वात्पदस्वराभ्यां द्व्यङ्गः । तारावलीजातिमान् ॥ २७२ ॥

इति षट्पदी ।

**भेदा वेद्यास्त्रिपद्यादेश्छन्दोलक्ष्माणि भूरयः ॥ २७३ ॥**

**भेदा इत्यादि** । **त्रिपद्यादेरिति** । आदिपदेन चतुष्पदीषट्पद्यौ गृह्येते । एतासां भूरयो बहवो भेदाश्छन्दोलक्ष्माणि **छन्दःशास्त्रे** शेषा वेद्यास्त्रिभिश्चतुर्भिः षड्भिश्चरणैश्चोपलक्षिता इत्यादिके वेद्या अवगन्तव्याः ॥ २७३ ॥

अथ वस्तुसंज्ञं लक्षयति—

**मात्राः पञ्चदशाऽऽद्येऽङ्घ्रौ तृतीये पञ्चमे तथा ।**
**सूर्यास्तुर्ये द्वितीये च स्वरपाटान्तमादिमम् ॥ २७४ ॥**
**अपरं स्वरतेनान्तमर्धं तदनु दोहकः ।**
**यस्य स्यात्तेनके न्यासस्तद्वस्तु कवयो विदुः ॥ २७५ ॥**

इति वस्तु ।

**मात्रा इत्यादि** । आद्येऽङ्घ्रौ मात्राः पञ्चदश स्युः । तृतीये पञ्चमे पादे तथा । यथा प्रथमाङ्घ्रौ पञ्चदश मात्रास्तथा तृतीयपञ्चमयोः प्रत्येकमित्यर्थः । तुर्ये द्वितीये च पादे सूर्या द्वादश मात्रा भवन्ति । एवं पञ्च पादाः । अत्र सामान्यन्यायेनाऽऽद्यं पादद्वयमादिममर्धं तत्स्वरपाटान्तं कर्तव्यम् । अवशिष्टं पादत्रयमपरमर्धं तत्स्वरतेनान्तं कर्तव्यम् । तदनु तेनानन्तरं दोधकः । दोधकः पूर्वोक्तदोधकं नाम च्छन्दोविशेषः कर्तव्यः । [अत्र तेनकान्तमर्धद्वयमुद्ग्राहः । दोधको ध्रुवः । पूर्ववदाभोगः कल्पनीयः । तेनायं त्रिधातुः । मात्रादिनियमापेक्षया निर्युक्तः । तालनिषेधश्रुतेरभावादनियततालत्वापेक्षयाऽयमनिर्युक्तश्च । नन्वेकस्यैव निर्युक्तत्वमनिर्युक्त[त्वं च] विरुद्धमिति चेन्न । अपेक्षाबुद्धिनिमित्तस्य भिन्नत्वात् । यथैकस्यैव देवदत्तस्य स्वपुत्रापेक्षया पितृत्वं स्वपित्रपेक्षया पुत्रत्वं चेति । यत्रैवंविधा च विरोधप्रतीतिस्तत्रैवंविधः परिहारो द्रष्टव्यः । विरुद्व्यतिरिक्ताङ्गबद्धत्वात्पञ्चाङ्ग आनन्दिनीजातिमान् ॥ २७४ ॥ २७५ ॥

इति वस्तुलक्षणम् ।

अथ विजयं लक्षयति—

**यत्र तेनैः स्वरैः पाटैः पदैर्विजयतालतः ।**
**मीयते विजयस्तेनर्न्यासः स विजयो मतः ॥ २७६ ॥**

इति विजयः ।

**यत्रेति** । अत्र तेनादीनां पाठक्रमस्य विवक्षितत्वात्तथैव प्रयोक्तव्याः । **विजयतालत इति** । विजयः पगपा(?)लघुरिति तस्य लक्षणं वक्ष्यते । अत्र तेनैः स्वरैरुद्ग्राहः कर्तव्यः । पाटैः पदैर्ध्रुवः कर्तव्यः । पदान्तैराभोगः कल्पनीयः । तेनायं त्रिधातुः । तालनियमान्निर्युक्तः । विरुदाभावात्पञ्चाङ्गः । आनन्दिनीजातिमान् ॥ २७६ ॥

इति विजयः ।

---

१ ख. ग. मोहकः । टीकायां तु दोधकः ।

अथ त्रिपथं लक्षयति—

**पादत्रयं त्रिपथके पाटैश्च विरुदैः स्वरैः ॥ २७७ ॥**

इति त्रिपथकः ।

**पादत्रयमित्यादि** । पाटैरेकः पादो विरुदैर्द्वितीयः। स्वैरस्तृतीयः। तत्र प्रथमं पादद्वयमुद्ग्राहः । तृतीयः पादो ध्रुवः । पदैराभोगः कल्पनीयः। तेनायं त्रिधातुस्तालाद्यनियमादनिर्युक्तः । तेनकाभावात्पश्चाङ्ग आनन्दिनीजातिमान् ॥२७७॥

इति त्रिपथः ।

अथ चतुर्मुखं लक्षयति—

**स्वरैः पाटैः पदैस्तेनैर्वर्णैः स्थाय्यादिभिः क्रमात् ।**
**चत्वारश्चरणा गेया ग्रहे न्यासश्चतुर्मुखे ॥ २७८ ॥**

इति चतुर्मुखः ।

**स्वैरैरित्यादि** । स्थाय्यादिभिः क्रमादिति । स्थायिवर्णेन स्वरैः प्रथमः पादः । आरोहिवर्णेन पाटैर्द्वितीयः । अवरोहिवर्णेन पदैस्तृतीयः । संचारिवर्णेन तेनैश्चतुर्थ इति क्रमो द्रष्टव्यः । ग्रह उद्ग्राहे न्यासः कर्तव्यः । अत्र प्रथमं पादद्वयमुद्ग्राहो द्वितीयं पादद्वयं ध्रुवः । पदान्तैरराभोगः कर्तव्यः । तेनायं त्रिधातुः । तालाद्यनियमादनिर्युक्तो बिरुदाभावात्पश्चाङ्गः । आनन्दिनीजातिमान् ॥ ॥ २७८ ॥

इति चतुर्मुखः ।

अथ सिंहलीलं लक्षयति—

**स्वरैः पाटैश्च बिरुदैस्तेनकैर्यो विरच्यते ।**
**सिंहलीलेन तालेन सिंहलीलः स उच्यते ॥ २७९ ॥**

इति सिंहलीलः ।

**स्वैरैरित्यादि** । सिंहलीलेन तालेनेति । 'तालाद्यन्तं दत्रयं सिंहलीलः' इति तस्य लक्षणं वक्ष्यते । अत्र स्वरैः पाटैरुद्ग्राहः । बिरुदैस्तेनकैश्च ध्रुवः । पादैराभोगः कर्तव्यः। तेनायं त्रिधातुस्तालनियमान्निर्युक्तः स्वरादिषडङ्गत्वान्मेदिनीजातिमान् ॥ २७८ ॥

इति सिंहलीलः ।

अथ हंसलीलं लक्षयति—

**स्वनामतालके हंसलीलेऽङ्घ्री पदपाटजौ(कैः) ॥ २८० ॥**

इति हंसलीलः ।

**स्वनामेत्यादि** । **स्वनामतालक इति** । हंसलीलतालयुक्त इत्यर्थः। हंसलीलो यगणश्च लद्गुरुरिति तस्य लक्षणं वक्ष्यते । **पदपाटकैरङ्घ्री इति** । पदैरेकः पादः पाटैर्द्वितीयः । अत्र पदैरुद्ग्राहः पाटैर्ध्रुवः । पदान्तरैराभोगः । तेनायं त्रिधातुः । तालनियमान्नियुक्तः । पदपाटतालबद्धत्वात्त्र्यङ्गो भावनीजातिमान् ॥ २८० ॥

इति हंसलीलः ।

अथ दण्डकं लक्षयति—

**पादैः स्वरैर्दण्डकेन च्छन्दसा दण्डको मतः ।**
**तस्य भूरितरा भेदाश्छन्दोलक्ष्मणि भाषिताः ॥ २८१ ॥**

इति दण्डकः ।

**पदैरिति** । **दण्डकेन च्छन्दसेति** । 'दण्डको नौ रः' इति तस्य लक्षणम् । अस्यार्थः । यस्य पादे नकारौ द्वौ रेफाः सप्त भवन्ति तस्य दण्डक इति नाम भवति । षड्विंशत्यक्षराया उत्कृतेः समनन्तरं दण्डकस्य पाठात्सप्तविंशत्यक्षरत्वमेव युक्तम् । सर्वेषां छन्दसामेकाक्षरवृद्ध्या प्रस्तारः प्रवृत्तः । इत ऊर्ध्वं पुनरेकैकरेफवृद्ध्या प्रस्तारः कर्तव्यः । दण्डको नौ र इति श्रवणादिति । तस्योदाहरणम् ।

"इह हि भवति दण्डकारण्यदेशे स्थितिः पुण्यभाजां मुनीनां मनोहारिणि ।
त्रिदशविजयवीर्यदृप्यद्दशग्रीवलक्ष्म्या विरामेण रामेण संसेविते ॥
जनकयजनभूमिसंभूतसीमन्तिनीसीमसीतापदस्पर्शपूताश्रये ।
भुवननमितपादपम्पाभिधानाम्बिकातीर्थयात्रागतानेकसिद्धाकुले" ॥

अत्र पादान्ते यतिः । **तस्येत्यादि** । तस्य दण्डकस्य । **भूरितरा भेदा इति** । चण्डवृष्टिप्रयातप्रचितादयः । छन्दोलक्ष्मणि च्छन्दःशास्त्रे भाषिता उक्तास्ततोऽवगन्तव्याः । तत्र पा(प)दैर्निर्मितं दण्डकस्य पूर्वार्धमुद्ग्राहः । स्वरैर्निर्मितमुत्तरार्धं ध्रुवः । पदान्तरैराभोगः । तेनायं त्रिधातुश्छन्दोनियमान्नियुक्तः स्वरपदतालबद्धत्वात्त्र्यङ्गो भावनीजातिमान् ॥ २८१ ॥

इति दण्डकलक्षणम् ।

अथ झम्पटं लक्षयति—

**झम्पटच्छन्दसा गेयं क्रीडातालेन झम्पटम् ॥ २८२ ॥**

इति झम्पटः ।

---

१ ख. °थ संपुटं । ग. °थ संपटं । २ च. ग. °ति । संपट । ३ ग. झंबडच्छन्दसा । ख. कम्बडच्छन्दसा । ङ. झोम्बडच्छन्दसा । ४ ग. झोम्बडकम् । ख. कोम्बडकम् ।

**झम्पटच्छन्दसेति** । ' झम्पटं त्रिपदैः प्राहुः ' इति तस्य लक्षणं गाथाभेदेषु द्रष्टव्यम् । **क्रीडातालेनेति** । ' क्रीडा द्रुतौ विरामान्तौ ' इति तस्य लक्षणं वक्ष्यते । तत्राऽऽद्यं पादद्वयमुद्ग्राहः । तृतीयः पादो ध्रुवः । पूर्ववदाभोगः कर्तव्यः । तेनायं त्रिधातुः । छन्दस्तालनियमान्निर्युक्तः । एवं पदतालबद्धत्वाद्-द्व्यङ्गो भावनीजातिमान् ॥ २८२ ॥

इति झम्पटः ।

अथ कन्दुकं लक्षयति—

**पदैः पाटैश्च विरुदैः कन्दुकः परिगीयते ॥ २८३ ॥**

इति कन्दुकः ।

**पदैरित्यादि** । अयमपि गाथाभेदो द्रष्टव्यः । अत्र पदैः प्रथमः पादः । पाटैर्द्वितीयः । बिरुदैस्तृतीयः । उद्ग्राहादिविभागः पूर्ववत् । तालाद्यनियमादनिर्युक्त एव स्वरतेनकाभावाच्चतुरङ्गो दीपनीजातिमान् । सिंहलीलादिषु पञ्चसूद्ग्राहे न्यासः कर्तव्यः । एवमनुक्तन्यासस्थानेषु सर्वत्र न्यायोऽनुसंधेयः ॥२८३॥

इति कन्दुकः ।

अथ त्रिभङ्गिं लक्षयति—

**स्वरैः पाटैः पदैरुक्तस्त्रिभङ्गिः स च पञ्चधा ।**
**एकस्त्रिभङ्गितालेन वृत्तेनान्यस्त्रिभङ्गिना(णा) ॥ २८४ ॥**
**तालै रागैस्त्रिभिर्यद्वा यद्वा वृत्तत्रयान्वितः ।**
**यद्वा देवत्रयस्तुत्या तालद्वैगुण्यमुक्तिकः ॥ २८५ ॥**

इति त्रिभङ्गिः ।

**स्वरैः पाटैरित्यादि** । **त्रिभङ्गितालेनेति** । ' त्रिभङ्गिः सगणाद्गुरुः ' इति तस्य लक्षणं वक्ष्यते । **वृत्तेनेति** । त्रिभङ्गिवृत्तमपि गाथाभेदो द्रष्टव्यः । स्पष्टार्थमन्यत् । पञ्चसु त्रिभङ्गिपदेष्वपि सामान्यलक्षणोक्तः स्वरपाटपदानां प्रयोगः क्रमेण कर्तव्यः । उद्ग्राहादिविभागोऽपि भेदेषु यथायोगमुन्नेयः । अन्यपदैराभोगः । तेनायं त्रिधातुः क्वचिच्छन्दस्तालादिनियमान्निर्युक्तः । अन्यत्र तदभावादनिर्युक्तः । बिरुदतेनकाभावाच्चतुरङ्गो दीपनीजातिमान् ॥ २८४॥२८५॥

इति त्रिभङ्गिः ।

अथ हरविलासं लक्षयति—

**पदैश्च( दैः स ) बिरुदैः पाटैर्[१]हरविलासकः ॥ २८६ ॥**

इति हरविलासः ।

---

१ ख. ग. संपटं । २ ख. ग. संपुटः ।

**पदरित्यादि** । सबिरुदैरिति पदविशेषणम् । अन्ते बिरुदस्योपसर्जनत्वश्रुत्या पदे शेषत्वं प्रतीयते। तेन सबिरुदैः पदैरेकं गीतखण्डं गायेदिति भावः। अनन्तरं पाटैर्द्वितीयः खण्डः । ततस्तेनैस्तृतीयः । तत्र प्रथमखण्ड उद्ग्राहः । द्वितीयतृतीयौ ध्रुवः । पदान्तैराभोगः । अतोऽयं त्रिधातुः । तालाद्यनियमादनिर्युक्तः । स्वराभावात्पञ्चाङ्गः । आनन्दिनीजातिमान् ॥ २८६ ॥

इति हराविलासः ।

अथ सुदर्शनं लक्षयति—

**पदैश्च बिरुदैस्तेनैर्निर्दिशन्ति सुदर्शनम् ॥ २८७ ॥**

**इति सुदर्शनः ।**

**पदैश्चेत्यादि** । स्पष्टार्थः। स्वरपाटाभावाच्चतुरङ्गोऽयं दीपनीजातिमान् ॥२८७॥

इति सुदर्शनः ।

अथ स्वराङ्कं लक्षयति—

**पदैः स्वरैश्च बिरुदैरुद्ग्राहादित्रयं क्रमात् ।**
**एकद्वित्राश्च तालाः *स्युः स्वराङ्के न्यसनं स्वरैः ॥ २८८ ॥**

इति स्वराङ्कः ।

**पदरित्यादि** । स्वराङ्के क्रमादुद्ग्राहादित्रयमिति । पदैरुद्ग्राहः स्वरैर्मेलापो बिरुदैर्ध्रुव इत्ययं क्रमः । अत्रोद्ग्राहादित्रयमिति विशेषोक्त्या मेलापकसद्भावादनुक्तविशेषेषु प्रबन्धेषु मेलापकाभावो ज्ञायते । **एकद्वित्रास्तालाश्चेति** । उद्ग्राह एकस्तालो मेलापके द्वौ तालौ ध्रुवे त्रयस्तालाः कर्तव्याः स्युः । **मालवश्रियेति** । मालवश्रीसंज्ञकेन रागेण गातव्य इत्यर्थः । आभोगः पूर्ववत्कर्तव्यः । तेनायं चतुर्धातुः । रागानियमान्निर्युक्तः पाटतेनकाभावाच्चतुरङ्गो दीपनीजातिमान् ॥ २८८ ॥

इति स्वराङ्कः ।

अथ श्रीवर्धनं लक्षयति—

**श्रीवर्धनः स्याद्बिरुदैः पाटैरपि पदैः स्वरैः ।**
**+तालमानद्वयन्यासौ निःशङ्केनेति कीर्तितम् ॥ २८९॥**

इति श्रीवर्धनः ।

---

* अत्र टीकानुरोधेन स्युर्गातव्यो मालवश्रियेति पाठोऽपेक्षितः । +तालमानद्वयेनासाविति पाठः क्वचित् ।

---

१ ख. ग. घ. ङ. °न्यासो निः° । २ ख. ग. °र्तितः । इ° ।

**श्रीवर्धन इत्यादि** । अत्र बिरुदपाटाभ्यामुद्ग्राहः । पदस्वराभ्यां ध्रुवः । सुगममन्यत् ॥ २८९ ॥

इति श्रीवर्धनः ।

**पदैश्च विरुदैर्हर्षवर्धनः स्वरपाटकैः ॥ २९० ॥**

इति हर्षवर्धनः ।

हर्षवर्धनलक्षणं स्पष्टार्थम् ॥ २९० ॥

इति हर्षवर्धनः ।

अथ वदनं लक्षयति—

**छपद्वयं दो वदनं स्वरपाटयुतान्तरम् ।**
**तथोपवदनं प्रोक्तं छगणाच्छदतैर्युतम् ।**
**तथैव वस्तुवदनं छयुगाद्दचछैः कृतम् ॥ २९१ ॥**

इति त्रिविधवदनम् ।

**छपद्वयमित्यादि** । छपयोश्छगणपगणयोर्द्वयं दो दोगणश्च वदनस्य पादे त्रयो मात्रागणा भवन्ति । अयमेवोद्ग्राहः । **स्वरपाटयुतान्तरमिति** । तादृगेव द्वितीयः । पादः स्वरपाटयुतः सन्नन्तर इति व्यपदिश्यते । अत्र युतशब्देन च्छपद्वयं द इत्येतदन्तरेऽपि कर्तव्यमिति गम्यते । अन्यथा स्वरपाटकृतान्तरमित्येव ब्रूयात् । अत्रान्तरशब्देन ध्रुव उच्यते । उद्ग्राहाभोगयोर्मध्ये भवत्वात् । नतु ध्रुवाभोगान्तरजातो धातुः । तथा सति ह्यत्र पार्थक्येन ध्रुवेण भवितव्यम् । तदभावादिति भावः । स्वरपाटे युतोऽन्तरो यस्मिन्नि(टयुतान्तरमि)ति वदनविशेषणम् । सुगममन्यत् । अत्र पदान्तरैराभोगः कर्तव्यः । तेनायं त्रिधातुश्छन्दस्तालाद्यनियमादनिर्युक्तो बिरुदतेनकहीनत्वाच्चतुरङ्गो दीपनीजातिमान् ॥ २९१ ॥

इति वदनम् ।

अथ चच्चरीं लक्षयति—

**रागो हिन्दोलकस्तालश्चच्चरी बहवोऽङ्घ्रयः ।**
**यस्यां षोडशमात्राः स्युर्द्वौ द्वौ च प्राससंयुतौ ॥ २९२ ॥**
**सा वसन्तोत्सवे गेया चच्चरी प्राकृतैः पदैः ।**
**चच्चरीछन्दसेत्यन्ये क्रीडातालेन वेत्यपि[1] ।**
**घुत्तादिच्छन्दसा वाऽस्य च्छन्दोलक्ष्मोदिता भिदाः ॥ २९३ ॥**

इति चच्चरी ।

---

१ ख. छन्दद्द° । ग. घ. छवद्द° । २ ख. ग. °पि । यत्तालच्छ° । घ. °पि । घत्त°

**राग इत्यादि । चच्चरी ताल इति ।** ‘ विरामान्तलघुर्द्वंद्वान्यष्टौ लघु च चच्चरी ’ इति तस्य लक्षणं वक्ष्यते । यस्यां चच्चर्यां षोडश मात्रा बहवोऽङ्घ्रयः स्युः । तत्र द्वौ द्वौ पादौ प्रासयुतौ भवतः । **चच्चरीछन्दसेति ।** षोडशमात्रात्मकपादयुक्तं चच्चरीछन्दोऽवगन्तव्यम् । **क्रीडातालेन वेति ।** क्रीडाद्रुतौ विरामान्ताविति तस्य लक्षणं वक्ष्यते । **घुत्तादिच्छन्दसा वेति ।** यदा क्रीडातालेन प्रयुज्यते तदा घुत्तादिच्छन्दः प्रयोक्तव्यमित्यर्थः । तत्राऽऽदिशब्देन यत्क्रीडातालप्रयोग्यं तच्छन्दो गृह्यते । घुत्ताच्छन्दोऽपि तादृशमवगन्तव्यम् । **छन्दोलक्ष्मोदिता भिदा इति ।** इयमेव चच्चरी यदा छन्दोन्तरेण गीयते तदा च्छन्दःशास्त्रोक्तचच्च( तत्तच् )छन्दोनाम्ना व्यपदिश्यत इत्यर्थः । अत्र पूर्वार्धमुद्ग्राहः । उत्तरार्धं ध्रुवः । पृथक्पदैराभोगः । अतोऽयं त्रिधातुश्छन्दस्तालनियमान्नियुक्तः । पदतालबद्धत्वाद्द्व्यङ्गस्तारावलीजातिमान् ॥२९२ ॥ २९३ ॥

इति चच्चरीलक्षणम् ।

अथ चर्यां लक्षयति—

**पद्धडीप्रभृतिच्छन्दाः पादान्तप्रासशोभिताः ।**
**अध्यात्मगोचरा चर्या स्याद्द्वितीयादितालतः ॥ २९४ ॥**

**पद्धडीत्यादिना । पद्धडीप्रभृतिच्छन्दा इति ।** पद्धडीप्रभृतीनि च्छन्दांसि यस्याः सा । पद्धडीप्रभृतिषु च्छन्दःस्वेकेन बद्धेत्यर्थः । पद्धडीच्छन्दोलक्षणमनन्तरमेव वक्ष्यते । **अध्यात्मगोचरेति ।** अध्यात्मे(त्मं) विषयीकृत्य प्रवृत्तेत्यर्थः । **द्वितीयादितालत इति ।** ‘ द्वौ लौ द्वितीयकः ’ इति द्वितीयतालस्य लक्षणं वक्ष्यते । आदिशब्देन तत्सममात्रोऽन्योऽपि तालो गृह्यते ॥२९४॥

**सा द्विधा च्छन्दसः पूर्त्या पूर्णाऽपूर्णा त्वपूर्तितः ।**
**समध्रुवा च विषमध्रुवेत्येषा पुनर्द्विधा ।**
**आवृत्त्या सर्वपादानां गीयते सा ध्रुवस्य वा ॥ २९५ ॥**

इति चर्या ।

**समध्रुवेति ।** समो ध्रुवो यस्या इति बहुव्रीहिः । समशब्दस्य सापेक्षत्वादत्र प्रत्यासत्त्योद्ग्राह एवापेक्ष्यते । तेन ध्रुवस्योद्ग्राहसमत्वमवगम्यते । एवं विषमध्रुवेत्यत्रापि । ध्रुवस्योद्ग्राहापेक्षया न्यूनत्वेन वाऽधिकत्वेन वा विषमत्वं द्रष्टव्यम् । आभोगः पृथक्पदैः कर्तव्यः । तेनायं त्रिधातुः । छन्दस्तालनियमान्नियुक्तः । पदतालबद्धत्वाद्द्व्यङ्गस्तारावलीजातिमान् ॥ २९५ ॥

इति चर्या ।

---

१ ख. °ते । घत्ता । २ ख. ग. °कतत्तच्छ° ।

अथ पद्धडीं लक्षयति—

**+युग्मपादान्तगप्रासा पद्धडीछन्दसा युता।**

**विरुदैः स्वरपाटान्तै रचिता पद्धडी मता॥ २९६॥**

**इति पद्धडी।**

**चरणान्तेत्यादि**। चरणान्तेषु पादान्तेषु सम एकरूपः प्रासो वर्णावृत्तिर्यस्याः सा। **पद्धडीछन्दसेति**।

"षोडश मात्राः पादे पादे यत्र भवन्ति निरस्तविवादे।

पद्धडिका जगणेन विमुक्ता चरमगुरुः सा सद्भिरिहोक्ता"॥

इति तस्य लक्षणमुदाहरणं च तेन च्छन्दसा युक्ता। **स्वरपाटान्तैर्विरुदै रचितेति**। प्रथमार्धं बिरुदै रचयित्वा स्वरान्प्रयुञ्जीत। द्वितीयार्धमपि बिरुदै रचयित्वा पाटान्प्रयुञ्जीतेत्यर्थः। अत्र सस्वरं प्रथमार्धमुद्ग्राहः। सपाटं द्वितीयार्धं ध्रुवः। पदैराभोगः कल्पनीयः। तेनायं त्रिधातुः। छन्दोनियमान्नियुक्तः। तेनकाभावात्पश्चाङ्गि आनन्दिनीजातिमान्॥ २९६॥

**इति पद्धडी।**

अथ राहडीं लक्षयति—

**यत्र वीररसेन स्यात्संग्रामरचितस्तुतिः।**

**बहुभिश्चरणैः साऽत्र राहडी परिकीर्तिता॥ २९७॥**

**इति राहडी।**

**संग्रामरचितस्तुतिरिति**। वीररसेत्यस्य स्पष्टीकरणम्। तत्र बहुषु चरणेषु केचनोद्ग्राहः केचन ध्रुवः कर्तव्यः। पृथगाभोगः कल्पनीयः। तेनायं त्रिधातुस्तालाद्यनियमादनिर्युक्तः। पदतालबद्धत्वाद्द्व्यङ्गस्तारावलीजातिमान्॥२९७॥

**इति राहडीलक्षणम्।**

अथ वीरश्रियं लक्षयति—

**पदैश्च विरुदैर्बद्धा वीरश्रीरिति गीयते॥ २९८॥**

**इति वीरश्रीः।**

**पदैरित्यादि**। पदैरुद्ग्राहो बिरुदैर्ध्रुवः। आभोगः पृथक्कर्तव्यः। तेनायं त्रिधातुस्तालाद्यनियमादनिर्युक्तः। पदतालबिरुदबद्धत्वात्त्र्यङ्गो भावनीजातिमान्॥ २९८॥

**इति वीरश्रीः।**

+ चरणान्तसमप्रासेति पाठष्टीकानुरोधेनात्र युक्तः।

अथ मङ्गलाचारं लक्षयति–

**यस्तु गद्येन पद्येन गद्यपद्येन वा कृतः ।**

**कैशिक्यां(क्या) मङ्गलाचारः सनिःसारो(रुः) स्वरान्वितः ॥२९९॥**

**इति मङ्गलाचारः ।**

**यस्त्वित्यादि** । गद्यपद्येनेति द्वंद्वैकवद्भावः । **कैशिक्येति** । कैशिकी नाम शुद्धपञ्चमस्य भाषारागस्तया गातव्यः । **सनिःसारुरिति** । निःसारुतालेन सहितः । 'विरामान्तौ लघू निःसारुको मतः' इति तस्य लक्षणं वक्ष्यते । **स्वरान्वित इति** । पदान्तेऽर्धान्ते वा स्वरैरन्वितः कर्तव्यः । अत्र सस्वरं प्रथमार्धमुद्ग्राहः । सस्वरं द्वितीयार्धं ध्रुवः । आभोगः पृथक्कर्तव्यः । तेनायं त्रिधातुस्तालादिनियमान्निर्युक्तः । पदस्वरतालबद्धत्वात्त्र्यङ्गो भावनीजातिमान् ॥२९९॥

**इति मङ्गलाचारः ।**

अथ धवलं लक्षयति–

**त्रिविधो धवलः कीर्तिर्विजयो विक्रमस्तथा ।**

**चतुर्भिश्चरणैः षड्भिरष्टभिश्च क्रमादसौ ॥ ३०० ॥**

**त्रिविध इत्यादि** । चतुर्भिश्चरणै रचितः कीर्तिधवलः षड्भी रचितो विजयधवलोऽष्टभी रचितो विक्रमधवल इति क्रमो द्रष्टव्यः ॥३००॥

**विषमे डाच्च(तु च्छ) युग्मं चेत्तो वा दो वाऽधिकः समे ।**

**तदा स्यात्कीर्तिधवलो विजये त्वाद्यतुर्ययोः[२] ।**

**+कोदः (द्वौ द्वौ?) षष्ठे द्वितीये च शेषौ द्वौ छेन पेन वा ॥३०१॥**

**विषम इति** । विषमे पादे छयुग्मं छगणयोः षाण्मात्रिकयोर्युग्मं स्यादिति विषमपादे द्वादश मात्राः कर्तव्या इत्यर्थः। समे समपादे । **तो वा दो वाऽधिक इति** । छयुग्मकात्परं तगणस्त्रिमात्रिको दगणो द्विमात्रिको वाऽधिको भवति । समपादे पञ्चदश वा चतुर्दश मात्राः कर्तव्या इत्यर्थः । **विजये त्विति** । षट्पादयुक्ते विजयधवले त्वादितुर्ययोः पादयोस्तथा षष्ठे द्वितीये च पादे द्वौ गणौ कीर्तिधवलपादापेक्षयाऽधिकौ भवत इत्यर्थः । शेषौ तृतीयपञ्चमौ द्वौ पादौ छेन च्छगणेन पेन पगणेन वाऽधिकौ भवतः ॥ ३०१ ॥

विक्रमधवलस्य लक्षणमाह–

**प्रथमे चत्रयं दः स्यात्तृतीये दास्त्रयस्तु च ।**

**तुर्यद्वितीययोश्चोऽन्तः पञ्चमे सप्तमे तथा ॥ ३०२ ॥**

---

\+ दोह इत्यपि पाठः ।

---

१ ख. °मेहाच्च । २ ख. °योः । छेदः ष° ।

षष्ठेऽष्टमे दाश्चत्वारो यस्यासौ विक्रमो मतः ।
आशीर्भिर्धवलो गेयो धवलादिपदान्वितः ॥ ३०३ ॥

**प्रथम इति** । प्रथमे पादे चाश्चगणास्त्रयः । द्रो दगणोऽपि स्यात् । तृतीयपादे दास्त्रयः । तुर्यद्वितीययोश्चैतदिति । चतुर्थे चास्त्रयो दश्च । द्वितीये दास्त्रयस्तु च इत्यर्थः । **पञ्चमे सप्तमे तथेति** । पञ्चमे तुर्योक्तं सप्तमे द्वितीयोक्तं च द्रष्टव्यम् । षष्ठेऽष्टमे दाश्चत्वारो भवन्ति । आशीर्भिराशीर्वादैः । **धवलादिपदान्वित इति** । आदिशब्देन विमलादीनि गृह्यन्ते ॥३०२॥३०३॥

यदृच्छया वा धवलो गेयो लोकप्रसिद्धितः ॥ ३०४ ॥

इति धवलः ।

**यदृच्छयेति** । उक्तगणादिनियमराहित्येन । **लोकप्रसिद्धित इति**। वर्तमानलक्ष्यानुसारेणेत्यर्थः । त्रिष्वपि धवलभेदेषु पूर्वार्धमुद्ग्राह उत्तरार्धं ध्रुवः । आभोगः पृथक्कर्तव्यः। तेनायं त्रिधातुः। तालाद्यनियमादनिर्युक्तः। पदतालबद्धत्वाद्द्व्यङ्गस्तारावलीजातिमान् ॥ ३०४ ॥

इति धवलः।

अथ मङ्गलं लक्षयति–

कैशिक्यां बोट्टरागे वा मङ्गलं मङ्गलैः पदैः ।
विलम्बितलये गेयं मङ्गलच्छन्दसाऽथवा ॥ ३०५ ॥

इति मङ्गलः ।

**कैशिक्यामित्यादि** । मङ्लैः पदैरिति । शङ्खचक्राब्जकोककैरवादिशंसिभिरित्यर्थः । **मङ्गलच्छन्दसेति** ।

'पञ्चचकारगणाः प्रतिपादगताश्चे-
न्मङ्गलमाहुरिदं सुधियः खलु वृत्तम्' ॥

इति तस्य लक्षणमुदाहरणं च । अत्रोद्ग्राहादिकल्पनादिकं पूर्ववत् ॥३०५॥

इति मङ्गलः ।

खण्डत्रयं प्रासयुतं गीयते देशभाषया ।
ओवीपदं तदन्ते चेदोवी तज्ज्ञैस्तदोदिता ॥ ३०६ ॥
त्रयाणां चरणानां स्युरेकाद्यावृत्तितो भिदाः ।
आदिमध्यान्तगैः प्रासैरेकाद्यैश्च पदे पदे ॥ ३०७ ॥

१ ख. उर्वीपदं । ग. ऊवीपदं । ङ. तुर्वीपदं ।

छन्दोभिर्बहुभिर्गेया ओव्यो जनमनोहराः ।
सानुप्रासैस्त्रिभिः खण्डैर्मण्डिता( ताः ) प्राकृतैः पदैः ।
प्रान्ते लोलीपदोपेता लोली गेया विचक्षणैः ॥ ३०८ ॥

इति लोली ।

दोहॆडः स्याद्यदा प्रान्ते प्रोल्लसड्ढोल्लरीपदाः ।
ढोल्लरी नाम सा प्रोक्ता लाटभाषाविभूषिता ॥ ३०९ ॥

इति ढोल्लरी ।

अनुप्रासप्रधानं चेत्खण्डत्रयसमन्वितम् ।
दन्तीपदान्वितं प्रान्ते तदा दन्ती निगद्यते ॥ ३१० ॥

इति दन्ती ।

अनुक्ताभोगवस्तूनां पदैराभोगकल्पना ।
ओव्यादयस्तु चत्वारो भवन्त्याभोगवर्जिताः ॥ ३११ ॥

इति षट्त्रिंशद्विप्रकीर्णप्रबन्धाः ।

* ऊर्व्यादीनां चतुर्णां लक्षणानि स्फुटार्थानि मेलापकाभोगवर्जितत्वाच्चत्वारोऽपि द्विधातवः । तत्राऽऽद्यं खण्डद्वयमुद्ग्राहः । तृतीयं खण्डं ध्रुवः । तालाद्यनियमाच्चत्वारोऽप्यनिर्युक्ताः पदतालबद्धत्वाद्द्व्यङ्गास्तारावलीजातिमन्तः ॥ ३०६ ॥ ३०७ ॥ ३०८ ॥ ३०९ ॥ ३१० ॥ ३११ ॥

इति षट्त्रिंशद्विप्रकीर्णप्रबन्धलक्षणानि ।

अथाध्यायादावुद्दिष्टं सालगसूडं लक्षयितुं संगतिं दर्शयति—

शुद्धश्छायालगश्चेति द्विविधः सूड उच्यते ।
एलादिः शुद्ध इत्युक्तो ध्रुवादिः सालगो मतः ॥ ३१२ ॥

शुद्ध इत्यादि । शुद्धः शास्त्रोक्तनियमेन प्रकीर्तितः । छायालगश्छायां शुद्धसादृश्यं लगति गच्छति सः । एलादिरिति । एलामारभ्यैकतालीपर्यन्तमष्टभिर्गीतैः शुद्धसूड इत्युक्तः । ध्रुवादिरिति । वक्ष्यमाणं ध्रुवमारभ्य वक्ष्यमाणैकतालीपर्यन्तं सप्तभिर्गीतैः सालगः सूडोऽभिमतः । सालग इति च्छायालगशब्दस्यापभ्रंशो लोकप्रसिद्ध्या प्रयुक्त इति वेदितव्यः ॥ ३१२ ॥

---

*अत्रापि पूर्वानुरोधेन 'ओव्यादीनाम्' इत्येव पाठोऽपेक्षितः ।

---

१ ख. ऊव्यो । ङ. तुव्यो । २ ख. राहडः । ग. रोहडः । ३ ङ. हड्डाख्यपदप्रासाः प्रो° । ४ ख. ऊर्व्यादी° । ग. कुर्यादी° । ५ ग. मन्तव्यः ।

ननु जात्यादेरेव शुद्धत्वमेलादेस्तु तच्छायानुकारित्वात्सालगत्वमेव । तत्कथ-मेलादिः शुद्ध इत्युक्तमित्यत आह—

**छायालगत्वमेलादेर्यद्यथाऽऽचार्यसंमतम् ।**

**लोके तथाऽपि शुद्धोऽसौ शुद्धसादृश्यतो मतः ॥ ३१३ ॥**

**छायालगत्वमेलादेरित्यादि । शुद्धसादृश्यत इति ।** शुद्धस्य जात्यादेः सादृश्यतो नियमानतिलङ्घनादित्यर्थः । अतः शुद्धत्वमौपचारिकमेलादेः । ध्रुवा-देस्तु नियमातिलङ्घनात्सर्वथा सालगत्वमेवेति भावः ॥ ३१३ ॥

**जात्याद्यन्तरभाषान्तं शुद्धप्रकरणान्वितम् ।**

**तत्रोक्तः शुद्धसूडः प्राक्सालगस्त्वधुनोच्यते ॥ ३१४ ॥**

**जात्याद्यन्तरभाषान्तमिति ।** जातिकपालकम्बलगीतिग्रामरागोपरागराग-भाषाविभाषान्तरभाषापर्यन्तमित्यर्थः । **प्रकरणान्वितमिति । तालाध्याये** वक्ष्यमाणानि मन्द्रकादिचतुर्दश गीतानि प्रकरणानीत्युच्यन्ते । तान्यपि नियमान-नुलङ्घनेनैव प्रवर्तितत्वाच्छुद्धेऽन्तर्भूतानीत्यर्थः ॥ ३१४ ॥

सालगसूडस्थानि गीतान्युद्दिशति—

**आद्यो ध्रुवस्ततो मण्ठप्रतिमण्ठनिसारुकाः ।**

**अड्डतालस्ततो रास एकतालीत्यसौ मतः ॥ ३१५ ॥**

**आद्यो ध्रुव इत्यादि ।** असाविति सालगसूडः । मतः संमतः । सभे-दानां ध्रुवादीनां लक्षणानि स्पष्टार्थानि । ननु 'मण्ठवत्प्रतिमण्ठादेर्लक्ष्मोद्ग्राहा-दिकं मतम्' इति वचनेन प्रतिमण्ठादिषूद्ग्राहाद्यवयवसंनिवेशस्य मण्ठवदित्य-तिदेशान्मण्ठात्प्रतिमण्ठादीनामवयवसंनिवेशकृतो भेदो नास्त्येव । 'तथाऽप्येषां विशेषस्तु प्रत्येकं प्रतिपाद्यते' इति प्रतिज्ञाय 'तत्र च प्रतिमण्ठेन तालेन प्रति-मण्ठकम्' इत्यादिभिर्वचनैस्तालानामेवात्र भेदकत्वेनोपादानात्केवलानां रसानामत्र भेदकं(कत्वं) न विवक्षितमेव। एवं स्थिते ×प्रतिमण्ठभेदस्य कलापस्य ता(का?)लः कलापो नगणेन तु विरामान्तेनेत्युक्तः । तथा प्रतिमण्ठभेदस्य विचारस्यापि ता-(का? )लो लघुत्रयाद्विरामान्ताद्विचार इत्युक्तः । अत एव तयोर्लक्षणयोः शब्द-भेद एव न त्वर्थभेदः । तेन मण्ठवत्प( ण्ठप्र )ति[illegible]ठयोस्तालयोरत्रार्थपौनरुक्त्यं दोष इति चेत्सत्यम् । अत्यल्पमिदमुच्यते। द्वयोस्ता[illegible]योः पौनरुक्त्यं दोष इति । किंतूत्तरस्मिन्नध्याये विंशत्यधिकशतेषु देशीतालेषु लक्षितेषु तत्र सालगसूडाश्रयैः कैश्चिदन्यैस्तालैः सह केषांचिद्बहूनां तालानां द्वयोर्द्वयोस्त्रयाणां त्रयाणां च मिथः पौनरुक्त्यं लक्षणतः प्रतीतं भविष्यति। तस्य तत्रैव परिहारं वक्ष्याम इत्यत्र पृथ-



× अत्र प्रतिशब्दोऽधिकः ।

ङ्नोच्यते । ननु जयन्त्यादिषु षोडशसु ध्रुवेषु योऽक्षरसंख्यानियम उक्तः स वर्तमानेषु केषुचिद्ध्रुवेषु न दृश्यते । तत्कथं तेषां लक्षणहीनत्वेऽपि लोके परिग्रह इति चेत्सत्यमेतत् । अत्राक्षरशब्देन पदान्यप्युच्यन्ते । यथाऽयमक्षरार्थ इति पदार्थो वर्ण्यते । तेन क्वचित्पदानां वा संख्याया नियमो द्रष्टव्यः । यत्र सोऽपि नास्ति तत्राक्षरादेः संख्यानियमाभावान्नियमोक्तादृष्टफलस्याभाव एव न तु दृष्टफलस्य जनरञ्जनादेरपि । तेन तेषां लोकपरिग्रहोऽप्युपपन्न एव । अनियताक्षररसतालयुक्तस्योद्ग्राहाद्यवयवसंनिवेशस्याविशिष्टत्वेन तेषामपि लक्षणत्वाद्ध्रुवव्यवहारो न हीयत एव । मण्ठादीनां च रसतालादिनियमाभावोऽप्येवं द्रष्टव्यः । एते ध्रुवादयः सप्तापि मेलापकाभावात्त्रिधातवः । मण्ठादयस्तु षडपि 'तालो वैकल्पिकोऽन्तरः' इति वचनेन सान्तरत्वपक्षे तेनान्तरेण सह चतुर्धातवः । अनन्तरत्वपक्षे तु त्रिधातव एव । अयमन्तरो लौकिकैरुपान्तर इत्युच्यते । तथा तैर्ध्रुवः खण्डस्यान्तरव्यपदेशः कृत इति मन्तव्यम् । क्वचिद्ध्रुवखण्डस्यान्तरव्यदेशो ग्रन्थकारेणापि कृतः । यथाऽत्रैकतालीलक्षणे 'सकृद्विरतिरुद्ग्राहोऽन्तरस्त्वक्षरनिर्मितः' इत्यत्रोद्ग्राहानन्तरमन्तरग्रहणादन्तरशब्देन ध्रुवखण्ड एवोच्यत इति गम्यते । अत्रान्तरस्त्वित्यत्र तुशब्देनोद्ग्राहस्याऽऽलापरचितत्वमवगन्तव्यम् । एवमालापरचितोऽन्तर इत्यत्रापि ध्रुव एवान्तरशब्दवाच्यः । एते ध्रुवादयस्तालादिनियमान्नियुक्ताः पदतालबद्धत्वाद्वयङ्गास्तारावलीजातिमन्तः ॥ ३१५ ॥

**एकधातुर्द्विखण्डः स्याद्यत्रोद्ग्राहस्ततः परम् ।**
**किंचिदुच्चं भवेत्खण्डं द्विरभ्यस्तमिदं त्रयम् ॥ ३१६ ॥**
**ततो द्विखण्ड आभोगस्तस्य स्यात्खण्डमादिमम् ।**
**एकधातु द्विखण्डं च खण्डमुच्चतरं परम् ॥ ३१७ ॥**
**स्तुत्यनामाङ्कितश्चासौ क्वचिदुच्चैकखण्डकः ।**
**उद्ग्राहस्याऽऽद्यखण्डे च न्यासः सध्रुवको भवेत् ॥३१८॥**
**एकादशाक्षरात्खण्डादेकैकाक्षरवर्धितैः ।**
**खण्डे ध्रुवाः षोडश स्युः षड्विंशत्यक्षरावधि ॥ ३१९ ॥**
**जयन्तशेखरोत्साहास्ततो मधुरनिर्मलौ ।**
**कुन्तलः कामलश्चारो नन्दनश्चन्द्रशेखरः ॥ ३२० ॥**
**कामोदो विजयाख्यश्च कंदर्पजयमङ्गलौ ।**
**तिलको ललितश्चेति संज्ञाश्चैषां क्रमादिमाः ॥ ३२१ ॥**
**आदितालेन शृङ्गारे जयन्तो गीयते बुधैः ।**
**स नेतृश्रोतृगातॄणामायुःश्रीवर्धनो मतः ॥ ३२२ ॥**

॥ ३१६ ॥ ३१७ ॥ ३१८ ॥ ३१९ ॥ ३२० ॥ ३२१ ॥ ३२२ ॥

ऋद्धिसौभाग्यदो वीरे निःसारौ शेखरो भवेत्।
प्रतिमण्ठेन हास्ये स्यादुत्साहो वंशवृद्धिकृत्॥ ३२३॥
मधुरो भोगदो गेयः करुणे हयलीलया।
क्रीडातालेन शृङ्गारे निर्मलस्तनुते प्रभाम्॥ ३२४॥
लघुशेखरतालेन कुन्तलोऽभीष्टदोऽद्भुते।
कामलो विप्रलम्भे स्याज्झम्पातालेन सिद्धिदः॥ ३२५॥
हर्षोत्कर्षप्रदश्चारो वीरे निःसारतालतः।
नन्दनो वीरशृङ्गार एकताल्येष्टसिद्धिदः॥ ३२६॥
वीरे हास्ये च शृङ्गारे प्रतिमण्ठेन गीयते।
अभीष्टफलदः श्रोतृगातॄणां चन्द्रशेखरः॥ ३२७॥
प्रतिमण्ठेन शृङ्गारे कामोदोऽभीष्टकामदः।
हास्ये द्वितीयतालेन विजयो नेतुरायुषे॥ ३२८॥
हास्यशृङ्गारकरुणेष्वादितालेन गीयते।
कंदर्पो भोगदो नृणां श्रीसदाशिवसंमतः॥ ३२९॥
क्रीडातालेन शृङ्गारे वीरे च जयमङ्गलः।
जयोत्साहप्रदः पुंसां ध्रुवकास्तिलकाभिधः॥ ३३०॥
रसे वीरे च शृङ्गार एकताल्या प्रगीयते।
प्रतिमण्ठेन शृङ्गारे ललितः सर्वसिद्धये॥ ३३१॥
स्याद्वर्णानियमः *सर्वखण्डः ×खण्डद्वये तथा।
यथोक्तान्यो जयन्तादीन्गायेन्निपुणया धिया।
सर्वक्रतुफलं तस्येत्यवोचन्मुनिसत्तमः॥ ३३२॥

इति ध्रुवलक्षणम्।

द्वियत्येकविरामं वा यस्योद्ग्राहाख्यखण्डकम्।
ततः खण्डं ध्रुवाख्यं द्विस्ततो वैकल्पिकोऽन्तरः॥ ३३३॥
तं गीत्वा ध्रुवमागत्य वाऽऽभोगो गीयते सकृत्।
ध्रुवे न्यासस्ततः प्रोक्तः स मण्ठो मण्ठतालतः॥ ३३४॥

॥ ३२३ ॥ ३२४ ॥ ३२५ ॥ ३२६ ॥ ३२७ ॥ ३२८ ॥ ३२९
॥ ३३० ॥ ३३१ ॥ ३३२ ॥ ३३३ ॥ ३३४ ॥

---

*'सर्वखण्डे' इति पाठः क्वचित्। ×खण्डद्वयेऽपि चेति क्वचित्पाठः।

---

१ ख. ग. ङ. °गदातॄणां। २ घ. °द्वयेऽथवा। स°।

जयप्रियो मङ्गलश्च सुन्दरो वल्लभस्तथा ।
कलापः कमलश्चेति षड्भेदा मण्ठके मताः ॥ ३३५ ॥
षट्प्रकारो मण्ठतालो रूपकं तेन भिद्यते ।
वीरे जयप्रियो गेयो मण्ठेन जगणात्मना ॥ ३३६ ॥
मङ्गलो भेन शृङ्गारे सुन्दरः सेन तद्रसः ।
वल्लभो रेण करुणे कलापो नगणेन तु ॥ ३३७ ॥
विरामान्तेन गातव्यो रसे हास्ये विचक्षणैः ।
विरामान्तद्रुतद्वंद्वाल्लघुना कमलोऽद्भुते ॥ ३३८ ॥

इति मण्ठलक्षणम् ।

मण्ठवत्प्रतिमण्ठादेर्लक्ष्मोद्ग्राहादिकं मतम् ।
तेषामेष विशेषस्तु प्रत्येकं प्रतिपाद्यते ॥ ३३९ ॥
तत्र च प्रतिमण्ठेन तालेन प्रतिमण्ठकः ।
चतुर्धा सोऽमरस्तारो विचारः कुन्द इत्यपि ।
अमरो गुरुणैकेन शृङ्गारे स विधीयते ॥ ३४० ॥

इत्यमरः ।

विरामान्तद्रुतद्वंद्वाल्लघुद्वंद्वेन जायते ।
ताराख्यः प्रतिमण्ठोऽसौ रसयोर्वीररौद्रयोः ॥ ३४१ ॥

इति तारः ।

लघुत्रयाद्विरामान्ताद्विचारः करुणे भवेत् ।

इति विचारः ।

कुन्दो विराममध्येन लत्रयेणाद्भुते भवेत् ॥ ३४२ ॥

इति कुन्दः ।

ते शृङ्गारेऽपि चत्वारो गीयन्ते लक्ष्मवेदिभिः ॥ ३४३ ॥

इति चतुर्विधप्रतिमण्ठलक्षणम् ॥

॥ ३३५ ॥ ३३६ ॥ ३३७ ॥ ३३८ ॥ ३३९ ॥ ३४० ॥ ३४१
३४२ ॥ ३४३ ॥

---

१ ङ. °म् । तथाऽप्येष वि° । २ ग. गीयते ।

बद्धो निःसारुतालेन प्रोक्तो निःसारुको बुधैः ।
वैकुन्दानन्दकान्ताराः समरो वाञ्छितस्तथा ॥ ३४४ ॥
विशालश्चेति स प्रोक्तः षड्विधः सूरिशार्ङ्गिणा ।
द्रुतद्वंद्वाल्लघुद्वंद्वाद्वैकुन्दो मङ्गले भवेत् ।
कुर्यादानन्दमानन्दे विरामान्तद्रुतद्वयात् ॥ ३४५ ॥

इति वैकुन्दानन्दौ ।

कान्तारो लगुरुभ्यां स्याद्विप्रलम्भे स गीयते ।

इति कान्तारः ।

लघुद्वयाद्विरामान्तात्समरो वीरगोचरः ॥ ३४६ ॥

इति समरः ।

लघुत्रयाद्द्रुतद्वंद्वाद्वाञ्छितो वाञ्छितप्रदः ।

इति वाञ्छितः ।

संभोगे स्याद्विशालाख्यो लाद्द्रुतद्वयतो लघोः ॥ ३४७ ॥

इति विशालः ।

इति षड्विधो निःसारुकः ।

अड्डुतालेन तालेनाड्डुतालः परिकीर्तितः ।
निःशङ्कशङ्कशीलाश्च चारोऽथ मकरन्दकः ॥ ३४८ ॥
विजयश्चेति स प्रोक्तः षोढा सोढलसूनुना ।
लगुरुभ्यां द्रुतद्वंद्वान्निःशङ्को विस्मये भवेत् ॥ ३४९ ॥

इति निःशङ्कः ।

लघोर्द्रुतद्वयेन स्याच्छङ्कः शृङ्गारवीरयोः ।

इति शङ्कः ।

शान्ते शीलो विरामान्तद्रुतद्वंद्वाल्लघोर्भवेत् ॥ ३५० ॥

इति शीलः ।

॥ ३४४ ॥ ३४५ ॥ ३४६ ॥ ३४७ ॥ ३४८ ॥ ३४९ ॥ ३५० ॥

---

१ ग. विलासश्चेति ।

द्रुतद्वंद्वाल्लगाभ्यां स्याच्चारो वीरेऽद्भुते रसे।

इति चारः।

शृङ्गारे मकरन्दः स्याद्द्रुतद्वंद्वात्परे गुरौ ॥ ३५१ ॥

इति मकरन्दः।

विजयाख्यो रसे वीरे द्रुताभ्यां लघुना भवेत् ॥ ३५२ ॥

इति विजयः ।

इति षड्विधोऽड्डतालः ।

रासको रासतालेन स चतुर्धा निरूपितः ।

विनोदो वरदो नन्दः कम्बुजश्चेति शार्ङ्गिणा ।

आलापान्तध्रुवपदाद्विनोदः कौतुके भवेत् ॥ ३५३ ॥

इति विनोदः।

ध्रुवादालापमध्याच्चु वरदो देवतास्तुतौ ॥ ३५४ ॥

इति वरदः।

खण्डमाद्यं द्विखण्डस्योद्ग्राहस्याऽऽलापनिर्मितम् ।

यस्यासौ रासको नन्दो गीयतेऽभ्युदयप्रदः ॥ ३५५ ॥

इति नन्दः ।

आलापादेर्ध्रुवपदात्कम्बुजः करुणे भवेत् ।

इति कम्बुजः ।

सर्वेषु रासकेष्वेषु द्विखण्डोद्ग्राहकल्पना ॥ ३५६ ॥

इति चतुर्विधरासकलक्षणम् ।

एकताली भवेत्तालेनैकताल्या त्रिधा च सा ।

रमा च चन्द्रिका तद्वद्विपुलेत्यथ लक्षणम् ॥ ३५७ ॥

॥ ३५१ ॥ ३५२ ॥ ३५३ ॥ ३५४ ॥ ३५५ ॥ ३५६ ॥ ३५७ ॥

---

१ ग. °दये च सः। आ°।

सकृद्विरतिरुद्ग्राहोऽन्तरस्त्वक्षरनिर्मितः।
यस्यामसौ रमा सा च गातृश्रोत्रोः श्रिये भवेत् ॥ ३५८ ॥

इति रमा।

उद्ग्राहो द्विदलो यस्यामालापरचितोऽन्तरः।
घनद्रुता घनयतिर्घनानुप्रासयोगिनी।
चन्द्रिका सैकताली स्याद्भूरिसौभाग्यदायिनी ॥३५९॥

इति चन्द्रिका।

आलापपूर्वकोद्ग्राहा विपुलानन्ददायिनी।
आलापो गमकालप्तिरक्षरैर्वर्जिता मता।
सैव प्रयोगशब्देन शार्ङ्गदेवेन शब्दिता ॥ ३६० ॥

इति विपुला।

इति त्रिविधैकतालीलक्षणम्।

॥ ३५८ ॥ ३५९ ॥ ३६० ॥

इति सालगसूडलक्षणम्।

अथ रूपकस्योत्तमाद्यवान्तरभेदान्दर्शयिष्यन्नादावुत्तमं लक्षयति—

गुणान्वितं दोषहीनं नवं रूपकमुत्तमम् ॥ ३६१ ॥

**गुणान्वितमित्यादि।** दुष्टादयो वक्ष्यमाणा दश गीतदोषास्तैर्हीनं यन्नवं रूपकं तदुत्तममित्युच्यते ॥ ३६१ ॥

रूपकस्य नवत्वे निमित्तं दर्शयति—

रागेण धातुमातुभ्यां तथाताललयौडुवैः।
नूतनै रूपकं नूत्नं राम(गः) स्थायान्तरैर्नवः ॥ ३६२ ॥

**रागेणेत्यादिना।** तालल्यौडुवैरिति। तालश्च लयश्चौडुवं चेति द्वंद्वः। औडुवशब्देनात्र रचनाविशेष उच्यते। नूतनरागादिनिर्मितत्वाद्रूपकं नवं भवतीत्यर्थः। रञ्जनादिधर्मयोगे सिद्धिरूपाणां रागादीनां नूतनत्वं कथमित्याकाङ्क्षायामाह—**रागः स्थायान्तरैरित्यादि।** स्थाया रागस्यावयवाः। अन्ये स्थायाः

---

१ च. कीर्तिता। २ ख. ग. °कमद्रुतम्। ३ ख. ग. नूनं।

स्थायान्तराणि । तै रागेण रागो नवो भवति । पूर्वैः कृतरूपकगतरागा-पेक्षयेदानीं क्रियमाणे रूपके स्थायान्तरैर्यथा रागो नवो भवति तथा कर्तव्यमि-त्यर्थः ॥ ३६२ ॥

धातु(तू) रागांशभेदेन मातोस्तु नवता भवेत् ।
प्रतिपाद्यविशेषेण रसालंकारभेदतः ॥ ३६३ ॥

**रागांशभेदेनेति** । रागांशशब्देन रागान्तरस्यावयवो रागेंऽशः स च सप्त-धेति पूर्वोक्ताः स्थायभेदका रागावयवविशेषा उच्यन्ते । तद्भेदेन पूर्वोक्तरीत्या धातुर्नवः कर्तव्य इत्यर्थः। मातोर्नवत्वे निमित्तद्वयं दर्शयति—**प्रतिपाद्यविशेषेण रसालंकारभेदत इति च** । प्रतिपाद्यं नाम वस्तुवाक्यार्थ इत्यर्थः । तद्भेदेन रसाः शृङ्गारादयोऽलंकारा अनुप्रासोपमादयस्तेषां भेदेन च मातुर्नवः कर्तव्य इत्यर्थः ॥ ३६३ ॥

तालानां नवत्वे निमित्तमाह—

लयग्रहविशेषेण तालानां नवता मता ।
तालविश्रामतोऽन्येन विश्रामेण लयो नवः ॥ ३६४ ॥

**लयग्रहेति** । लया द्रुतमध्यविलम्बिताः । ग्रहाः समातीतानागताः । तेषां विशेषेण । **तालानां नवतेति** । पूर्वगीतगतात्तालादिह नवलयग्रहस्तालः कर्तव्य इत्यर्थः। लयस्य नवत्वे हेतुमाह—**तालविश्रामत इति** ।तालस्यावयविनो विश्रामादन्येन विश्रामेणावयवविश्रामेण विपर्ययेण वा लयो नवो भवति ॥३६४॥

औडुवनवत्वे हेतुमाह—

छन्दोगणग्रहन्यासप्रबन्धावयवैर्नवैः ।
औडुवापरपर्याया रचना नवतां व्रजेत् ॥ ३६५ ॥

**छन्दोगणेति** । छन्दःप्रभृतीनि प्रागुक्तरूपाणि । **औडुवापरपर्यायेति** । औडुवमित्यपरः पर्यायो यस्याः सा । एवंविधां रचनां कुर्यादित्यर्थः ॥ ३६५॥

अथ मध्यमरूपभेदानाह—

रूपकं त्रिविधं ज्ञेयं परिवृत्तं पटान्तरम् ।
भञ्जनीसंश्रितं चेति शार्ङ्गदेवेन कीर्तितम् ॥ ३६६ ॥

**रूपकं त्रिविधमित्यादि** । खल्लोत्तारोऽनुसारश्चेत्यधमरूपकभेदौ । परिवृ-त्ता[दी]नां लक्षणानि गुणदोषाणां च लक्षणानि स्पष्टार्थानि ॥ ३६६ ॥

खल्लोत्तारानुसारौ तु रूपकेष्वधमौ मतौ ।
रूपकं पूर्वसंसिद्धं स्वस्थानेन नवेन यत् ॥ ३६७ ॥

॥ ३६७ ॥

---

१ छ. °लाद्भिन्नलय° । २ च. प्रोक्तं ।

यद्वा रागेण तालेन कृतं तत्परिवृत्तकम् ।
यत्र स्थायिनि यत्स्थानं रूपकं रचितं पुरा ॥ ३६८ ॥
तत्स्वस्थानं तदन्यत्त्वं स्थाय्यैव परिवर्तनम् ।
परिवृत्तं रागतालपरिवर्तभवं स्फुटम् ॥ ३६९ ॥
तस्मिन्नेव रसे रागे ताले च रचितं भवेत् ।
मातुस्थायविचित्रत्वाद्गुणोदारं पटान्तरम् ॥ ३७० ॥
केनापि रूपकं गीतं निजादन्येन धातुना ।
येन तस्यान्यधातुत्वाद्भञ्जनीसंश्रितं मतम् ॥ ३७१ ॥
प्राग्रूपकगता(ताः) स्थायाः स्थानान्तरगता यदि ।
मात्वन्तरेण रच्यन्ते खल्लोत्तारस्तदा भवेत् ॥ ३७२ ॥
रागे ताले च तत्रैव किंचिद्धातुविलक्षणः ।
मात्वन्तरेणानुसारो गुणोत्कर्षविवर्जितः ॥ ३७३ ॥

इति पञ्चरूपकभेदलक्षणम् ।

व्यक्तं पूर्णं प्रसन्नं च सुकुमारमलंकृतम् ।
समं सुरक्तं श्लक्ष्णं च विकृष्टं मधुरं तथा ॥ ३७४ ॥
दशैते स्युर्गुणा गीते तत्र व्यक्तं स्फुटैः स्वरैः ।
प्रकृतिप्रत्ययैश्चोक्तं छन्दोरागपदैः स्वरैः ॥ ३७५ ॥
पूर्णं पूर्णाङ्गगमकं प्रसन्नं प्रकटार्थकम् ।
सुकुमारं कण्ठभवं त्रिस्थानोत्थमलंकृतम् ॥ ३७६ ॥
समवर्णलयस्थानं सममित्यभिधीयते ।
सुरक्तं वल्लकीवंशकण्ठध्वन्यै(न्ये)कतायुतम् ॥ ३७७ ॥
नीचोच्चद्रुतमध्यादौ श्लक्षणत्वे श्लक्षणमुच्यते ।
उच्चैरुच्चारणादुक्तं विकृष्टं भरतादिभिः ।
मधुरं धुर्यलावण्यपूर्णं जनमनोहरम् ॥ ३७८ ॥

इति गीतगुणाः ।

॥ ३६८ ॥ ३६९ ॥ ३७० ॥ ३७१ ॥ ३७२ ॥ ३७३ ॥ ३७४ ॥ ३७५ ॥ ३७६ ॥ ३७७ ॥ ३७८ ॥

---

५ ख. ग. °विचक्ष° ।

**दुष्टं लोकेन शास्त्रेण श्रुतिकालविरोधि च ।**
**पुनरुक्तं कलाबाह्यं गतक्रममपार्थकम् ।**
**ग्राम्यं संदिग्धमित्येवं दशधा गीतदुष्टता ॥ ३७९ ॥**

॥ ३७९ ॥

**इति गीतदोषाः ।**

**इति श्रीमदनवद्यविद्याविनोदश्रीकरणाधिपतिश्रीसोढलदेवनन्द-नर्निःशङ्कश्रीशार्ङ्गदेवविरचिते संगीतरत्नाकरे प्रबन्धा-ध्यायश्चतुर्थः समाप्तः ॥ ४ ॥**

---

एवं प्रबन्धसामान्यविशेषाश्रितलक्षणम् ।
चतुरः कल्लिनाथार्यः प्रत्येकं प्रत्यपादयत् ॥ १ ॥

इति श्रीमदभिनवभरताचार्यरायवैकारतोडरमल्लश्रीमल्लक्ष्मणाचार्यनन्द-नचतुरकल्लिनाथविरचिते संगीतरत्नाकरकलानिधौ
चतुर्थः प्रबन्धाध्यायः ॥ ४ ॥

---

**अथ पञ्चमस्तालाध्यायः ।**

प्रबन्धाङ्गत्वेन प्रसक्तं तुर्यत्रयाधिष्ठानभूतं तालं लक्षयिष्यंस्तं चात्र विशे-षणसाम्यादवगमयन्प्रकरणादाविष्टदेवतां स्तौति—

**नानामार्गैर्लयो यत्र यतीनां स्यात्कलानिधौ ।**
**तं दाक्षिणं शिवं नौमि चित्रं वृत्तिमयं ध्रुवम् ॥ १ ॥**

**नानामार्गैरित्यादिना । कलानिधाविति ।** शिवपक्षे कलाशब्देन शि-वाश्रयाः शक्तय उच्यन्ते । यथोक्तं **किरणादिष्वागमेषु—**

"निवृत्तिश्च च प्रतिष्ठा च विद्या शान्तिस्तथैव च ।
शान्त्यतीतेति संप्रोक्ताः कलाः पञ्चविधा बुधैः " इति ।

तथाऽन्याः श्वेतादयोऽपि बह्व्यः कलास्तत्रैवोक्ताः। ताः सर्वाः कला अस्मि-न्निधीयन्त इति शिवः कलानिधिरुक्तः । एवंविधे यत्र यस्मिञ्शिवे यतीनां यमनियमाद्यष्टाङ्गयोगनिरतानां मुमुक्षूणां नानामार्गैः सांख्ययोगादिभिर्बहुभिः प्रा-प्त्युपायैः । लयोऽन्तर्भावः । परमात्मना शिवेनैक्यमिति यावत् । स्याद् भवेत् । दाक्षिणं दाक्षिणामूर्तिम् । अत्र नामैकदेशेन व्यपदेशो द्रष्टव्यः । यथा भीमसेनो भीम इति सत्यभामा भामेति च । पुनः किंविधम्। चित्रं प्रपञ्चाकारतया नानारूपम् । वृत्तिमयं सविषयज्ञानानि वृत्तिशब्देनोच्यन्ते तन्मयं तदाकारम् ।

ध्रुवं निरुपाधिकतया नित्यं शिवं नौमीति प्राकरणिकत्वेन वाच्योऽर्थः। एतैरेव विशेषणैर्गम्यमानोऽर्थस्तु। कलानिधौ। अत्र कलाशब्देन वक्ष्यमाणा आवापादयो निःशब्दा ध्रुवादयः सशब्दाश्चोच्यन्ते। तासामाश्रयः। यस्मिंस्ताले यतीनां वक्ष्यमाणानां समास्रोतावहागोपुच्छानां नानामार्गैर्वक्ष्यमाणैर्ध्रुवादिभिर्लयो विश्रान्तिर्भवति। मार्गभेदेन दक्षिणादिव्यपदेशभाजं शिवं मङ्गलं तं तालं स्तौमीति। अनेनात्र समासोक्त्यलंकार उद्भाविनो(तो) भवति। 'विशेषणसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिः' इति हि तस्य लक्षणम्। अत्र स्तुतौ प्रस्तुतः शिवस्तालोऽप्रस्तुतः ॥ १ ॥

अथ तालः।

अधिकारार्थमाह—अथ ताल इति।

तालशब्दं व्युत्पादयति—

**तालस्तलप्रतिष्ठायामिति धातोर्घञि स्मृतः।**
**गीतं वाद्यं तथा नृत्यं यतस्ताले प्रतिष्ठितम् ॥ २ ॥**

**तालस्तलप्रतिष्ठायामित्यादिना।** अस्माद्धातोः "पदरु(रु)जविशस्पृशो घञ्" इत्यनुवर्तमाने "अकर्तरि च कारके संज्ञायाम्" इत्यनेन सूत्रेणाधिकरणेऽर्थे घञ्प्रत्यये विहिते ताल इति रूपम् ॥ २ ॥

तालस्य स्वरूपं निरूपयितुमाह—

**कालो लघ्वादिमितया क्रियया संमितो मितिम् ।**
**गीतादेर्विदधत्तालः स च द्वेधा बुधैः स्मृतः ॥ ३ ॥**
**मार्गदेशीगतत्वेन तत्राऽऽद्यस्य क्रिया द्विधा।**
**निःशब्दा शब्दयुक्ता च निःशब्दा तु कलोच्यते ॥ ४ ॥**
**स्यादावापोऽथ निष्क्रामो विक्षेपश्च प्रवेशकः।**
**निःशब्देति चतुर्धोक्ता सशब्दाऽपि चतुर्विधा।**
**ध्रुवः शम्पा ततस्तालः संनिपात इतीरिता ॥ ५ ॥**

**काल इत्यादि।** **लघ्वादिमितयेति।** आदिशब्देन द्रुतगुरुप्लुता यथासंभवं गृह्यन्ते। अत्र यद्यपि लघ्वपेक्षया द्रुतस्याल्पत्वाद्द्रुतादीति वक्तव्ये लघ्वादीति वचनं मार्गदेशीगतोभयतालसाधारण्यायेति मन्तव्यम्। अन्यथा मार्गतालो न लक्षितः स्यात्। तत्र द्रुतप्रयोगाभावादिति भावः। तैर्लघ्वादिभिर्मितया संमितया समीकृतयेत्यर्थः। **क्रिययेति।** निःशब्दया सशब्दया चेत्यर्थः। **गीतादेरिति।** आदिशब्देन वाद्यनृत्तयोः परिग्रहः। एवंविशिष्टः काल एव मुख्यस्तालशब्दार्थः। कांस्यनिर्मितो घनवाद्यभेदस्तु ध्वननेनास्याभिव्यञ्जकत्वाल्लक्षणया तथा व्यपदिश्यते। **तत्राऽऽद्यस्येति।** तत्र तयोर्मध्य आद्यस्य मार्गगतस्य ॥ ३ ॥

१ ग. घ. °तं नृत्यं तथा वाद्यं य°। २ ख. ग. घ. °म्पा तथा तालः। ३ ख. ग. °गतालस्य।

पातः कला च सा ज्ञेया तासां लक्ष्माभिदध्महे ॥ ६ ॥
आवापस्तत्र हस्तस्योत्तानस्याङ्गुलिकुञ्चनम् ।
निष्क्रामोऽधस्तलस्य स्यादङ्गुलीनां प्रसारणम् ॥ ७ ॥
क्षेपो दक्षिणपार्श्वस्योत्तानस्य प्रसृताङ्गुलेः ।
विक्षेपोऽधस्तलस्यास्य प्रवेशोऽङ्गुलिकुञ्चनम् ॥ ८ ॥
ध्रुवो हस्तस्य पातः स्याच्छोटिकाशब्दपूर्वकः ।
शम्पा दक्षिणहस्तस्य तालो वामकरस्य तु ॥ ९ ॥

**पातः कला च सा ज्ञेयेति** । सा [स]शब्दक्रियापातः कलेति संज्ञाद्वयेनोच्यते । निःशब्दा तु कलासंज्ञयैवोच्यत इति तुशब्दस्यार्थः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

उभयोः संनिपातः स्यात्तासां मार्गवशान्मितिः ॥ १० ॥

**मार्गवशान्मितिरिति** । मितिः प्रमाणम् ॥ १० ॥

मार्गाः स्युस्तत्र चत्वारो ध्रुवश्चित्रश्च वार्तिकः ।
दक्षिणश्चेति तत्र स्याद्ध्रुवके मात्रिका कला ।
शेषेषु द्वे चतस्रोऽष्टौ क्रमान्मात्राः कला भवेत् ॥ ११ ॥

**शेषेष्वित्यादि** । शेषेषु चित्रवार्तिकदक्षिणेषु क्रमाद्द्वे चतस्रोऽष्टौ मात्राः कला भवेदिति । चित्रे द्वे मात्रे कला । वार्तिके चतस्रो मात्राः कला । दक्षिणेऽष्टौ मात्राः कला इति क्रमो द्रष्टव्यः ॥ ११ ॥

अष्टौ मात्राश्चोद्दिश्य लक्षयति—

ध्रुवका सर्पिणी कृष्णा पद्मिनी च विसर्जिता ।
विक्षिप्ताख्या पताका च मात्रा स्यात्पतिताऽष्टमी ॥ १२ ॥
सशब्दा तु ध्रुवा ज्ञेया सर्पिणी वामगामिनी ।
कृष्णा दक्षिणतो गन्त्री पद्मिनी स्यादधोगता ॥ १३ ॥
विसर्जिता बहिर्याता विक्षिप्ता कुञ्चनात्मिका ।
पताका तूर्ध्वगमनात्पतिता करपातनात् ।
ध्रुवपाते प्रयोज्यास्ता नाऽऽवापादौ कदाचन ॥ १४ ॥

**ध्रुवका सर्पिणीत्यादिना** । **ध्रुवपाते प्रयोज्यास्ता इति** । ता अष्टौ मात्रा ध्रुवपाते ध्रुवादिपाते सशब्दक्रियायामित्यर्थः । **नाऽऽवापादौ कदाचनेति** । निःशब्दक्रियायां तु न प्रयोक्तव्या एव । नाऽऽवापादाविति निःश-

१ ख. ग. घ. ङ. °क्ष्माभिलप्यते । आ । २ ख. ग. घ. °ब्दाऽत्र ध्रु° ।

ब्दक्रियाया एव निषेध(ध्य)त्वेनोक्तत्वात् । ध्रुवपात इत्यत्र सामर्थ्यादादिशब्द-मध्याहृत्य विधिविषयत्वेन सर्वाऽपि सशब्दक्रिया गृह्यत इति मन्तव्यम् ॥ १२ ॥ १३ ॥ १४ ॥

शेषेषु द्वे चतस्रोऽष्टाविति संख्यानियममात्रपरेण वचनेन संख्येयमात्राणामनियमेन प्रयोगे प्राप्ते तन्नियमार्थमाह—

**ध्रुवका पतिता चित्रे वार्तिके त्वादिमे उभे।**
**अन्त्ये द्वे च प्रयोक्तव्ये क्रमादष्टौ च दक्षिणे ॥ १५ ॥**

**ध्रुवका पतिता चित्र इत्यादि** । आदिमे उभे ध्रुवकासर्पिण्यौ । अन्त्ये द्वे च पताकापतिते च । एवं चतस्रो मात्रा वार्तिके मार्गे तु प्रयोक्तव्या इति क्रमोऽप्यत्र नियम्यते । क्रमादष्टौ च दक्षिण इत्यत्र तु संख्येयानां क्रम एव नियम्यते । ध्रुवमार्गे तु पारिशेष्याद्ध्रुवसंज्ञः पात एव प्रयोक्तव्य इत्यवगन्तव्यम् । पारिशेष्यं च ध्रुवव्यतिरिक्तानामेव कलानां तालेषु प्रयोक्ष्यमाणत्वात्। अन्यथा ध्रुवपातस्य न क्वापि प्रयोगः । अतस्तत्र ध्रुवकैव मात्रा प्रयोक्तव्येत्येवं मन्यमानेन ग्रन्थकारेण ध्रुवके मात्रिका कलेति प्रथममुक्तम् । ध्रुवके ध्रुवमार्गे मात्रिका ध्रुवकेत्यर्थः । प्राथम्याद्ध्रुवपातयोग्यत्वाच्चेत्यर्थः । तस्या एवोपादेयत्वात् ॥ १५ ॥

मात्राशब्देनात्रापि ' निमेषकालो मात्रा स्यात् ' इति शास्त्रान्तरे प्रसिद्धायां मात्रायां प्राप्तायां तदपवादार्थमाह—

**पञ्चलघ्वक्षरोच्चारमिता मात्रेह कथ्यते ।**
**अनया मात्रयाऽत्र स्याल्लघुगुर्वादिकल्पना ॥ १६ ॥**

**पञ्चलघ्वक्षरेत्यादि** । इह मार्गतालविषये मात्रा तु पञ्चलघ्वक्षरोच्चारमिता। पञ्चानां लघ्वक्षराणां 'कचटतप' इत्येतेषाम् । उच्चारशब्देनोच्चारणकालो गृह्यते। तेन मिता संमिता । तत्कालसदृशकालेत्यर्थः । तथा चोक्तं **मुनिना**—' निमेषाः पञ्च विज्ञेया गीतकाले कलान्तरम् ' इति । **अनया मात्रयाऽत्र लघुगुर्वादिकल्पना स्यादिति**। अत्र मार्गतालेषु पञ्चलघ्वक्षरोच्चारमितेन कालेन लघुः। दशलघ्वक्षरोच्चारमितेन कालेन गुरुः । आदिशब्देन प्लुतो गृह्यते । तेन पञ्चदशलघ्वक्षरोच्चारमितेन प्लुतः कल्पनीय इत्यर्थः ॥ १६ ॥

**चतुरस्रस्तथा त्र्यस्र इति तालो द्विधा मतः।**
**चच्चत्पुटश्चाचपुट इति नाम्नी तयोः क्रमात् ॥ १७ ॥**

तस्य मार्गतालस्य भेदौ दर्शयति—**चतुरस्र इत्यादिना** ॥ १७ ॥

**यथाक्षरश्च द्विकलश्चतुष्कल इति त्रिधा ।**
**प्रत्येकं तौ नामगतैर्गलैस्तत्र यथाक्षरः।**
**अयमेककलश्चच्चत्पुटे त्वन्त्यं प्लुतं विदुः ॥ १८ ॥**

---

१ ग. घ. °तैर्गीतैस्त° ।

ऽऽ । ऽ इति **यथाक्षरश्चच्चत्पुटः**, ऽ । ऽ । इति **यथाक्षरश्चाचपुटः** ।
**नामगतैर्गलैस्तत्र यथाक्षर** इति । तत्र तेषु मध्ये नामगतैश्चच्चत्पुट इति संज्ञां चाचपुट इति संज्ञां चावयवत्वेन प्राप्तैर्गलैर्गुरुभिर्लघुभिश्च । गलैरिति गुरूणां लघूनां चाऽऽद्यवर्णेन ग्रहणम् । चच्चत्पुटस्तावच्चकारस्य संयुक्तपरत्वेन गुरुत्वात्तालस्याऽऽद्यावयवौ गुरू । पकारस्यैकमात्रिकत्वेन लघुत्वात्तृतीयोऽवयवो लघुः । टकारस्य सविसर्गत्वेन गुरुत्वाच्चतुर्थस्य गुरुत्वे प्राप्ते चच्चत्पुटे त्वन्त्यप्लुतं विदुरिति विशेषवचनाच्चतुर्थावयवस्य प्लुतत्वम् । एवमष्टमात्रिकश्च चच्चत्पुटो यथाक्षर इत्युच्यते । यथाक्षरत्वं च तस्य नामाक्षरानतिक्रमात् । अक्षराणामनतिक्रमो यथाक्षरमित्यव्ययीभावः । यथाक्षरमस्तीति मत्वर्थीयेऽकारप्रत्यये कृते यथाक्षर इति भवति । स्वनामगतगुरुलघ्वक्षरानतिवृत्त्या स्वरूपगुरुलघुमान्भवतीत्यर्थः । **अयमेककल इति** । अयं यथाक्षर एककल इत्युच्यते । प्रतिपादभागमेकैक[क]लायुक्त इत्यर्थः ॥ १८ ॥

**गुरुः कलाऽत्र द्विकलेऽष्टावाद्येऽन्यत्र षट्कला [लाः]** ॥१९॥

ऽऽ ऽऽ ऽऽ ऽऽ इति **द्विकलश्चच्चत्पुटः**, ऽऽ ऽऽ ऽऽ इति **द्विकलश्चाचपुटः**।
**गुरुः कलाऽत्रेति** । अत्रैककलद्विकलचतुष्कलशब्देषु कलाशब्देन गुरुरुच्यत इत्यर्थः । अन्यत्र मात्रा कला । 'लघुर्लः स्यादिति' कलाशब्दस्य लघुपर्यायत्वेनोक्तत्वात् । **द्विकलेऽष्टावाद्य इति** । द्विकल आद्ये द्विकलवच्चच्चत्पुटेऽष्टौ कला गुरवो भवन्तीत्यर्थः । अन्यत्र द्विकलचाचपुटे षट्कलाः षड्गुरवो भवन्तीत्यर्थः ॥ १९ ॥

**चतुष्कलौ तौ द्विगुणौ**

ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ इति **चतुष्कलश्चच्चत्पुटः**, ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ **इति चतुष्कलश्चाचपुटः** ।

**द्विकले द्विकलो मतः** ॥ २० ॥
**पादभागः कलानां तु चतुष्केण चतुष्कले ।**
**पादभागैश्चतुर्भिस्तैर्मात्रा स्यान्मन्द्रकादिषु** ॥ २१ ॥

तौ चच्चत्पुटचाचपुटौ द्विगुणौ द्विकलापेक्षया द्विगुणीकृतौ सन्तौ चतुष्कलावित्युच्येते । अष्टगुरुसंमितो द्विकलचच्चत्पुटो द्विगुणीकृत्य षोडशगुरुसंमितः संश्चतुष्कलो भवति । षड्गुरुसंमितो द्विकलचाचपुटो द्विगुणीकृत्य द्वादशगुरुसंमितः संश्चतुष्कलो भवति । **पादभागैरित्यादि** । मद्रकादिषु वक्ष्यमाणेषु गीतकेषु गीतेषु च तैर्द्विकलोकैश्चतुष्कलोकैश्चतुर्भिः पादभागैर्मात्रा स्यात् । पारिभाषिकी मात्रा भवेत् ॥ २० ॥ २१ ॥

**षट्पितापुत्रकस्त्र्यस्रभेदः सोऽपि तथा त्रिधा ।**
**यथाक्षरे विशेषोऽत्र प्लुतमाद्यन्तयोर्भवेत्** ॥ २२ ॥

१ च. ष्कले तौ ।

ऽ । ऽऽ । ऽ इति यथाक्षरः षट्पितापुत्रकः ।

द्विकले द्वादश कलाः

ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ इति द्विकलः षट्पितापुत्रकः ।

द्विगुणास्तु चतुष्कले ॥

ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ इति चतुष्कलः षट्पितापुत्रकः ।

उत्तरः पञ्चपाणिश्च तस्य संज्ञाद्वयं परम् ।
उद्घटोऽपि त्र्यस्रभेदः स प्रस्तारे यथाक्षरः ॥ २३ ॥

ऽऽऽ इति यथाक्षरोद्घट्टः ।

संपक्वेष्टाकोऽपि भेदः षट्पितापुत्रकस्य[1] सः ।
तद्वद्यथाक्षरः कार्यः प्लुताद्यन्त्याक्षरस्तथा ॥ २४ ॥

ऽऽऽऽऽऽ इति यथाक्षरः संपक्वेष्टाकः ।

षट्पितापुत्रक इत्यादि । त्र्यस्रभेदश्चाचपुटभेदः ॥ २२ ॥ २३ ॥२४॥

एतौ स्वयोनिवत्स्यातां द्विकलौ च चतुष्कलौ ॥ २५ ॥

ऽऽऽऽऽऽ इति द्विकलोद्घट्टः, ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ इति चतुष्कलोद्घट्टः, ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ इति द्विकलः संपक्वेष्टाकः, ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ इति चतुष्कलः संपक्वेष्टाकः ।

एतौ स्वयोनिवदिति । एतावुद्घट्टसंपक्वेष्टाकौ स्वयोनिवत् । उद्घट्टस्य योनिः कारणं चाचपुटः संपक्वेष्टाकस्य योनिः कारणं षट्पितापुत्रकस्तद्वदित्यर्थः ॥ २५ ॥

अन्यद्भेदत्रयं चाचपुटेऽप्यास्ति चतुष्कलात् ।
द्विगुणाद्विगुणत्वेन षण्णवत्यवधि क्रमात् ॥ २६ ॥

ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ इत्येको भेदः, ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ इति द्वितीयो भेदः, ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ इति तृतीयो भेदः ।

चतुष्कलाद्द्विगुणाद्विगुणत्वेनेति । चतुष्काद्द्वादशकलात्मकाच्चाचपुटाद्द्विगुणश्चतुर्विंशतिकलः प्रथमो भेदः । तस्माद्द्विगुणोऽष्टचत्वारिंशत्कलो द्वितीयो भेदः । तस्माद्द्विगुणः षण्णवतिकलस्तृतीयो भेदः ॥ २६ ॥

---

१ ङ. च. °स्य च । त° ।

एषां पातकलायोगं श्रेयसे व्याहरामहे ॥ २७ ॥

एव(षा)मित्यादि । एषां पञ्चानामपि चच्चत्पुटादीनां तालानां पातकलायोगम् । पाताः सशब्दा ध्रुवादयः । कला निःशब्दा आवापादयः । ताभिः पातकलाभिर्योगः संबन्धः ॥ २७ ॥

आद्यवर्णैः पातकला निःशङ्कः पर्यभाषत ।
चच्चत्पुटे त्वेककले संशताशं यथाक्रमम् ॥ २८ ॥

ऽ ऽ । ऽ̆

सं श ता श ।

संशताशमिति द्वंद्वैकवद्भावः ॥ २८ ॥

यद्वा शताशता तालः शम्पा वा द्विर्भवेदिह ।

ऽ ऽ । ऽ̆ ऽ ऽ । ऽ̆

श ता श ता । ताश ताश ।

आसारितादौ शम्पादिस्तालादिः पाणिकादिषु ॥ २९ ॥

आसारितादाविति । आसारितं नाम मन्द्रकादिष्वेकं गीतम् । पाणिकमपि तथा ॥ २९ ॥

इत्येककलचच्चत्पुटकलाविधिः ।

अन्त्यं भेदद्वयं चाचपुटेऽप्यस्ति मुनेर्मतम् ॥ ३० ॥

ऽ । । ऽ ऽ । । ऽ

श ता श ता । ताश ताश ।

इत्येककलचाचपुटकलाविधिः ।

उत्तरे संततस्तालः शतालौ द्विरनन्तरम् ॥ ३१ ॥

ऽ̆ । ऽ ऽ । ऽ

स ता श ता श ता ।

अन्त्यं भेदद्वयमिति । शताशेत्येको भेदः । ताशताशेत्यपरः ॥३०॥३१॥

इत्येककलषट्पितापुत्रककलाविधिः ।

निशौ निताशप्रनिसं द्विकले युग्मके मताः ॥ ३२ ॥

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

निश निता शप्र निसं ।

---

१ घ. °ताशो य° ।

इति [द्विकल]चच्चत्पुटकलाविधिः ।

निशौ ताशौ निसमिति ज्ञेयाश्चाचपुटे क्रमात् ॥ ३३ ॥

ऽ ऽ ऽ ऽ ऽ ऽ

निश ताश निसं ।

इति द्विकलचाचपुटकलाविधिः ।

**द्विकले युग्मक इति ।** द्विकलचच्चत्पुटे चच्चत्पुटस्य चतुरस्रत्वेन समत्वाद्युग्मक इति संज्ञान्तरम् ॥ ३२ ॥ ३३ ॥

निप्रताशनितानिशताप्रनिसं तथोत्तरे ॥ ३४ ॥

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

निप्र ताश निता निश ताप्र निसं ।

उत्तरे षट्पितापुत्रके ॥ ३४ ॥

इति द्विकलषट्पितापुत्रककलाविधिः ।

एवमेककलेषु पातयोगं द्विकलेषु पातकलायोगं च दर्शयित्वा चतुष्कलेष्वपि पातकलायोगं दर्शयितुमाह—

आदावधिक आवापे क्षिप्ते विक्षेपकेऽन्तरा ।

द्विकले पादभागः स्यात्पादभागश्चतुष्कले ॥ ३५ ॥

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

आनि विश आनिविता आशविप्र आनिविसं ।

इति चतुष्कलचच्चत्पुटकलाविधिः* ।

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

आनि विप्र आताविशं आनिविता आनिविशं आताविप्र आनिविसं ॥

इति चतुष्कलषट्पितापुत्रककलाविधिः ।

**आदावधिक इत्यादि ।** द्विकले पादभाग उक्तप्रकारेण पातकलायुक्तो गुरुद्वयात्मक आदावावापे निःशब्दक्रियाभेदेऽधिके सति विक्षेपके तद्भेदान्तरेऽन्तरा मध्ये क्षिप्ते सति चतुष्कले पादभागः स्यात् । आवापविक्षेपगुरुद्वयाधिक्यादित्यर्थः । द्विकले चच्चत्पुटे तावन्निशाविति द्विकलः पादभागः । तस्यो-

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

* ङ. पुस्तक एतदग्रे ' आनिविश आताविश आनिविसं इति । चतुष्कलचाचपुटकलाविधिः ' इति पाठो दृश्यतेऽयं च मूलेऽपेक्षितः ।

क्रमप्रकारेण कलाद्वयान्तरयोग आनिविशेति चतुष्कलचच्चत्पुटे चतुष्कलः प्रथमः पादभागः स्यात् । वि( नि )तेति द्वितीयः पादभागः । तस्याप्येतत्कलाद्वययोगे सत्यानिवितेति चतुष्कलः स्यात् । शमेति तृतीयः पादभागः । तस्यापि कलाद्वययोगे सत्याशविमेति चतुष्कलः स्यात् । निसमिति चतुर्थः पादभागः । तस्यापि कलाद्वययोगे सत्यानिविसमिति चतुष्कलः स्यात् । एवं चाचपुटादिष्वपि योजनीयम् ॥ ३५ ॥

पादभागभेदपरिज्ञानार्थमङ्गुलीनियममाह—

**प्रथमे पादभागे स्यात्कलाऽङ्गुल्या कनिष्ठया ।**
**तथा(या) चानामयाऽन्यत्र ताभ्यां मध्यमया तथा ।**
**तृतीये स्याच्चतसृभिस्तुर्ये चच्चत्पुटस्य तु ॥ ३६ ॥**

**प्रथमे पादभागे स्या**दित्यादिना । अन्यत्रेति । द्वितीये पादभागे ॥३६

**ओजस्य पादभागेषु कला मध्याङ्गुलीं विना ॥ ३७ ॥**
**पञ्चपाणेः कनिष्ठादिचतुष्केण कनिष्ठया ।**
**तर्जन्या च पृथक्पादभागषङ्के(ट्के) क्रमात्कलाः ॥ ३८ ॥**

**ओजस्येति** । चाचपुटस्त्र्यस्रत्वेन विषमत्वादोज इत्युच्यते । तस्य पादभागेषु त्रिषु मध्याङ्गुलीं विना कला स्यात् । चाचपुटस्य प्रथमादिषु त्रिषु पादभागेषु कनिष्ठानामिकातर्जनीभिः क्रमेण कला कार्येत्यर्थः ॥ ३७ ॥ ३८ ॥

**आवापादिः प्रयोक्तव्यो भाविपातस्य पाणिना ॥ ३९ ॥**
**पातयुक्ते पादभागे नाङ्गुल्या क्रियते कला ।**
**उद्घट्टे तु सानिष्क्रामं शम्पाद्वंद्वं च योजयेत् ॥ ४० ॥**

ऽ ऽ ऽ
नि श श

इत्येककलोद्घट्टकलाविधिः ।

**भाविपातस्य पाणिनेति** । भावी चासौ पातः शम्पादिः । तस्य भा पातस्येति संबन्धे षष्ठी । तत्संबन्धेन पाणिना दक्षिणादिना शम्पाया दक्षि तालस्य वामेन संनिपातस्य वामदक्षिणेनेत्यर्थः । तेन पाणिना पूर्वमावाप प्रयोक्तव्यः । पातयुक्त इति । शम्पादियुक्ते । **अङ्गुल्या कला न क्रि** इति । अङ्गुलीपातमात्रेण क्रियायाः सशब्दत्वानभिव्यक्तेरिति निषेधस्य त र्यम् । तत्र सकलेन पाणिना पातः कर्तव्य इति भावः ॥ ३९ ॥ ४० ॥

**संपक्वेष्टाकस्य कलाः षट्पितापुत्रकोदिताः ।**
**संनिपातस्तु नास्त्यत्र योनिवद्वाद्विकलादिके ॥**

---

१ ङ. °दिर्नियो° ।

ऽ ऽ ऽ ऽ ऽ

ता श ता श ता ।

इत्येककलसंपक्वेष्टाककलाविधिः ।

भेदद्वय(येऽ)स्योद्‌घट्टाख्यतालस्य च कलाविधिः ॥ ४१ ॥

ऽ ऽ ऽ ऽ ऽ ऽ

निश ताश निसं

इति द्विकलोद्‌घट्टकलाविधिः ।

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

आनि विश आता विश आनि विस ।

इति चतुष्कलोद्‌घट्टकलाविधिः ।

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

निप्र ताश निता निश ताप्र निसं ।

इति द्विकलसंपक्वेष्टाककलाविधिः ।

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

आनि विप्र आताविश आनिविता आनिविश आताविप्र आनि विसं ।

इति चतुष्कलसंपक्वेष्टाककलाविधिः

**योनिवद्‌द्विकलादिक इत्यादि** । अस्येति संनिहितस्य संपक्वेष्टाकस्योद्‌घट्टाख्यतालस्य च द्विकलादिके भेदद्वये द्विकलचतुष्कलयोरित्यर्थः। कलाविधिः कलानां निःशब्दानां सशब्दानां च विधिर्विधानं योनिवत्। संपक्वेष्टाकस्य योनिः कारणं षट्पितापुत्रकः। उद्‌घट्टस्य योनिः कारणं चच्चत्पुटः । द्विकलाचतुष्कलयोस्तयोर्गुरुषु पूर्वं यः पातकलायोग उक्तः स एव तयोरपि कर्तव्य इत्यतिदेशार्थः। ननु चैककलादिषु तालभेदेषु शम्पादिपातत्रयस्यैव योगो दर्शितः । ध्रुवपातस्य तु योगो न क्वचिदपि दर्शितः। अतस्तदुद्देशलक्षणे निरर्थके स्यातामिति चेत् । न । तस्य ध्रुवमार्गे प्रयोज्यत्वेन सार्थकत्वात् । तथा हि—एकमात्रिककलासंमितस्य ध्रुवमार्गस्य चित्रादिमार्गेष्वनुस्यूतत्वेन यदा गाता गीतादिकं ध्रुवमार्गेण योजयितुमिच्छति तदा ध्रुवपातः प्रयोक्तव्य इति मन्तव्यम् । अतस्तयोः पातमार्गयोः कूटस्थत्वेन सकलतालानपायान्नित्यतया ध्रुवत्वमवगन्तव्यम् । अत एव पृथक्प्रयोगोऽपि न दर्शितः। दर्शयिष्यते चोपोहनेषु ध्रुवपातस्य प्रयोगः। मतान्तरोक्ते ध्रुवासारिते यथाक्षरासारिते च ध्रुवमार्गस्यापि प्रयोगश्च । अतस्तदुद्देशलक्षणयोरानर्थक्यं नाऽऽशङ्कनीयम् ॥ ४१ ॥

**गान्धर्वमार्गकुशलः कांस्यतालधरोऽपरः ।**

**गातुः सहायः कर्तव्यः प्रमादविनिवृत्तये ॥ ४२ ॥**

**गान्धर्व इत्यादि** । वक्ष्यमाणानि चतुर्दश गीतानि प्रागुक्ताः षाड्ज्यादिजातयो ग्रामरागादयश्च षड्विधा रागा गान्धर्वशब्देनोच्यन्ते । तस्मिन्गान्धर्वे मार्गे कुशलः। चित्रादिमार्गेषु कुशलः कांस्यतालधरः। अपरो गातुः सहाय इत्यनेनापरस्यापि गातृत्वं प्रतीयते । तत्सहायकरणे प्रयोजनमाह—**प्रमादविनिवृत्तय इति** । अयमर्थः। गान्धर्वस्यात्यन्तनियतत्वेनादृष्टफलसाधनत्वात् । गान्धर्वप्रयोगे मुख्योऽङ्गुलीनियमादिकं कुर्वन्गायेत् । द्वितीयो गाता कांस्यतालधरः सन्यथा प्रमादो न जायेत तथा मुख्यगातुः साहाय्यकं कुर्यादिति । अन्यथा प्रमादे सति न केवलमदृष्टफलाभावः किंतु प्रत्यवायोऽपि भवतीति भावः ॥ ४२ ॥

**युग्मस्य ये त्रयो भेदाः षड्वाऽयुग्मस्य कीर्तिताः ।**
**तेषामन्योन्यसंसर्गात्संकीर्णा बहवो मताः ॥ ४३ ॥**

**युग्मस्येत्यादि** । युग्मस्य चच्चत्पुटस्य ये त्रयो भेदा एककलद्विकलचतुष्कलाख्याः । अयुग्मस्य चाचपुटस्य षड्भेदा एककलद्विकलचतुष्कलास्त्रयस्ततोऽपि द्विगुणगुणास्त्रयश्च । **तेषामिति** । पूर्वोक्तानां नवानां भेदानाम् ॥ ४३ ॥

**अन्ये पञ्चैव संकीर्णान्गान्धर्वेऽभिदधुर्बुधाः ।**
**पञ्च सप्त नवापि स्युर्दशैकादश तत्कलाः ॥ ४४ ॥**

**तत्कला इति** । तेषां संकीर्णानां कला गुरुरूपाः ॥ ४४ ॥

**तालाश्चत्वार इत्यन्ये चतुर्दशकलादिकाः ।**
**चच्चत्पुटादिभेदास्तु सन्ति खण्डाभिधाः परे ॥ ४५ ॥**

**चतुर्दशकलादिका इति** । चतुर्दशगुर्वात्मक एको भेदः । पञ्चदशगुर्वात्मको द्वितीयः । षोडशगुर्वात्मकस्तृतीयः । सप्तदशगुर्वात्मकश्चतुर्थः । एवं चत्वारः संकीर्णका इत्यन्ये वदन्ति । **चच्चत्पुटादिभेदास्त्विति** । आदिपदेन चाचपुटादयो गृह्यन्ते । तेषां भेदाः । आदौ चच्चत्पुटादेः स्वरूपं लिखित्वा तदधस्तान्यस्याल्पमाद्यान्महत इत्यादिना वक्ष्यमाणेन प्रकारेण प्रस्तारे कृते सति ये भेदा उत्पद्यन्ते ते खण्डाभिधाः खण्डतालसंज्ञाः ॥ ४५ ॥

**देशीतालप्रपञ्चेन तानपि व्याहरामहे ॥ ४६ ॥**

**देशीतालप्रपञ्चेनेति** । देशीतालभेदविस्तारेण । **तानपीति** । तेषु कांश्चिदित्यर्थः । **व्याहरामह इत्यादि** । "वर्तमानसामीप्ये वर्तमानवद्वा" इति लटः प्रयोगः । 'अस्मदो द्वयोश्च' इति बहुवचनप्रयोगश्च । एवं सकलास्तालाश्चतुरस्रत्र्यस्रसंकीर्णखण्डभेदेन चतुर्विधा उक्ताः । मिश्रत्वेनान्यो भेदो **मुनिनाऽभिहितः** ।

यथा—"अस्यापि मिश्रभावाच्च मिश्रस्तालः प्रकीर्तितः ।
षट्पितापुत्रकश्चैव पञ्चपाणिः स चेष्यते" इति ।

"तालो हि मिश्रभेदोऽन्यः संपक्वेष्टाकसंज्ञितः" इति ।

तन्मते षट्पितापुत्रकसंपक्वेष्टाकौ मिश्रौ । अतस्तद्भेदा मिश्रत्वेनावगन्तव्याः । ग्रन्थकारेण तु तन्मतानुसारिणा तावपि त्र्यस्रभेदत्वेनोक्तौ । अतोऽनेन चातुर्विध्यमेवोक्तम् ॥ ४६ ॥

अथ तालानां परिवर्तादीँलक्षयति—

**आवृत्तिः पादभागादेः परिवर्तनमिष्यते ।**
**विश्रान्तियुक्तया काले क्रियया मानमिष्यते ॥ ४७ ॥**

**आवृत्तिरित्यादि** । पादभागादेरित्यादिशब्देनावयवी तालो गृह्यते । तस्याऽऽवृत्तिरभ्यासः पुनः पुनः करणमिति यावत् । परिवर्तनमिति लक्षणीयं पदम् । **विश्रान्तियुक्तयेति** । विश्रान्तिः क्रियाविरतिस्तद्युक्तया । **काले क्रियया** । काले पञ्चलघ्वक्षरोच्चाराद्युपहिते तपनपरिस्पन्दोपाधिभेदाभिन्ने द्रव्यविशेषे क्रियया पूर्वोक्तया निःशब्दया सशब्दया वा मानं तालानां प्रमाणमिष्यत इष्टं भवतीत्यर्थः ॥ ४७ ॥

**क्रियानन्तरविश्रान्तिर्लयः स त्रिविधो मतः ।**
**द्रुतो मध्यो विलम्बश्च द्रुतः शीघ्रतमो मतः ।**
**द्विगुणद्विगुणौ ज्ञेयौ तस्मान्मध्यविलम्बितौ ॥ ४८ ॥**

**क्रियानन्तरविश्रान्तिरिति** । क्रियायाः पूर्वोक्ताया अनन्तरा संनिहिता या विश्रान्तिर्विरतिः स लय इत्युच्यते । **द्रुतः शीघ्रतमो मत इति** । क्रियानन्तरमविच्छेदेन क्रियान्तरं प्रवर्तते चेत्तदा विश्रान्त्यभावाल्लयो नास्त्येव । यथा गुर्ववयवयोर्लघ्वोरन्तराले । यथा वा प्लुतावयवानां लघूनामन्तरालयोस्तस्मादवयवान्तरालेषु च(?) लयः कर्तव्यः । तत्र यस्मिन्सति क्रियाविच्छेदो दृश्यतेऽसति न दृश्यत एवं क्रियाविच्छेदान्वयव्यतिरेकानुविधायी यः स शीघ्रतमः । स एव द्रुतलय इत्यर्थः । **द्विगुणद्विगुणावित्यादि** । तस्माद्द्रुतलयाद्द्विगुणो विश्रान्तिकालो मध्यलयः । तस्मान्मध्यलयाद्द्विगुणो विश्रान्तिकालो विलम्बितलयः । एवमेककलादिष्वेकैकस्मिन्मार्गे विश्रान्तिकालप्रमाणभेदाल्लयत्रयं दर्शितम् । यथा लोक एकस्मिन्नेव मार्गे त्रयोऽपि गन्तुं प्रवृत्ताः । तत्रैको धावति तस्य गतिः शीघ्रा भवति । ततो मन्दमन्यो गच्छति तस्य गतिर्मध्यमा भवति । ततोऽपि मन्दमपरो याति तस्य गतिर्विलम्बा । एवं पादन्यासक्रियाविश्रान्तिकालवैषम्याद्गतिभेदः । तथा ताले लयभेदो द्रष्टव्यः ॥ ४८ ॥

**मार्गभेदाच्चिरक्षिप्रमध्यभावैरनेकधा * ।**
**लयोऽक्षरे पदे वाक्ये योऽसौ नात्रोपयुज्यते ॥ ४९ ॥**

---

* सर्वेष्वपि मूलादर्शपुस्तकेषु चिराक्षिप्रमध्यभावोऽप्यनेकधेति पाठो वर्तते ।

---

१ ख. ग. °षु तावान्तरालेषु च । २ च. °दाश्चिर° ।

**मार्गभेदादित्यादि** । **चिरक्षिप्रमध्यभावैरिति** । दक्षिणमार्गे चिरभावः। चित्रमार्गे क्षिप्रभावः। वार्तिकमार्गे मध्यभावः। तैर्लयोऽनेकधा भवति। तथा हि-चित्रमार्गे दशलघ्वक्षरोच्चारमितकलानन्तरं यो लयो भवति स द्रुत इत्युच्यते । वार्तिकमार्गे पूर्वोक्तप्रमाणकलाद्वयानन्तरं यो लयो भवति स मध्य इत्युच्यते । दक्षिणमार्गे तादृशकलाचतुष्टयानन्तरं यो लयो भवति स विलम्बित इत्युच्यते । विश्रान्तिकालस्यैकरूपत्वेऽपि तत्तत्क्रियाप्रमाणोपलक्षितमार्गभेदतो लयभेदोऽवगन्तव्यः । यथा लोक एकस्यैव ग्रामस्य गङ्गां प्रति मार्गत्रये सति तत्र संनिहितेन मार्गेणाऽऽगतः शीघ्रमागत इत्युच्यते । ततो द्विगुणदूरेण मार्गेणाऽऽगतः पूर्वापेक्षया मध्यभावेनाऽऽगत इत्युच्यते । ततोऽपि द्विगुणदूरेण मार्गेणाऽऽगतः पूर्वोत्तरापेक्षया विलम्ब्याऽऽगत इत्युच्यते । एवं गमनक्रियावैषम्याभावेऽपि मार्गभेदाद्द्रुतादिव्यवहारः । तथा प्रकृतेऽपि । तत्रापि प्रतिमार्गं विश्रान्तिकालप्रमाणभेदाल्लयत्रये योजिते सति द्रुते द्रुतः । द्रुते मध्यः । द्रुते विलम्बितः । यथा मध्ये द्रुतः । मध्ये मध्यमः । मध्ये विलम्बितः । तथा विलम्बिते द्रुतः । विलम्बिते मध्यः । विलम्बिते विलम्बित इति । अयमेवानेकवेत्यस्यार्थः । एवं तालगतस्यैव लयस्य गीतादावुपयोगो नाक्षरादिगतस्येत्याह— **लयोऽक्षरे पदे वाक्ये सोऽसौ नात्रोपयुज्यत इति** । अक्षरे लयो द्रुतः । पदे लयो मध्यः । वाक्ये लयो विलम्बितः । तस्य संगीतोपकारकत्वाभावादिति भावः ॥ ४९ ॥

अथ लयाश्रितानां यतीनां लक्षणमाह—

**लयप्रवृत्तिनियमो यतिरित्यभिधीयते ।**
**समा स्रोतोगता चान्या गोपुच्छा त्रिविधेति सा ॥ ५० ॥**

**लयप्रवृत्तीत्यादि** ॥ ५० ॥

**आदिमध्यावसानेषु लयैकत्वे समा त्रिधा ।**
**लयत्रैध्यादादिमध्यावसानेषु यथाक्रमात् ॥ ५१ ॥**
**चिरमध्यद्रुतलया तदा स्रोतोगता मता ।**
**अन्या विलम्बमध्याभ्यां मध्यद्रुतवती परा ॥ ५२ ॥**
**द्रुतमध्यविलम्बैः स्याद्गोपुच्छा द्रुतमध्यभाक् ।**
**द्वितीयाऽन्या भवेन्मध्यविलम्बितलयान्विता ॥ ५३ ॥**

**लयैकत्व इति** । एकलयत्व इत्यर्थः । **लयत्रैध्यादिति** । पूर्ववाक्येन(ण) संबन्धः समाया यतेस्त्रैविध्ये हेतुभावेन । त्रैविध्यमिति त्रिशब्दात् ‘ एकाद्वो

१ ख. °र्गेण ग° । २ ख. ग. °र्गेण ग° । ३ ख. ग. °र्गेण ग° । ४ ख. ग. °यत्रेधादा° । घ. °यत्रैविध्यादा° । ५ ख. ग. °त्रैविध्या° ।

ध्यमुञन्यतरस्याम् ' इति वर्तमाने ' द्वित्र्योश्च धमुञ् ' इति धाप्रत्ययस्य पक्षे धमुञादेशे विहिते रूपम् । अन्येति । द्वितीया स्रोतोगता । परा तृतीया स्रोतोगता । मध्यद्रुतवती मध्यलयेन द्रुतलयेन च युक्तेत्यर्थः । स्रोतो यथा प्रथमं विलम्ब्य जलसमृद्धौ सत्यां ततः शीघ्रं गच्छति । यद्वा प्रथमं जलसमृद्ध्या प्रवृत्तं स्रोतस्तत्र तत्र जलव्यये सति ततोऽल्पजलं गच्छति । तद्वदन्वर्था स्रोतोगता । गोपुच्छाया अप्येतद्विपर्ययेणान्वर्थता द्रष्टव्या । यथा गोः पुच्छमन्ते विस्तृतं भवति तद्वदिति भावः ॥ ५१ ॥ ५२ ॥ ५३ ॥

अथ ग्रहाँल्लक्षयति—

**समोऽतीतोऽनागतश्च ग्रहस्ताले त्रिधा मतः ।**
**गीतादिसमकालस्तु समपाणिः समग्रहः ॥ ५४ ॥**

**समोऽतीत इत्यादिना** । ग्रहणं ग्रह इति भावे ' पुंसि संज्ञायां घः प्रायेण ' इति घप्रत्यये कृते व्युत्पन्नो ग्रहशब्दः । **गीतादिसमकाल इत्यादि** । अत्राऽऽदिशब्देन वाद्यनृत्ते गृह्येते । तेन गीतादिना समः कालो यस्येति स तथोक्तः । अत्र कालशब्देन तालस्य गीतादेश्च प्रारम्भकाल एवोच्यते । तत्साम्यस्यैवात्र विवक्षितत्वात् । **समपाणिरिति** । समः पाणिरस्यास्तीति ग्रहविशेषणम् । अत्र पाणिशब्देन तालो लक्ष्यते । तद्व्यापारेण तस्याभिव्यक्तत्वात् ॥ ५४ ॥

**सोऽवपाणिरतीतः स्याद्यो गीतादौ प्रवर्तते ।**
**अनागतः *प्राक्प्रवृत्तः स एवोपरिपाणिकः ॥ ५५ ॥**

**यो गीतादौ प्रवर्तत इति** । गीतादौ गीतस्याऽऽदौ । अत्र गीतशब्देन वाद्यनृत्ते अप्युपलक्ष्येते । तयोरप्यादावित्यर्थः । **अवपाणिरिति** । अत्रावशब्दोऽधःपर्यायः । कालापेक्षया पूर्वभावि वर्तते । तालस्य गीतादिपूर्वभावित्वादवपाणिरित्यतीतग्रह उच्यते । गीतादिना तालकालमतिक्रम्योत्तरकालभाविनाऽतीतत्वादतीत इत्यर्थः । **प्राक्प्रवृत्तग्रह इति** । अत्र ग्रहशब्देन गृह्यत इति कर्मसाधनेन गीतादित्रितयमुच्यते । प्राक्प्रवृत्तः प्रथमारब्धो ग्रहो यस्ये(स्मादि)त्यनागतग्रहस्य विशेषणम् । तालस्य गीताद्युत्तरकालभावित्वात् । स एवोपरिपाणिकश्च भवति । अनागत इति गीतादिप्रारम्भकाल आगतो न भवतीत्यन्वर्थो द्रष्टव्यः ॥ ५५ ॥

**लयाः क्रमात्समादौ स्युर्मध्यद्रुतविलम्बिताः ॥ ५६ ॥**
**इति मार्गतालप्रकरणम् ।**

**लया इत्यादि** । समग्रहे मध्यलयोऽतीतग्रहे द्रुतलयोऽनागतग्रहे विलम्बितलय

---

*अत्र टीकानुरोधेन प्राक्प्रवृत्तग्रहस्तूपरिपाणिक इति पाठः स्यात् ।

इति क्रमः । यथा लोके कश्चन केनचिन्मित्रादिना सह कंचित्प्रदेशं प्रति गन्तुमुद्युक्तः स मित्रादिरात्मानमतीत्य पुरस्ताद्गच्छतीति श्रुत्वा तत्पश्चाद्देशे स्थितस्तेन सह साम्यसिद्ध्यर्थं स्वयं द्रुतं गच्छतीति। यथा वा मित्राद्यागमनारम्भकाले स्वयमनागतस्तद्देशात्पुरोदेशे स्थित्वा गन्तुं प्रवृत्तः पश्चाद्देशे मित्रादिरागच्छतीति श्रुत्वा तस्य स्वसाम्यसिद्ध्यर्थं पदे पदे विलम्ब्य गच्छति तद्वदिति प्रकृतेऽपि द्रष्टव्यम् । एतेन गीतादेव प्राधान्यात्तदनुसारेण तालो योजनीय इत्युक्तं भवति ॥ ५६ ॥

इति मार्गताललक्षणम् ॥

एवमुक्तलक्षणानां मार्गतालानामुपयोगं दर्शयिष्यन्मद्रकादीनि गीतानि वक्तुं प्रतिजानीते—

**एतैः प्रकरणाख्यानि तालैर्यानि जगुर्बुधाः ।**
**तानि गीतानि वक्ष्यामस्तेषामाद्यं तु मद्रकम् ॥ ५७ ॥**
**अपरान्तकमुल्लोप्यं प्रकर्यो वेणकं तथा ।**
**रोविन्दकोत्तरे सप्त गीतकानीत्यवादिषुः ॥ ५८ ॥**

**एतैः प्रकरणाख्यानीत्यादिना** । बुधा भरतादयः । तानि गीतानीति मद्रकादीनां सप्तानां गीतकानां छन्दकादीनां सप्तानां गीतानां च सामान्येन निर्देशः ॥ ५७ ॥ ५८ ॥

**छन्दकासारिते वर्धमानकं पाणिका तथा ।**
**ऋचो गाथाश्च सामानि गीतानीति चतुर्दश ॥ ५९ ॥**
**शिवस्तुतौ प्रयोज्यानि मोक्षाय विदधौ विधिः ।**
**कुलकं छेद्यकं चेति तानि द्वेधाऽभ्यधुर्बुधाः ॥ ६० ॥**

**गीतानीति** । **चतुर्दशेति** । अत्र गीतानीत्यवादिषुरिति क्रियापदस्यानुषङ्गः कर्तव्यः । **चतुर्दशेत्यादि** । विधिर्ब्रह्मा मोक्षमिच्छञ्छिवस्तुतौ प्रयुक्तवानित्यर्थः ॥ ५९ ॥ ६० ॥

**वस्तूनामेकवाक्यत्वे कुलकं संप्रचक्षते ।**
**वस्तूनां भिन्नवाक्यत्वे छेद्यकं ते पुनः पृथक् ।**
**निर्युक्तं पदनिर्युक्तमनिर्युक्तमिति त्रिधा ॥ ६१ ॥**

**वस्तूनामेकवाक्यत्व इति**। वस्तूनां वक्ष्यमाणलक्षणानामेककादीनां गीतावयवानामेकवाक्यत्व एकक्रियान्वये सति कुलकम् । वस्तूनां भिन्नवाक्यत्वे प्रतिवस्तु

१ ख. ततः । २ ख. रविन्दकोत्तरे । ग. राविन्दकोत्तरे । ३ ख. ग. संप्रवक्ष्यते ।

क्रियाभेदे सति छेद्यकम्। ते पुनः पृथगिति। ते कुलकच्छेद्यके पृथक्प्रत्येकं निर्युक्तादिभेदेन त्रिधा भवतः॥ ६१॥

सर्वाङ्गयुक्तं निर्युक्तं पदनिर्युक्तकं पुनः।
बद्धं स्तुतिपदैस्त्यक्तोपोहनप्रत्युपोहनम्॥ ६२॥
वस्तुमात्रैरनिर्युक्तं तत्र त्रेधा तु मद्रकम्।
विधिनैककलाद्येन चतुर्वस्तु त्रिवस्त्विति।
पुनर्द्वेधा शीर्षकं तु त्रिवस्तुन्येव बोध्यते॥ ६३॥

**सर्वाङ्गयुक्तमिति।** वक्ष्यमाणैर्विविधादिभिरङ्गैरन्यूनतया युक्तं निर्युक्तं भवति। स्तुतिपदैर्बद्धं पदनिर्युक्तमित्युच्यते। त्यक्तोपोहनप्रत्युपोहनमित्यनिर्युक्तस्य विशेषणम्। उपोहनं नाम ध्रुवादिगानेषु रागप्रकाशनार्थं स्थायिस्वराश्रयणेन झंटुमादिवर्णपरिग्रहो लघ्वादिकालपरिज्ञानाय तालपरिग्रहश्च। उभयमप्युप समीप ऊह्यते विचार्यत इत्युपोहनमित्युक्तम्। तथा चोक्तं भरतेन—

"उपोह्यते स्वरो यस्माद्येन गीतं प्रवर्तते।
तस्मादुपोहनं ज्ञेयं स्थायिस्वरसमाश्रयम्।
अथवोपोह्यते यस्मात्प्रयोगः स्तवनादिकः।
तस्मादुपोहनं ह्येतद्गानं भाण्डसमाश्रयम्" इति।
"गुरुलाघवसंयुक्तं कलातालसमन्वितम्।
पूर्वरङ्गे सदा ज्ञेयं चित्रमार्गे ह्युपोहनम्" इति च।

तत्र प्रथमवस्त्वादौ कृतमुपोहनमित्युच्यते। द्वितीयादिवस्त्वादौ कृतं तु प्रत्युपोहनमित्युच्यते। अथवैकवस्तुनि प्रथमं कृतमुपोहनं तदनन्तरं कृतं प्रत्युपोहनमित्युच्यते। त्यक्ते उपोहनप्रत्युपोहने यस्येति तत्तथोक्तम्। तत्र मद्रकं लक्षयितुमाह—**तत्र त्रेधा तु मद्रकमित्यादिना। एककलाद्येन विधिनेति।** एककलमद्रकं द्विकलमद्रकं चतुष्कलमद्रकं चेति त्रिविधमित्यर्थः। चत्वारि वस्तूनि यस्मिन्निति चतुर्वस्तु। त्रीणि वस्तूनि यस्मिन्निति त्रिवस्तु। **शीर्षकमिति।** गीताङ्गम्। **त्रिवस्तुन्येवेति।** चतुर्वस्त्वादौ न कर्तव्यमित्यर्थः॥६२॥६३॥

एककलमद्रके वस्तुप्रमाणमाह—

गुरूण्यष्टौ लघून्यष्टौ वस्त्वेककलमद्रके।
स्वरागयोनिजातेस्तु न्यासेऽपन्यासनेऽथवा।
सन्न्यासेंऽशेऽथवा न्यासः सर्वगीतस्थवस्तुनः॥ ६४॥

---

१ ख. ग. °न ढुंढुभा°।

**गुरूण्यष्टौ लघून्यष्टाविति । स्वरागयोनिजातेरिति ।** अत्र स्वशब्देन मद्रकादिकमित्युच्यते । तस्य रागस्तस्य योनिः कारणं जातिः षाड्ज्यादिस्तस्या न्यासापन्याससंन्यासेष्वेकत्र न्यासः कर्तव्य इत्यर्थः । अनेन मद्रकादीनि ग्रामरागोपरागेष्वेकैकतमेन रागेण गातव्यानीति सूचितं भवति। तेषामेव ताभ्यो जातत्वात् । सर्वगीतस्थवस्तु[न] इत्यनेन स्वराङ्गेत्यत्र स्वशब्दस्य मद्रकैकपरताप्रतीतिमपाकरोति । सर्वाणि च तानि गीतानि मद्रकादीनि चतुर्दश गीतानि तेषु तिष्ठतीति तत्स्थं तच्च तद्वस्तु चेति तथोक्तं तस्य । अत्र वस्तुन इति जातावेकवचनम्। तेनापरान्तकादिष्वपि स्थितानां वस्तूनामुक्तप्रकारेण न्यासः कर्तव्य इत्यर्थः ॥६४॥

> **ध्रुवपातमपातं वा तद्गुरुत्रयमादिमम् ।**
> **शद्वयं ताद्वयं +शम्पे तालौ च द्विः शतौ च सम् ॥ ६५ ॥**
> **क्रमाद्गलेषु शेषेषु तस्य स्यात्पातकल्पना ।**
> **एवं वस्तुत्रयं गीत्वा शीर्षकं तु प्रयुज्यते ॥ ६६ ॥**
> **चतुष्कलेनैककलेनाथवा पञ्चपाणिना ।**
> **आद्ये वस्तुनि कर्तव्यं गुरुद्वयमुपोहनम् ।**
> **गुरुणाऽगुरुणा कार्यं शेषयोः प्रत्युपोहनम् ॥ ६७ ॥**

**आदिमं तद्गुरुत्रयमिति ।** तस्य वस्तुनो गुरुत्रयमष्टसु गुरुष्वादिमं गुरुत्रयं ध्रुवपातं ध्रुवः पातोऽस्यातीति तथोक्तम् । ध्रुवाख्यया सशब्दक्रियया योजनीयमित्यर्थः । अपातं वेति पातादन्यया क्रियया युक्तमिति गम्यते । तेन निःशब्दक्रियया युक्तं कर्तव्यमित्यर्थः । **शद्वयमित्यादि ।** चतुर्थपञ्चमयोर्गुर्वोः शम्पाद्वयम् । **ताद्वयमिति ।** षष्ठसप्तमयोर्गुर्वोस्तु तालद्वयम् । **शम्पे इति ।** अष्टमस्य गुरोर्नवमस्य लघोश्च प्रत्येकं शम्पे । **तालाविति ।** दशमैकादशयोर्लघ्वोः प्रत्येकं तालौ । **द्विः शतौ चेति ।** द्वादशत्रयोदशयोर्लघ्वोः शम्पातालौ। तथा चतुर्दशपञ्चदशयोश्च लघ्वोः शम्पातालौ । **समिति ।** षोडशे लघौ संनिपात इति क्रमाद्गलेषु शेषेषु तस्य स्यात्पातकल्पनेत्यस्यायमर्थः* ॥६५॥६६॥६७॥

> **झण्टुमाद्याक्षरैरेव रचना स्यात्तयोर्द्वयोः ॥ ६८ ॥**
> **एकवस्तुकमप्याहुर्मद्रकं केऽपि सूरयः ।**
> **तृतीये गुरुणि प्रोक्तं तत्र तैः प्रत्युपोहनम् ॥ ६९ ॥**
> **गुर्वष्टके स्याद्द्विविधो(धं) लघुष्वष्टस्त(स्व)थैककम् ।**
> **त्रिविधो द्विविदारीकः स त्रिधा परिकीर्तितः ॥ ७० ॥**

+अत्र क्वचित्क्वचिच्छम्या शम्पा इति पाठद्वयमपि दृश्यते । *एतदग्रे किमपि त्रुटितं स्यादिति भाति ।

१ ङ. स्याद्विवधो । २ ङ. विवधो ।

सामुद्गश्चार्धसामुद्गो विवृत्तश्चेति सूरिभिः ।
विदार्योः पदवर्णादिसाम्यात्सामुद्गको मतः ॥ ७१ ॥
विदरीभागयोः साम्यात्त्वर्धसामुद्गको मतः ।
पूर्वस्या वा परस्या वा द्वयोर्वेति त्रिधा च सः ॥ ७२ ॥
न्यासान्तो विविधः कार्यः सर्वो द्वे गेयकं विना(?) ।
असमानविदारीको न्यासापन्यासनिर्मितः ॥ ७३ ॥
विवृत्तः स्याद्विदारी तु गीतखण्डं द्विधा च सा ।
महत्यवान्तरा चेति महती व्याप्तवस्तुका ।
समाप्ता पदवर्णान्तेऽवान्तरा त्वन्तराभवा ॥ ७४ ॥

तयोर्द्वयोरिति । उपोहनप्रत्युपोहनयोः ॥ ६८ ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥

अनयोर्वस्तुवन्न्यासो जात्यंशोंऽशोऽल्पके पुनः ।
अंशे तदनुवादी वा संवादी वांऽश इष्यते ॥ ७५ ॥

अनयोर्वस्तुवन्न्यास इति । अनयोर्महाविदार्यवान्तरविदार्योः । वस्तुवदिति । वस्तुनः स्वरागयोनिजातेस्त्वित्यादिना यो न्यास उक्तस्तद्वदत्रापि न्यासः कर्तव्य इत्यर्थः । जात्यंशोंऽश इति । विदार्योरंशस्तु स्वरागयोनिजातेरंश एव कर्तव्य इत्यर्थः । अल्पके पुनरिति । अंशे जात्यंशेऽल्पकेऽल्पप्रयोगे सति तदनुवादी जात्यंशानुवादी तत्संवादी वांऽश इत्युच्यते ॥ ७५ ॥

संख्यानियममेतासां नावोचन्दन्तिलादयः ।
भगवान्भरतस्ता[ स्त्वा ]सां संख्यानियममभ्यधात् ॥७६॥

एतासामिति । विदारीणाम् ॥ ७६ ॥

अवरैकादशपरा विदार्यः परिकीर्तिताः ।
चतुर्विंशतिरासां तु प्रमाणं परमं स्मृतम् ॥ ७७ ॥
अवान्तरविदारीणां चतुर्विंशतिसंख्यया ।
न्यासान्तमथवांऽशान्तं विदार्येकैककं मतम् ॥ ७८ ॥

अवरैकादशपरा इति । अवराश्च ता एकादशपराश्चेति कर्मधारयः । तिस्रो विदार्योऽवरा अल्पसंख्याका एकादश विदार्यः परा अधिकसंख्याकाः । अयं महाविदारीणां संख्यानियमो मुनिना दर्शितः । अवान्तरविदारीणां चतुर्विंशतिसंख्या दर्शिता ॥ ७७ ॥ ७८ ॥

---

१ ङ. विवधः । २ ग. ङ. च. °र्वो द्वैगे° । ३ ग. °रा मता । अ° । ४ ख. ग. °ख्याता द° ।

**आद्यं वस्तुद्वयं मद्रांशग्रहं मद्रके मतम् ॥ ७९ ॥**

**मद्रांशग्रहमिति** । मद्रकप्रथमवस्तुनो मद्रकस्थानस्थितं स्वरमंशग्रहं च कुर्यादिति नियमोऽवगन्तव्यः ॥ ७९ ॥

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ । । । । । । । ।
**अस्य प्रस्तारः—** उ उ उ श श ता श श श ता ता श ता श ता सं

**एवं वस्तुत्रयं वस्तुचतुष्टयं वा । वस्तुत्रयान्ते शीर्षकं चतुष्कलेन पञ्चपाणिना यथाक्षरेण वा ।**

ऽ । ऽ ऽ । ऽ
**अथैककला—** सं ता श ता श ता, इत्येककला ।

| ऽ आ | ऽ नि | ऽ वि | ऽ प्र | ऽ आ | ऽ ता | ऽ वि | ऽ श | ऽ आ | ऽ नि | ऽ वि | ऽ ता |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ऽ आ | ऽ नि | ऽ वि | ऽ श | ऽ आ | ऽ ता | ऽ वि | ऽ प्र | ऽ आ | ऽ नि | ऽ वि | ऽ सं |

**इति शीर्षकम् ।**

**इत्येककलमद्रकम् ।**

**अस्य प्रस्तार इति** । अस्यैककलमद्रकस्योक्तलक्षणानुसारेण प्रस्तारो लिख्यत इत्यर्थः । यथा प्रथमवस्तुन्यष्टानां गुरूणामष्टौ वक्ररेखा अष्टानां लघूनामष्टावृजुरेखास्तिर्यक्पङ्क्तितया लिखित्वा तत्राऽऽद्यस्य गुरुत्रयस्याधस्तादुपोहनप्रतीत्यर्थमुपोहनाद्यक्षरमुकारं प्रतिगुरु लिखेत् । चतुर्थादीनां पञ्चानां गुरूणामधस्तात्, शशताशशाल्लिँखेत् । ततोऽष्टानां लघूनामधस्तात्, शताताशताशतासमित्यष्टाक्षराणि क्रमेण लिखेत् । एवं वस्तुत्रयं वस्तुचतुष्टयं वा लिखेत् । त्रिवस्तुपक्षे वस्तुत्रयस्यान्ते शीर्षकाख्यमङ्गं चतुष्कलेन षट्पितापुत्रकेण कुर्वीत । तस्य प्रस्तारो यथा—षट्सु पादभागेषु प्रतिपादभागं चत्वारि चत्वारि गुरूणि सविच्छेदं तिर्यक्पङ्क्तित्वेन लिखेत् । तदधस्तात्प्रथमपादभाग आनिविप्रान् । द्वितीय आताविशान् । तृतीय आनिवितान् । चतुर्थ आनिविशान् । पञ्चम आताविप्रान् । षष्ठ आनिविसांश्च क्रमेण लिखेत् । अथवा यथाक्षरेण षट्पितापुत्रकेण शीर्षं गायेत् । यथा——पलगगलपाल्लिँखित्वा तदधस्तात्क्रमेण संताशताशताल्लिँखेत् ।

**इत्येककलमद्रकम् ।**

अथ द्विकलमद्रकं लक्षयति—

**द्विकले मद्रके वस्तु स्याच्चतुर्विंशतिः कला ॥ ८० ॥**

पादभागा द्वादश स्युस्तैस्तु मात्रात्रयं भवेत् ।
द्विकलेनोत्तरेण स्याच्छीर्षं वस्तुत्रयात्परम् ॥ ८१ ॥
यथाक्षरेण वा तत्र त्रिकलं स्यादुपोहनम् ।
प्रत्युपोहनमत्र स्यात्कलिकं द्विकलं न वा ॥ ८२ ॥
त्रिविधः प्रतिवस्तु स्यान्मात्रयोरेककं पुनः ।
भवेत्तृतीयमात्रायामथ पातकलाविधिः ॥ ८३ ॥
पादभागत्रये निप्रौ पञ्चस्वन्येषु याः कलाः ।
आद्यास्तासु निरेवान्यत्पूर्वमद्रकवद्भवेत् ॥ ८४ ॥

अस्य प्रस्तारः—

| | | |
|---|---|---|
| ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ<br>नि प्र नि प्र नि प्र नि श ॥ | | मात्रा १ |
| ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ<br>नि श नि ता नि ता नि श ॥ | | मात्रा २ |
| ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ<br>श ता ता श ता श ता सं ॥ | | मात्रा ३ |

ईदृग्वस्तुत्रयान्ते शीर्षकं यथाक्षरेण द्विकलेनोत्तरेण वा ।

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ । ऽ ऽ । ऽ
निप्र ताश निता निश ताप्र निसं ॥ (*सं ता श ता श ता )॥

×इति शीर्षकम् ।

इति द्विकलमद्रकम् ।

**द्विकले मद्रक इत्यादिना । चतुर्विंशतिः कला वस्तु स्यादिति ।** वस्तुत:(नः) प्रमाणमेककलापेक्षया द्विगुणमुक्तम्। **पादभागा द्वादश स्युरिति।** एकस्य द्विकलत्वादिति भावः। अन्यथा चतुष्कलत्वेन वा षट्पादभाग इति संभाव्येत । **तैस्तु मात्रात्रयं भवेदिति** । प्रथमे चत्वारः पादभागा एका मात्रा । मध्ये चत्वारः पादभागा द्वितीया मात्रा । अन्ते चत्वारः पादभागास्तृतीया मात्रा भवति । 'पादभागैश्चतुर्भिस्तैर्मात्रा स्यान्मद्रकादिषु' इति पूर्वोक्तमनुसंधेयम् । एतन्मात्रात्रयमेकं वस्तु । एवंविधवस्तुत्रयात्परं द्विकलेनोत्तरेण द्विकलषट्पितापुत्रकेण शीर्षकं नामाङ्गं गातव्यम् । **तत्र त्रिकलं स्यादुपोहनमिति** । तत्र द्विकलमद्रके त्रिकलं तिस्रः कला यस्येति तथोक्तम् । **कलिकं द्विकलं न वेति** । अत्र त्रयः पक्षाः प्रत्युपोहनं कलिकं वा द्विकलं वा न वा स्यादिति । कलिकं कलया निवृ(र्वृ)त्तम् । **अन्यत्पूर्वमद्रकवद्भवेदिति** । अत्रोपयुक्ताभ्योऽ-

* एतच्चिह्नान्तर्गतं क्वचिन्नैव दृश्यते । × इति शीर्षकमिति ग्रन्थः क्वचिन्नास्त्येव ।

वशिष्टासु त्रयोदशसु कलासु ‘ शद्वयं ताद्वयं शम्पे तालौ च द्विः शतौ च सम्’ इत्युक्तक्रमेण पाता योजनीया इत्यर्थः । प्रस्तारस्तु द्विकलान्द्वादश पादभागान्सविच्छेदं लिखित्वा तदधस्तात्, निप्र निप्र निप्र निशान्, निश निता निता निशान्, शता ताश ताश तासांश्च मात्राविभागेन लिखेत् । ईदृशवस्तुत्रयान्ते शीर्षकं यथाक्षरेणोत्तरेण पूर्ववल्लिखेत् । द्विकलोत्तरेण वा । यथा षट्पादविभागेन द्वादश गुरूल्लिँखित्वा तदधस्तात्, निप्र ताश निता निश ताप्र निसाल्लिँखेत् ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥

इति द्विकलमद्रकम् ।

अथ चतुष्कलमद्रकं लक्षयति—

**चतुष्कले तु द्विगुणं वस्तु द्विकलवस्तुनः ।**
**लक्ष्म द्विकलवत्किंतु पादभागश्चतुष्कलः ॥ ८५ ॥**

**चतुष्कले त्वित्यादि** । वस्तु द्विकलवस्तुनो द्विगुणं भवतीति प्रतिवस्त्वष्टाचत्वारिंशत्कला भवन्तीत्यर्थः । **लक्ष्म द्विकलवदिति** । प्रतिवस्तु द्वादश पादभागास्तैश्चतुर्भिश्चतुर्भिर्मात्राकल्पनम् । तत्राऽऽद्यमात्रयोर्विविधाख्यमङ्गं तृतीयमात्रायामेककाख्यमङ्गम् । त्रिवस्तुपक्षे वस्तुत्रयानन्तरं शीर्षकाख्यमङ्गमित्यादिलक्षणमत्रापि कर्तव्यमित्यतिदेशार्थः । विशेषं दर्शयति—**किंत्विति** ॥ ८५ ॥

**चतुष्कलेनोत्तरेण केवलेनास्य शीर्षकम् ।**
**युक्तेनैककलाद्यैर्वाऽष्टकलं स्यादुपोहनम् ॥ ८६ ॥**

**चतुष्कलेनोत्तरेणेत्यादि** । अस्य चतुष्कलमद्रकस्य शीर्षकं केवलेनोत्तरेणेत्येकः पक्षः । युक्तेनैककलाद्यैरेत्यत्र त्रयः पक्षाः। यथा—एककलचतुष्कलाभ्यां प्रथमः । द्विकलचतुष्कलाभ्यां द्वितीयः । चतुष्कलाभ्यां तृतीयः । एवं शीर्षके चत्वारः पक्षाः । प्रत्युपोहनेऽपि चत्वारः पक्षाः । एककला प्रथमः पक्षः । द्वितीया कलेति द्वितीयः। चतस्रः कलास्तृतीयः। न वा स्यादिति चतुर्थः ॥८६॥

**विविधोऽन्तिमवस्त्वन्ते कार्यो द्वैगेयकाभिधः ।**
**असावंशादिरंशान्तपदावृत्तियुतो मतः ॥८७॥**

**द्वैगेयकाभिध इति** । अत्र विविधसंज्ञकस्याङ्गस्य विशेषणं संज्ञा[न्तरबोधकम्] । **असाविति** । द्वैगेयकः । अंशादिरंशस्वर एव ग्रहो यस्येति स तथोक्तः । **अंशान्त इति** । अंशस्वर एव न्यासो यस्येति स तथोक्तः । पदावृत्तियुत इत्यनेन द्वैगेयकसंज्ञाया अन्वर्थता दर्शिता भवति ॥ ८७ ॥

द्वादशसु पादभागेषु पातकलाविधिं दर्शयति—

आनिविप्राः पादभागत्रितयेऽभिमताः क्रमात् ।
द्वयोरानिविशास्तद्वद्द्वयोरानिवितास्ततः ॥ ८८ ॥
एकत्राऽऽनिविशा आशाविताश्चाऽऽताविशा द्वयोः ।
अन्त्ये तानिविसं पातकलाविधिरयं मतः ॥ ८९ ॥

आनिविप्रा इत्यादिना । एकत्राऽऽनिविशा इत्यत्रैकत्रेत्यष्टमे पादभाग इत्यर्थः । आशाविताश्चेत्यत्र चकारेणैकत्रेत्येतदनुकृष्यते । तेन नवमैकपादभाग आशाविता भवन्तीत्यर्थः । आताविशा द्वयोरित्यत्र द्वयोर्दशमैकादशयोरित्यर्थः । अन्त्य इति । द्वादशे पादभाग इत्यर्थः ॥ ८८ ॥ ८९ ॥

चच्चत्पुटवदङ्गुल्यः कर्तव्या मुद्रके बुधैः ॥ ९० ॥

अस्य प्रस्तारः—ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविप्र आनिविप्र आनिविप्र आनिविश। मात्रा १

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
[आनिविश] अनिविता आनिविता आनिविश। मात्रा २

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आशिविता आताविश आताविश तानिविसं। मात्रा ३ इत्येकं वस्तु ।

एवं वस्तुत्रयानन्तरं शीर्षकं चतुष्कलेन पञ्चपाणिना यथा ऽ ऽ ऽ ऽ
आनिविप्र

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आताविश आनिविता आनिविश आताविप्र आनिविसं ।

एककलचतुष्कलाभ्यां वा—ऽ। ऽ ऽ। ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
सं ता श ता श ता। आनिविप्र आताविश

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविता आनिविश आताविप्र आनिविसं ।

द्विकलचतुष्कलाभ्यां वा—ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निप्र ताश निता निश ताप्र निसं ॥ आ-

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निविप्र आताविश आनिविता आनिविश आताविप्र आनिविसं ॥

[चतुष्कलाभ्यां वा—] ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविप्र आताविश आनिविता आनिविश

ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ
आताविप्र आनिविसं ॥ आनिविप्र आताविश आनिविता आनिविश
ऽऽऽऽ ऽऽऽऽ
आनिविप्र आनिविसं ॥

इति शीर्षकम् ।

इति चतुष्कलमद्रकम् ।

चञ्चत्पुटवदित्यादि । मद्रकेऽङ्गुल्यश्चञ्चत्पुटवत्कर्तव्या इत्यस्यायमर्थः । प्रथमादिषु चतुर्षु पादभागेषु कनिष्ठादिभिरङ्गुलीभिरुत्तरोत्तरसहिताभिः प्रयुज्य पञ्चमादिषु चतुर्षु पादभागेष्वप्येवमेव प्रयुज्य नवमादिष्वपि चतुर्षु पादभागेषु पुनरपि तथा प्रयुञ्जीतेति ।

अस्य प्रस्तारो यथा—गुरुचतुष्टयात्मकान्द्वादश पादभागान्सविच्छेदं समात्राविभागं च लिखित्वा तदधस्तात्प्रथममात्रायामानिविप्रानिविप्रानिविप्रानिविशान् । द्वितीयमात्रायामानिवितानिविशानिवितानिविशान् । तृतीयमात्रायामाशवितातविशाताविशाऽऽनिविसम्, इत्येताल्लिँखेत् । इत्येकं वस्तु । एवंविधवस्तुत्रयानन्तरं शीर्षकं चतुष्कलेन पञ्चपाणिना यथा—गुरुचतुष्टयात्मकान्षट्पादभागान्सविच्छेदं लिखित्वा तदधस्तात्, आनिविप्र, आताविश, आनिविता, आनिविश, आताविप्र, आनिविसं, इत्येतान्क्रमेण लिखेत् । अथैककलचतुष्कलाभ्यां वा यथा—पलगगलपाल्लिँखित्वा तदधस्तात्संताशताशताल्लिँखेत् । तथा चतुष्कलमपि लिखेत् । अथ द्विकलचतुष्कलाभ्यां वा यथा—गुरुद्वयात्मकान्षट्पादभागाल्लिँखित्वा तदधस्तात्, निप्र ताश निता निश ताप्र निसं, इत्येताल्लिँखेत् । तथा चतुष्कलमपि लिखेत् । अथ चतुष्कलाभ्यां वा यथा—पूर्ववच्चतुष्कलो लिखेत् ॥ ९० ॥

अथापरान्तकं लक्षयति—

त्रिधाऽपरान्तकं तद्वद्भेदैनैककलादिना ।
अस्मिन्नेककले वस्तु चतुर्गुरु चतुर्लघु ॥ ९१ ॥
पञ्च षट् सप्त वा वस्तुन्यस्य शाखा निगद्यते ।
शाखेव प्रतिशाखा स्यात्किंत्वन्यपदनिर्मिता ॥ ९२ ॥

त्रिधाऽपरान्तकमित्यादि । पञ्च षट् सप्तेति । पञ्च वस्तूनि शाखेत्येकः पक्षः । षड् वस्तूनि शाखेत्यन्यः । सप्त वस्तूनि शाखेत्यपरः । शाखेति गीताङ्गस्य संज्ञा । किंत्वन्यपदनिर्मितेति प्रतिशाखाया विशेषकथनम् ।

---

१ च. शाखेव ।

**अन्यपदनिर्मितेति** । शाखाप्रयुक्तेभ्यः पदेभ्योऽन्यैः पदैः कर्तव्येत्यर्थः । अनेन शाखाप्रतिशाखयोरेक एव धातुः कर्तव्य इति गम्यत इति केषांचिन्मतम् ॥ ९१ ॥ ९२ ॥

विशाखिलमते विशेषमाह—

**शाखार्धं पश्चिमं त्वाह प्रतिशाखां विशाखिलः ॥ ९३ ॥**

**शाखार्धमित्यादि** । पश्चिमं शाखार्धम् । प्रतिशाखामाहेत्यत्रैकवस्तुकपक्षे वस्तुप्रमाणेन [ शाखां ] कृत्वा वस्तूत्तरार्धलघुचतुष्टये प्रतिशाखां कुर्यात् । पञ्चवस्तुकादिषु त्रिषु पक्षेषु त्वादिमं सार्धवस्तुद्वयं वस्तुत्रयं सार्धवस्तुत्रयं च क्रमेण शाखां कुर्यात् । तादृक्पश्चिमार्धं च प्रतिशाखां कुर्यात् ॥ ९३ ॥

भरतमते विशेषं दर्शयति—

**शाखा वस्तूच्यते तस्याः परार्धं प्रतिशाखिका ।**
**इत्याह भरतस्तत्रोपोहनं कलिकं मतम् ॥ ९४ ॥**
**प्रत्युपोहनमत्र स्यान्न वाऽन्ये त्वेकवस्तुकम् ।**
**इदमाहुः कला तेषां द्वितीया प्रत्युपोहनम् ॥ ९५ ॥**
**शीर्षमेककलेन स्याच्छाखान्ते पञ्चपाणिना ।**
**अन्ये तु प्रतिशाखान्तेऽप्येतदाहुर्मनीषिणः ॥ ९६ ॥**

**शाखा वस्तूच्यत इत्यादि** । तत्र पञ्चवस्तुकादिषु त्रिष्वपि पक्षेषु प्रति-वस्तु पूर्वार्धं शाखोत्तरार्धं प्रतिशाखेति मन्तव्यम् । **उपोहनं कलिकमिति** । कलया निर्वृत्तम् । मतं संमतम् । यत्र भूयो(तूपो)हनं नोच्यते तत्राऽऽद्ये वस्तुनि कर्तव्यं गुरुद्वयमुपोहनमिति न्यायो ग्राह्यः । एकवस्तुकपक्षे विशेषान्तरमाह— **ये(अन्ये)त्वित्यादि** । शाखान्तरे(न्ते) शीर्षकमित्येकः पक्षः । प्रतिशाखान्तरे-(न्ते) शीर्षकमिति पक्षान्तरम् ॥ ९४ ॥ ९५ ॥ ९६ ॥

**शाखायाः प्रतिशाखायाः कलाषट्केऽन्यवस्तुनः ।**
**अन्त्ये पदावृत्तियुक्तः पञ्चपाणिर्यथाक्षरः ॥ ९७ ॥**

**शाखाया इत्यादि** । अन्त्यवस्तुनः शाखायाः प्रतिशाखाया अन्त्ये कला-षट्के यथाक्षरः पञ्चपाणिः पदावृत्तियुक्तः कर्तव्य इति योजना ॥ ९७ ॥

**निजपातैर्विना यद्वा तत्पाता एव केवलाः ।**
**तालिकेयं पृथग्यद्वा पञ्चपाणौ यथाक्षरे ॥ ९८ ॥**

**निजपातैर्विनेति** । षट्पितापुत्रकस्य निजाः पाताः संताशताशतास्तैर्विनेति देशीतालवच्छम्पयैव प्रयोक्तव्य इत्येकः पक्षः । **यद्वा तत्पाता एवेति** । तस्य षट्पितापुत्रकस्य पाताः पूर्वोक्ताः । **केवला इति** । पातकलान्तरयुक्ता इत्यर्थः ।

१ क. ॰स्तुके ॥ इ० ।

अयमप्यन्यः पक्षः । **तालिकेयमिति** । पञ्चपाणियुक्तमुक्तं यत्कलाषट्कं तदेव तालिकासंज्ञयोच्यत इत्यर्थः । **पृथग्घ्यद्वेति** । वस्त्वनन्तर्भावेन तालिका कर्तव्येति पक्षान्तरम् ॥ ९८ ॥

· **तृतीयादिगलेष्विति** । चतुर्गुरुचतुर्लघ्वात्मके वस्तुनि प्रथमकलायामुपोहने कृते द्वितीयकलायां प्रत्युपोहने च कृते तृतीयचतुर्थयोर्गुर्वोः शतौ पञ्चमादिषु चतुर्षु लघुषु क्रमात् 'ताशताश' इति पाताः कर्तव्याः ॥ ९९ ॥

**तृतीयादिगलेषु स्युः शताताशाश्च तालसम् ॥ ९९ ॥**

**प्रस्तारः**—

ऽ ऽ ऽ ऽ । । । ।<br>
उउ(प्र)शता ताश तासं । इति वस्तु*।

ऽ । ऽ ऽ । ऽ<br>
सं ता श ता श ता

इति तालिका ।

। । । ।<br>
ता श ता श इति प्रतिशाखा ।

ऽ । ऽ ऽ । ऽ<br>
संता शता शता ।

इति शीर्षकम् ।

**इत्येकवस्तुकम् ।**

प्रस्तारो यथा—चतुरो गुरूंश्चतुरो लघूंश्च लिखित्वाऽऽद्यगुरोरधस्तादुकारं द्वितीयगुरोरधस्तात्प्रत्युपोहनाद्यं प्रशब्दं ततस्तृतीयादिगलानामधः शताशतातासमिति क्रमेण लिखेत् । इति वस्तु । इयमेव शाखा[1], ततो यथाक्षरेणोत्तरेण शीर्षं लिखित्वा तदधस्तात्, ताशताशाल्लिखेत् । ततोऽपि शीर्षकं पूर्ववल्लिखेत् ।

**इत्येकवस्तुकमपरान्तकम् ।**

**अथ पञ्चवस्तुकम्—**

| | | |
|---|---|---|
| ऽ ऽ ऽ ऽ । । । ।<br>उ उ श ता ता श ता सं । | | वस्तु १ |
| ऽ ऽ ऽ ऽ । । । ।<br>उ उ श ता ता श ता सं । | | वस्तु २ |
| ऽ ऽ ऽ ऽ । । । ।<br>उ उ श ता ता श ता सं । | | वस्तु ३ |
| ऽ ऽ ऽ ऽ । । । ।<br>उ उ श ता ता श ता सं । | | वस्तु ४ |
| ऽ ऽ ऽ ऽ । । । ।<br>उ उ श ता ता श ता सं । | | वस्तु ५ |

*एतदग्रे घ. पुस्तके 'इयमेव शाखा । ततो यथाक्षरेणोत्तरेण शीर्षम्' इति ग्रन्थोऽधिकः ।

१ ख. ग. °खान्ते य° ।

ऽ । ऽ ऽ । ऽ
सं ता श ता श ता*। इति शीर्षकम्। इयं शाखा। ईदृश्येव पदान्तरनिर्मिता प्रतिशाखा।

इति पञ्चवस्तुकम्।

अथ पञ्चवस्तुकम्—चतुर्गुरुचतुर्लघ्वात्मकानि पञ्च वस्तूनि सविच्छेदं लिखित्वा प्रतिवस्त्वाद्यगुरुद्वयस्याधो मद्दकोक्करीत्योकारद्वयं लिखित्वा× तदधस्ताच्छतालिँखेत्। तेनैव शीर्षकं लिखेत्। इयं शाखा। ईदृश्येव प्रतिशाखा। इति पञ्चवस्तुकम्।

अथ षड्वस्तुकम्।

प्रस्तारः—

| | | |
|---|---|---|
| ऽ ऽ ऽ ऽ<br>उ उ श ता | । । । ।<br>ता श ता सं। | वस्तु १ |
| ऽ ऽ ऽ ऽ<br>उ उ श ता | । । । ।<br>ता श ता सं। | वस्तु २ |
| ऽ ऽ ऽ ऽ<br>उ उ श ता | । । । ।<br>ता श ता सं। | वस्तु ३ |
| ऽ ऽ ऽ ऽ<br>उ उ श ता | । । । ।<br>ता श ता सं। | वस्तु ४ |
| ऽ ऽ ऽ ऽ<br>उ उ श ता | । । । ।<br>ता श ता सं। | वस्तु ५ |
| ऽ ऽ ऽ ऽ<br>उ उ श ता | । । । ।<br>ता श ता सं। | वस्तु ६ |

तालिका॥ ऽ । ऽ ऽ । ऽ
सं ता श ता श ता। शीर्षकम्। ऽ । ऽ ऽ । ऽ
सं ता श ता श ता। ईदृश्येव पदान्तरनिर्मिता प्रतिशाखा।

इति षड्वस्तुकम्।

अथ सप्तवस्तुकम्—

| | | |
|---|---|---|
| ऽ ऽ ऽ ऽ<br>उउ शता | । । । ।<br>ताश तासं। | वस्तु १ |
| ऽ ऽ ऽ ऽ<br>उउ शता | । । । ।<br>ताश तासं। | वस्तु २ |

---

*एतदग्रे घ. पुस्तके 'इति तालिका' इत्यधिकम्। ×एतदग्रे किंचित्त्रुटितमिव भाति। तच्च मूलानुरोधेन किमपि कल्पनीयम्।

ऽ ऽ ऽ ऽ । । । ।
उउ शता ताश तासं । | वस्तु३

ऽ ऽ ऽ ऽ । । । ।
उउ शता ताश तासं । | वस्तु४

ऽ ऽ ऽ ऽ । । । ।
उउ शता ताश तासं । | वस्तु५

ऽ ऽ ऽ ऽ । । । ।
उउ शता ताश तासं । | वस्तु६

ऽ ऽ ऽ ऽ । । । ।
उउ शता ताश तासं । | वस्तु७

ऽ । ऽ ऽ । ऽ
शंता शता शता । इति तालिका॥ ऽ । ऽ ऽ । ऽ संता शता शता । इति शीर्षकम्॥

इति सप्तवस्तुकम् ।

सर्वेषां वस्तूनां शाखात्वे तदुत्तरार्धानां प्रतिशाखात्वे ताशताशा । ईदृश्येव प्रतिशाखा—प्रतिशाखापक्षे त्वेवम्—शाखा । १ ऽऽ ऽऽ । । उउ शता ताश

। । तासं शीर्षकम्॥ ऽ । ऽ ऽ । ऽ संता शता शता ऽ । ऽ ऽ ऽ ऽ संता शता शता प्रतिशाखा ॥

। । । । ताश ताश तालिका ॥ ऽ । ऽ ऽ । ऽ संता शता शता । शीर्षकम् ॥ ऽ । ऽ ऽ । ऽ संता शता शता।

शाखा ॥ २ ॥ ऽ ऽ ऽ ऽ । । । । उउ शता ताश तासं । शीर्षकम् ॥ ऽ । ऽ ऽ ऽ ऽ संता शता शता ।

तालिका ॥ ऽ । ऽ ऽ ऽ ऽ संता शता शता । प्रतिशाखा ॥ । । । । ताश ताश। शीर्षकम् ॥

ऽ । ऽ ऽ । ऽ संता शता शता । तालिका ॥ ऽ । ऽ ऽ । ऽ संता शता शता। शाखा ॥ ३॥ ऽ ऽ उउ

ऽ ऽ । । । । शता ताश तासं। शीर्षकम् ॥३॥ ऽ । ऽ ऽ । ऽ संता शता शता । शाखा ॥ ४ ॥

ऽ ऽ ऽ ऽ । । । । उउ शता ताश तासं। शीर्षकम्॥४॥ ऽ । ऽ ऽ ऽ ऽ संता शता शता । तालिका॥४॥

ऽ । ऽ ऽ । ऽ संता शता शता। प्रतिशाखा ॥ ४ ॥ । । । । ताश ताश। शीर्षकम् ॥ ४ ॥

ऽ । ऽ ऽ । ऽ　　　　　　ऽ । ऽ ऽ । ऽ
संता शता शता। तालिका ॥ संता शता शता शाखा ॥ ५ ॥

ऽ ऽ ऽ ऽ । । । ।　　　　　　ऽ । ऽ ऽ । ऽ
उउ शता ताश तासं । शीर्षकम् ॥ ५ ॥ संता शता शता । तालि-

　　　ऽ । ऽ ऽ । ऽ　　　　　　। । । ।
का ॥ ५ ॥ संता शता शता । प्रतिशाखा ॥५॥ ताश ताश । शीर्ष-

　　　ऽ । ऽ ऽ । ऽ　　　　　　ऽ । ऽ ऽ । ऽ
कम् ॥५॥ संता शता शता । तालिका ॥५॥ संता शता शता । एवं

षड्वस्तुकसप्तवस्तुकयोरप्यूहनीयम् । शाखोत्तरार्धस्य प्रतिशाखात्व-पक्षे तु पञ्चवस्तुकम् ।

| | ऽ ऽ ऽ ऽ　　। । । ।<br>उउ शता　ताश तासं । | |
|---|---|---|
| यथा— | ऽ ऽ ऽ ऽ　　। । । ।<br>उउ शता　ताश तासं । | वस्तु १ |
| | ऽ ऽ ऽ ऽ　　। । । ।<br>उउ शता　ताश तासं । | वस्तु २ |
| | ऽ ऽ ऽ ऽ　　। । । ।<br>उउ शता　ताश तासं । | वस्तु ३ |
| | ऽ ऽ ऽ ऽ　　। । । ।<br>उउ शता　ताश तासं । | वस्तु ४ |
| | ऽ ऽ ऽ ऽ　　। । । ।<br>उउ शता　ताश तासं । | वस्तु ५ |

ऽ ऽ ऽ ऽ　　। । । ।　　　　　　　　　ऽ ।
उउ शता　ताश तासं इति शाखा । तालिका संता

ऽ ऽ । ऽ　　　　ऽ । ऽ ऽ । ऽ
शता शता शीर्षकम्। संता शता शता । इति पञ्चवस्तुकम् ।

षड्वस्तुके शाखां शीर्षकं च लिखित्वा तदर्धेन वस्तुत्रयेण [illegible]-शाखां लिखित्वा तालिकां शीर्षकं पूर्ववल्लिखेत् । एवं सप्तक[illegible]के सप्तवस्तुकां शाखां तालिकां शीर्षकं च लिखित्वा तदर्धेन [illegible]र्ध-वस्तुत्रयेण प्रतिशाखां च लिखेत् । ततस्तालिकां शीर्षकं च [illegible]-ल्लिखेत् ॥

इत्येककलमपरान्तकम् ।

एवमेव षड्वस्तुकं सप्तवस्तुकं च । शाखोत्तरार्धस्य प्रतिशाखात्वपक्षे तु पञ्च-वस्तुके पञ्चवस्तुकां शाखां गीत्वा ततः प्रतिशाखां तु तृतीयवस्तूत्तरार्ध[illegible]चतु-ष्टयं लिखित्वा तदधस्तात् ' शतासान् ' लिखेत् । ततः पूर्वोक्तप्रकारेण चतुर्थ-पञ्चमे वस्तूनि ( स्तुनी ) लिखेत् । ततस्तालिकां शीर्षकं चोत्तरेण पूर्ववल्लिखेत् ।

इति पञ्चवस्तुके प्रतिशाखा । षड्वस्तुके परं वस्तुत्रयं प्रतिशाखा । सप्तवस्तुकेऽपि परं सार्धवस्तुत्रयं प्रतिशाखा । सर्वेषां वस्तूनां शाखात्वेन तदुत्तरार्धानां प्रतिशाखात्वे तु प्रस्तारः प्रदर्श्यते । यथा—प्रथमं तावत्समस्तं वस्तु शाखा । तत्रोत्तरार्धं लघुचतुष्टयं प्रतिशाखा । एवमेव पञ्चवस्तुकं षड्वस्तुकं सप्तवस्तुकं वा लिखित्वाऽन्त्यवस्तुशाखान्ते यथाक्षरेणोत्तरेण तालिकां शीर्षकं लिखेत् । तस्य प्रतिशाखान्ते वा लिखेत् ।

**इत्येककलमपरान्तकम् ।**

अथ द्विकलमपरान्तकम्—

**द्विकले द्वादशकलं वस्तु स्यादपरान्तके ।**
**तच्चैककलवत्कार्यं विशेषस्त्वभिधीयते ॥ ९९ ॥**
**उपोहनं स्यात्कलिकं द्विकलं वा कलैव तु ।**
**प्रत्युपोहनमत्रोपवर्तनं तुर्यवस्तुनि ॥ १०० ॥**
**गीते तत्पदगीतिभ्यां तल्लयार्धलयं भवेत् ।**
**यथाक्षरेणोत्तरेण वृत्तिदाक्षिणमार्गयोः ॥ १०१ ॥**

**द्विकले द्वादशकलमित्यादि** । **तच्चैककलवदिति** । एकवस्तुकादयश्चत्वारो भेदाः शाखाप्रतिशाखादिकल्पनाभेदाश्चात्रापि कर्तव्या इत्यतिदेशार्थः । **विशेषस्त्विति** । उपोहनोपवर्तनादिकल्पनमित्यर्थः । **उपवर्तनमित्यादि** । तुर्ये वस्तुनि गीते सति तत्पदगीतिभ्यां तस्य तुर्यवस्तुनः पदं सुप्तिङन्तं गीतिर्मागध्यादि [ ताभ्याम् ] । **तल्लयार्धलयमिति** । तस्य तुर्यवस्तुनो यो लयस्तदर्धलयो यस्येति तत्तथोक्तम् । एतदुपवर्तनविशेषणम् । वृत्तिदाक्षिणमार्गयोरित्यनेन द्विकलचतुष्कलाभ्यामिति गम्यते । अयमर्थः । अत्रोपवर्तने यथाक्षरादयस्त्रयोऽपि षट्पितापुत्रभेदाः कर्तव्या इति ॥ ९९ ॥ १०० ॥ १०१ ॥

**समाप्तार्थन्यासयुक्तं केचित्पञ्चमवस्तुनः ।**
**एतदाद्ये कलाषट्के गातव्यमिति मन्वते ॥ १०२ ॥**

**समाप्तार्थन्यासयुक्तमिति** । समाप्तश्चासावर्थश्च तत्र न्यासेन युक्तमिति तथोक्तम् । अस्मिन्नुपवर्तने वाक्यार्थसमाप्तौ गीतसमाप्तिं च कुर्यादित्यर्थः । **केचिदित्यादि** । पञ्चमवस्तुन आद्ये कलाषट्क इत्यनेन केवलं यथाक्षरोत्तरेणेति गम्यते । **एतदिति** । उपवर्तनम् ॥ १०२ ॥

**निप्रानिश्रा निशनितास्ताशास्तासं कला त्विह ।**
**एककं विविधं वाऽत्र गीताङ्गं दन्तिलोऽवदत् ॥**
**गीताङ्गनियमं केचिन्नाब्रूत भगवान्मुनिः ॥ १०३ ॥**

---

१ ग. तत्त्वेक° । २ ख. ग. °रेणान्तरे° । ३ ङ. च. °माप्त्यर्थ° । ४ च. °चिन्न ब्रूते भ° ।

निप्रानिप्रेत्यादि । इह द्विकलापरान्तकस्य वस्तुनि ॥ १०३ ॥

वस्तु ॥ १ ॥ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निप्र निप्र निश नितः ताश तासं ॥ प्रतिशाखा ॥ ऽऽ
निता

ऽऽ ऽऽ
ताश तासं ॥ शीर्षकम् ॥ ऽ। ऽऽ ।ऽ
संता शता शता ॥ तालिका ॥ ऽ। ऽऽ
संता शता

।ऽ
शता ॥ प्रतिशाखा ॥ ऽऽ ऽऽ ऽऽ
निता ताश तासं ॥ शीर्षकम् ॥ ऽ। ऽऽ ।ऽ
संता शता शता ॥ तालि-

का ॥ ऽ। ऽऽ ।ऽ
संता शता शता ॥ प्रतिशाखा ॥ ।। ।।
ताश ताश ॥ तालिका ॥ ऽ।
संता

ऽऽ।ऽ
शता शता शीर्षकम् ॥ ऽ। ऽऽ ।ऽ
संता शता शता ॥ इत्येकं ( क ? ) वस्तु ॥

अथ पञ्चवस्तुकम्—ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निप्र निप्र निश निता ताश तासं १ ॥ ऽऽ
निप्र

ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निप्र निश निता ताश तासं ॥२॥ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निप्र निप्र निश निता ताश तासं ॥३॥

ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निप्र निप्र निश निता ताश तासं ॥ ४ ॥ ऽ। ऽऽ ।ऽ
संता शता शता । इत्युप-

वर्तनम् ॥ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निप्र निप्र निश निता ताश तासं ॥५॥ तालिका ॥ ऽ। ऽऽ
संता शता

।ऽ
शता। शीर्षकम् ॥ ऽ। ऽऽ ।ऽ
संता शता शता एवं पदान्तरनिर्मिता प्रतिशाखा ।

एवं षड्वस्तुकं सप्तवस्तुकं च । इयमेव शाखा । शाखोत्तरार्धस्य प्रति-

शाखात्वे प्रतिशाखा यथा । वस्तुनोऽर्धम् । वस्तु ॥ १ ॥ ऽऽ ऽऽ
निप्र निप्र

ऽऽ ऽऽ ऽऽ ऽऽ
निश निता ताश तासं । वस्तु ॥ २ ॥ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निप्र निप्र निश निता ताश

ऽऽ
तासं ॥ ( ×वस्तु ॥ २ ॥ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निप्र निप्र निश निता ताश तासं ) । वस्तु ॥३॥

ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निप्र निप्र निश निता ताश तासं । वस्तु ॥ ४ ॥ ऽऽ ऽऽ ऽऽ
निप्र निप्र निश

ऽऽ ऽऽ ऽऽ ऽ। ऽऽ ।ऽ
निता ताश तासं ॥ संता शता शता । इत्युपवर्तनम् । वस्तु ॥ ५ ॥ ऽऽ
निप्र

× एतच्चिह्नान्तर्गतमधिकम् ।

ऽऽऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निप्र निश निता ताश तासं । निता ताश तासं । प्रतिशाखा । तालिका ।
ऽ। ऽऽ ।ऽ ऽ। ऽऽ ।ऽ
संता शता शता । शीर्षकम् । संता शता शता ।

इति पञ्चवस्तुकम् ।

एवं षड्वस्तुसप्तवस्तुके शाखां चतुर्थशाखान्त उपवर्तनं शाखान्ते पूर्ववत्तालिकां शीर्षकं च लिखित्वा वस्तुत्रयात्मकं शाखार्धरूपं प्रतिशाखि (?) तुर्यवस्त्वन्त उपवर्तनं तालिकां शीर्षकं च लिखेत् । एवमेव सप्तवस्तुत्रयात्मकं ( ? ) शाखार्धरूपां प्रतिशाखां तुर्यवस्त्वन्त उपवर्तनयुक्तां तालिकां शीर्षकं च लिखित्वा सार्धवस्तुत्रयात्मिकां तुर्यवस्त्वन्तोपवर्तनयुक्तां प्रतिशाखां तालिकां शीर्षकं च लिखेत् । सर्ववस्तूनां प्रतिवस्तु शाखात्वपक्षे तत्तदर्धानां प्रतिशाखात्वे प्रस्तारः—

शाखा ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निप्र निप्र निश निता ताश तासं ॥ १ ॥ तालिका ऽ।
संता
ऽऽ ।ऽ
शता शता ॥ १ ॥ शीर्षकम् । ऽ। ऽऽ ।ऽ
संता शता शता ॥ १ ॥ प्रतिशाखा ऽऽ
निता
ऽऽ ऽऽ
ताश तासं ॥ १ ॥ तालिका । ऽ। ऽऽ ।ऽ
संता शता शता ॥१॥शीर्षकम् । ऽ।
संता
ऽऽ ऽऽ
शता शता ॥ १ ॥ शाखा । ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निप्र निप्र निश निता ताश तासं ॥ २ ॥
तालिका । ऽ। ऽऽ ।ऽ
संता शता शता ॥ २ ॥ शीर्षकम् । ऽ। ऽऽ ।ऽ
संता शता शता ॥ २ ॥
वस्तु ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निप्र निप्र निश निता ताश तासं ॥ ३ ॥ तालिका । ऽ। ऽऽ
संता शता
।ऽ
शता ॥३॥शीर्षकम् । ऽ। ऽऽ ।ऽ
संता शता शता ॥३॥प्रतिशाखा । ऽऽ ऽऽ ऽऽ
निता ताश तासं
॥ ३ ॥ तालिका । ऽ। ऽऽ ।ऽ
संता शता शता ॥ ३ ॥ शीर्षकम् । ऽऽ ऽऽ ।ऽ
संता शता शता
॥३॥ शाखा ॥ ४ ॥ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निप्र निप्र निश निता ताश तासं । तालिका ॥४॥

ऽ। ऽऽ ।ऽ
संता शता शता शीर्षकम् ॥ ४ ॥ संता शता शता। प्रतिशाखा ॥४॥ निता ताश तासं। तालिका ॥४॥ संता शता शता। शीर्षकम् ॥४॥ संता शता शता। उपवर्तनम् ॥४॥ संता शता शता। शाखा ॥ ५ ॥ निप्र निप्र निश निता ताश तासं। तालिका ॥ ५ ॥ संता शता शता। शीर्षकम् ॥५॥ संता शता शता। प्रतिशाखा ॥ ५ ॥ निता ताश तासं। तालिका ॥ ५ ॥ संता शता शता। शीर्षकम् ॥५॥ संता शता शता। इति पञ्चवस्तुकम्। एवमेव षड्वस्तुकम् ॥

इति द्विकलमपरान्तकम्।

अस्य प्रस्तारो यथा—गुरुद्वयात्मकान्षट्पादभागाल्लिँखित्वा तदधो निप्रनिप्रनिशनिताताशतासान्क्रमेण लिखेत्। इदमेकं (क)वस्तु। एवं चत्वारि वस्तूनि लिखेत्। ततो यथाक्षरेणोत्तरेणोपवर्तनं लिखेत्। ततः पञ्चमवस्तु लिखित्वा यथाक्षरोत्तरेण तालिकां तेनैव शीर्षकं च लिखेत्। इति शाखा। इयमेव प्रतिशाखा। शाखापश्चिमार्धस्य प्रतिशाखात्वे तु पञ्चवस्तुकां शाखां गीत्वा सार्धवस्तुद्वयमुत्तरं प्रतिशाखां कुर्यात्। यथा—तृतीयवस्तूत्तरार्धे गुरुद्वयात्मकांस्त्रीन्पादभागाल्लिँखित्वा तदधो निताताशतासाल्लिँखेत्। ततश्चतुर्थं वस्तु पूर्ववल्लिखेत्। ततो यथाक्षरोत्तरेणोपवर्तनम्। ततः पञ्चमं वस्तु पूर्ववल्लिखेत्। ततो यथाक्षरोत्तरेण तालिकां तेनैव शीर्षकं च कुर्यात्। अथ सर्ववस्तूनां शाखात्वे तदुत्तरार्धानां प्रतिशाखाहेतुः (त्वे तु) यथा—पूर्ववत्प्रथमं वस्तु शाखां कुर्यात्। तदुत्तरार्धं प्रतिशाखां कुर्यात्। एवं त्रीणि वस्तूनि शाखाप्रतिशाखायुक्तानि गीत्वा चतुर्थवस्त्वन्ते यथाक्षरेणोत्तरेणोपवर्तनं कुर्यात्। ततो वस्तूत्तरार्धेन प्रतिशाखां कुर्यात्। ततः पञ्चमवस्तुशाखां कृत्वा यथाक्षरेणोत्तरेण तालिकां तेनैव शीर्षकं च कुर्यात्। ततो वस्तूत्तरार्धेन प्रतिशाखां कृत्वा पूर्ववत्तालिकाशीर्षके कुर्यात्। एवं षड्वस्तुकं सप्तवस्तुकमपि ॥

इति द्विकलमपरान्तकम्।

अथ चतुष्कलमपरान्तकं लक्षयति—

चतुष्कलं तु द्विगुणं द्विकलात्पूर्ववन्मतम् ।
उपोहनं तु वस्त्वर्धं द्विकलं प्रत्युपोहनम् ॥ १०४ ॥

**चतुष्कलं त्वित्यादि । पूर्ववदिति ।** मद्रकवदित्यर्थः । **द्विकलाद्द्विगुणमिति ।** वस्तुनि प्रतिपादभागं गुरुचतुष्टयं कर्तव्यमित्यर्थः । **उपोहनं तु वस्त्वर्धमिति ।** वस्त्वर्धं द्वादश गुरूण्युपोहनं कर्तव्यम् । **द्विकलं प्रत्युपोहनमिति ।** द्विकलं गुरुद्वययुक्तम् ॥ १०४ ॥

दक्षिणे वार्तिके त्वेतद्वाद्विकलं वा चतुष्कलम् ।
न वा तत्सर्वमार्गेषु विशेषस्तूपवर्तनम् ।
तुर्यवस्तूत्तरार्धस्थैः पदैर्निर्माणमिष्यते ॥ १०५ ॥

**दक्षिणे वार्तिके त्वेतदित्यादि ।** एतत्प्रत्युपोहनं वार्तिके द्विकलं दक्षिणे चतुष्कलं चेति यथायोगं योजनीयम् । **न वा तादिति ।** तत्प्रत्युपोहनं न वेति तृतीयः पक्षः । **सर्वमार्गेषु विशेषस्तूपवर्तनामिति ।** चतुष्कलापरान्तके विशेषस्तूपवर्तनं सर्वमार्गेषु ध्रुवादिमार्गेषु कर्तव्यमिति । **तुर्यवस्तूत्तरार्धस्थैः पदैर्निर्माणमिष्यत** इत्यत्रास्योपवर्तनस्येत्यध्याहारः कर्तव्यः ॥ १०५ ॥

आनिविप्रा आनिविप्रा आवापानिविशास्ततः ।
आवापनिविता आताविशास्तानिविसं कलाः ।
शतालप्रान्प्राहुरन्येऽष्टमद्वादशषोडशान् ॥ १०७ ॥

**आनिविप्रा इत्यादि ।** वस्तुनि पादभागेषु पातकलायोगो द्रष्टव्यः । **शतालप्रान्प्राहुरन्येऽष्टमद्वादशषोडशानिति ।** अन्य आचार्या वस्तुनश्चतुर्विंशतौ गुरुष्वष्टमद्वादशषोडशान्गुरून् 'शतालप्रान्' प्राहुः । प्रथमं षोडशस्ताल उक्तस्तं प्रवेशमाहुरिति क्रमेण योजनीयम् ॥ १०६ ॥ १०७ ॥

**अस्य प्रस्तारः—वस्तु—**
ऽ ऽ ऽ ऽ ऽ ऽ ऽऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनि विप्र आनि विप्र आनि विश आनि विता

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आता विश आनि विसं॥ तालिका॥

ऽ । ऽ ऽ । ऽ
संता शता शता । शीर्षकम् ॥१॥

ऽ । ऽ ऽ । ऽ
संता शता शता । प्रतिशाखा ॥१॥

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविता आताविश तानिविसं। तालिका॥१॥

ऽ । ऽ ऽ । ऽ
संता शता शता। शीर्षकम्॥१॥

ऽ । ऽ ऽ । ऽ
संता शता शता ।

एकं वास्त्विति ( इत्येकवस्तुकम् ? ) ॥

अथ पञ्चवस्तुकं यथा–वस्तु शाखा(?) ॥१॥ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविप्र आनिविप्र

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविशं आनिविता आताविश तानिविसं। वस्तु ॥२॥ आनिविप्र

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविप्र आनिविश आनिविता आताविश आनिविसं। वस्तु ॥३॥

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविप्र आनिविप्र आनिविश आनिविता आताविश तानिविसं। वस्तु ४

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविप्र आनिविप्र आनिविश आनिविता आताविश तानिविसं। उप

ऽ । ऽ ऽ । ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
वर्तनम् ॥ संता शता शता। वस्तु ॥५॥ आनिविप्र आनिविप्र आनिविश

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ ।
आताविश तानिविसं। तालिका। संता शता शता॥ शीर्षकम् ॥ संता

ऽ ऽ । ऽ
शता शता । एवमुपवर्तनतालिकाशीर्षकसहितपञ्चवस्तुका शाखा।
तत एवमेव प्रतिशाखा। शाखापाश्चिमार्ध[स्य] प्रतिशाखात्वे तु पञ्च-
वस्तुकं यथा–प्रस्तारः–वस्तु ॥१॥ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविप्र आनिविप्र आनिविश

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविता आताविश तानिविसं। वस्तु ॥२॥ आनिविप्र आनिविप्र

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविश आनिविता आताविश तानिविसं। वस्तु ॥३॥ आनिविप्र

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविप्र आनिविश आनिविता आताविश तानिविसं। वस्तु ॥४॥

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविप्र आनिविप्र आनिविश आनिविता आताविश तानिविसं।

ऽ । ऽ ऽ । ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
उपवर्तनम्। संता शता शता। वस्तु ॥५॥ आनिविप्र आनिविप्र आनि-

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ । ऽ ऽ । ऽ
विश आनिविता आताविश तानिविसं। तालिका। संता शता शता।

ऽ । ऽ ऽ । ऽ
शीर्षकम्। संता शता शता।

इति पञ्चवस्तुकम् ॥

एवं षड्वस्तु सप्तवस्तुकं च । शाखोत्तरार्धस्य प्रतिशाखापक्षत्वे तु पक्षद्वयं प्रतिशाखा । यथा–पञ्चवस्तुके पूर्ववत्पञ्चवस्तुकां शाखां लिखित्वा शाखोत्तरार्धरूपा सार्धवस्तुद्वयात्मिका प्रतिशाखायाः शाखा (?)तृतीयवस्तूत्तरार्धादिसार्धवस्तु ।

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
प्रस्तारः–वस्तु ॥१॥ आनिविप्र आनिविप्र आनिविश आनिविता

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आताविश तानिविसं । एवं वस्तुचतुष्टयम् । उपवर्तनम् ।

ऽ । ऽ ऽ । ऽ
संता शता शता ।

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
वस्तु॥५॥ आनिविप्र आनिविप्र आनिविश आनिविता आनिविश तानि-

ऽ ऽ
विसं । प्रतिशाखेयम् । तालिका ॥

ऽ । ऽ ऽ । ऽ
संता शता शता । शीर्षकम् ।

ऽ ।
संता

ऽ ऽ । ऽ
शता शता । एवं षड्वस्तु सप्तवस्तुकमपि ज्ञेयम् ।

सर्ववस्तूनां प्रतिशा(नां शा ? ) खात्वपक्षे तदुत्तरार्धानां प्रतिशाखात्वे प्रस्तारः–

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
शाखा ॥१॥ आनिविप्र आनिविप्र आनिविश आनिविता आनिविश

ऽ ऽ ऽ ऽ
तानिविसं । शीर्षकम् ।

ऽ । ऽ ऽ । ऽ
संता शता शता । तालिका॥१॥

ऽ । ऽ ऽ । ऽ
संता शता शता ।

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
प्रतिशाखा ॥१॥ आनिविता आनिविश तानिविसं । तालिका॥१॥

ऽ । ऽ ऽ । ऽ
संता शता शता । शीर्षकम् ।

ऽ । ऽ ऽ । ऽ
संता शता शता । शाखा ॥२॥

ऽ ऽ ऽ ऽ
आनिविप्र

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविप्र आनिविश आनिविता आनिविश तानिविसं । शीर्षकम् ॥२॥

ऽ । ऽ ऽ । ऽ
संता शता शता । तालिका॥२॥

ऽ । ऽ ऽ । ऽ
संता शता शता । प्रतिशाखा ॥२॥

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविता आनिविश तानिविसं । तालिका ॥ २ ॥

ऽ । ऽ ऽ । ऽ
संता शता शता ।

ऽ । ऽ ऽ । ऽ
शीर्षकम्॥२॥ संता शता शता । शाखा ॥३॥

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविप्र आनिविप्र

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविश आनिविता आनिविश तानिविसं । शीर्षकम्॥३॥

ऽ ।
संता

ऽ ऽ । ऽ ताालिका॥३॥ ऽ । ऽ ऽ । ऽ प्रतिशाखा ॥३॥ ऽ ऽ
शता शता । संता शता शता । आनि-

ऽ ऽ ऽ ऽऽऽ ऽऽऽऽ तालिका ॥३॥ ऽ । ऽऽ । ऽ शीर्ष-
विता आनिविश तानिविसं । संता शता शता ।

कम् ॥३॥ ऽ । ऽ ऽ । ऽ शाखा ॥ ४ ॥ ऽऽऽऽ ऽऽऽऽ
संता शता शता । आनिविप्र आनिविप्र

ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ शीर्षकम्॥४॥ ऽ । ऽ ऽ । ऽ
आनिविश आनिविता तानिविसं । संता शता शता

तालिका॥४॥ ऽ । ऽ ऽ । ऽ प्रतिशाखा ॥४॥ ऽ ऽ ऽ ऽ ऽ ऽ
संता शता शता । आनिविता आनि-

ऽ ऽऽऽ ऽ ऽ तालिका॥४॥ ऽ । ऽऽ । ऽ शीर्षकम् ॥४॥ ऽ ।
विश तानिविसं । संता शता शता संता

ऽ ऽ ऽ ऽ शाखा ॥५॥ ऽऽ ऽऽ ऽऽऽ ऽ ऽऽऽ ऽ ऽऽऽऽ
शता शता । आनिविप्र आनिविप्र आनिविश आनिविता

ऽ ऽ ऽऽऽऽ ऽ ऽ शीर्षकम्॥५॥ ऽ । ऽऽ । ऽ तालिका॥५॥
आनिविश तानिविसं । संता शता शता ।

ऽ । ऽ ऽ । ऽ प्रतिशाखा ॥५॥ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽऽ ऽ
संता शता शता । आनिविता आनिविश तानिविसं ।

तालिका॥५॥ ऽ । ऽ ऽ । ऽ शीर्षकम् ॥५॥ ऽ । ऽ ऽ । ऽ एवं
संता शता शता । संता शता शता ।

पञ्चवस्तुकभेदाः । एवं षड्वस्तु सप्तवस्तुकम् ।

इति चतुष्कलमपरान्तकम् ।

अस्य प्रस्तारो यथा—गुरुचतुष्टयात्मकान्षट्पादभागाल्लिँखित्वा तदधः प्रथम-पद्भाग अनिविप्रान्द्वितीये पुनरानिविप्रांस्तृतीय आनिविशांश्चतुर्थे आनिविता-न्पञ्चम आताविशान्षष्ठ आनिविसमित्येताल्लिँखेत् । इत्येवं चत्वारि वस्तूनि गीत्वा यथाक्षरोत्तरेणोपवर्तनं गायेत् । ततः पूर्ववत्पञ्चमं वस्तु लिखेत् । ततो यथाक्ष-रोत्तरेण तालिकां शीर्षकं च लिखेत् । एवमुपवर्तनतालिकाशीर्षकसहितपञ्चवस्तुका शाखा । तत एवमेव प्रतिशाखा । शाखापार्श्विमार्धस्य प्रतिशाखात्वे तु पञ्चवस्तुके पञ्चवस्तुकां शाखां गीत्वा तृतीयवस्तूत्तरार्धादिसार्धवस्तुद्वयं प्रतिशाखां कुर्यात् ।

१ ख. ग. °निविप्रान्प° ।

यथा त्रिषु पादभागेषु द्वादश गुरूंल्लिखित्वा तदध आनिविशानावाविशानानि-विसांश्च लिखेत्। इति तृतीयवस्तूत्तरार्धम्। ततः पूर्ववच्चतुर्थपञ्चमवस्तुनि(स्तूनी) लिखेत्। ततस्तालिकां शीर्षकं च यथोत्तरेण लिखेत्। अथ सर्ववस्तूनां शाखात्वे तदुत्तरार्धानां प्रतिशाखात्वे तु यथा प्रथमं समस्तं(स्त) वस्तुनि लिखित्वा शाखां कुर्यात्। ततस्तदुत्तरार्धं लिखित्वा प्रतिशाखां कुर्यात्। एवं त्रीणि वस्तूनि शाखाः। तदुत्तरार्धानि प्रतिशाखाः। ततश्चतुर्थं वस्तु शाखां लिखित्वा यथाक्षरेणोत्तरेणोपवर्तनं लिखेत्। ततो वस्तूत्तरार्धं प्रतिशाखां कृत्वा पञ्चमं वस्तु शाखां लिखेत्। ततस्तालिकां शीर्षकं च यथाक्षरोत्तरेण लिखेत्। ततो वस्तूत्तरार्धेन प्रतिशाखां यथाक्षरोत्तरेण तालिकां शीर्षकं च लिखेत्। इति पञ्चवस्तुकस्य भेदाः। एवं षट्सप्तकवस्तुकयोरप्यूह्याः।

**इति चतुष्कलमपरान्तकम्।**

अथोल्लोप्यं लक्षयति—

**भेदैरेककलाद्यैः स्यादुल्लोप्यकमपि त्रिधा ॥१०८॥**

**भेदैरित्यादि**। एककलाद्यैः। एककलद्विकलचतुष्कलैः ॥ १०८ ॥

एककले प्रमाणमाह—

**भवेदेककले तस्मिन्गुरुद्वंद्वं लघुद्वयम्।**
**गुर्वन्ते चेति मात्रैका तच्च मात्रासमाप्तिकम् ॥ १०९ ॥**

**भवेदित्यादि**। गुरुद्वंद्वं लघुद्वयमन्त्ये गुरु चेत्येका मात्रेति योजना। **तच्चेति**। एककलोल्लोप्यकम्। **मात्रासमाप्तिकमिति**। मात्रायां समाप्तिर्यस्येति व्यधिकरणो बहुव्रीहिः। एकमात्रयैव समाप्यत इत्यर्थः ॥ १०९॥

**द्विकलेऽष्टकला मात्रा द्विगुणा तु चतुष्कले।**
**मात्रापूर्वदले कार्यो ×विविधो मुखसंज्ञकः।**
**पश्चिमार्धे प्रतिमुखं विविधो वृत्तसंयुतः ॥ ११० ॥**

**द्विकल इत्यादि**। द्विकल उल्लोप्यकेऽष्ट कला अष्टौ गुरव एका मात्रा भवेत्। अथवा द्विकले मात्राऽष्टकलाऽष्टौ कला यस्याः सा तथोक्ता। चतुष्कल उल्लोप्यके तु मात्रा द्विगुणा। द्विकलमात्रापेक्षया द्विगुणा। षोडशकलेत्यर्थः। **मात्रापूर्वदल इति**। त्रिविधस्याप्युल्लोप्यकस्य मात्रायाः पूर्वदले पूर्वार्धे एककलस्य गुरुद्वये द्विकलस्य गुरुचतुष्टये चतुष्कलस्य गुर्वष्टके विविधः कार्यः। 'विविधो द्विविदारीकः' इत्युक्तलक्षणो गीताङ्गविशेषः। स एव मुखसंज्ञकः। पश्चिमार्धे वृत्तसंयुतः कृतो विविधः प्रतिमुखमित्युच्यते ॥ ११० ॥

× विवध इति पाठः।

वृत्तस्य स्वरूपमाह—

**वृत्तं तिस्रश्चतस्रो वा पञ्च षड्वा विदारिकाः ।**
**अवगाढं प्रवृत्तं च तद्द्विधेति निरूपितम् ।**
**आद्यामारोहिवर्णेन प्रवृत्तमवरोहिणा ॥ १११ ॥**

**वृत्तं तिस्रश्चतस्रश्च( स्रो वा ) पञ्च षड्वा विदारिका इति** । तद्वृत्तम् । अवगाढं प्रवृत्तं चेति द्विधा निरूपितम् । आरोहिणा वर्णेनाऽऽद्यमवगाढम् । अवरोहिणा वर्णेन प्रवृत्तमिति तयोर्लक्षणम् ॥ १११ ॥

**न्यासापन्याससंन्यासविन्यासानां तु कुत्रचित्[१] ।**
**न्यासोऽस्यांशेऽस्य संवादिन्यनुवादिनि वा भवेत् ॥११२॥**

**न्यासेत्यादि** । अस्य वृत्तस्य न्यासो रागन्यासादिष्वंशे वा कुत्रचिद्भवति । **अस्य संवादिन्यनुवादिनि वा भवेदिति** । अस्येत्य(स्य प्रवृत्त ?) ॥११२॥

**विशाखिल**मतेन विदारीणां न्यासमाह—

**अनन्तरस्वरैरेकान्तरितैर्वा समापनम् ।**
**विदारीणां भवेदत्रेत्यभ्यधत्त[२] विशाखिलः ॥ ११३ ॥**
**अन्यत्रा(त्र न्या)समपन्यासमंश(शं) संवादिनं तथा ।**
**उपक्रम्य चतुर्धा स्यादारोहो वाऽवरोहणम् ॥ ११४ ॥**

**अनन्तरस्वरैरित्यादि** । अनन्तरस्वरैरंशस्वरसंनिहितैः । एकान्तरितैरंशस्यैकान्तरितैः । समापनं न्यासः । **अत्रेत्यादि** । अत्र वृत्त आरोहणमवरोहणं वा न्यासादिषु चतुर्ष्वेकतमोपक्रमेण चतुर्धा भवति ॥ ११३ ॥ ११४ ॥

**वैहायसं विधातव्यं मात्रोपरि चतुष्कले ।**
**यद्वा कलाप्रयोगेण शून्यान्मात्रोपरिस्थितात् ॥ ११५ ॥**

**वैहायसमित्यादि** । चतुष्कले मात्रोपरि वैहायसं विधाव्यमित्यन्वयः । चतुष्कले चतुष्कलोल्लोप्ये मात्रोपरि षोडशकलात्मिकाया मात्राया अनन्तरं वैहायसं नामाङ्गं कर्तव्यम् । पक्षान्तरेण वैहायसं प्रयोजयति—**यद्वेति** । **कलाप्रयोगेण शून्यादिति** । 'वैहायसे तु निविशः' इत्यादिना वक्ष्यमाणेन कलाप्रयोगेण रहितात् ॥ ११५ ॥

**कलाचतुष्ककालात्स्यादेककत्रितयादिदम् ।**
**एकाङ्गादिषडङ्गान्तं द्वादशाङ्गान्तमप्यदः ।**
**विविधोऽस्याऽऽद्यमङ्गं स्यादेककानि ततः परम् ॥ ११६ ॥**

**कलाचतुष्ककालादिति** । गुरुचतुष्टयमितकालादनन्तरम् । **एककत्रितयात्** । एककानि नाम गीताङ्गानि तेषां त्रितयात् । इदं पूर्वोक्तं वैहायसं स्यात् ।

---

१ ख. ग. घ. °त् । अंशे न्यासोऽस्य सं° । २ च. °भ्यधात्तु वि° ।

**एकाङ्गादिति** । अद एतद्वैहायसम् । **एकाङ्गादिषडङ्गान्तमिति** । एक-स्मिन्पक्षे षड्भेदयुतम् । **द्वादशाङ्गान्तमिति** । पक्षान्तरे द्वादशभेदयुक्तमि-त्यर्थः । सर्वेषु भेदेष्वाद्यमङ्गं विविधः स्यात् । ततः परमङ्गान्येककानि भवन्ति । एकाङ्गदेशे विविधः । एवं व्यङ्गादिभेदेषु द्वितीयादीन्यङ्गान्येककानि भवन्ती-त्यर्थः ॥ ११६ ॥

**तद्द्वादशकलं प्रोक्तमुल्लोप्यकसमापकम् ।**
**वर्णानुकर्षणं तालावृत्तिर्वाऽङ्गनिवेशने ॥ ११७ ॥**

**तदित्यादि** । तद्वैहायसं द्वादशकलं द्वादशगुरुकालमितम् । उल्लोप्यकसमा-पकमुल्लोप्यकस्य समाप्तिकृत् । अङ्गनिवेशनेऽङ्गानां विविधादीनां निवेशने प्रयोगे वर्णानुकर्षणं वर्णानामक्षराणामनुकर्षणं पुनरुच्चारणं ताल( ला )वृत्तिश्च कर्तव्ये भवतः ॥ ११७ ॥

**यद्वा शाखेयमुदिता मात्रा वैहायसात्मिका ॥ ११८ ॥**

**यद्वेत्यादि** । वैहायसात्मिकेयं मात्रा केषांचिन्मते शाखेत्युदिता । केचिद्वैहा-यसमेव शाखां वदन्तीत्यर्थः ॥ ११८ ॥

**शाखेव प्रतिशाखोक्ता सा त्वन्यपदनिर्मिता ।**
**ततोऽन्ताहरणं प्रोक्तं पञ्चपाणौ यथाक्षरे ॥ ११९ ॥**
**एतत्संहरणं प्रोक्तं गीतकस्य समाप्तिकृत् ।**
**वृत्तं संहरणेऽत्र स्यादन्यदा त्वेककं भवेत् ॥ १२० ॥**
**विविधो वा त्रिधाऽन्तोऽथ युगयुङ्मिश्रभेदतः ।**
**युग्मोऽन्तः प्रथमस्तेषां त्र्यस्र इत्याह दन्तिलः ॥ १२१ ॥**

सा शाखैवान्यपदानिर्मिता प्रतिशाखेत्युक्ता । ततो यथाक्षरे पञ्चपाणावन्ता-हरणं नामाङ्गं प्रोक्तं गीतकस्योल्लोप्यकस्य समाप्तिकृत् । एतदन्ताहरणमेव संहर-मिति संज्ञान्तरेणापि प्रोक्तम् । अत्र संहरणे वृत्तं स्यात् । वृत्तं नाम 'वृत्तं तिस्र-श्चतस्रो वा पञ्च षड्वा विदारिकाः' इत्यादिनोक्तलक्षणमनुसंधेयम् । **अन्यदा त्विति**। अन्ताहरणाभावपक्षे त्वेककं विविधो वा भवेत्। अथान्ताहरणानन्तरम्। अन्तः । अन्तो नामाङ्गविशेषः । **युगयुङ्मिश्रभेदत इति** । युगिति युग्मः । अयुगित्ययुग्मः । मिश्र इति युग्मायुग्मः । एवं त्रिधा भवति । **तेषामिति** । त्रयाणां मध्ये । **युग्मोऽन्तः प्रथम इति** । भरतादिमतेनेति शेषः । दन्तिलस्तु त्र्यस्रः प्रथम इत्याह । त्र्यस्रोऽयुग्मः ॥ ११९ ॥ १२० ॥ १२१ ॥

**स्थितं प्रवृत्तमपरं महाजानिकमित्यपि ।**
**त्रीण्यङ्गानि पृथक्तेषां लक्षणं प्रतिपाद्यते ॥ १२२ ॥**

---

१ ख. ग. °नि न भ° ।

**स्थितमित्यादि** । तेषां युग्मादीनां पृथक्प्रत्येकं स्थितं प्रवृत्तं महाजनिकमिति त्रीण्यङ्गानि ॥ १२२ ॥

स्थितादीनां लक्षणमाह—

**युग्मे द्विकलयुग्मेन स्थितं स्थायिगतं मतम् ।**
**तेनैव तत्प्रवृत्तं स्यादुद्घट्टस्तत्कलात्रये ॥ १२३ ॥**
**आद्ये कलाचतुष्केऽन्त्ये पदानि प्राश्चि योजयेत् ।**
**विविधोऽस्याऽऽद्यभागे स्यादेककं तु ततः परम् ॥ १२४ ॥**

**युग्म इत्यादि** । युग्मे द्विकलयुग्मेन द्विकलचच्चत्पुटेन । स्थायिगतं स्थायिवर्णगतं स्थायिस्वरगतम् । तेनैवेति । द्विकलचच्चत्पुटेनैव तत्प्रवृत्तं युग्मप्रवृत्तं स्यात् । तत्तत्र । **आद्ये कलात्रय उद्घट्ट** इति । उद्घट्टके तु निष्क्रामं शम्पाद्वयं च योजयेदित्युद्घट्टोक्ताः पातकला निशशा योजनीया इत्यर्थः । **अन्त्ये कलाचतुष्के प्राश्चि पदानि योजयेदिति** । आद्यकलाचतुष्कोक्तान्येव पदान्यन्त्यकलाचतुष्केऽपि गायेदित्यर्थः । **अस्येति** । युग्मप्रवृत्तस्य । आद्यमङ्गं विविधः स्यात् । ततः परं त्वेककं स्यात् ॥ १२३ ॥ १२४ ॥

**पूर्वार्धस्थपदावृत्त्या युङ्महाजानिकं विदुः ।**
**स्थितकालयुतं तस्य गीताङ्गनियमो न वा ॥ १२५ ॥**

**पूर्वार्धस्थेत्यादि** । **पूर्वार्धस्थपदावृत्त्येति** । महाजानिके पूर्वार्धस्थितानामेव पदानामावृत्तिः कर्तव्या नोत्तरार्धस्थितानामित्यर्थः । **युङ्महाजानिकमिति** । युग्मे महाजानिकम् । **स्थिततालयुतमिति** । युग्मस्थिते यस्ताल उक्तो द्विकलचच्चत्पुटस्तेन युक्तमित्यर्थः । तस्य महाजानिकस्य । गीताङ्गनियमः । विविधादीनां गीताङ्गानां नियमो [ न ] वेति यथारुचि कर्तव्यानीत्यर्थः ॥ १२५ ॥

**त्र्यस्रोऽन्ते त्र्यस्रतालेन द्विकलेन स्थितं भवेत् ।**
**यथाक्षरेणोत्तरेण प्रवृत्तं तत्र कीर्तितम् ।**
**त्र्यस्रेण महाजानिकं महाजानिकवन्मतम् ॥ १२६ ॥**

**त्र्यस्रेऽन्त इत्यादि** । द्विकलेन त्र्यस्रतालेन द्विकलचाचपुटेन स्थितं भवेत् । तत्र त्र्यस्रेऽयुग्मे यथाक्षरोत्तरेण प्रवृत्तं कीर्तितम् । त्र्यस्रेण महाजाजिकं त्र्यस्रेण द्विकलचाचपुटेन । **महाजानिकवदिति** । युग्ममहाजानिकवत्पूर्वार्धस्थपदावृत्त्या कर्तव्यमित्यर्थः ॥ १२६ ॥

**मिश्रान्तः षड्विधः प्रोक्तो युग्मायुग्माङ्गमिश्रणात् ।**
**एककं विविधो वा स्यादनुक्ताङ्गस्थितादिषु ॥ १२७ ॥**

---

१ ख. ग. युग्मेन । २ ग. द्विविधो । ख. घ. विवधो ।

**मिश्रान्त इत्यादि । युग्मायुग्माङ्गमिश्रणादिति ।** युग्माङ्गस्यायुग्मा-ङ्गस्य च मिश्रीकरणात्षड्विधो भवतीत्यर्थः । **अनुक्ताङ्गस्थितादिष्विति ।** अनुक्तानि विविधाद्यङ्गानि येषां तान्यनुक्ताङ्गानि । तानि स्थितादीनि स्थितप्र-वृत्तमहाजनिकानि तेषु । एककं वा विविधो वा यथाकामं भवति ॥ १२७ ॥

**विविधाभ्यां चै( वै )ककाभ्यां यद्वा युग्मस्थितं भवेत् ।**
**अयुगन्यतराङ्गं स्यात्प्रवृत्तस्थितवन्मतम् ॥ १२८ ॥**

विविधाभ्यां वैककाभ्यां यदा(द्वा) युग्मस्थितं भवेत् । अयुगन्यतराङ्गं स्या-त्प्रवृत्तं स्थितवन्मतमित्यत्र षडपि मिश्रभेदा द्रष्टव्याः । यद्वा विविधाभ्यां वैक-काभ्यां वोभयाद्वा युग्मस्थितं प्रथमं भवेत् । **प्रवृत्तस्थितवन्मतमिति ।** विवि-धाभ्यामेककाभ्यां वा युग्मप्रवृत्तं भवेदित्यर्थः । **अयुगन्यतराङ्गमिति ।** युक्ता-(ग्मा)ङ्गापेक्षयाऽयुग्मसंबन्धिमहाजनिकादिकमङ्गं भवेदित्यर्थः । प्रथमभेदे युग्म-स्य स्थितप्रवृत्त ओजस्य महाजनिकं कर्तव्यम् । द्वितीये मिश्रभेद ओजस्य स्थितप्रवृत्ते युग्मस्य महाजनिकं च । तृतीये भेदे युग्मस्य स्थितमोजस्य प्रवृत्त-महाजनिके च । चतुर्थभेद ओजस्य स्थितं युग्मस्य प्रवृत्तमहाजनिके च । पञ्चमे भेद(दे)युग्मस्य स्थितमोजस्य प्रवृत्तं युग्मस्य महाजनिकं च । षष्ठे भेद ओजस्य स्थितं युग्मस्य प्रवृत्तमोजस्य महाजनिकं चेति षट्सु भेदेषु लक्षणं यथायोगं योजनीयम् ॥ १२८ ॥

**प्रवृत्ताभ्यां प्रवृत्तेन युगयुग्मं परेऽब्रुवन् ।**
**महाजनिकमन्त्यं(न्तः) स्याद्व्यङ्गमे(ङ्ग ए)काङ्गक(कः) परम् ॥१२९॥**
**व्यङ्गो यदा तदाऽन्तः स्यान्महाजनिकवर्जितः ।**
**स्थितप्रवृत्तहीनोऽयं यदैकाङ्गश्चिकीर्षितः ॥ १३० ॥**

**प्रवृत्ताभ्यां प्रवृत्तेन युगयुग्मं परेऽब्रुवन् । महाजनिकमिति ।** पर आचार्याः । प्रवृत्ताभ्यामिति सहार्थे तृतीया । प्रवृत्ताभ्यां सहितं महाजनिकं प्रवृत्तेन सहितं महाजनिकं च । युगयुग्मं युक्चायुग्मं चेति द्वंद्वः । मिश्रमित्यर्थः। एवं मिश्रमतमब्रुवन् । पुनरन्तस्य द्वैविध्यमाह—**अन्तः स्यादित्यादि । महाज-निकवर्जित इति ।** स्थितप्रवृत्ताभ्यामेव व्यङ्गो भवतीत्यर्थः । **स्थितप्रवृ-त्तहीनोऽयमिति ।** महाजनिकेनैवैकाङ्गो भवतीत्यर्थः ॥ १२९ ॥ १३० ॥

अथैककलाद्युल्लोप्यकभेदानां पातकलायोगं दर्शयति—

**शताशतासामित्येककल उल्लोप्यके कलाः ।**
**द्विकले स्युर्निशानिता शतानिसमिति क्रमात् ॥१३१॥**
**चतुष्कले त्वानिविशास्तत आनिविताः क्रमात् ।**
**भवन्त्याशविता आनिविसं +मात्रा गताः कलाः ॥१३२॥**

+ मात्रा मता इति पाठः ।

**वैहायसे तु *विनिशानिवितानि शताशताः ।**
**संनिपातश्चेति कलाः स्थिते निः पञ्चमो भवेत् ॥ १३३ ॥**

**शताशतासमित्यादिना । स्थिते निः पञ्चमो भवेदिति ।** युग्मे द्विकलयुग्मेनेति युग्मस्थिते द्विकलवच्चत्पुट उक्तः । तस्य च ' निशौ नितासमनिसं द्विकले युग्मके मताः ' इति पातकलायोगः पूर्वमेवोक्तः । तेन पञ्चमस्य गुरोः शम्यायां प्राप्तायां तदपवादत्वेन निष्क्रामोऽनेन विधीयते । पञ्चमादन्ये पूर्वोक्ता एव ॥ १३१ ॥ १३२ ॥ १३३ ॥

**शताशतासंनिपाताः प्रवृत्ते त्रिकलादनु ।**
**त्र्यस्र(स्रे)स्थिते चतुर्थः प्र इत्युल्लोप्ये कलाविधिः ॥१३४॥**

**त्रिकलादन्विति ।** प्रवृत्ते ' उद्वदृस्तु कलात्रये । आद्ये ' इत्युक्तत्वात्तदनन्तरे कलापञ्चके शताशतासंनिपाताः कर्तव्या भवन्ति । **त्र्यस्रे स्थिते चतुर्थः प्र इति ।** त्र्यस्रे चाचपुटे निशौ ताशौ निसमिति ज्ञेयाश्चाचपुटे क्रमादित्युक्तत्वाच्चतुर्थे शम्यायां मात्रायां तदपवादत्वेन प्रवेशोऽनेन विधीयते । चतुर्थादन्ये पूर्वोक्ता एव ॥ १३४ ॥

**वैहायसादिनिर्मुक्तमथवा स्याच्चतुष्कलम् ॥ १३५ ॥**

**वैहायसादिनिर्मुक्तमित्यादि ।** अथवेति पक्षान्तरप्रदर्शनं चतुष्कलमुल्लोप्य[म्] । वैहायसादिनिर्मुक्तम् । आदिशब्देनान्ताहरण(णान्त)योर्ग्रहणम् । वैहायसान्ताहरणान्तैर्वर्जितं भवतीत्यर्थः ॥ १३५ ॥

**अन्तान्तमन्ताहरणप्रान्तं वैहायसान्तिमम् ।**
**मात्रामात्रमिति प्रोक्तं तच्चतुर्धा पुरातनैः ॥ १३६ ॥**

**अन्तान्तमित्यादि ।** तच्चोल्लोप्यमन्तान्तं कदाचिन्मात्रायाः समनन्तरं वैहायसे तदनन्तरमन्ताहरणे तदनन्तरमन्ते च प्रयुक्ते सत्यन्तान्तमुल्लोप्यं भवति । **अन्ताहरणप्रान्तमिति ।** कदाचिन्मात्रावैहायसान्ताहरणेषु पूर्ववत्प्रयुक्तेष्वन्ताहरणान्तमुल्लोप्यं भवति । **वैहायसान्तिममिति ।** कदाचिन्मात्रावैहायसो(सयो)रेव प्रयुक्तयोर्वैहायसान्तिममुल्लोप्यं भवति । **मात्रामात्रमिति ।** कदाचिन्मात्रायामेव प्रयुक्तायां मात्रामात्रमुल्लोप्यं भवति । वैहायसादिनिर्मुक्तमित्यर्थः । इति पुरातनैराचार्यैश्चतुर्धोक्तम् ॥ १३६ ॥

**प्रस्तारः—** ऽ ऽ । । ऽ / शता शता सं इत्येककलोल्लोप्यकमात्रा । ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ / निश निता शता निसं । इति द्विकलमात्रा । ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ / आनि विश आनि विता आशाविता आने निसं । इति चतुष्कलमात्रा । इति मात्रामात्रमुल्लोप्यकम् ।

---

* निविशेति पाठः ।

अस्य प्रस्तारो यथा–गरुद्वयं लघुद्वयं गुरुं च लिखित्वा तदधः शताशता-साल्लिँखेत् । इत्येककल्लोल्लोप्यमात्रा । ततः सविच्छेदं गुरुचतुष्टयद्वयं लिखित्वा तदधो निशनितान्, शतानिसांश्च लिखेत् । इति द्विकल्लोल्लोप्यकमात्रा । सविच्छेदं गुरुचतुष्कचतुष्टयं लिखित्वा तदधस्ताद्आनिविशान्, आनिवितान्, आशवितान्, आनिविसांश्च क्रमेण लिखेत् । इति चतुष्कल्लोल्लोप्यकमात्रा । इति मात्रामात्रमुल्लोप्यकम् ।

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनि विश आनि विता आश विता आनि विसं । वैहायसा[न्तं] चतुष्कलमुल्लोप्यकम् ।

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनि विश, आनि विता, आनि विता, आनि

ऽ ऽ
विसं। चतुर्मात्रामात्रप्रयोगशून्यचतुष्कला।

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनि विश, आनि विता, आश

ऽ ऽ ऽ ऽ ऽ ऽ
विता, आनि विसं। चतुष्कलान्तमुल्लोप्यकम् ।

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
नि वि श, नि वि ता, विश-

ऽ ऽ ऽ ऽ
ता, शतासं। मात्रा।

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविश, आनिविता, आनिविता, आनिविसं।

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निविश, निविता, निशता, शतासं। इत्युल्लोप्यककलाप्रयोगः । शून्यकलाचतुष्कलानन्तरवैहायसरूपम् । चतुष्कला मात्रा ।

ऽ ऽ ऽ ऽ
आनिविश,

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविता, आशविता, आनिविसं। शाखा ॥

ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निविश, निविता, नि-

ऽ ऽ ऽ ऽ ऽ
शता शतासं। एवमेव पदान्तरानिर्मिता प्रतिशाखा। ततः संहरणाख्यमन्ताहरणम् ॥

इत्यन्ताहरणान्तमुल्लोप्यकम्।

अथवा मात्रानन्तरं वैहायसे सविच्छेदं गुरुत्रयचतुष्कं लिखित्वा तदधो निविशान्, निवितान्, निशतान्, शतासांश्च लिखेत्। अथवा कलाप्रयोगशून्यकलाचतुष्ककालानन्तरं वैहायसं कुर्यात्। इति वैहायसान्तमुल्लोप्यम् । अथवा वैहायसानन्तरं यथाक्षरोत्तरेणान्ताहरणं लिखेत्। इत्यन्ताहरणान्तमुल्लोप्यम् ।

अथ युग्मस्यान्तस्यायुग्मस्य च त्रयो भेदाः–स्थितं प्रवृत्तं महाजनिकं चेति ।

तत्र युग्मस्थितान्तमुल्लोप्यकं यथा–

ऽ । ऽ ऽ । ऽ
संता शता शता । इदमेव वैहाय-

सम् । चतुष्कलमात्रा । ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविश, आनिविता, आशाविता, आनिविसं ।

वैहायसम् । ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निविश, निविता, निशता, शतासं । युग्मप्रवृत्तम् । ऽ ऽ ऽ ऽ
निश शता

ऽ ऽ ऽ ऽ
ताश तासं । युग्मास्थितम् । ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निश, निता, निप्र, निसं । अथ युग्मप्रवृ-
त्तान्तं महाजन(निक)स्थितान्तमुल्लोप्यकं यथा—युग्मप्रवृत्तान्तमुल्लोप्यकं

यथा—चतुष्कलमात्रा । ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविश, आनिविता, आशविता, आनिविसं ।

वहायसम् । ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निविश निविता निशता शतासं । युग्मस्थितमयुग्मस्थितान्तमु-

ल्लोप्यकम् । ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निश, निता, शप्र, निसं । अथायुग्मप्रवृत्तकम् । चतुष्कलमात्रा ।

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविश आनिविता आशविता आनिविसं । वैहायसम् । ऽ ऽ ऽ ऽ ऽ
निविश, निवि-
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ । ऽ ऽ । ऽ
ता, निशता, शतासं । संता शता शता । इति युग्मप्रवृत्तम् । अथायुग्मप्र-
वृत्तान्तमुल्लोप्यम् । चतुष्कलमात्रा यथा— ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनिविश, आनिविता,

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आशविता, आनिविसं । इति चतुष्कला मात्रा । वैहायसम् । ऽ ऽ ऽ
निविश
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निविता निशता शतासं । स्थितप्रवृत्तयुग्ममहाजनिकम् । ऽ ऽ ऽ ऽ
निश, निता
ऽ ऽ ऽ ऽ
शप्र निसं । अथ मिश्रान्तस्य षड् भेदाः । तत्र युग्मस्थितप्रवृत्तायुग्मम-
हाजनिकमिश्रान्तान्तमुल्लोप्यकं यथा—चतुष्कला मात्रा । ऽ ऽ ऽ ऽ
आनि विश
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनि विता, आश विता आनि विसं, निविश निविता निशता
ऽ ऽ ऽ
शतासं । इति वैहायसम् । युग्मस्थितप्रवृत्ते युग्मस्य महाजनिकम् ।

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निश निता शप्र निसं निश ताश निसं । अथ युग्मास्थितप्रवृत्ते युग्म-

महाजनिकमिश्रान्तान्तमुल्लोप्यकं यथा— ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निशता शानिसं । निशनि

ऽ ऽ ऽ ऽ ऽ
ताश प्रनिसं। इत्ययुग्मास्थितप्रवृत्ते युग्मस्य महाजनिकम् । अथायु-
ग्मस्थितायुग्मप्रवृत्तमहाजानिकामिश्रान्तमुल्लोप्यकं यथा-चतुष्कलमात्रा।

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनि विश आनि विता आश विता आनि विसं। वैहायसम् ।

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ । ऽ ऽ
निविश निविता निशता शतासं, निश निता शप्र निसं। संता शता

। ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
शता। निशता प्रनिसं। युग्मस्य स्थितमयुग्मस्य प्रवृत्तमहाजानिक-
मिति। युग्मप्रवृत्तकं यथा-महाजानिकमिश्रान्तान्तमुल्लोप्यकं यथा-

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
चतुष्कलमात्रा। आनि विश आनि विता आश विता आनि विसं।

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
वैहायसम्। निविश निविता निशता शतासं। निशता प्रनिसं। निश

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
शता शता शसं। निश निता शप्र निसं। इत्ययुग्मास्थितयुग्मस्य प्र-
वृत्तमहाजनिके।

अथ युग्मस्थितायुग्मप्रवृत्तयुग्ममहाजनिकमिश्रान्तान्तमुल्लोप्यकं यथा-

ऽऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
निश निता शप्र निसं। आनि विश आनि विता आश विता आनि

ऽ ऽ ऽ । ऽ ऽ । ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
विसं। संता शता शता। निश निता शप्र निसं। इति युग्मस्य
स्थितमयुग्मप्रवृत्तं महाजनिकम्। अथायुग्मास्थितं युग्मप्रवृत्तायुग्म-
महाजनिकमिश्रान्तमुल्लोप्यकं यथा- ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनि विश आनि विता, आश

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
विता आनि विसं। चतुष्कलमात्रा। निविश निविता निशता शतासं।

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
वैहायसम्। निश निता शप्रनिसं। निश निता शप्रनिसं। निशता

ऽ ऽ ऽ
शनिसं। इति युग्मस्थितमयुग्मस्य प्रवृत्ताभ्यामेकाङ्गो महाजनिकेन।

एते षण्मिश्रभेदाः। द्व्यङ्गो वा मिश्रः स्थितप्रवृत्ताभ्यामेकाङ्गो वा महाजनिकेन।

इत्यन्तान्तमुल्लोप्यकम्।

अथवा ततो युगयुङ्मिश्र इति त्रिविधोऽन्तः कर्तव्यः। तस्य प्रत्येकं स्थितप्रवृत्तमहाजनिकाख्यानि त्रीण्यङ्गानि कर्तव्यानि। तत्र युग्मस्थितं यथा—सविच्छेदं गुरुचतुष्कद्वयं लिखित्वा तदधो निशनिताञ्चिपनिसांश्च लिखेत्। युग्मप्रवृत्तं यथा—पूर्ववद्गुर्वष्टकं लिखित्वा तदधो निशशतातशतासाल्लिँखेत्। ततो युग्ममहाजनिकं युग्मस्थितवल्लिखेत्। अयुग्मस्थितं यथा—षड्गुरूल्लिँखित्वा तदधो निशता पनिसाल्लिँखेत्। अयुग्मप्रवृत्तं यथाक्षरेणोत्तरेण लिखेत्। अयुग्ममहाजनिकमयुग्मस्थितवल्लिखेत्। षड्विधो मिश्रान्तो यथा—तत्र युग्मस्थितप्रवृत्तेऽयुग्ममहाजानिकं च पूर्वोक्तप्रकारेण लिखेत्। इत्येको मिश्रः। अयुग्मस्य स्थितप्रवृत्ते युग्मस्य महाजनिकं च लिखेत्। इति द्वितीयो मिश्रः। युग्मस्य स्थितेऽयुग्मस्यं प्रवृत्तमहाजनिके च लिखेत्। इति तृतीयो मिश्रः। अथायुग्मस्य स्थिति(तं)युग्मस्य प्रवृत्तमहाजनिके च लिखेत्। इति चतुर्थो मिश्रः। युग्मस्य स्थितमयुग्मस्य प्रवृत्तं युग्मस्य महाजनिकं च लिखेत्। इति पञ्चमो मिश्रः। अयुग्मस्य स्थितं युग्मस्य प्रवृत्तमयुग्मस्य महाजनिकं च लिखेत्। इति षष्ठो मिश्रः। **इति मिश्रान्तस्य षड् भेदाः।** व्यङ्गे वा स्थितप्रवृत्ताभ्यामेकाङ्गे महाजनिके द्रष्टव्यः।

**इत्यन्तान्तमुल्लोप्यकम्।**

अथ प्रथमं तावत्प्रकर्यादीनां चतुर्णां सामान्यलक्षणमाह—

**चतुष्कलानि चत्वारि प्रकर्यादीन्युदाहरन् ॥ १३६ ॥**

**चतुष्कलानीत्यादि।** प्रकर्यादीनि चत्वारीति। प्रकर्योवेणकरोविन्दकोत्तराणीत्यर्थः। चतुष्कलानि चतुष्कलान्येव। एककलद्विकलाख्यभेदद्वयरहितानीत्यर्थः। उदाहरन्। आचार्या इति शेषः॥ १३६ ॥

तत्र प्रकरीं लक्षयति—

**प्रकरी स्याच्चतुर्वस्तुर्यद्वा सार्धत्रिवस्तुका।**
**तत्रार्धमन्त्यमादौ स्याद्वस्तु षण्मात्रामिष्यते ॥ १३७ ॥**

**प्रकरी स्यादित्यादिना।** तत्रार्धमिति। तत्र सार्धत्रिवस्तुकायां प्रकर्यामन्त्यमर्धं न्यायतो वस्तुत्रयानन्तरप्राप्तत्वेनान्त्यवस्त्वर्धम्। आदौ स्यादित्यनेन वचनेन वस्तुत्रयस्याऽऽदौ कर्तव्यं स्यात्। प्रथमं वस्त्वर्धं गीत्वा पश्चाद्वस्तुत्रयं गायेदित्यर्थः॥ १३७ ॥

**सार्धत्रिवस्तुपक्षे तु भवेदर्धमुपोहनम्।**
**पक्षान्तरे वस्तुमात्रं न वा स्यात्प्रत्युपोहनम् ॥ १३८ ॥**

**सार्धत्रिवस्तुपक्षे तु भवेदर्धमुपोहनमिति।** वस्त्वर्धस्याऽऽदौ प्रयोगे प्रयोजनं दर्शितं भवति। **पक्षान्तर इति।** चतुर्थव(तुर्व)स्तुपक्ष इत्यर्थः। वस्तुमात्रमुपोहनं भवेत्। प्रत्युपोहनं न वा स्यादिति तस्यात्र वैकल्पिकत्वं दर्शितम्॥ १३८॥

**कनिष्ठासारितं प्रोक्तमत्र संहरणं बुधैः।**
**वृत्तं च त्रिविदारीकमस्मिन्संहरणे मतम् ॥ १३९ ॥**

**कनिष्ठासारितमित्यादि**। अत्र प्रकर्यां कनिष्ठासारितमेव संहरणं प्रोक्तमिति।

"कनिष्ठासारिते युग्मः शम्यादिद्वौवथोत्तरौ।
एते यथाक्षरास्तेषां संनिपातोऽन्तिमोऽधिकः" ॥

इति वक्ष्यमाणलक्षणं यत्कनिष्ठासारितं तदेवात्र प्रयुक्तं संहरणं नामाङ्गमुच्यत इत्यर्थः। **वृत्तं त्वित्यादि**। अस्मिन्संहरणे त्रिविदारीकं वृत्तम्। **मतमिति**। 'वृत्तं तिस्रश्चतस्रो वा पञ्च षड्वा विदारिकाः' इत्युक्तेषु वृत्तभेदेषु त्रिविदारीकमेवात्र कर्तव्यमित्यर्थः ॥ १३९ ॥

**अन्त(न्त्य)स्य त्वान्तिमा मात्रा कैश्चित्संहरणं मता।**
**अन्ते वा सप्तमी मात्रा परैः संहरणं स्मृता।**
**वस्त्वर्धेष्विह गीताङ्गविधिर्मद्रकवद्भवेत् ॥ १४० ॥**

**अन्त्यस्य त्विति**। अन्त्यस्य वस्तुनोऽन्तिमा षष्ठी मात्रा संहरणमिति केषांचिन्मतम्। **अन्ते वेति**। अन्त्यवस्तुनोऽन्ते नाशे। अनन्तरमित्यर्थः। **सप्तमी मात्रेति**। अन्त्यवस्त्ववयवत्वेन मात्रान्तरं परिकल्प्येत्यर्थः। **वस्त्वर्धेष्वित्यादि**। इह प्रकर्यां वस्त्वर्धेषु। गीताङ्गविधिर्मद्रकवद्भवेदिति। पूर्वार्धेषु विविध उत्तरार्धेष्वेककं च कर्तव्यमित्यतिदेशतोऽवगन्तव्यम् ॥ १४० ॥

**द्वितीयमात्रा तालान्ता प्रकर्या वस्तुनो मता।**
**तुर्यायां द्वादशस्तालः पञ्चम्यामष्टमस्तु सः(शः) ॥ १४१ ॥**
**याः षोडश कलाः प्रोक्ता द्विकले मद्रकेऽन्तिमाः।**
**ताः षष्ठ्यामद्वितीयान्त्या मात्राः शम्पान्तिमा मताः।**
**शेषस्थानेष्वानिविप्रान्पादभागेषु निक्षिपेत् ॥ १४२ ॥**

प्रकर्यां वस्तुनः षट्सु मात्रासु पातकलायोगं दर्शयति—**द्वितीयमात्रा तालान्तेत्यारभ्य शेषस्थानेष्वानिविप्रान्पादभागेषु निक्षिपेदित्यन्तेन**। अत्र मात्रा तावत्षोडशकलात्मिका। तत्र द्वितीयमात्रा तालान्ता। तालाख्यपातान्ता। तुर्यायां मात्रायां द्वादशतृ(स्तृ)तीयपादभागान्तो गुरुस्तालः कर्तव्यः। पञ्चम्यां मात्रायामष्टमः। द्वितीयपादभागान्त्यो गुरुः। शः शम्पाख्यः पातः कर्तव्यः। द्विकले मद्रकेऽन्तिमा याः। **षोडश कला इति**। निशनिता, निताविश, शताताश, ताशतासं, इति प्रोक्तास्ताः षष्ठ्यां मात्रायां कर्तव्याः। अद्वितीयान्त्या द्वितीयाषष्ठव्यतिरिक्ता मात्राः प्रथमातृतीयाचतुर्थीपञ्चम्यः शम्पान्तिमा

आसां षोडशो गुरुः शम्याख्यः पातः कर्तव्यः। षोडशस्थान इति। ( शेष-स्थानेष्विति )। उक्तेभ्योऽन्येषु पादभागेष्वानिविप्रान्कुर्यात् ॥ १४१॥१४२॥

उपोहने कलापातान्यषेधन्दन्तिलादयः ॥ १४३ ॥

उपोहन इत्यादि। दन्तिलादयः। उपोहने कलापातान्यषेधान्निति। अत्र केचित्पक्षे ध्रुवपातमाहुरिति गम्यते। ध्रुवपातमपातं वेति मङ्कोकन्यायस्य संचारात् ॥ १४३ ॥

षष्ठी[1] वा सप्तमी मात्रा यदा संहरणं तदा।
कनिष्ठासारितकला विनाऽन्त्यां परिकीर्तिता ॥ १४४ ॥

षष्ठी वेत्यादि। अन्त्यां विनेति। 'संनिपातोऽन्तिमोऽधिकः' इति कनिष्ठासारिते संनिपातात्मिकाऽन्त्या कला वक्ष्यते तां विहायेत्यर्थः ॥१४४॥

प्रस्तारः—

ऽ ऽ ऽऽ ऽ ऽ ऽऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनि विप्र, आनि विप्र, आनि विप्र, आनि विश। | मात्रा १

ऽ ऽ ऽऽऽ ऽ ऽ ऽ ऽ ऽ ऽऽऽऽ ऽ ऽ ऽऽ
आनि विप्र, आनि विप्र, आनि विप्र, आनि विश(ता)। | मात्रा २

ऽ ऽ ऽऽ ऽ ऽ ऽऽ ऽ ऽ ऽऽ ऽ ऽ ऽऽ
आनि विप्र, आनि विप्र, आनि विप्र, आनि विश। | मात्रा ३

ऽ ऽ ऽऽऽऽ ऽ ऽऽ ऽ ऽ ऽऽऽऽ ऽ ऽ ऽ
आनि विप्र, आनि विप्र, आनि विप्र(ता) आनि विश। | मात्रा ४

ऽ ऽऽऽऽ ऽ ऽ ऽऽ ऽ ऽ ऽऽ ऽऽ ऽऽ
आनि विप्र, आनि विता(श), आनि विप्र, आनि विश। | मात्रा ५

ऽऽ ऽऽ ऽऽऽऽ ऽऽ ऽऽ ऽऽऽऽ
निश निता, निता निता, शता ताश, ताश तासं। | मात्रा ६

इति षण्मात्रात्मकं वस्तु।

अस्याः प्रकर्याः प्रस्तारो यथा—वस्तुनः प्रथममात्रायां षोडश गुरून्सचतुष्कल-पादविभागं[2] लिखित्वा तत्राऽऽद्येषु पादभागेषु प्रत्येकमानिविप्राल्लिँखेत्। चतुर्थे त्वानिविशाल्लिँखेत्। इति प्रथममात्रा। द्वितीयामपि मात्रामेवमेव लिखेत्। किंतु षोडशस्य गुरोरधस्तालं लिखेत्। इति द्वितीयमात्रा। तृतीयामपि मात्रां प्रथमा-वल्लिखेत्। इति तृतीया। चतुर्थ्यां मात्रायां पूर्ववत्षोडश गुरूल्लिँखित्वा तत्राऽऽ-द्ययोः पादभागयोः प्रत्येकमानिविप्रांस्तृतीये पादभागं आनिविताँश्चतुर्थे पादभाग अनिविशाल्लिँखेत्। इति चतुर्थी मात्रा। पञ्चम्यां मात्रायां प्रथमतृतीययोः पादभागयोः प्रत्येकमानिविप्रान्द्वितीयचतुर्थयोः प्रत्येकमा-

१ ख. ग. घ. °ष्ठी च स°। २ ख. ग. °दभागवि°।

निविशाल्लिखेत् । इति पञ्चमी मात्रा । षष्ठ्यां मात्रायां षोडशानां गुरूणामधो निशनिता, नितानिश, शताताश, ताशताशनित्येतान्पादभागविभागाल्लिखेत् । इति षष्ठी मात्रा ।

इति षण्मात्रमेकं वस्तु ।

**एवं चत्वारि वस्तूनि त्रीणि सार्धानि वा गीत्वा कनिष्ठासारितात्मकं संहरणं कार्यम् । यथा—अथवाऽन्त्यसंनिपातवर्जिताभिः कनिष्ठासारितस्य कलाभिरन्वितान्त्यवस्तुनः षष्ठी मात्रा संहरणं कार्यम् । अथैवमात्मिका सप्तमी मात्रा सहरणं कार्यम् ।**

यथा— ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
शता शता संता शता । संता शता शता । संता शता शता ।

इति प्रकरी ।

एवं चत्वारि वस्तूनि त्रीणि वा सार्धानि गीत्वा ततः कनिष्ठासारितात्मकं संहरणं कार्यम् । अस्य प्रस्तारो यथा—आदौ यथाक्षरं चच्चत्पुटं प्रस्तार्य "आसारितादौ शम्यादिः" इति नियमस्य व्यवस्थितत्वात्तदधः शताशताल्लिखेत् । ततो यथाक्षरौ षट्पितापुत्रकौ प्रस्तार्य तयोरधः प्रत्येकं संताशताशताल्लिखेत् । संनिपातोऽन्तिमोऽधिक इत्युक्तत्वात् । अन्तिममधिकं लिखित्वा तदधः संनिपातं लिखे- ×
त् । अथवाऽधिकान्तसंनिपातवर्जिताभिः कनिष्ठासारितस्य कलाभिरन्विताऽन्त्यवस्तुनः षष्ठी मात्रा संहरणं कार्या । अथैवमात्मिका सप्तमी मात्रा संहरणं कार्या । यथा पूर्वोक्तपातकलायुक्तां षष्ठीं मात्रां तादृशीं सप्तमीं मात्रां लिखेत् ।

इति प्रकरी ।

अनन्तरमोवेणकं लक्षयति—

**ओवेणकं द्वादशाङ्गं सप्ताङ्गं च परावरम् ।**
**स्यात्पादः प्रतिपादश्च माषघातोपवर्तनम् ।**
**संधिश्च चतुरस्रं स्याद्वज्रं संपिष्टकं ततः ॥ १४५ ॥**
**वेणी तथा प्रवेणी स्यादुपपातस्ततः परम्¹ ।**
**अन्ताहरणमित्येतान्यङ्गानि द्वादशावदन् ।**
**संपिष्टकं तथा वेणीं प्रवेणीमुपवर्तनम् ॥ १४६ ॥**

**ओवेणकं द्वादशाङ्गमित्यादि ।** अङ्गानि तु पादः प्रतिपादो माषघात उपवर्तनं संधिश्चतुरस्रं वज्रं संपिष्टकं वेणी प्रवेण्युपपातोऽन्ताहरणमित्येतानि द्वादशाङ्गानि स्यात्पाद इत्यादिना परिगणितानि ॥ १४५ ॥ १४६ ॥

×मूलेऽधिकपदं नास्ति ।

१ च. परः ।

उपपातं विनाऽन्यानि सतोपाङ्गानि मेनिरे ॥ १४७ ॥

सप्ता(तोपा)ङ्गानीति। सप्ताङ्ग आणिके संपिष्टकादिभ्योऽन्यानि पादप्रतिपादमाषघात विचतुरस्रवज्रान्ताहरणाख्यानि सप्ताङ्गानि मेनिरे ॥ १४७ ॥

पादादीनां लक्षणमाह—

यादृक्चतुष्कले वस्तु प्रागुक्तमपरान्तके।
तादृक्पादस्ततस्तद्वत्प्रतिपादः पदान्तरैः।
समं पादपरार्धेन प्रतिपादं परे जगुः ॥ १४८ ॥

यादृगित्यादि। चतुष्कलेऽपरान्तके यादृग्वस्तु प्रागुक्तं चतुर्विंशतिगुर्वात्मकं तादृगेवात्र पाद इत्युच्यते। ततोऽनन्तरं तद्वच्चतुर्विंशतिगुर्वात्मक इत्यर्थः। पदान्तरैः पादप्रयुक्तपदेभ्योऽन्यैः पदैः कर्तव्यः। एतेन पादप्रतिपादयोर्धातुसाम्यं गम्यते। **पादपरार्धेनेति**। पादस्योत्तरार्धेन द्वादशगुर्वात्मकेन समम्। **प्रतिपादं परे जगुरिति**। अत्रापि पादोत्तरार्धधातुसाम्यं प्रतिपादस्यावगन्तव्यम् ॥ १४८ ॥

यथाक्षरोत्तरे शीर्षं केचिदाहुरतः परम्।
शीर्षात्परो माषघातो द्विकलोत्तरतालतः ॥ १४९ ॥

अतः प्रतिपादात्परमनन्तरं यथाक्षरोत्तरेण शीर्षकं केचिदाहुः। ततो माषघातो द्विकलोत्तरतालतः ॥ १४९ ॥

अपरान्तकवत्तस्मात्परं स्यादुपवर्तनम्।
ऊर्ध्वं संपिष्टकाद्वा स्यादुभाभ्यामथवा परम् ॥ १५० ॥

**अपरान्तकवदिति**। द्विकलापरान्तकवदित्यर्थः। तस्मान्माषघातात्परमुपवर्तनं स्यात्। उपवर्तनं संपिष्टकादूर्ध्वं वा स्यात्। अथवोभाभ्यां माषघातसंपिष्टकाभ्यां परं स्यात्। माषघातानन्तरं संपिष्टकानन्तरं वोपवर्तनं गेयमिति पक्षान्तरम् ॥ १५० ॥

तद्वदेव ततः संधिस्ततोऽपि चतुरस्रकम्।
युग्मप्रवृत्तवत्तस्माद्वज्रं संधिवदिष्यते ॥ १५१ ॥

**तद्वदेवेति**। तत उपवर्तनादनन्तरं संधिर्नामाङ्गम्। तद्वदुपवर्तनवदित्यर्थः। उपवर्तनं यथाक्षरोत्तरेण कृतं संधिरपि तेनैव कर्तव्यः। **ततोऽपीति**। संधेरप्यनन्तरं चतुरस्रकं नामाङ्गम्। **युग्मप्रवृत्तवदिति**। द्विकलचच्चत्पुटेनोद्वट्टोक्तकलापूर्वकपातकलायुक्तेन कर्तव्यमित्यर्थः। **तस्मादिति**। चतुरस्रात्। वज्रं नामाङ्गम्। **संधिवदिति**। यथाक्षरोत्तरेण कर्तव्यमित्यर्थः ॥ १५१ ॥

संपिष्टकं ततः कार्यं दश द्वादश वा कलाः।
द्वादशाङ्गे दशकलं सप्ताङ्गे त्वितरन्मतम् ॥ १५२ ॥

---

१ ख. ग. च. °लकः ॥ १४९ ॥

ततो वज्रानन्तरं संपिष्टकं नामाङ्गं कार्यम्। दश द्वादश वा कला इति संपिष्टकस्य वैकल्पिकः कलासंख्यानियमो दर्शितः। द्वादशाङ्गे दशकलं सप्ताङ्गे त्वितरन्मतमिति तयोः संपिष्टकभेदयोर्विषयव्यवस्था दर्शिता ॥ १५२ ॥

सप्ताङ्गद्वादशाङ्गत्वे वर्णाङ्गैः केचिदूचिरे।
चतुर्थी पञ्चमी चेह त्याज्ये दशकले कले ॥ १५३ ॥

सप्ताङ्गद्वादशाङ्गत्वे वर्णाङ्गैः केचिदूचिर इति। चतुर्थीत्यादि। दशकल इह संपिष्टके द्वादशकलसंपिष्टकोक्तासु कलासु चतुर्थी शम्या पञ्चमी तालश्चैते कले त्याज्ये भवतः। द्वादशकले संपिष्टके वक्ष्यमाणा इतरा दश कलाः प्रयोक्तव्या इत्यर्थः ॥ १५३ ॥

भवेद्वेण्यां प्रवेण्यां च पञ्चपाणिर्यथाक्षरः।
द्विकलो वाऽथवा चच्चत्पुटादूर्ध्वं यथाक्षरात् ॥ १५४ ॥
चच्चत्पुट स्याद्द्विकलो यद्वा वेणी यथाक्षरे।
पञ्चपाणौ प्रवेणी तु द्विकले मुनिभिर्मता।
प्रवेण्यनन्तरं कैश्चिदुपवर्तनमिष्यते ॥ १५५ ॥

वेणीप्रवेण्योरङ्गयोर्यथाक्षरः पञ्चपाणिरित्येकः पक्षः। द्विकलो वा पञ्चपाणिरिति द्वितीयः। अथवा यथाक्षराच्चच्चत्पुटादूर्ध्वं द्विक[ल]चच्चत्पुट इति द्वि(तृ)तीयः। यद्वा यथाक्षरे पञ्चपाणौ वेणी द्विकले पञ्चपाणौ प्रवेणीति चतुर्थः पक्षः। प्रवेण्यनन्तरमुपवर्तनं कर्तव्यमिति केषांचिन्मतम् ॥ १५४ ॥ १५५ ॥

पादोत्तरार्धतालेन द्विकलेनोत्तरेण वा।
उपपातस्ततोऽन्तेन विनाऽन्ताहरणं न वा।
सत्यन्तेऽस्त्येव स द्वेधा सप्ताङ्गेऽन्यत्र तु त्रिधा ॥ १५६ ॥

पादोत्तरार्धतालेनेति। आनिविनादिकलायुक्तेन द्वादशगुर्वात्मकेन द्विकलोत्तरेण वोपपातः कर्तव्यः। उपपातानन्तरमन्तेन विनाऽन्ताहरणं कर्तव्यमित्येकः पक्षः। न वेति तन्निषेधाद्द्वितीयः पक्षः। निषेधोऽप्यन्तेन विनेत्येतस्यांशस्यावगन्तव्यः। विशेषणनिषेधेनापि विशिष्टनिषेधस्य सिद्धत्वात्। तेनान्तसहितमन्ताहरणं पक्षे कर्तव्यमिति गम्यते। सत्यन्त इत्यादि। अन्ते सतीति। अन्तव(स)द्भावपक्ष इत्यर्थः। सोऽन्तः सप्ताङ्ग ओवेणके द्विधा युग्मोऽयुग्मश्च भवेत्। अन्यत्र तु द्वादशाङ्गः। ओवेणके तु त्रिधा युग्मोऽयुग्मो मिश्रश्चेति भवेत् ॥ १५६ ॥

लक्ष्मान्ताहरणादीनां ज्ञेयमुल्लोप्यकादिह।
विधेयो विव(वि)धो वेण्यां प्रवृत्तं वा मतान्तरात्।
प्रवेण्यां तु प्रवृत्तं स्यादवगाढं परे जगुः ॥ १५७ ॥

---

१ ख. ग. घ. °ङ्गत्वं व°।

पादोपपातसंपिष्टेऽप्यभ्यधुर्विव(वि)धं बुधाः ।
विव(वि)धो वैककं वज्र एककं तूपवर्तने ॥ १५८ ॥

अन्ताहरणादीनामिति । आदिशब्देन युग्मादयोऽन्तर्भेदा गृह्यन्ते । वेण्यादिषु विविधादीनि गीताङ्गानि यथायोगं योजयति—**विधेयो विविध इत्यादिना** ॥ १५७ ॥ १५८ ॥

विव(वि)धश्चतुरस्रे स्यादेककं वाऽथवैककम् ।
कलाप्रयोगनिर्मुक्तं संप्रयुज्यावपाणिना ।
कलास्वष्टासु विविधो विधेयो गानवेदिभिः ॥ १५९ ॥

चतुरस्रो विविध एककं चेत्येकः पक्षः । अथवा कलाप्रयोगनिर्मुक्तं युग्मं-(ग्म)प्रवृत्तोक्तनिष्क्रामादिकलायोगरहितमेककमवपाणिनाऽतीवग्रहेणेत्यर्थः । एवं प्रयुज्य पश्चादष्टासु कलासु निष्क्रामादिषु विविधो विधेयः ॥ १५९ ॥

क्वचित्पातकलाविशेषयोगं दर्शयति—

शनिता माषघाते स्युर्द्वितीयाद्यास्त्रयः क्रमात् ।
संपिष्टके निशम्पास्त्रिस्त्रितालो द्विः शतौ च सम् ॥ १६० ॥

**शनिता माषघाते स्युरित्यादिना** । माषघाते तावद्द्विकलोत्तरताल उक्तः । तस्य निप्रताशनितानिश ताप्रनिसं तथोत्तर इति पातकलायोगोऽपि पूर्वमेवोक्तः । तदेकदेशापवादत्वेन शनिता इत्येक(ति)वचनं द्रष्टव्यम् । **द्वितीयाद्यास्त्रय इति** । द्वितीयतृतीयचतुर्थाः पूर्वं प्रताशा उक्ताः इह निशताः(शनिताः ?) कर्तव्या इति । संपिष्टके द्वादशकल(ला)पक्षे कलायोगं दर्शयति—**संपिष्टक इति** । निशम्पास्त्रिस्त्रितालो द्विः शतौ च समिति ॥ १६० ॥

अन्तो गीतिपदावृत्तियुक्तः सप्ताङ्गके मतः ।
ओवेणके द्वादशाङ्गे तुल्यगीतिः पृथक्पदः ॥ १६१ ॥

**अन्तो गीतीत्यादि** । गीतिपदावृत्तियुक्त इति । गीतिर्गेयं धातुरित्यर्थः । पदं वाचकं शब्दरूपं मातुरित्यर्थः । तयोर्गीतिपदयोरावृत्त्या युक्तोऽन्तः सप्ताङ्गके प्रयोक्तव्यः । **द्वादशाङ्गे तुल्यगीतिः पृथक्पद इति** । अत्र मातोरेव पृथग्भावो न धातोरित्यर्थः ॥ १६१ ॥

अस्य प्रस्तारः—
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आनि विप्र, आनि विप्र, आनि विश, आनि विता ।
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
आता विश, आनि विश इति पादः । एवमेव प्रतिपादः । पादोत्तरार्धं

वा प्रतिपादो यथा—*गीतिः पृथक्पदः । ऽऽ ऽऽ ऽऽ ऽऽ
तानि विसं आनि विश

ऽऽ ऽऽ
आता विश ॥ इति प्रतिपादः । ऽ। ऽऽ ।ऽ
संता शता शता ॥ शीर्षकम् । ऽऽ
निप्र

ऽऽ ऽऽऽऽ ऽऽ ऽऽ
ताश निता ताश ताप्र निसं ॥ माषघातः॥ ऽऽऽऽ ।ऽ
संता शता शता। इत्युपवर्तनम्॥

ऽ। ऽऽ ।ऽ
संता शता शता ॥ इति संधिः ॥ ऽऽऽऽ ऽऽऽऽ
निश शश, शता तासं ॥ चतुरस्रः ॥

ऽ। ऽऽ ।ऽ
संता शता शता॥ इति वज्रम् ॥ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ
निश शश, शता ताता, शश तासं ॥

इति समाङ्ग ओवेणके द्वादशकलं संपिष्टकम् ॥ ऽऽ ऽऽ ऽऽ
निश शता, ताश

ऽऽ ऽऽ ऽऽ ऽ। ऽऽ ।ऽ
ताश ताता, शसं ॥ संता शता शता ॥ इति द्वादशकलं संपिष्टकम्॥

ऽऽ ऽऽऽऽ ऽऽ ऽऽऽऽ ऽ। ऽऽ ।ऽ
निश शता ताश ताश ताता शसं ॥ संता शता शता॥ इति द्वादशकलं
संपिष्टकम् । संपिष्टकानन्तरमुपवर्तनं वा ॥

अस्यौवेणकस्य प्रस्तारो यथा—सचतुष्कलपादविभागं चतुर्विंशतिं गुरूल्लिँखित्वा तदध आनिविप्रान्पुनः, आनिविप्रान्, आनिविशान्, आनिवितान्, आताविशान्, आनिविसमित्येतांश्च क्रमेण लिखेत् । इति पादः । तत एवमेव प्रतिपादः । पादोत्तरार्धं वा प्रतिपादः । यथा द्वादश गुरूल्लिँखित्वा तदधः पूर्वोक्तानानिवितादीँल्लिँखेत् । इति प्रतिपादः । ततो यथाक्षरोत्तरेण शीर्षकं लिखेत् । ततो द्वादश गुरून्साद्विकलपादभागं लिखित्वा तदधो निश निता निता निश ताप्र निस मित्येताल्लिँखेत् । इति माषघातः । ततो यथाक्षरोत्तरेणोपवर्तनं लिखेत् । इत्युपवर्तनम् । ततस्तेनैव तालेन संधिं लिखेत् । इति संधिः । ततोऽष्ट गुरूल्लिँखित्वा तदधो निशशशशातासमित्येताल्लिँखेत् । इति चतुरस्रम् । ततो यथाक्षरोत्तरेण वज्रं लिखेत् । इति वज्रम् । ततो द्वादश गुरूल्लिँखित्वा तदधो निशशशशताताशशतासमित्येताल्लिँखेत् । इति संपिष्टकम् ।

ऽ। ऽऽ ।ऽ
संता शता शता । इति वेणी । ऽ। ऽऽ ।ऽ
संता शता शता । इति प्रवेणी ।

---

*गीतिः पृथक्पद इत्यधिकम् ।

ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
निप्र ताश, निता निश, ताप्र निसं । इति वा वेणी । एवमेव प्रवेणी× ।

ततो यथाक्षरोत्तरेण वेणीं तेनैव प्रवेणीं च लिखेत् । अथवा द्विकलोत्तरेण वेणीप्रवेण्यौ लिखेत् । यद्वा यथाक्षरद्विकलाभ्यां चच्चत्पुटाभ्यां वेणीं ताभ्यामेव प्रवेणीं च लिखेत् । यदि वा यथाक्षरोत्तरेण वेणीं द्विकलोत्तरेण प्रवेणीं च लिखेत् । इति वेणीप्रवेण्यौ ।

ततो मतान्तरेण प्रवेण्यनन्तरमुपवर्तनम् । ऽ। ऽऽ ।ऽ संता शता शता । इत्युपवर्तनम् । ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ आनि विता, आनि विश, तानि विसं । इति पादोत्तरार्धतालेनोपपातः । ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽऽ निप्र ताश निता शनि शता प्रनिसं । इति द्विकलेनोत्तरेण वोपपातः । ऽ। ऽऽ ।ऽ संता शता शता । इत्यन्ताहरणम् । ततः पाक्षिकान्तो ज्ञेयः । स च सप्ताङ्गे युग्मोऽयुग्मश्चेति द्विविधः कर्तव्यः । द्वादशाङ्गे तु युग्मोऽयुग्मो मिश्रश्चेति त्रिविधः ।

इत्योवेणकम् ।

ततो मतान्तरेण पूर्वोक्तमुपवर्तनं लिखेत् । इत्युपवर्तनम् । ततः पादोत्तरार्धतालेन द्विकलोत्तरेण वोपपातं लिखेत् । इत्युपपातः । ततो यथाक्षरोत्तरेणान्ताहरणं लिखेत् । ततः पाक्षिकोऽन्तः सप्ताङ्गे युग्मोऽयुग्मश्चेति द्विधा । द्वादशाङ्गे तु मिश्रेण सह पूर्वाभ्यां त्रिधा प्रयोक्तव्यः ।

इत्योवेणकम् ।

अथ रोविन्दकं लक्षयति—

सप्ताङ्गमवरं ज्ञेयं षोडशाङ्गं परं तथा ।
रोविन्दं तस्य षण्मात्रः पादोऽस्याऽऽद्ये कलाष्टके ।
उपोहनं मद्रकस्थवस्तुवच्च तदर्धयोः ॥ १६२ ॥

सप्ताङ्गमित्यादि । अवरं हीनाङ्गत्वेन निकृष्टम् । अतोऽपि हीनाङ्गं षडङ्गादि न कर्तव्यमित्यर्थः । षोडशाङ्गं परं तथेति । षोडशाङ्गं रोविन्दं परमुत्कृष्टमधिकाङ्गत्वात् । ततोऽधिकाङ्गं सप्तदशाङ्गादि कर्तव्यमित्यर्थः । सप्तादिषोडशान्तमङ्गानि यथाकामं कर्तव्यानि भवन्ति । तस्येति । रोविन्दस्य पादः

× टीकानुरोधेनैतदग्रे किंचित्त्रुटितं भाति । तट्टीकानुसारेणावगन्तव्यम् ।

षण्मात्रः । षण्मात्रा यस्येति स तथोक्तः । अत्र मात्राप्रमाणम्—'पादभागैश्चतुर्भिस्तैर्मात्रा स्यान्मद्रकादिषु' इति पूर्वोक्तं षोडशकलात्मकं द्रष्टव्यम् । **अस्येति ।** पादस्याऽऽद्ये कलाष्टक उपोहनं कर्तव्यम् । **तदर्धयोरिति ।** तस्य पादस्य पूर्वोत्तरयोरर्धयोः प्रत्येकं मद्रकस्थवस्तुवत् ॥ १६२ ॥

**विविधैकैकसंयोगः प्रत्येकं पादवत्ततः ।**
**प्रतिपादः पदैरन्यैः पादस्यान्ते कलाष्टके ।**
**प्रतिपादादिमे चैका गीतिः प्रस्तारसंज्ञका ॥ १६३ ॥**

**विविधैकैकसंयोगश्चेति ।** मद्रके यथा प्रथमयोर्मात्रयोर्विविधस्तृतीयमात्रायामेककमेवमत्र पादेऽपि मात्रात्रयात्मकयोरर्धयोः कर्तव्यमित्यर्थः । **पादवत्तत इति ।** ततः पादानन्तरं प्रति[पादः] पादवत् । षण्मात्रात्मकः सन्नन्यैः पदैः पादप्रयुक्तपदेभ्योऽन्यैः पदैः कर्तव्यः । प्रतिपादादिमे चेत्यत्र चकारेण **कलाष्टक** इत्यनुकृष्यते । अयमर्थः । प्रथमं पादान्त्ये कलाष्टके प्रस्तारसंज्ञिता गीतिः कर्तव्या । ततः प्रतिपादादिमे कलाष्टकेऽपि सैव गीतिः कर्तव्येति ॥ १६३ ॥

**शरीरं प्रतिपादान्त्यकलाद्वादशकस्थया ।**
**गीत्या ततः परं[1] गेयमुत्तरे द्विकले बुधैः ॥ १६४ ॥**

**शरीरमित्यादि ।** ततः परं प्रतिपादार्धम् । **प्रतिपादान्त्यकलाद्वादशकस्थयेति ।** प्रतिपादस्यान्ते कलाद्वादशके तिष्ठतीति तथोक्ता । तया गीत्या युक्तं शरीरं नामाङ्गं द्विकल उत्तरे बुधैर्गेयम् । प्रतिपादान्त्यधातुयुक्तं शरीरं गेयमित्यर्थः ॥ १६४ ॥

**प्लुताकारास्त्रिचतुराः स्युः शरीरेऽन्तराऽन्तरा ।**
**तेषु वृत्तं तदूर्ध्वाधः स्वैरमङ्गानि योजयेत् ॥ १६५ ॥**

तस्मिञ्शरीरेऽन्तराऽन्तरा मध्ये [मध्ये] त्रिचतुराः प्लुताकाराः । प्लुताश्च त आकाराश्चेति कर्मधारयः । ते कर्तव्याः स्युः । तथा ज्ञाते(तेष्वाकारे)षु वृत्तं पूर्वोक्तलक्षणं योजयेत् । तदूर्ध्वाधस्तस्य वृत्तस्योर्ध्वमधश्चाङ्गानि विविधादीनि स्वैरं स्वेच्छया योजयेत् ॥ १६५ ॥

**शरीराद्यकलाषट्के प्रयोक्तव्यमुपोहनम् ।**
**विविधो वा प्रवृत्तं वा गीताङ्गं स्यादुपोहनम् ।**
**अथोपवर्तनं केचिदपरान्तकवज्जगुः ॥ १६६ ॥**

शरीरस्याऽऽद्यैककलाषट्क उपोहनं प्रयोक्तव्यम् । तस्मिन्नुपोहने विविधो वा प्रवृत्तं वा पूर्वोक्तलक्षणं गीताङ्गं कर्तव्यं स्यात् ॥ १६६ ॥

---

१ च. °रं ज्ञेय° ।

**शीर्षकं गीतकान्ते स्यात्पञ्चपाणौ यथाक्षरे ।**
**गीतावृत्त्या पदावृत्त्याऽप्युभयावृत्तितोऽथवा ।**
**आवृत्त्या द्विस्त्रिरथवा स्यादावृत्त्या विनाऽथवा ॥१६७॥**

**गीतकान्त इति** । सामान्यवचनस्य गीतकशब्दस्यात्र विशेषपरता द्रष्टव्या । गीतकस्य रोविन्दकस्यान्ते समाप्तौ । यथाक्षरे पञ्चपाणौ शीर्षकं कर्तव्यं स्यात् । तच्च शीर्षकं गीतावृत्त्या वा पदावृत्त्या वोभयावृत्तितो गीतपदावृत्तेरिति त्रिविधं भवेत् । आवृत्तिपक्षेऽपि द्विरावृत्त्या त्रिरावृत्त्या वेति द्विविधम् । अथवाऽऽवृत्त्या विना स्यादित्येकः पक्षः ॥ १६७ ॥

**आकारैः प्रथमावृत्तिः कर्तव्यं तत्र चैककम् ।**
**द्वितीया तु पदैर्युक्ता प्रवृत्तेन प्रकीर्तिता ॥ १६८ ॥**

आकारैः प्रथमावृत्तिरिति गीतावृत्तिरुक्ता । तत्र प्रथमावृत्तौ । एककं चेत्यत्र चकारोऽवधारणार्थः । एककमेवेति । **द्वितीया तु पदैर्युक्तेति**। अत्र पदावृत्ति-रुक्ता । सा पदावृत्तिः प्रवृत्तेन गीताङ्गेन प्रकीर्तिता ॥ १६८ ॥

**त्रिरावृत्तौ मध्यमा स्यात्स्वैरं गीताङ्गसंगता ॥ १६९ ॥**

**त्रिरावृत्ताविति** । तृतीयावृत्तावित्यर्थः । मध्यमेति गीतिपदमिश्रितोभयावृ-त्तिरुक्ता । सा स्वैरं यथेष्टं गीताङ्गसंगता विविधादिगीताङ्गयुक्ता भवति ॥१६९॥

अथ पातकलायोगं दर्शयति—

**पादभागेष्वानिविध्रा विशेषस्तूच्यतेऽधुना ।**
**तालोऽष्टमोऽन्तिमा शम्या तत्र मात्रासु पञ्चसु ॥ १७० ॥**

**पादभागेष्वित्यादि** । सर्वेषु पादभागेष्वानिविध्रा इति सामान्यम् । विशे-षस्त्वधुनोच्यते तालोऽष्टम इत्यादिना । अष्टम(मो) द्वितीयपादभागान्त्यस्तालः क-र्तव्यः । **अन्तिमा शम्पेति** । अन्तिमा चतुर्थपादभागान्त्या शम्पा कर्तव्या । अत्र विधेयतालशम्पापरत्वेन पुंस्त्रीलिङ्गनिर्देशो द्रष्टव्यः । **तत्र मात्रासु पञ्च-स्विति** । आद्यासु पञ्चसु मात्रास्वयमुक्तो विशेषः कर्तव्यः ॥ १७० ॥

पञ्चम्यां विशेषान्तरमाह—

**चतुर्दशस्तु पञ्चम्यां तालोऽन्त्यान्ते च(न्त्येव) मद्रके ।**
**शरीरे प्राक्कलास्तिस्रः केऽप्याहुर्मापघातवत् ॥ १७१ ॥**

**चतुर्दशास्त्विति** । चतुर्दशश्चतुर्थपादभागे द्वितीयस्तालः कर्तव्यः । **अन्त्या-न्ते च(न्त्येव)मद्रक इति**। अन्त्या षष्ठी मात्रा। मद्रके चतुष्कलमद्रकेऽन्त्येव । तत्र वस्तुनस्तृतीया मात्राऽन्त्येत्युच्यते । सा यथा याभिः पातकलाभिर्युक्ता ताभि-रेव युक्ता कर्तव्येत्यतिदेशार्थः। ताः पुनः, आशाविता, आताविश, आताविश,

तानिविसामिति । शरीरे प्रागित्यादि । केऽप्याचार्याः शरीरे द्विकलोत्तरे(र?) युक्ते तिस्रः प्राक्कला आद्याः कलाः । माषघातवदिति । माषघाते यथा नि-र(श?)नय आद्यास्तथाऽत्रापि । शरीरे प्राचीषु च तिसृषु कलासु निष्क्रामशम्पा निष्क्रमादि कुर्यादित्यर्थः ॥ १७१ ॥

प्रस्तारः— ऽऽ ऽऽ ऽऽ ऽऽ आनि विप्र आनि विता । इत्युपोहनम् । ऽऽ ऽऽ ऽऽ ऽऽ आनि विप्र आनि विश । इत्युपोहनेन सह मात्रा ।

ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
आनि विप्र, आनि विता, आनि विप्र, आनि विश | मात्रा१

ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽऽऽ
आनि विप्र, आनि विता, आनि विप्र, आनि विसं(श)। | मात्रा२

ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
आनि विप्र,आनि विता, आनि विप्र,आनि विसं(श)। | मात्रा३

ऽऽऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
आनि विप्र, आनि विता, आनि विप्र, आनि विश। | मात्रा४

ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
आनि विप्र, आनि विता, आनि विप्र, आनि विश। | मात्रा५

ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
×आनि विता, आनि विश, आता विश, तानि विसं। | मात्रा६

इति षण्मात्रः पादः । एवमेव पदान्तरैः प्रतिपादः । ततः शरीरम्।

ऽऽ ऽऽऽऽ ऽऽ ऽ ऽऽऽ
निप्र ताश, निता निश, ता प्रनिसं। शरीरस्याऽऽद्याः षट्[१] कला उ-पोहनम् । ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ निश निश, निता निश, ताप्र निसं । इति माषघाताद्यक-लात्रययुक्तं शरीरम्। ऽ। ऽऽ ।ऽ संता शता शता इत्युपवर्तनम् । ऽ। ऽऽ ।ऽ संता शता शता । इति शीर्षकम् । इति रोविन्दकम् ।

अस्य प्रस्तारो यथा—प्रथममुपोहने पादभागयोरष्टौ गुरूंल्लिखित्वा तदध आ-निविप्रान्, आनिवितांल्लिखेत् । इत्युपोहनम् । ततश्चरमयोः पादभागयोरष्टौ

× अत्र टीकानुरोधेन 'आशाविता, आताविशा, आताविशा, आनिविसं' इत्यपेक्षितम् ।

१ च. षट्चपयुक्तं शरीरम् ।

गुरूंल्लिँखित्वा तदध आनिविमान्, आनिविशाल्लिँखेत् । इत्युपोहनेन सह प्रथममात्रा । तद्वत्प्रत्येकं षोडशकलात्म(त्मि)काः सपादभागविभागाः पातकलायुक्ताः प्रथमया सह पञ्च मात्रा लेखनीयाः । ततः षष्ठी(ष्ठ)मात्रायां पूर्ववत्षोडश गुरूल्लिँखित्वा तदध आशवितान्, आताविशान्, पुनरप्याताविशान्, आनिविंसामित्येताल्लिँखेत् । इति षष्ठी मात्रा । एष मात्रापादः । एवमेव प्रतिपादः । ततो द्विकलोत्तरेण शरीरं लिखेत् । तत्राऽऽद्याः षट् कला उपोहनं कुर्यात् । अथवा द्विकलोत्तरेण द्वादश गुरूंल्लिँखित्वा तदधो निशनिशं नितानिश तापनिसमित्येताल्लिँखेत् । इति माषघाताद्यकलात्रययुक्तं शरीरम् । ततो यथाक्षरोत्तरेण वैकल्पिकमुपवर्तनं लिखेत् । ततस्तेनैव शीर्षकं लिखेत् ।

इति रोविन्दकम् ।

अथोत्तरं लक्षयति–

**चतुष्कलोल्लोप्यकवदादौ मात्रोत्तरे भवेत् ।**
**शाखाऽवरा षडङ्गा स्याद्द्वादशाङ्गा परा ततः ॥ १७२ ॥**
**द्विकले पञ्चपाणौ सा प्रतिशाखा च तत्समा ।**
**किंतु बद्धा पदैरन्यैः शीर्षं मध्ये तयोर्भवेत् × ।**
**मध्ये त(ध्यान्त)योश्च वा भिन्नगीतेनैककलान्तरे ॥ १७३ ॥**

**चतुष्कलोल्लोप्य[क]वदित्यादि** । उत्तरे गीतक आदौ प्रथमं मात्राचतुष्कलोल्लोप्यकवद्भवेदिति चतुष्कलोल्लोप्यके यथा द्विकलेऽष्टकला मात्रा द्विगुणा तु चतुष्कले मात्रेति द्विकलापेक्षया द्विगुणा षोडशकला मात्रोक्ता तथाऽत्राप्युत्तरे षोडशकला मात्रा तत्पातकलायुक्ता कर्तव्येत्यतिदेशार्थः । **शाखान्त(खाऽव)रेत्यादि** । षडङ्गा शाखाऽवरा निकृष्टा । ततोऽपि हीनाङ्गा न कर्तव्येत्यर्थः । द्वादशाङ्गा शाखा परोत्कृष्टा ततोऽप्यधिकाङ्गा न कर्तव्येत्यर्थः । षडाद्याद्वादशसंख्यमङ्गानि विविधैककानि यथेष्टं कर्तव्यानि भवन्ति । ततो मात्रानन्तरं [ सा ] शाखा द्विकले पञ्चपाणौ गेया । **प्रतिशाखा च तत्समेति** । तया शाखया [ समा प्रतिशाखा ] भवति । विशेषस्तु । **अन्यैः पदैर्बद्धेति** । व्याख्यातचरमेतत् । तयोः शाखाप्रतिशाखयोर्मध्ये शीर्षकं भवेत् । अथवा मध्यान्तयोश्च । **भिन्नगीतेनेति** । अस्मिञ्शीर्षद्वयप्रयोगपक्षे मध्यशीर्षे यद्गीतं ततो भिन्नगीतमन्तशीर्षे कर्तव्यमिति । शीर्षके भिन्नधातुके भवत इति यावत् । शीर्षद्वयमप्येककलोत्तरे गेयम् ॥१७२॥१७३॥

**ततोऽनन्तरमेकोऽन्तो यद्वाऽन्तो नात्र विद्यते ।**
**आकारवर्जं शाखायां गीताङ्गानि शरीरवत् ॥ १७४ ॥**

× अयं च. पुस्तकस्थः पाठः । अन्येषु पुस्तकेषु त्रुटितोऽयमंशो मूलस्य ।

ततोऽनन्तरमेकोऽन्त इति । युगयुङ्मभेषु स्थितप्रवृत्तमहाजनिकेषूल्लो-प्यकोकेष्वन्तभेदेष्वेकोऽन्तः स्वेच्छया कर्तव्यः । यद्वाऽत्रोत्तरेऽन्तो न विद्यत इति पक्षान्तरम् । शाखायां गीताङ्गानि षडादिद्वादशपर्यन्तमुक्तानि । आकारवर्जं शरीरवदिति । शरीर आकारयुक्तानि विविधादीनि गीताङ्गानि प्रयुक्तानि । अत्राऽऽकार(रं) मुक्त्वा तानि तद्वत्प्रयोज्यानि ॥ १७४ ॥

अस्य प्रस्तारो यथा— ऽऽऽऽ आनिविश, ऽऽऽऽ आनिविता, ऽऽऽऽ आशविता, ऽऽ ऽऽ आनिविसं । मात्रा ।

ऽऽऽऽ निप्रताश ऽऽऽऽऽऽऽऽऽ निता निशता प्रतिसं । शाखा । ऽ। ऽऽ।ऽ संता शता शता । इति शीर्षकम् । ततः शाखेव प्रतिशाखा । शाखाप्रतिशाखान्तरयोरपि शीर्षकमित्यन्ये । ततः कोऽप्येकोऽन्तः । अन्तर्हितं वा । इत्युत्तरम् ।

अस्योत्तरस्य प्रस्तारो यथा—प्रथमं षोडश गुरून्सचतुष्कलपादविभागं लिखित्वा तदधश्चतुष्कलोल्लोप्यकमात्रावदानिविशान्, आनिवितान्, आशवितान्, आनिविसं, इत्येताल्लिँखेत् । इति मात्रा । ततो द्विकलोत्तरेण शाखां लिखेत् । इति शाखा । ततो यथाक्षरोत्तरेण शीर्षकं लिखेत् । इति शीर्षकम् । ततः शाखेव प्रतिशाखा लेखनीया । ततो वैकल्पिकं शीर्षकं पूर्ववल्लिखेत् । इति शीर्षकम् । ततोऽन्तभेदेष्वेकोऽन्तो लेखनीयः । तदभावो वा ।

इत्युत्तरम् ।

द्वौ मार्गौ गीतकेषूक्तौ शङ्खच्छत्रकसंज्ञकौ ।
शङ्खमार्गोऽङ्गसंक्षेपश्छत्रकस्त्वङ्गविस्तरः ।
विकारो बहुधा तेषु लयमार्गानुसारतः ॥ १७५ ॥

इति सप्त गीतकानि ।

**द्वौ मार्गावित्यादि** । गीतकेषु मद्रकादिषूक्तेषु सप्तसु शङ्खच्छत्रकसंज्ञकौ द्वौ मार्गावुक्तौ । तत्राङ्गसंकोचाच्छङ्खवच्छङ्खो मार्गः । अङ्गविस्ताराच्छत्रवच्छत्रको मार्ग इत्यवगन्तव्यम् । गीतकेषूक्तानामेवाङ्गानां संक्षेपविस्तारौ मातृपरतन्त्राविति दर्शयितुमाह—**विकार इत्यादिना** । तेष्वङ्गेषु लयमार्गानुसारतः पूर्वोक्तानां लयानां मार्गाणां चानुसाराद्धेतोर्विकल्पो(कारो) भेदो बहुधा भवति ॥ १७५ ॥

इति सप्त गीतकानि ।

---

१ ख. ग. °कौ शवच्छ° । २ ख. ग. °षु नयमा° ।

अथ गीतेषु प्रथमोद्दिष्टं छन्दकं लक्षयितुमाह—

**अन्ते गेयं गीतकानां छन्दकं तस्य च द्विधा।**
**शरीरं चतुरस्रं वा त्र्यस्रं वा चतुरस्रकम्।**
**यैः कैश्चिदङ्गैर्नवभिश्चतुर्भिस्त्र्यस्रमुच्यते ॥ १७६ ॥**

**अन्त्ये(न्ते) गेयमित्यादि**। गीतकानां मद्रका[दी]नाम्। इदं छन्दकं मद्रकादिष्वेकं गीत्वा तदन्ते गेयमिति। अस्य स्वातन्त्र्येण प्रयोगो नास्तीति प्रतीयते। पृथगुद्दिष्टत्वात्पृथक्प्रयोगोऽपि द्रष्टव्यः। **तस्येति**। छन्दकस्य। शरीरं चतुरस्रं वा त्र्यस्रं वेति द्विधा भवति। यैः कैश्चिदङ्गैर्नवभिश्चतुर्भिस्त्र्यस्रमुच्यत इत्यत्र चतुर्भिरङ्गैश्चतुरस्रकं नवभिरङ्गैस्त्र्यस्रमिति क्रमेण योजनीयम् ॥१७६॥

**प्राग्वन्मुखं छन्दके स्यात्पादेन प्रतिवक्त्रकम्।**
**मुखतालेन वा कार्यं गीतान्ते शीर्षकं भवेत् ॥ १७७ ॥**

**प्राग्वन्मुखमिति**। छन्दके गीते पादा(प्राग्व)द्रोविणकोक्तात्पादप्रमाणान्मुखं नामाङ्गं स्यात्। तत्प्रतिमुखम्। **मुखतालेन वेति**। पादलक्षिते मुखे यस्ताल उक्तस्तेन कार्यमित्येकः पक्षः। ततोऽन्येन तालेन वा कार्यमिति विकल्पेन द्योत्योऽन्यः पक्षः। **गीतान्त इति**। छन्दकान्ते शीर्षकं कर्तव्यं भवेत् ॥१७७॥

**प्रस्तारः**— ऽऽ ।ऽ संता ताश। **इति चतुरस्रं शरीरम्। अथवा**— ऽ। ।ऽ शता शता।
**इति त्र्यस्रं शरीरम्। अस्य मुखं गीतकान्तरमुखवत्। प्रतिमुखं मुखवत्पादवद्वा। अन्ते शीर्षकं येन केनचिच्छीर्षकेण सदृशम्। इतरे मुखवत्प्रतिमुखम्। इति च्छन्दकम्।**

अस्य च्छन्दकस्य प्रस्तारो यथा—यथाक्षरेण चच्चत्पुटेन चतुरस्रं शरीरं लिखेत्। अथवा यथाक्षरेण चच्चत्पु(चाचपु)टेन त्र्यस्रं शरीरं लिखेत्। इति शरीरम्। पादप्रमाणकं मुखं लिखेत्। ततस्तत्प्रमाणकमेव प्रतिमुखं लिखेत्। इति मुखप्रतिमुखे। ततः शीर्षकमपि पूर्ववद्यथाक्षरोत्तरेण लिखेत्। इति शीर्षकम्।
**इति च्छन्दकम्।**

**आसारितं चतुर्धा स्यात्कनिष्ठं च लयान्तरम्।**
**मध्यमं ज्येष्ठमित्येषां लक्ष्माणि व्याहरामहे ॥ १७८ ॥**

अथाऽऽसारितं लक्षयितुं तद्भेदानुद्दिशति—**आसारितं चतुर्धेत्यादि** ॥१७८॥

कनिष्ठासारितस्य लक्षणमाह—

**कनिष्ठासारिते युग्मः शम्पादिर्द्वावथोत्तरौ।**
**एते यथाक्षरास्तेषां संनिपातोऽन्तिमेऽधिकः ॥ १७९ ॥**

---

१ च. °स्त्र्यस्र उच्य°। २ ख. ग. पादान्मुखमिति।

**कनिष्ठासारिते युग्म इत्यादि** । युग्मश्चच्चत्पुटः । **शम्पादिरिति** । शताशतेति पातयुक्तः प्रयोक्तव्यः । आसारितादौ शम्पादेरिति नियमस्योक्तत्वात् । अथ द्वावुत्तरौ षट्पितापुत्रकौ मिलित्वैते त्रयस्ताला यथाक्षराः कर्तव्याः । तेषां त्रयाणामन्तिमः प्लुतः संनिपातयुक्तः सन्नधिकः कर्तव्यो भवति । अयमर्थः। त्रयाणामन्त एकं प्लुतमधिकं कृत्वा तं संनिपातेन योजयेदिति ॥ १७९ ॥

प्रस्तारः— ऽ ऽ । ऽ ऽ। ऽ ऽ । ऽ ऽ। ऽ ऽ । ऽ ऽ
शता शता संता, शता शता संता; शता शता सं ॥

**इति कनिष्ठासारितम् ।**

अस्य कनिष्ठासारितस्य प्रस्तारो यथा—यथाक्षरं चच्चत्पुटं यथाक्षरौ षट्पितापुत्रकावाधिकं प्लुतं च लिखित्वा तदधः शताशता संताशताशता संताशताशतासं, इत्येताल्लिँखेत् । **इति कनिष्ठासारितम्** ।

अथ लयान्तरस्याऽऽसारितस्य लक्षणमाह—

**तद्वल्लयान्तरं मार्गलयाभ्यां द्विगुणं ततः ।**
**वर्धमानाङ्गमित्यन्ये**

**तद्वल्लयान्तरमित्यादि** । ततः कनिष्ठासारितान्मार्गलयाभ्यां द्विगुणमिति शेषः । इतस्तद्वदित्यतिदिश्यते । तद्वत्कनिष्ठासारितवत् । अन्य आचार्या वर्धमानाङ्गमित्यस्यैव लयान्तरासारितस्य संज्ञान्तरमाहुः । कनिष्ठासारितापेक्षया वर्धमानान्यङ्गानि यस्येति तत्तथोक्तम् ।

**अस्य प्रस्तारः कनिष्ठासारितेन व्याख्यात एव ।**

**इति लयान्तरम् ।**

अस्यैव लयान्तरासारितस्य प्रस्तारः कनिष्ठासारितवत्कार्यः । **इति लयान्तरासारितम्** ।

अथ मध्यमासारितं लक्षयति—

**मध्यमासारिते पुनः ॥ १८० ॥**
**उत्तरा द्विकला ज्ञेयास्त्रयस्तेष्वादिमे कलाः ।**
**आद्यास्तिस्रस्त्यजेत्**

**मध्यमासारिते पुनरित्यादि** । त्रयो द्विकला उत्तराः षट्पितापुत्रकाः । तेषूत्तरेष्वादिम उत्तर आद्यास्तिस्रः कलास्त्यजेत् । षट्पितापुत्रकोक्तकलास्वाद्यास्तिस्रो निपातः । निपतान्परित्यज्य शम्पादिकलाः प्रयुञ्जीतेत्यर्थः ॥ १८० ॥

प्रस्तारः— ऽऽऽ ऽऽऽ ऽऽऽ ऽऽऽऽ ऽऽ ऽऽ ऽऽ
शनिता निशता प्रनिसं । निप्रतास निश ताप्र निसं ।
ऽऽऽ ऽऽऽ ऽऽऽ ऽऽऽ
निप्रता शनिता निशता प्रनिसं ॥

इति मध्यमासारितम् ।

अस्य मध्यमासारितस्य प्रस्तारो यथा—आदौ द्वितीयपादस्थमन्तिममेकं गुरुं लिखित्वा ततो द्विकलेषु चतुर्षु पादभागेष्वष्टौ गुरूंल्लिखेत् । एवं नवानां गुरूणामधः क्रमेण शनितानिशताप्रनिसमित्येतावल्लिखेत् । एवं द्विकलः प्रथमषट्पितापुत्रकः । ततोऽपि द्विकलौ द्वौ षट्पितापुत्रकौ साकल्येन लिखेत् । इति मध्यमासारितम् ।

अथ ज्येष्ठासारितं लक्षयति—

ज्येष्ठासारिते तूत्तरास्त्रयः ।
चतुष्कलाः स्युस्तेष्वाद्ये त्यजेत्सप्ताऽऽदिमाः कलाः ॥ १८१ ॥

ज्येष्ठासारित इत्यादि । त्रयश्चतुष्कला उत्तराः स्युः । तेषूत्तरेष्वाद्ये प्रथमे षट्पितापुत्रके । आदिमाः सप्त कलास्त्यजेदिति । चतुष्कलषट्पितापुत्रकोक्तासु कलास्वाद्याः सप्त, आनिविप्राऽऽताविसान्, परित्यज्य शम्यादिकलाः प्रयुञ्जीतेत्यर्थः ॥ १८१ ॥

अस्य प्रस्तारः— ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ
आनिविप्र, आताविश, आनिविता, आनिविश,
ऽऽऽऽ ऽऽऽऽ
आताविप्र, आनिविसं । इदमन्त्यखण्डं ज्ञेयम् । ऽऽऽऽ ऽऽ
आनिविप्र, आता
ऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽ ऽऽऽ
विश, आनिविता, आनिविश, आताविप्र, आनिविस, आनिविसा,
ऽऽऽऽ
आनिविश, आताविप्र, आनिविसं ।

इति ज्येष्ठासारितम् ।

अस्य ज्येष्ठासारितस्य प्रस्तारो यथा—आदौ द्वितीयपादभागस्थमान्तिमं गुरुमेकं लिखेत् । ततश्चतुष्कलेषु चतुर्षु पादभागेषु षोडश गुरूंल्लिखेत् । एवं सप्तदशानामधः +समानिविता, आनिविश, आताविप्र, आनिविसमित्येताल्लिखेत् । एवं चतुष्कलः प्रथमः षट्पितापुत्रकः । ततोऽपि चतुष्कलौ द्वौ षट्पितापुत्रकौ सकलौ लिखेत् । इति ज्येष्ठासारितम् ।

---

+मूले किंचिन्न्यूनाधिकं वर्तते ।

---

१ ख. ग. °स्तेषां द्वे त्य° ।

एतेषां पञ्च षट् सप्ताष्टौ कलाः स्युः क्रमेण तु ।
उपोहनानि वस्तूनि त्रीणि त्रीणि च निर्दिशेत् ॥ १८२ ॥
संनिपातसमाप्तीनि तेषां मुखमुपोहनम् ।
युग्मतालः प्रतिमुखं कनिष्ठे च लयान्तरे ।
मध्यमेऽष्टौ कलास्त्वाद्या ज्येष्ठे षोडश कीर्तिताः ॥ १८३ ॥

**एतेषामित्यादि**। एतेषां कनिष्ठासारितादीनां चतुर्णामुपोहनान्यनुक्रमेण। **पञ्च-षट् सप्ताष्टौ कलाः स्युरिति**। कनिष्ठासारिते पञ्च कला उपोहनम्। लयान्तरासारिते षट् कला उपोहनम् । मध्यमासारिते सप्त कला उपोहनम् । ज्येष्ठासारितेऽष्टौ कला उपोहनमिति क्रमो द्रष्टव्यः । वस्तूनि त्रीणि त्रीणि च निर्दिशेदिति वीप्सया प्रत्यासारितभेदं त्रीणि वस्तूनि निर्देश्यानि भवन्ति । तथा हि— कनिष्ठासारिते चच्चत्पुटेन प्रथमं वस्तु । उत्तराभ्यां (+संहारः । संहरणं नामाङ्गं ) द्वितीयतृतीये । लयान्तरासारितेऽप्येवमेव। मध्यमासारिते कलात्रयहीनेन द्विकलोत्तरेण प्रथमं वस्तु । सकलाभ्यां द्विकलोत्तराभ्यां द्वितीयतृतीये । ज्येष्ठासारितेऽपि सप्तकलाहीनेन चतुष्कलोत्तरेण प्रथमं वस्तु । सकलाभ्यां चतुष्कलोत्तराभ्यां द्वितीयतृतीये वस्तूनि(स्तुनी) भवतः । **संनिपातसमाप्तीनीति**। संनिपाते समाप्तिर्येषामिति तथोक्तानि। तत्र मध्यज्येष्ठासारितयोर्वस्तूनां द्विकलचतुष्कलोत्तरसंमितत्वात्संनिपातसमाप्तित्वं प्राप्तमेव। कनिष्ठलयान्तरसारितयोस्तु यथाक्षरोत्तरयुक्तत्वेनाप्राप्तेऽपि संनिपातसमाप्तित्वे ‘ संनिपातोऽन्तिमोऽधिकः ’ इति वचनात्प्रापितत्वेनात्र संनिपातसमाप्तीनीत्यनूद्यत इति मन्तव्यम् । **तेषां मुखमित्यादि**। तेषामासारितानामुपोहनं मुखं नामाङ्गं भवति । कनिष्ठे लयान्तर आसारितद्वये युग्मतालश्चच्चत्पुटः प्रतिमुखं नामाङ्गं भवति । मध्यम आसारिते त्वाद्या अष्टौ कलाः प्रतिमुखं नामाङ्गं भवति । ज्येष्ठ आसारित आद्याः षोडश कलाः प्रतिमुखमिति कीर्तिताः ॥ १८२ ॥ १८३ ॥

त्र्यस्रौ शरीरसंहारौ क्रमात्सर्वेषु कीर्तितौ ॥ १८४ ॥
पादभागा विहायाऽऽद्यां शम्पामङ्गुलिकर्मणि ।
विभक्ताङ्गेषु तेषु स्युरविभागे यथास्थितम् ॥ १८५ ॥

**त्र्यस्रावित्यादि**। त्र्यस्रौ चाचपुटौ। **शरीरसंहाराविति**। शरीरं नाम पूर्वोक्तलक्षणमङ्गम्। संहारः संहरणं नामाङ्गं सर्वेष्वासारितेषु। **क्रमात्प्रकीर्तिताविति**। प्रथमचाचपुटेन शरीरं द्वितीयचाचपुटेन संहार इति क्रमो द्रष्टव्यः। **पादभाग इत्यादि**। एतान्यासारितानि विभक्ताङ्गान्यविभक्ताङ्गानीति द्वेधा भवन्ति । तेषु विभक्ताङ्गेषु कृतेषु । **पादभागा आद्यां शम्पां विहायाङ्गु-**

---

+ धनुश्चिह्नान्तर्गतग्रन्थोऽधिक इव भाति ।

---

१ च. °णि विनि°।

**लिकर्मणि स्युरिति**। यत्र पादभागे शम्पाऽऽद्या भवति तत्र तां सकलेन पाणिना प्रयुज्येतरासु कलासु पूर्वोक्तमङ्गुलिनियमं कुर्यादित्यर्थः । **अविभाग इति**। अङ्गानामविभागः( गे ) । अविभक्ताङ्गेष्वित्यर्थः । **यथास्थितमिति**। सामान्येन पूर्वोक्तमेव कुर्यादित्यर्थः ॥ १८४ ॥ १८५ ॥

अथोपोहनेषु गुरुलघ्वक्षरसंख्यानियममाह—

**उपोहनानां गुरुणी द्वे द्वे आद्यन्तयोर्मते ।**
**अष्टौ द्वादश मध्ये लाः क्रमात्षोडश विंशतिः ॥१८६॥**

**उपोहनमित्यादि** । कनिष्ठासारितोपोहन आदौ द्वे गुर्वक्षरे अन्त्ये च द्वे गुर्वक्षरे मध्येऽष्टौ लघ्वक्षराणि । लयान्तरासारितोपोहन आद्यन्तयोः पूर्ववत् । मध्ये द्वादश लघ्वक्षराणि । मध्यमासारित उपोहनेऽप्याद्यन्तयोः पूर्ववत् । मध्ये षोडश लघ्वक्षराणि । ज्येष्ठासारितोपोहनेऽप्याद्यन्तयोः पूर्ववदेव । मध्ये विंशतिर्लघ्वक्षराणि कर्तव्यानीति क्रमो द्रष्टव्यः ॥ १८६ ॥

**एतेषु स्याद्ध्रुवः पातः कलयोरन्त(न्त्य)योर्गुरुः ।**
**एकैकमक्षरं शेषाश्चतुर्मात्रकलाः कलाः ॥ १८७ ॥**

**एतेष्वित्यादि** । एतेषूपोहनेषु ध्रुवः पातः स्यात् । अन्त्ययोः कलयोरेकैकं गुर्वक्षरं कर्तव्यम् । शेषाः कलाश्चतुर्मात्रगणाः ॥ १८७ ॥

एतदेव विवृणोति—

**चतुर्मात्राक्षरगणा सर्वाद्यासारिते कला ।**
**संनिपातस्त्वर्धगणेऽवसानोऽन्यैरयं पुनः ॥ १८८ ॥**
**विभक्ताङ्गमध्यवर्ती गणेनार्धेन वा मतः ।**
**आसारितान्याहुरन्ये हीनान्यङ्गैरुपोहनैः ॥ १८९ ॥**

**चतुर्मात्राक्षरगणेति** । अक्षराणां गणोऽक्षरगणः । चतस्रो मात्रा यस्य स चतुर्मात्रः । चतुर्मात्रोऽक्षरगणो यस्यां कलायां सा तथोक्ता । आसारिते सर्वाऽपि कला चतुर्मात्रगणा कर्तव्येति सामान्यम् । **संनिपातस्त्वित्यादि** । अर्धगणप्रमाणः संनिपातः । अवसाने वस्त्वन्ते प्रयोक्तव्यः । अयं संनिपातः पुनर्विभक्ताङ्गे वस्तुन्यर्धेन गणेन मध्यवर्ती वा प्रयोक्तव्य इत्यन्यैर्मतः । अन्य आचार्या आसारितान्यङ्गैरुपोहनैश्च हीनान्याहुः ॥ १८८ ॥ १८९ ॥

**यथाक्षरं द्विसंख्यातं त्रिसंख्यातमिति त्रिधा ।**
**सर्वमासारितं तत्राऽऽवृत्तिहीनं यथाक्षरम् ॥ १९० ॥**

**द्विसंख्यातं त्रिसंख्यातं द्वित्रिरुच्चारणे क्रमात् ।**

**आवृत्तिद्वयमा(म)त्रास्या(त्राऽऽद्या)दर्धार्धलयमिष्यते॥१९१**

**यथाक्षरमित्यादि । आवृत्तिहीनमिति ।** एकवारं कृतमित्यर्थः। **अत्रेति ।** अत्र संख्यात आद्यात्प्रथमादावर्तनात्। आवृत्तिद्वयं द्वितीयं तृतीयं चाऽऽवर्तनम् । **अर्धार्धलयमिति ।** अयमर्थः । प्रथमावृत्तौ विलम्बितो लयः । द्वितीयावृत्तौ तदर्धो मध्यलयः । तृतीयावृत्तौ तदर्धो द्रुतलयः कर्तव्य इत्यर्थः॥१९०॥१९१॥

**यथाक्षरं सर्वमार्गे वृत्तिदक्षिणयोः परम् ।**

**दक्षिणे स्यात्त्रिसंख्यातं कनिष्ठं वृत्तिचित्रयोः ॥ १९२ ॥**

**यथाक्षरमित्यादि ।** यथाक्षरमासारितं सर्वमार्गे ध्रुवादिमार्गचतुष्टयेऽपि प्रयोक्तव्यमित्यर्थः । परं द्विसंख्यातं वृत्तिदाक्षिणमार्गयोः प्रयोक्तव्यम् । त्रिसंख्यातं त्रिमार्गे ( दक्षिणमार्गे ) स्यात् । कनिष्ठं कनिष्ठासारितं वृत्तिचित्रयोः प्रयोक्तव्यम् ॥ १९२ ॥

**लयान्तरं स्वतन्त्रे स्यादपरं त्वपरं जगुः ।**

**ध्रुवासारितमावृत्तिविधुरं ध्रुवमार्गतः ॥ १९३ ॥**

**लयान्तरं स्वतन्त्रे स्यादिति ।** स्वतन्त्रे नियमरहिते मार्गे ध्रुवादिमिश्रात्मक इत्यर्थः । **अपरेष्वि(त्वि)त्यादि ।** आवृत्तिविधुरमिति ध्रुवासारितस्य लक्षणमवगन्तव्यम् । **ध्रुवमार्गत इति ॥ १९३ ॥**

**इति त्रयोदशविधमासारितम् ।**

**त्रयोदशविधमिति ।** कनिष्ठा[सारिताद्या]सारितचतुष्टयस्य प्रत्येकं **यथा-क्षरत्वादिभिस्त्रैविध्ये** द्वादशविध(धं) मतान्तरोक्तेन ध्रुवासारितेन साकं **त्रयोदश-विधमासारितं** भवति । **इत्यासारितलक्षणम् ।**

**+काण्डिकावर्धमानं वाऽऽसारिताभासमित्यपि ।**

**वर्धमानासारितं च वर्धमानमिति त्रिधा ॥ १९४ ॥**

अथ सप्रभेदं वर्धमानकं लक्षयति—**खण्डिकावर्धमानमित्यादिना॥१९४॥**

तत्र खण्डिकावर्धमानस्य लक्षणमाह—

**कण्डिकाभिश्चतसृभिः कण्डिकावर्धमानकम् ।**

**विशालाऽऽद्या संगता च सुनन्दा सुमुखी तथा ॥ १९५ ॥**

**चतस्रः काण्डिकास्तासां नवाष्टौ षोडश क्रमात् ।**

**द्वात्रिंशच्च कला ज्ञेयाश्चतुरासारितस्थवत् ॥ १९६ ॥**

---

+अत्राग्रे च सर्वेष्वपि मूलादर्शपुस्तकेषु 'कण्डिका' इत्येवपाठो दृष्टः । टीकायां तु 'खण्डिका' इति पाठो वर्तते ।

**क्रमादुपोहनान्यासां झंटुमित्यादिमौ गुरू ।**
**वा इत्यन्ते मुखानां स्याद्विशालायां तु मध्यमाः ।**
**लाश्चतुर्दश चत्वारश्चत्वारोऽन्येषु तेऽधिकाः ॥ १९७ ॥**

**खण्डिकाभिरित्यादि** । विशालादीनां चतसृ(सृ)णां खण्डिकानां कलासंख्यानियममाह—**तासां नवाष्टौ षोडश क्रमाद्द्वात्रिंशच्च कला ज्ञेया इति** । तत्र विशालाया नव कलाः । संगताया अष्टौ कलाः । सुनन्दायाः षोडश कलाः । सुमुख्या द्वात्रिंशत्कला इति क्रमः । **आसामुपोहनानि क्रमाच्चतुरासारितस्थवदिति** । चत्वारि च तान्यासारितानि तेषु तिष्ठन्तीति तत्स्थानि तान्यु(त-द्वदु)पोहनानीति । विशालायां पञ्चकलमुपोहनं संगतायां षट्कलं सुनन्दायां सप्तकलं सुमुख्यामष्टकलमिति क्रमेण द्रष्टव्यम् । तेषामक्षराणि तत्संख्यां चाऽऽह—**झंटुमित्यादिना** । 'झंटुं' इत्युपोहनानामादौ गुरू प्रयोक्तव्यौ । 'वा' इत्येको गुरुरन्ते प्रयोक्तव्यः । मुखानां मुखसंज्ञकानामुपोहनानामेवमाद्यन्तवर्णनियमः स्यात् । प्रत्येकं मध्यवर्णसंख्यामाह— **विशालायां त्वित्यादि** । विशालाया-मुपोहने मध्यमा लघवश्चतुर्दश स्युः । अन्येषु संगताद्युपोहनेषु **चत्वारश्चत्वारो लघवोऽधिका इति** । पूर्वपूर्वापेक्षयेत्यर्थः ॥ १९५ ॥ १९६ ॥ १९७ ॥

**एष्वक्षराणि नियतान्यब्रूत श्रेयसे विधिः ॥ १९८ ॥**

**एष्वित्यादि** । विधिर्ब्रह्मा श्रेयसेऽभ्युदयायैषूपोहनेषु नियतान्यक्षराण्यब्रूत॥१९८॥

**भगवान्भरतोऽप्याह तानि व्यक्तानि तद्यथा ॥ १९९ ॥**

**तानि व्यक्तानीति** । भरतोक्तान्यक्षराणि च व्यक्तानि भरतवचनेनैवेत्यर्थः । तदेवोदाहर्तुमाह—**तद्यथेति** ॥ १९९ ॥

**तान्यक्षराणि वक्ष्ये यानि पुरा ब्रह्मगीतानि ।**
**झंटुं दिगिदिगिदिगिदिगिदिगि कुचझलझंटुमिति ॥ २००॥**
**तद्वद्बाले ज्ञेयं त्वि(ति)तिझलवृद्धिलयान्तरे गदितम् ।**
**कुचझलसहितं मध्ये तितिकुचयुक्तं भवेज्ज्येष्ठे ॥२०१ ॥**
**इति च+**

झंटुं दिगि दिगि दिगि दिगि दिगि कुचझलर्चा÷, इति विशालापोहने कनिष्ठासारितोपोहने चाक्षराणि । बाले कनिष्ठासारितेति । **त्वि(ति)तिझलवृद्धीति** । झंटुं दिगिदिगिदिगिदिर्गिदिगि कुचझलतितिझलर्चा[3], इति संगतोपोहने लयान्तरो-

+ एतदधिकम् । ÷ मूल एतत्स्थाने झण्टुमिति सर्वपुस्तकेषु । तत्र वा, इति पाठः समीचीनोऽत्र च वा, इत्यन्यपुस्तकपाठः समीचीन इव भात्येवमग्रेऽपि ।

१ ङ. वी । २ ख. °वा । ३ ख. °वा ।

पोहने चाक्षराणि । कुचझलसहितमिति । झंटुं दिगिदिगिदिगीदीगिदिगि कुचझलतिति झलकुचझलचां, इति सुनन्दोपोहने मध्यमासारितोपोहने चाक्षराणि। तितिकुचयुक्तं भवेज्ज्येष्ठ इति । झंटुं दिगिदिगिदिगिदिगिदिगि कुचझलतिति झलकुच झलतिति कुचचा इति सुमुख्योपोहने ज्येष्ठासारितोपोहने चाक्षराणि। इति भरतवचनस्यार्थः ॥ २०० ॥ २०१ ॥

विशालादिषु तालं योजयति—

**मध्यमासारितादिस्थवस्तुवत्ताल इष्यते ।**
**विशालायां संगतायां द्विकलो युग्मसंज्ञकः ।**
**चतुष्कलः सुनन्दायां सुमुख्यां स द्विरुच्यते ॥ २०२ ॥**

**मध्यमासारितेत्यादिना** । विशालायां तालो मध्यमासारितादि[ स्थ ] वस्तुवत् । मध्यमासारितस्याऽऽदौ स्थितं वस्तु नवकलात्मकं तत्र यस्तालः स एव विशालायां कर्तव्य इत्यर्थः । संगतायां द्विकलो युग्मसंज्ञितः । द्विकलश्च-च्चत्पुटः कर्तव्यः । सुनन्दायां चतुष्कला( लो ) रतियुग्मसंज्ञक इत्यनुषञ्जनीयः। सुमुख्यां स चतुष्कलचच्चत्पुटो द्विरुच्यते ॥ २०२ ॥

अथोपोहनेषु तालं योजयति—

**शम्पातालं द्विरन्ते च संनिपात उपोहने ।**
**आद्यायां(या) द्विकलश्चाचपुटोऽन्यस्या उपोहने ॥२०३॥**
**उद्घट्टादिः सुनन्दायां भवेद्युग्मो यथाक्षरः ।**
**स एव तालो द्विकलः सुमुख्याः स्यादुपोहने ॥ २०४ ॥**

**शम्पातालमित्यादिना** । आद्याया विशालाया उपोहने पञ्चकलात्मके । शम्पातालम् । शम्पा च तालश्चेति द्वंद्वैकवद्भावान्नपुंसकलिङ्गनिर्देशः। **द्विरिति**। शताशतेत्यर्थः। अन्ते पञ्चम्यां कलायां संनिपातः कर्तव्यः । अन्यस्याः संगताया उपोहने षट्कलात्मके द्विकलश्चाचपुटः कर्तव्यः । सुनन्दाया उपोहने सप्तकलात्मक उद्घट्टादिर्यथाक्षरो युग्मश्चचत्पुटो भवेत् । सुमुख्या उपोहनेऽष्ट-कलात्मके द्विकलश्चच्चत्पुटो भवेत् ॥ २०३ ॥ २०४ ॥

**+ कण्डिकानां वदन्तीत्थं परिवर्तान्दशापरे ।**
**विशाला संगता वाऽऽद्या सुनन्दा संगताऽऽदिमा ।**
**सुमुखी च सुनन्दाऽऽद्या संगता च विशालिका ॥२०५॥**

---

+ अत्र टीकायां ' खण्डिकानां ' इति पाठो वर्तते ।

---

१ ख. °वा ।

**खण्डिकानामित्यादि**। अपर आचार्याः खण्डिकानाम्। **इत्थमिति**। वक्ष्यमाणप्रकारेण दश परिवर्तान्वदन्ति। तान्दर्शयति—**विशालेत्यादिना**। आद्या विशाला। पुनरादिमा विशाला॥ २०५॥

**आसारितवदत्रापि कलानां गणकल्पना॥ २०६॥**

अत्र खण्डिकावर्धमाने। **कलानां गणकल्पनाऽऽसारितवदिति**। चतुर्मात्राक्षरगणा सर्वथाऽऽसारिते कलेति यदुक्तं तद्वदित्यर्थः॥ २०६॥

**प्रस्तारः**—ऽऽऽऽ ऽऽऽऽऽ निशतानि शताप्रनिसं॥ इति विशाखा॥ ऽऽ ऽऽऽ ऽऽऽ निश निताश प्रनिसं। इति संगता। ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ आनिविश, आनिविता, आशविप्र, आनिविसं इति सुनन्दा। ऽऽऽऽ ऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽ आनिविश आनिता आशविप्र आनिविसं। आनि ऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ विश आनिविता आशविप्र आनिविसं। इति सुमुखी। इति चतस्रः कण्डिकाः। ऽऽ ऽऽऽ शता शतासं। इति विशालया उपोहनम्। ऽऽ ऽऽ ऽऽ निश ताश निसं। संगतोपोहनम्। ऽऽऽऽ ऽऽऽ निशशता शताश। सुनन्दाया उपोहनम्। ऽऽ ऽऽऽ ऽऽऽ निश निताश प्रनिसं। इति सुमुख्या उपोहनम्। परिवर्तनपक्षे तु विशाला संगता वाऽऽद्येति क्रमेण कण्डिकानां प्रस्तारो ज्ञेयः।

**इति कण्डिकावर्धमानम्।**

अस्य खण्डिकावर्धमानस्य प्रस्तारो यथा—नव गुरूँल्लिखित्वा तदधः शनितानि, शताप्रनिसं, इत्येताँल्लिखेत्। इति विशाला। ततोऽष्टौ गुरूँल्लिखित्वा तदधो निशनिताशप्रनिसमित्येताँल्लिखेत्। **इति संगता**। ततः षोडश गुरूँल्लिखित्वा तदध आनिविश, आनिविता, आशविप्र, आनिविसं, इति लिखेत्। **इति सुनन्दा**। ततो द्वात्रिंशद्गुरूँल्लिखित्वा तदधः पूर्वोक्तान्वर्णान्द्विवारं लिखेत्। **इति सुमुखी**। इति चतस्रः खण्डिकाः। अथोपोहनानि—पञ्च गुरूँल्लिखित्वा तदधः शताशतासमिति लिखेत्। इति विशालाया उपोहनम्। षड्गुरूँल्लिखित्वा तदधो निशताशनिसं, इति लिखेत्। इति संगताया उपोहनम्। ततो यथाक्षराघट्टचच्चत्पुटौ लिखेत्। तत्र चच्चत्पुटस्याधस्ताच्छताशताँल्लिखेत्। इति

सुनन्दाया उपोहनम्। ततो द्विकलचच्चत्पुटं लिखेत्। इति सुमुख्या उपोहनम्। परिवर्तनपक्षे तु विशाला संगता वाऽऽद्येति क्रमेण खण्डिकानां प्रस्तारो ज्ञेयः। **इति खण्डिकावर्धमानम्।**

अथाऽऽसारिताभासनामकवर्धमानं लक्षयितुमाह-

**आसारितानामुत्पत्तिर्वर्धमानाद्भवत्यतः।**
**तदासारितवद्भाति विधया वक्ष्यमाणया॥ २०७॥**

**आसारितानामित्यादिना।** अत्र यत इत्यध्याहर्तव्यम्। यतः कारणादासारितानामुत्पत्तिर्वर्धमानाद्भवत्यतः कारणात्तद्वर्धमानं वक्ष्यमाणया विधयाऽऽसारितवद्भाति॥ २०७॥

तां विधां दर्शयति-

**विशाला चेन्नव कला भित्त्वाऽष्टादशधा कृता।**
**त्यक्त्वा चान्त्यां कलां तत्तु तदा भाति कनिष्ठवत्॥२०८॥**

**विशाला चेत्यादिना।** विशालाया नव कला अष्टादशधा भित्त्वा वर्धयित्वा द्विगुणीकृत्येत्यर्थः। अन्त्यां कलामष्टादशीं कलां त्यक्त्वा च कृता चेत्तदा तद्वर्धमानं सप्तदशकलात्मकत्वात्कनिष्ठवत्कनिष्ठासारितवद्भाति प्रतीयते॥२०८॥

**प्रस्तारः-** ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽ
शता शता संता शता शता संता शता शता सं॥

**इति कनिष्ठासारिताभासं वर्धमानम्।**

अस्य कनिष्ठासारिताभासवर्धमानस्य प्रस्तारो यथा-सप्तदश गुरूंल्लिँखित्वा तदधः कनिष्ठासारितोक्तान्, शताशता संताश्शता शतासंता शताशतासमित्येतान्वर्णांल्लिँखेत्। **इति कनिष्ठासारिताभासं वर्धमानम्।**

**संगता षट्कलमुखी विशाला चेत्ततः परा।**
**भवेल्लयान्तराभासं तत्तालं वर्धमानकम्॥ २०९॥**

**षट्कलमुखीति।** षट्कलं मुखमुपोहनं यस्याः सा तथोक्ता। संगताऽष्टकलात्मिकाऽऽदौ भवेदित्यर्थः। ततः संगतायाः परा विशाला नवकलात्मिका भवेत्। तत्तालं स एव तालो यस्य तत्तथोक्तं लयान्तरतालयुक्तमित्यर्थः॥२०९॥

**अस्य प्रस्तारः-** ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽऽ
शता शता संता शता, शता संता शता शता सं॥

आदावुपोहनं प्राग्वत्ताललयमार्गा(र्ग)द्वैगुण्यं च।

इति लयान्तराभासम्।

अस्य लयान्तराभासवर्धमानस्य प्रस्तारं पूर्ववर्धमानवदेव लिखेत् । आदावुपोहनं प्राग्वत् । [ताल]लयमार्गद्वैगुण्यं चात्र विशेषः । **इति लयान्तराभासवर्धमानम् ।**

**सोपोहना सुनन्दाऽऽदौ संगते द्वे ततः परे ।**
**मध्यमासारिते ताले स्यात्तदाभासकं तदा ॥ २१० ॥**

**सोपोहनेत्यादि ।** आदौ प्रथमं सोपोहना सप्तकलात्मकोपोहनसहिता सुनन्दा षोडशकलात्मिका । ततः परं द्वे संगते प्रत्येकमष्टकलात्मके भवतः । एवं द्वात्रिंशत्कला भवन्ति । मध्यमासारिते ताल इत्यनेनान्ते संनिपातयुक्तैका कलाऽधिका कर्तव्या । अन्यथा तस्य तालस्यापरिपूर्णता स्यात् । तेनात्र त्रयस्त्रिंशत्कला भवन्ति । **तदाभासकमिति ।** मध्यमासारिताभासकम् ॥ २१० ॥

**प्रस्तारः**—
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
**शनिता निशता प्रनि सं, नि प्रताश निता निशता प्रनि**

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
**सं, निप्रताश निता निशता प्रनिसं** । **आदौ सप्तकलमुपोहनम् । इति मध्यमासारिताभासम् ।**

अस्य प्रस्तारं मध्यमासारितप्रस्तारवल्लिखेत् । आदौ सप्तकलमुपोहनं प्राग्वत् ।

**इति मध्यमासारिताभासवर्धमानम् ।**

**सुमुखी कण्डिका पश्चात्सुनन्दा संगताऽऽदिमा ।**
**ज्येष्ठतालेन चेज्ज्येष्ठासारिताभासकं तदा ॥ २११ ॥**

**सुमुखीत्यादि ।** आदिमा विशाला । एवं चतसृषु खण्डिकासु पञ्चषष्टिः कला भवन्ति(?) । **ज्येष्ठतालेनेति ।** ज्येष्ठासारिते यस्ताल उक्तश्चतुष्कलोर्के-स्त्रिरावृत्त आदौ त्यक्तसप्तकलस्तेनात्र प्रयोगः कृतश्चेत्तदा ज्येष्ठासारिताभासकम् ॥ २११ ॥

**प्रस्तारः**—
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
**आनिविश आनिविप्र आनिविप्र आनिविश आनिविप्र**

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
**आनिविश आनिविता आनिविता आनिविश आनिविप्र आनिविसं**

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ
**आनिविप्र आनिविश आनिविता आनिविप्र आनिविसं ।** आदावष्टकलमुपोहनं प्राग्वत् । इति ज्येष्ठासारिताभासम् ।

**इति चतुर्विधमासारिताभासवर्धमानम् ।**

---

१ ख. ग. °स्तारो यथा—पू° । २ ख. ग. °स्तारो यथा—म° । ३ ख. ग. °लोत्तरस्त्रि° ।

अस्य प्रस्तारं ज्येष्ठासारितप्रस्तारवल्लिखेत[1] । आदावष्टकलमुपोहनं प्राग्वत् ।

**इति ज्येष्ठासारिताभासं वर्धमानम् ।**

**इति चतुर्विधमासारिताभासं वर्धमानम् ।**

**आसारितेभ्य उत्पन्नं वर्धमानं विवक्ष्यते ।**
**यदा तदा वर्धमानासारितं तदुदाहरन् ॥ २१२ ॥**

**आसारितेभ्य इत्यादि** । पूर्वमासारिताभास आसारितानामुत्पत्तिर्वर्धमानादिति दर्शितम् । इदानीं तद्विपर्यय उच्यते । यदा वर्धमानमासारितेभ्य उत्पन्नमिति वक्ष्यते तदा तद्वर्धमानासारितमित्युदाहरन्त्याचार्याः । तेनात्र विवक्षयैव भेदो द्रष्टव्यः ॥ २१२ ॥

स्वरूपतस्तु नातीव भेदोऽस्तीति मन्यमान आह—

**यदा पूर्वक्रमाद्गीतास्तालैस्तैरेव कण्डिकाः ।**
**वर्धमानासारितानि तदा चत्वारि पूर्ववत् ॥ २१३ ॥**
**कनिष्ठादीनि भान्त्यत्र तालांशा वर्धमानवत् ।**
**यथाक्षरादिभेदेन पुनः सर्वाण्यपि त्रिधा ॥ २१४ ॥**

**यदा पूर्वक्रमादिति** । अत्र वर्धमानासारितेषु कनिष्ठादीन्यासारितानि भान्ति प्रतीयन्ते । तालांशास्तालभागा वर्धमानवद्वर्धमान इव भान्ति । तत्त्वतस्तु तावन्मात्रामितत्वाद्वर्धमाना एव(?) । **यथाक्षरादिभेदेनेत्यादि** । **सर्वाण्यपीति** । मार्गलयमात्रभिन्नस्य लयान्तरस्य कनिष्ठाद्व्यतिरेकात्तदुत्थानि त्रीणि वर्धमानानि विहायेतराणि खण्डिकावर्धमानानि त्रीणि, आसारिताभासादीनि त्रीणि, वर्धमानासारितानि त्रीणीति मिलित्वा नव गृह्यन्ते । तानि नवापि । **यथाक्षरादिभेदेनेति** । आदिशब्देन द्विकलचतुष्कलभेदौ गृह्येते । एवं त्रिविधानि भवन्ति ॥ २१३ ॥ २१४ ॥

**यथाक्षरादित्रितयं दक्षिणे वार्तिके द्वयम् ।**
**चित्रे त्वेकमितीमानि षट्प्रकाराणि मार्गतः ॥२१५॥**

**यथाक्षरादित्रितयं दक्षिण इति** । दक्षिणमार्गे पूर्वोक्तानि नवापि यथाक्षराणि द्विकलानि चतुष्कलानि च भवन्ति। **वार्तिके द्वयमिति**। वार्तिके मार्गे यथाक्षराणि च द्विकलानि चतुष्कलानि च भवन्ति। **चित्रे त्वेकमिति** । चित्रे मार्गे एकं यथाक्षराण्येव भवन्ति। इतीमानि वर्धमानानि मार्गतो मार्गभेदवशात्षट्प्रकाराणि भवन्ति । यथा(?) प्रथमोक्तान्येव वर्धमानानि यानि न विद्यन्ते तानि दक्षिणे यथाक्षराणीत्येकः प्रकारः । अत्रैव द्विकलानीति द्वितीयः। तत्रैव चतुष्कलानीति तृतीयः । वार्तिके यथाक्षराणीति चतुर्थः । तत्रैव द्विकलानीति

---

१ ख. ग. °स्तारो यथा—ज्ये° ।

पञ्चमः। चित्रे यथाक्षराणीति षष्ठः। एवं नवानां षट्प्रकारत्वे चतुष्पञ्चाशद्वर्धमानानि भवन्ति ॥ २१५ ॥

**एतेषां प्रस्तारो यथा—** ऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
श आनि विता, आनि विश, आता विप्र,

ऽऽ ऽऽ
आनि विसं। **इति वर्धमानाभासं कनिष्ठासारितम्** ×। **इति वर्धमानाभासं लयान्तरम्।** ऽऽ ऽऽ ऽऽ ऽऽ ऽऽऽऽ ऽऽ ऽऽ
आनि विश, आनि विता, आश विप्र, आनि विसं।

**इति वर्धमानाभासं मध्यमासारितम्।** ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ
आनि विश, आनि विता, ताश।

**इति वर्धमानाभासं ज्येष्ठासारितम्।**

**इति चतुष्पञ्चाशद्भेदानि वर्धमानानि।**

**एतेषां प्रस्तार इति।** एतेषां वर्धमानासारितानां प्रस्तारः प्रदर्श्यत इत्यर्थः। यथा सप्तदश गुरूंल्लिखित्वा तदधः, [श] आनिविता, आनिविश, आताविप्र, आनिविसं, इति लिखेत्। **इति वर्धमानासारितं कनिष्ठासारितम्।** ततोऽपि सप्तदश गुरूंल्लिखित्वा तदधः, निशनिता, शप्रनिसं, शनिताश, ताप्रनिसं* इति लिखेत्। **इति वर्धमानासारितं लयान्तरम्।** ततस्त्रयस्त्रिंशद्गुरूंल्लिखित्वा तदधः, आनिविश, आनिविता, आनिविप्र, आनिविसं, निशनिता, शप्रनिसं, शनितानि, शताप्रनिसं, इति लिखेत्। **इति वर्धमानासारितं मध्यमासारितम्।** ततः पञ्चषष्टिगुरूंल्लिखित्वा तदधः (+आनिविश आनिविता आशविप्र आनिविसं) आनिविश, आनिविता, आशविप्र, आनिविसं, आनिविश, आनिविता, आशविप्र, आनिविसं, आनिविश, आनिविता, आशविप्र, आनिविसं, निशनिता, शप्रनिशं(श), नितानि, शताप्रनिसं, इत्येतान्वर्णांल्लिखेत्। **इति वर्धमानासारितं ज्येष्ठासारितम्।**

**इति चतुष्पञ्चाशद्भेदानि वर्धमानानि।**

अथ पाणिकां लक्षयति—

**आद्या रोविन्दकगता मात्रैका पाणिका ध्रुवम्।**
**मात्रा स्यादवराऽष्टाङ्गा षोडशाङ्गा परा मता ॥ २१६ ॥**

---

× इतोऽग्रे प्रस्तारस्त्रुटित आदर्शपुस्तकेषु तु स्खलितप्रायः। स च टीकानुरोधेन सप्तदशगुर्वात्मको बोध्यः। एवमग्रेऽपि प्रस्तारद्वयं स्खलितप्रायं टीकानुरोधेन बोध्यम्।
*अत्रैकमक्षरं न्यूनम्। +धनुश्चिह्नान्तर्गतमधिकमिव भाति।

आद्येत्यादि । रौविन्दकगताऽऽद्यैका मात्रा पाणिका स्यात् । रौविन्दकगतेत्यनेन मात्रायाः षोडशकलत्वम्, आनिविप्रादियुक्तत्वं च वेदितव्यम् । मुखमित्युपोहनं रौविन्दकगतमिति लिङ्गव्यत्ययेनानुषञ्जनीयम् । तेन तत्राप्यष्टकलामित्यवगन्तव्यम् । अष्टाङ्गमात्राऽवरा स्यात् । षोडशाङ्गा मात्रा परा स्मृता ॥२१६॥

उल्लोप्यकवदङ्गानां निवेशं कोविदा विदुः ।
विदार्यः स्युः स्तुतिपदैराकारान्तरितैरिह ॥ २१७ ॥
निरन्तरैः स्तुतिपदैराकारैश्चाथवा क्रमात् ।
मुखात्परं प्रतिमुखं मुखवत्स्यात्पदान्तरैः ॥ २१८ ॥

उल्लोप्यकवदित्यादि । अङ्गानां विविधादीनां निवेशमुल्लोप्यके यथा तथाऽत्रापि कर्तव्यं विदुः । इह पाणिकायामाकारान्तरितैः स्तुतिपदैर्विदार्यः स्युरित्येकः पक्षः । अथवा निरन्तरैः स्तुतिपदैर्निरन्तरैराकारैश्च क्रमाद्विदार्यः स्युरिति पक्षान्तरम् । मुखवत्स्यात्पदान्तरैरिति । मुखप्रतिमुखयोः पदभेद एव न गीतिभेद इत्यर्थः ॥ २१७ ॥ २१८ ॥

अथोत्तरैश्चतुर्भिः स्याच्छरीरं तु यथाक्षरैः ॥ २१९ ॥
ततः शीर्षं सैककेन कार्यं संपिष्टकेन तु ।
अन्येऽन्ताहरणेनान्तान्विना नेच्छन्ति शीर्षकम् ॥ २२० ॥

अथ प्रतिमुखानन्तरम् । ततः शरी[रादनन्त]रं सैककेनैककाख्याङ्गसहितेन संपिष्टकेन दशकलेन वा शीर्षं कार्यम् । अन्य आचार्या अन्तान्वितेनान्ताहरणेन शीर्षकमिच्छन्ति ॥ २१९ ॥ २२० ॥

(*मुखं ततः प्रतिमुखम्) । अस्य प्रस्तारः— ऽऽऽऽ ऽऽ ऽऽ आनिविप्र, आनिविता इत्युपोहनम् । ऽऽऽऽ ऽऽऽऽ आनिविप्र आनिविश । इत्युपोहनमिदं मिलितमुखम् । ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽ ऽऽऽऽऽ आनिविश, आनिविता, आनिविप्र, आनिविसं, संताशताशता । इति प्रतिमुखम् । ततो यथाक्षरैश्चतुर्भिरुत्तरैः शरीरम् । प्रस्तारो यथा— ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ ऽऽ निश शश ताता, शता शता तासं । इति शीर्षकम् । अन्ये त्वन्ताहरणसहितमन्तं शीर्षकमाहुः स चोल्लोप्यके दर्शितः । इति पाणिका ।

*धनुश्चिह्नान्तर्गतमधिकम् ।

अस्याः पाणिकायाः प्रस्तारो यथा—प्रथममुपोहनेऽष्टौ गुरूंल्लिखित्वा तदधः, आनिविप्राऽऽनिवितांल्लिखेत् । इत्युपोहनम् । ततोऽप्यष्टौ गुरूंल्लिखित्वा तदध आनिविप्राऽऽनिविशांल्लिखेत् । इत्युपोहनेन सहिताऽऽद्यमात्रा+ । तदनन्तरं मुखवदेव प्रतिमुखं लिखेत् । इति प्रतिमुखम् । ततो यथाक्षरोक्तैश्चतुर्भिः शरीरं लिखेत् । इति शरीरम् । ततः शीर्षके द्वादश गुरूंल्लिखित्वा तदधो निशशश, ताताताश, ताशतासं, इति लिखेत् । इति संपिष्टकेन शीर्षकम् । अन्ये त्वन्ताहरणसहितं शीर्षमाहुः । स चोल्लोप्यके दर्शितोऽत्रानुसंधेयः । इति पाणिका ।

अथर्चं लक्षयति—

**आरभ्यानुष्टुभं वृत्तैर्जगत्यन्तैः पदैरपि ।**
**लौकिकैर्वैदिकैर्वाऽपि गातव्यामृचमूचिरे ॥ २२१ ॥**

**आरभ्येत्यादि** । अनुष्टुभं छन्द आरभ्य । **जगत्यन्तैरिति** । अनुष्टुभमष्टाक्षरपादयुक्तं जगती नाम द्वादशाक्षरपादयुक्तं छन्दः । तदुक्तैर्वृत्तैः । पदैरपि संस्कृतैर्लौकिकैर्वैदिकैश्चापीति वृत्तानां पदानां च विशेषणम् । लौकिकानि वृत्तानि विचित्रपदादीनि । वैदिकानि वृत्तानि पुररु(उ)ष्णिगादीनि । लौकिकानि पदानि ब्रह्मणा देवा इत्येवमादीनि । वैदिकानि पदानि ब्राह्मणासो देवास इत्येवमादीनि ॥२२१॥

**एकाक्षराः कला अष्टचत्वारिंशदिहोदिताः ।**
**कलानां पूरणं मन्त्रपदैः स्तोभाक्षरैरपि ॥ २२२ ॥**

**एकाक्षरा इत्यादि** । इह ऋचि । एकाक्षराः कला इति । एकैकस्यां कलायामेकैकमक्षरं प्रयोक्तव्यमित्यर्थः । अत्रोक्तास्वष्टाचत्वारिंशत्कलासु मध्ये कासुचिद्वृत्ताक्षरैः पूरितास्ववशिष्टानां वक्ष्यमाणैः पादैः स्तोभाक्षरैरपि पूरणम् । ऊचिर इति क्रियानुषङ्गः कर्तव्यः ॥ २२२ ॥

**तान्यत्र ब्रह्मगीतानि निर्दिश्यन्तेऽधुना यथा ॥ २२३ ॥**

**झंटुं जगतियवालितककुचझलतितिझलपशुपतिदिगिदिगिवादिगोंगणपतितितिधा, इत्येतान्यब्रवीद्ब्रह्मा ।**

तानि पदानि स्तोभाक्षराणि दर्शयति—**तान्यत्र ब्रह्मगीतानीत्यादिना** ॥२२३॥

**ओंकारश्च हकारोऽपि स्वरव्यञ्जनसंयुतः ।**
**त्रिकलः षट्कलो वाऽत्र स्तोभः स्यान्मुनिसंमतः ॥२२४॥**

स्वरव्यञ्जनैः संयुत इत्यत्रौकारो व्यञ्जनसंयुतो हकारः स्वरसंयुत इत्यर्थः(र्थ)-

+अत्र किंचित्स्खलितमितः परं किंचित्त्रुटितं च ।

१ ख. °नवार्जितः ।

क्रमो द्रष्टव्यः। त्रिकलः षट्कल इति । ओकारो हकारश्च कलात्रयकालयुक्तो वा कलाषट्ककालयुक्तो वा कर्तव्य इत्यर्थः ॥ २२४ ॥

**प्रस्तावादीनि सप्तापि सामाङ्गान्यत्र चावदन् ।**
**यथाशोभं विदारीश्च वर्णांश्च रचयेदिह ॥ २२५ ॥**

**इति ऋक् ।**

**प्रस्तावादीनीत्यादि** । प्रस्तावोद्गीथकप्रतिहारोपद्रवनिधनाहिंकारहुंकारा इति सप्त सामाङ्गानि । **वर्णांश्चेति** । स्थाप्यानीत्यर्थः ॥ २२५ ॥

इति ऋक् ।

अथ गाथां लक्षयति—

**कला मुनिजनैरुक्ता गाथायां चतुरक्षरा ।**
**अध्यष्टाविंशतिशतं कलानां तत्र कीर्तितम् ॥ २२६ ॥**
**मात्रावृत्तैः कलानां च पूर्तिः स्तोभाक्षरैरपि ।**
**कर्तव्यान्येककान्यत्र वर्णालंकारगीतयः ॥ २२७ ॥**
**सामाङ्गानि च भूयांसि विद(वि)धानामिहाल्पता ॥२२८॥**

**इति गाथा ।**

**कला मुनिजनैरित्यादि** । गाथायाः कला मुनिजनैश्चतुरक्षरोक्ता । एकैकस्यां कलायां चत्वारि चत्वार्यक्षराणि प्रयोज्यानीत्यर्थः। **तत्रेति** । गाथायाम्। अध्यष्टाविंशतिकलानां शतं कीर्तितम् । अष्टाविंशत्याऽधिकमध्यष्टाविंशति । शतविशेषणम् । मात्रावृत्तैरार्यादिभिः स्तोभाक्षरैरपि कलानां पूर्तिर्भवेत् । अत्र गाथायामेककानि कर्तव्यानि । वर्णालंकारगीतयश्च कर्तव्याः । सामाङ्गानि प्रस्तावादीनि ॥ २२६ ॥ २२७ ॥ २२८ ॥

इति गाथालक्षणम् ।

अथ साम लक्षयति—

**स्तोभभङ्गीं विजानीयात्साम्नो वैदिकसामवत् ।**
**ब्रह्मणा च पुरा गीतं प्रस्तावोद्गीथकौ तथा ॥ २२९ ॥**
**प्रतिहारोपद्रवौ च निधनं पञ्चमं मतम् ।**
**ततो हिंकार ओंकारः सप्ताङ्गानीति तत्र तु ॥ २३० ॥**
**उद्ग्राहः स्यादनुद्ग्राहः संबोधो ध्रुवकस्तथा ।**
**आभोगश्चेति पञ्चानामाद्यानामभिधाः क्रमात् ॥ २३१ ॥**

---

१ ख. ग. च ।

**स्तोभभङ्गीमित्यादिना।** साम्नः सामाख्यगीतस्य वैदिकसामवदृगादिवाक्यविशेषस्य गीतिवत्। यथोक्तं गीतिषु सामाख्येति। स्तोभभङ्गीं स्तोभाक्षराणां प्रकारं विजानीयात्। ब्रह्मणा च पुरा गीतमित्यत्र सामेत्यध्याहर्तव्यम्। **प्रस्ताव इत्यादि।** वैदिके सामा( म )नि प्रस्तावाख्यस्याङ्गस्य गीते सामा( म )न्युद्ग्राह इति संज्ञा। उद्गीथस्यानुग्रह इति संज्ञा। प्रतिहारस्य संबन्ध इति संज्ञा। उपद्रवस्य ध्रुवक इति। निधनस्याऽऽभोग इति संज्ञा। एवं क्रमो द्रष्टव्यः॥ २२९॥ २३०॥ २३१॥

**हिंकारोंकारयोस्तत्र कलापूरकता मता।**
**गायत्रीप्रभृतिच्छन्दः संकृत्यन्तमिहेष्यते॥ २३२॥**
**ऋग्व्यूढमिति सामोक्तं गद्ये षण्णवतिः कलाः।**
**एकाक्षराः सामगाने तदर्धमपरे जगुः।**
**अत्रापि मन्त्रस्तोभानामृचां च त्रिकलादिकम्॥ २३३॥**

**इति साम। इति प्रकरणानि।**

तत्र गीते हुंकारोंकारयोः कलापूरकता द्रष्टव्या। इह सामगीते गायत्रीप्रभृति संकृत्यन्तं छन्द इष्यते। गायत्री षडक्षरपादा। संकृतिश्चतुर्विंशत्यक्षरपादा। गाथायां साम्नो मतान्तरेण कलासंख्यानियममाह—**गद्य इत्यादिना।** गद्ये गाथायामेकैकाक्षराः षण्णवतिः कला भवन्ति। **सामगाने तदर्धमिति।** तस्याः षण्णवतिसंख्यायामर्धमष्टाचत्वारिंशत्कला भवन्तीत्यर्थः। **अत्रापीति।** सामाख्यगीतेऽपि। ऋचीवर्गाख्ये गीत इव। मन्त्रस्तोभानां मन्त्ररूपस्तोभाक्षराणामोंकारादीनाम्। मन्त्रेति विशेषणं गीतस्तोभाक्षरनिवृत्त्यर्थम्। त्रिकलादिकं त्रिकलत्वादिकमिति धर्मपरो निर्देशः। आदिशब्देन षट्कलत्वं गृह्यते। कर्तव्यमित्यध्याहर्तव्यम्॥ २३२॥ २३३॥

**इति सामलक्षणम्। इति प्रकरणानि।**
**इति मार्गतालप्रकरणम्॥**

अथ देशीतालप्रकरणस्याऽऽदाविष्टदेवतां नमस्कृत्य प्रतिपाद्यं प्रतिजानीते—

**श्रीकीर्तिविजयानन्दं पार्वतीलोचनोत्सवम्।**
**राजचूडामणिं नत्वा तालं देशीगतं ब्रुवे॥ २३४॥**

**श्रीकीर्तिविजयानन्दमिति।** अत्र तालेश्वरयोर्विशेषणानि श्लिष्टानि द्रष्टव्यानि। श्रीकीर्तिविजयानन्दमिति। श्रिया कीर्त्या विजयेन चोत्पन्न आनन्द एवेश्वरः। अथवा तादृश एवाऽऽनन्दो यस्येति बहुव्रीहिर्वा। श्रीकीर्तिनामैकस्तालः। विजयानन्द इत्यपरः। **पार्वतीलोचनोत्सवमिति।** पार्वत्या लोचनयोरुत्सवत्वेन रूपित ईश्वरः। पार्वतीलोचन इत्येकस्तालः। उत्सव इत्यन्यः।

**राजचूडामणिमिति** । राजा चन्द्रश्चूडामणिर्यस्येति स तथोक्त ईश्वरः । राजचूडामणिरित्येकस्तालः । उक्तलक्षणमीश्वरं नत्वा श्रीकीर्त्याद्युपलक्षितं देशीगतं तालं ब्रुव इति संबन्धः । अत्र तालमिति जातावेकवचनम् । ईश्वरस्यैकत्वात् । तालस्यापि तद्विशेषणसाम्यसिद्ध्यर्थमेकवचनं कृतमिति मन्तव्यम् ॥ २३४ ॥

तस्य सामान्यलक्षणमाह—

**देशीतालस्तु लघ्वादिमितया क्रियया मतः ॥ २३५ ॥**
**यथाशोभं कांस्यतालध्वननादिकया मतः ।**
**अर्धमात्रा( त्रं ) द्रुतो मात्रात्रितयं प्लुत उच्यते ॥२३६॥**

**देशीतालस्त्वित्यादि** । अत्र तुशब्दो मार्गतालाद्देशीतालस्य वैषम्यद्योतनार्थः । तच्च वैषम्यं 'यथाशोभं लघ्वादिमितया क्रियया मतः' इति 'यथाशोभं कांस्यतालध्वननादिकया मतः' इति च विशेषणद्वयेन द्रष्टव्यम् । अत्र यथाशोभमितिपदं देहलीप्रदीपन्यायेन काकाक्षिन्यायेन वोभयतो योजनीयम् । तत्र यथाशोभं लघ्वादिमितयेत्यस्यायमर्थः । अत्र शोभाशब्देन गीतावयवेषु तालावृत्तीनां कालसाम्यनिबन्धना सहृदयहृदयंगमतोच्यते । तामनतिक्रम्येति यस्मिन्गीतावयवे यावदक्षरमितया मात्रया कांस्यतालकालसाम्यं भवति तत्र मार्गे पञ्चलघ्वक्षरोच्चारमिता मात्रा नियतत्वेन कथिता । क्वचित्तु ततोऽपि मू( न्यू )नया चतुर्लघ्वक्षरोच्चारमितया कालसाम्यम् । अन्यत्र तु ततोऽप्यधिकया षड्लघ्वक्षरोच्चारमितया । यत्र यथा शोभा भवति तामनतिक्रम्य । **लघ्वादिमितयेति** । आदिशब्देन गुरुप्लुतद्रुता गृह्यन्ते । अत्राल्पग्रहणे द्रुतादीति वा महद्ग्रहणे प्लुतादीति वा वक्तव्ये लघ्वादीति वचनं देशीतालेषु ग्रहणमोक्षयोर्लघोरेव प्राधान्यद्योतनार्थम् । तेन केवलद्रुतात्मकेऽपि ताले द्रुतद्वयं लघूकृत्य तत्र ग्रहमोक्षौ कुर्यादिति संप्रदायो वेदितव्यः । अत्रोक्तस्य मात्राप्रमाणभेदस्य तालविशेषनिष्ठत्वेनोदाहरणमुत्तरत्र तालानां पौनरुक्त्यपरिहारावसरे करिष्यते । **यथाशोभं कांस्यतालध्वननादिकयेति** । कांस्यतालध्वनने या शोभा क्वचिन्मुक्तनादत्वेन क्वचिद्गृहीतनादत्वेन क्वचिद्द्विघातेषु करक्रियाविशेषेण क्वचिद्द्विघाते घातकल्पनया च जायते तां शोभामनतिक्रम्य कांस्यतालस्य ध्वननाद्विस्मयवैचित्र्यजनिताश्चर्यवान्मतो लोकसंमत इति मार्गतालाद्वैषम्यं देशीतालस्य । **अर्धमात्रा( त्र )मिति** । मात्राया अर्धमर्धमात्रं द्रुत उच्यते ॥ २३५ ॥ २३६ ॥

**द्रुतादिरचनाभेदात्तालभेदोऽप्यनेकधा ।**
**तालानामधुना तेषामुद्देशं संगिरामहे ॥ २३७ ॥**

---

१ च. युतः ।

द्रुतादिरचनाभेदादिति । द्रुतादीनां द्रुतलघुगुरुप्लुतानां रचना संनिवेशविशेषः प्रमाणविशेषश्च तस्या भेदो विशेषान्तरं तस्माद्धेतोस्तालभेदोऽप्यनेकधा भवति विचित्रो भवति । तालवैचित्र्यमपि द्रुतादीनां संनिवेशभेदात्प्रमाणभेदाच्चेति मन्तव्यम् । तालानामित्यादि । तेषां तालानां देशीतालानामित्यर्थः । उद्देशं नाममात्राभिधानम् ॥ २३७ ॥

आदितालो द्वितीयश्च तृतीयोऽथ चतुर्थकः ।
पञ्चमो निःशङ्कलीलो दर्पणः सिंहविक्रमः ॥ २३८ ॥
रतिलीलः सिंहलीलः कंदर्पो वीरविक्रमः ।
रङ्गः श्रीरङ्गचर्चर्यौ[1] प्रत्यङ्गो यतिलग्नकः ॥ २३९ ॥
गजलीलो हंसलीलो वर्णभिन्नस्त्रिभिन्नकः ।
राजचूडामणी रङ्गो द्योतो रङ्गप्रदीपकः ॥ २४० ॥
राजतालो वर्णतालः सिंहविक्रीडितो जयः ।
वनमाली हंसनादः सिंहनादः कुडुक्ककः ॥ २४१ ॥
तुरङ्गलीलः शरभलीलः स्यात्सिंहनन्दनः ।
त्रिभङ्गिरङ्गाभरणो मण्ठकः कोकिलाप्रियः ॥ २४२ ॥
निःसारुको राजविद्याधरश्च जयमङ्गलः ।
मल्लिकामोदविजयानन्दौ क्रीडाजयश्रियौ ॥ २४३ ॥
मकरन्दः कीर्तितालः श्रीकीर्तिः प्रतिपालकः ।
विजयो बिन्दुमाली च समनन्दनमण्ठिकाः ॥ २४४ ॥
दीपको[2]दीक्षणौ ढेङ्की[3] विषमो वर्णमण्ठिका ।
अभिनन्दोऽनङ्गनान्दीमल्लकङ्कालकन्दुकाः ॥ २४५ ॥
एकताली च कुमुदश्चतुस्ताली च डोम्बुली ।
अभङ्गो रायवङ्कोलो वसन्तो लघुशेखरः ॥ २४६ ॥
प्रतापशेखरो झम्पा गजझम्पश्चतुर्मुखः ।
मदनः प्रतिमण्ठश्च पार्वतीलोचनो[4] रतिः ॥ २४७ ॥
लीलाकरणयत्याख्यौ ललितो गारुगिस्तथा ।
रायनारायणाख्यश्च लक्ष्मीशो ललितप्रियः ॥ २४८ ॥
श्रीनन्दनश्च जनको वर्धनो रागवर्धनः ।
षट्तालश्चान्तरक्रीडा हंसोत्सवविलोकिताः ॥ २४९ ॥

॥ २३८ ॥ २३९ ॥ २४० ॥ ॥ २४१ ॥ २४२ ॥ २४३ ॥ २४४ ॥ २४५ ॥ २४६ ॥ २४७ ॥ २४८ ॥ २४९ ॥

---

१ घ. °च्चर्यः प्र° । २ च. °को दक्षिणो ढे° । ३ घ. ढेक्की । ४ च. °चनप्रियः । ली° ।

गजो वर्णयतिः सिंहः करणः सारसस्तथा ।
चण्डतालश्चन्द्रकलालयस्कन्दाडतालिकाः ॥ २५० ॥
धंत्ता द्वंद्वमुकुन्दौ च कुविन्दश्च कलध्वनिः ।
गौरीसरस्वतीकण्ठाभरणो भग्नसंज्ञकः ।
तालो राजमृगाङ्कश्च राजमार्तण्डसंज्ञकः ॥ २५१ ॥

॥ २५० ॥ २५१ ॥

निःशङ्कः शार्ङ्गदेवश्चेत्येते सोढलसूनुना ।
देशीतालाः समादिष्टा विंशत्यभ्यधिकं शतम् ॥ २५२ ॥

शार्ङ्गदेवश्चेति शतादुपरि विंशस्य तालस्य स्वनामकरणेन देशीतालानामनन्तत्वं स्वे( त्वात्स्वे )च्छाकृतनामयुक्तत्वं दर्शितवान्ग्रन्थकारः । विंशत्यभ्यधिकं शतमितीयत्तापरिच्छेदस्तु प्रसिद्धिमाश्रित्य कृत इति मन्तव्यम् ॥ २५२ ॥

गुर्वाद्याश्चतुरस्रादेः खण्डयित्वा निवेशिताः ॥ २५३ ॥
यद्वा लघ्वादिखण्डानामाधिक्यमिह दृश्यते ।
तेनैषां खण्डतालत्वमाभाषन्त पुरातनाः ॥ २५४ ॥

देशीतालानां खण्डतालत्वं सोपपत्तिकं दर्शयति—**गुर्वाद्या इत्यादिना** ॥ २५३ ॥ २५४ ॥

द्रुताद्याद्यक्षरैर्ज्ञेयं सन्ति संज्ञान्तराण्यपि ।
अर्धमात्रं तथा व्योम व्यञ्जनं बिन्दुकं द्रुते ॥ २५५ ॥
लघुनि व्यापकं ह्रस्वं मात्रिकं सरलं तथा ।
द्विमात्रं च कला वक्रं दीर्घं गुरुणि कीर्तितम् ॥ २५६ ॥
प्लुते त्र्यङ्गं त्रिमात्रं च दीप्तं सामोद्भवं तथा ।
द्रुते शंभुर्लघौ देवी गुरौ गौरीयुतः शिवः ॥ २५७ ॥
प्लुते त्रयो विरिञ्च्याद्या देवता मुनिभिः स्मृताः ।
द्रुते बिन्दुर्विरामान्ते तूक्ता मात्रायुता लिपिः ॥ २५८ ॥
प्लुते मात्रायुतो वक्रो लिपौ श्रीशार्ङ्गिणोदितः ।
तालानां लक्षणं वक्ष्ये तेषां सूरिमताश्रितम् ॥ २५९ ॥

**द्रुताद्याद्यक्षरैर्ज्ञेयमिति** । द्रुतादि द्रुतलघुगुरुप्लुताः । आद्याक्षरैः स्वनामाक्षरैः । द्रुतस्याऽऽद्यक्षरं द इति लघोराद्यक्षरं ल इति गुरोराद्यक्षरं ग इति प्लुतस्याऽऽद्यक्षरं प इति वक्ष्यमाणेषु लक्षणवाक्येषु स्थितैरेतैरक्षरैर्द्रुतादि ज्ञेयं भवति । द्रुतादी-

१ ख. ग. यता । २ च. °षां भूरि° ।

नामधर्मामात्रादिसंज्ञान्तराण्यपि सन्ति तान्यपि लक्षणवाक्येषु द्रष्टव्यानि । तत्र मगणादयोऽप्यष्टौ गणाः क्वचिन्मकाराद्यक्षरैर्ज्ञेया भवन्ति ॥ २५५ ॥ २५६ ॥ २५७ ॥ २५८ ॥ २५९ ॥

लघ्वादितालो लोकेऽसौ रासः

। इत्यादितालः ( १ )

द्वौ लो द्वितीयकः ।

० ० । इति द्वितीयः ( २ )

द्रुताद्द्रुतौ विरामान्तौ तृतीयः स्यात्

० ० ०̐ इति तृतीयः (३)

चतुर्थकः ॥ २६० ॥

लघुद्वयं द्रुतश्चैकः

। । ० इति चतुर्थकः ( ४ )

पञ्चमस्तु द्रुतद्वयम् ।

० ० इति पञ्चमः ( ५ )

ताले निःशङ्कलीलाख्ये प्लुतौ द्वौ गद्वयं लघुः ॥ २६१ ॥

ऽ̐ ऽ̐ ऽ ऽ । इति निःशङ्कलीलः ( ६ )

देशीतालानां लक्षणानि स्पष्टार्थानि । ननु चात्र केषांचित्तालानां लक्षणेषु नामभेदेऽप्यर्थभेदाभावादर्थपौनरुक्त्यं प्रतीयते । यथा झण्टुको द्वौ द्रुतौ लौ द्वाविति झण्टुकतालस्य लक्षणम् । अड्डतालो द्वौ लघुद्वयमित्यड्डतालस्य लक्षणम् । द्रुतद्वंद्वाल्लघुद्वंद्वाद्वैकुण्ठो मङ्गलो भवेदिति सालगसूडस्य निःसारुभेदस्य वैकुन्द( ण्ठ )स्य लक्षणम् । एतेषां त्रयाणां तालानां नामभेद एव न स्वरूपभेदः । एवं दर्पणमदनमकरन्दानां निःसारुहंसलीलहंसानां जपाशील (?) कमलानामुद्वीक्षणसौन्दरसगण ( ? ) प्रतिमण्ठानां यथा च ढेङ्कीवल्लभमण्ठयोः करुणामरयोस्त्रिभङ्गिरतिलीलयोः क्रीडानन्दयोः शङ्खप्रतितालयोर्मङ्गल (ला) भग( र )[ ण ]प्रतिमण्ठयोः कान्ताररतितालयोः कलापविचारयोस्तृतीयान्तरक्रीडयोर्वर्णभिन्नराजमृगाङ्कयोरभङ्गोत्सवतालयोर्विजयद्वितीययोर्मिथः स्वरूपभेदाभावात्पौनरुक्त्यं दोष इति चेत् । अत्रोच्यते । कल्लिनाथसुधियोचितमुत्तरं लक्ष्यानुसारतः पौनरुक्त्यं तालगतं प्रति । इह पुनरुक्ततया परिगणितेषु कुडुक्कादितालेषु स्थितानां लघ्वादीनां देशीगतत्वेनानियतप्रमाणत्वात्प्रमाणभेदेनापि स्वरूपभेदादर्थपौनरुक्त्याभावाददोष इति । तथा हि । कुडुक्कतालस्तु गोपाल-

नायकेन रागकदम्बे रेवगुप्तवदप्रयुक्तः । तत्र स्थितो लघुश्चतुर्लघ्वक्षरोच्चारमितो दृश्यते । तदनुसारेण तत्र स्थितो द्रुतोऽपि द्विलघ्वक्षरोच्चारमितो दृश्यते । अड्डताल्यां तु पञ्चलघ्वक्षरोच्चारमितो लघुस्तदर्धमितो द्रुतश्च दृश्यते । निःसारुभेदे वैकुण्ठे तु षड्लघ्वक्षरोच्चारमितो लघुस्तदर्धमितो द्रुतश्च वर्तते । एवं सर्वत्र त्रयाणां पौनरुक्त्ये लघ्वादीनां प्रमाणभेदो द्रष्टव्यः । तथा ढेङ्क्यां पञ्चलघ्वक्षरोच्चारमितो लघुस्तद्द्वैगुण्येन गुरुश्च दृश्यते । वल्लभमण्ठे तु चतुर्थलघ्वक्षरोच्चारमितो लघुस्तद्द्वैगुण्येन गुरुश्च दृश्यते । एवं द्वयोः पौनरुक्त्येऽपि प्रकृतन्यूनाधिकप्रमाणेषु लक्ष्यानुसारेण द्वाभ्यां लघ्वादिप्रमाणाभ्यां तालस्वरूपभेदो द्रष्टव्यः । किंचित्क्वचिद्गीतादावेकस्यैव तालस्याऽऽवृत्तिषु प्रमाणभेदो दृश्यते । क्वचिदेकस्यामप्यावृत्तौ लघ्वादिष्वंशेषु प्रमाणभेदो दृश्यते । एतत्सर्वं देशीत्वस्य भूषणमेव न दूषणमिति देशीतालरहस्यमाचार्याभिमतमवगन्तव्यम् । नन्वत्र देशीताललक्षणेषु द्रुतौ विरामान्तौ तृतीयः स्यादिति तृतीयतालादिषु केषुचिद्देशीतालेषु द्रुतशेषत्वेन विरामः श्रूयते । तथा ' गजलीले विरामान्तमुक्तं लघुचतुष्टयम् ' इति गजतालादिषु शेषत्वेन विरामः श्रूयते । तत्र विरामः किंरूप इति चेत् । उच्यते । उभयत्रापि विरामो विच्छेदपर्यायः । क्रियानन्तरविश्रान्तिरूपत्वाद्भिन्नकालश्च । तथा हि—द्रुतशेषो विरामो लक्ष्येषु द्रुत्य( ता )र्धकालो दृष्टः । लघुशेषस्तद्द्रुतकाल इति । एवं विरामस्य भिन्नकालत्वे गुरुप्लुतयोर्विरामान्तवचनमेव ज्ञापकम् । तथा हि । यदि गुरुर्विरामान्त इत्युच्येत ततो गुरोर्विरामोऽपि तदर्धत्वेन लघुः कालः स्यात् । ततश्च प्लुत एव प्रकारान्तरेणोक्तः स्यात् । तथा प्लुतस्यापि विरामः सार्धमात्रकालो भवेत् । तथा च प्लुतः सार्धचतुर्मात्रिको भवति । तथा च तादृशस्य तालावयवस्य क्वचिदप्यनुपलम्भादपसिद्धान्तताऽप्रयोगता च प्रसज्येत । तस्माद्गुरुप्लुतयोः सविरामत्वा( त्व ? )वचनमेव द्रुतलघुविरामयोर्वैरूप्यं ज्ञापयतीति सिद्धम् । अत्र केचिदिदानींतना भरतंमन्या विरामस्यापि तालावयवत्वमङ्गीकृत्य प्रस्तारादिषु तालप्रत्ययेषु तस्यापि समावेशं कृत्वा स्ववैदुष्यं प्रकाशयन्तोऽज्ञान्प्रतारयन्ति । तैः स्वकीयमेव शास्त्रापरिज्ञानं प्रकाशितमिति प्रकाशयताऽभिनवभरताचार्येण सर्वज्ञेन चतुरेण कल्लिनाथविदुषा विरामस्य तालावयवत्वाभावे चतुरो हेतूनुपन्यस्य संग्रहश्लोकः कृतः ।

यथा—" अक्रियत्वात्क्रियाभावरूपत्वात्पारतन्त्र्यतः ।
विरूपत्वाद्विरामो न प्रस्तारादिकमर्हति " इति ॥

विरामः प्रस्तारादिकं नार्हतीति कार्यनिषेधेन कारणस्य तालावयवत्वस्य निषेधो नान्तरीयकतया सिद्धो वेदितव्यः । अत्र चत्वारोऽपि हेतवः पृथक्साध्यसाधनसमर्था द्रष्टव्याः । एवमनभ्युपगच्छन्तं प्रति तेनैव व्याहतिर्दर्शिता श्लोकद्वयेन—

"क्रियाविश्रान्तिरूपस्य विरामस्य भवेद्यदि ।
प्रस्तारादिकमेतद्वल्लयानन्त्यं प्रसज्यते ॥
तत्स्वीकारे त्वतिव्याप्त्या शास्त्रं व्याकुलितं भवेत् ।
अतो विरामसहितप्रस्तारादिकथा वृथा" इति ।

प्रकृतमनुसरामः ॥ २६० ॥

दर्पणे द्रुद्वयं गश्च

० ० ऽ इति दर्पणः ( ७ )

सिंहाविक्रमसंज्ञकः ॥

गत्रयं लः पलगपाः

ऽ ऽ ऽ । ऽे । ऽ ऽे इति सिंहविक्रमः (८)

रतिलीले लघू गुरू ॥ २६२ ॥

। । ऽ ऽ इति रतिलीलः (९)

लघ्वन्ते द्रुत्रयं सिंहलीलो

० ० ० इति सिंहलीलः (१०)

द्वौ यगणस्तथा ।

कन्दर्पतालस्तस्यैव पर्यायः स्यात्परिक्रमः ॥ २६३ ॥

० ० । ऽ ऽ इति कन्दर्पः (११)

लघुर्द्रुतद्वयं चान्ते गुरुः स्याद्वीरविक्रमः ।

। ० ० ऽ इति वीरविक्रमः (१२)

रङ्गश्चतुर्द्रुती गश्च

० ० ० ० ऽ इति रङ्गः (१३)

श्रीरङ्गः सगणो लपौ ॥ २६४ ॥

। । ऽ । ऽे इति श्रीरङ्गः (१४)

विरामान्तद्रुतद्वंद्वान्यष्टौ लघु च चच्चरी ।

० ०́ ० ०́ ० ०́ ० ०́ ० ०́ ० ०́ ० ०́ ० ०́ । इति चच्चरी( १५ )

प्रत्यङ्गो मगणो लौ द्वौ

ऽ ऽ ऽ । । इति प्रत्यङ्गः (१६)

यतिलग्नो द्रुतौ लघुः ॥ २६५ ॥

॥ २६१ ॥ २६२ ॥ २६३ ॥ २६४ ॥ २६५ ॥

---

१ छ. °यानं तत्सस° । ज. °यानं तत्प्रस° ।

० । इति यतिलग्नः (१७)

गजलीलो विरामान्तमुक्तं लघुचतुष्टयम् ।

।।।। इति गजलीलः (१८)

हंसलीले विरामान्तं लघुद्वयमुदाहृतम् ॥ २६६ ॥

।। इति हंसलीलः (१९)

वर्णभिन्नो द्रुतौ लो गः

० ० । ऽ इति वर्णभिन्नः (२०)

त्रिभङ्गो लगुरुप्लुताः ।

। ऽ ऽ॑ इति त्रिभिन्नः (२१)

राजचूडामणिर्दौ द्वौ नगणश्च द्रुतौ लगौ ॥ २६७ ॥

० ० ।। । ० ० । ऽ इति राजचूडामणिः (२२)

मगणो लप्लुतौ रङ्गोद्योतः

ऽ ऽ ऽ । ऽ॑ इति रङ्गोद्योतः (२३)

रङ्गप्रदीपकः ।

तो गप्लुतौ

ऽ ऽ । ऽ ऽ॑ इति रङ्गप्रदीपकः (२४)

राजतालो गपौ दौ च गलौ प्लुतः ॥ २६८॥

ऽ ऽ॑ ० ० ऽ । ऽ॑ इति राजतालः(२५)

त्र्यस्रो मिश्रो द्विधा वर्णस्त्र्यस्रो लौ द्वौ लघुद्वयम् ।

।। ० ० ।। इति त्र्यस्रो वर्णः ।

मिश्रो द्रुतचतुष्काः स्युर्विरामान्तास्त्रयः पृथक् ॥२६९॥

ततः पगौ दौ गलौ गः

० ० ० ०̍ ० ० ० ०̍ ० ० ० ०̍ ऽ॑ ऽ ० ० ऽ । ऽ इति मिश्रवर्णः ।

चतुरस्रोऽपि दृश्यते ।

गलौ द्रुतौ गुरुश्चेति ।

ऽ । ० ० ऽ इति चतुरस्रवर्णः (२६)

सिंहाविक्रीडितः पुनः ॥२७०॥

लपौ गपौ पगौ लाद्गः पलौ पश्च

॥ २६६ ॥ २६७ ॥ २६८ ॥ २६९ ॥ २७० ॥

। ऽ ऽ ऽ ऽ ऽ । ऽ ऽ । ऽ इति सिंहविक्रीडितः(२७)

जयः पुनः।

ओ लघुर्द्वौ द्रुतौ पश्च

। ऽ । । ० ० ऽ इति जयः (२८)

वनमाली चतुर्द्रुती ॥२७१॥

लघुर्द्वौ द्वौ गुरुरिति

० ० ० ० । ० ० ऽ इति वनमाली (२९)

लप्लुतौ द्वौ द्रुतौ प्लुतः।

हंसनादः

। ऽ ० ० ऽ इति हंसनादः (३०)

सिंहनादो यगणश्च लघुर्गुरुः ॥२७२॥

। ऽ ऽ । ऽ इति सिंहनादः (३१)

कुडुक्को द्वौ द्रुतौ लौ द्वौ

० ० । । इति कुडुक्कः (३२)

विरामान्तद्रुतद्वयात्।

द्रुतौ तुरङ्गलीलः स्यात्

० ० ० ० इति तुरङ्गलीलः(३३)

भवेच्छरभलीलकः ॥२७३॥

लौ द्वौ चतुर्द्रुती द्वौ लौ

। । ० ० ० ० । । इति शरभलीलः (३४)

सिंहनन्दनकः पुनः।

तपौ लगौ द्रुतौ गौ लः पलपा गो लघू ततः ॥२७४॥

चत्वारो लघवोऽशब्दाः

ऽ ऽ । ऽ । ऽ ० ० ऽ ऽ । ऽ । ऽ ऽ । । ४× इति सिंहनन्दनः (३५)

त्रिभङ्गिः सगणाद्गुरुः।

। । ऽ ऽ इति त्रिभङ्गिः (३६)

रङ्गाभरणताले ताल्लुप्लुतौ

ऽ ऽ । । ऽ इति रङ्गाभरणः (३७)

मण्ठके पुनः ॥ २७५॥

॥ २७१ ॥ २७२ ॥ २७३ ॥ २७४ ॥ २७५ ॥

साच्चतुर्लघु निःशब्दम्

।। ऽ ४× इति मण्ठः (३८)

यद्वा भाद्भावशब्दकौ ।

ऽ।। २* इति वा मण्ठः ।

भाच्चतुर्लघु निःशब्दं भवेन्मुद्रितमण्ठके ।

ऽ।। ४* इति मुद्रितमण्ठः ।

मण्ठो न जौ लघुर्यद्वा

।।।।ऽ।। इति वा मण्ठः ।

प्रोक्ताः षडपरा भिदाः ॥२७६॥

मण्ठरूपकवेलायाम्

इति दशविधमण्ठः ।

कोकिलाप्रियनाम्नि तु ।

गलपाः स्युः

ऽ। ऽ̀ इति कोकिलाप्रियः (३९)

विरामान्तौ लघू निःसारुको मतः ॥२७७॥

।́ ।́ इति निःसारुकः (४०)

लघुर्गुरुद्रुतद्वंद्वं राजविद्याधरो भवेत् ।

।ऽ ० ० इति राजविद्याधरः (४१)

सगणाद्वितीयं यत्र स तालो जयमङ्गलः ॥२७८॥

।।ऽ।।ऽ इति जयमङ्गलः (४२)

मल्लिकामोदताले तु लौ द्वौ द्रुतचतुष्टयम् ।

।। ० ० ० ० इति मल्लिकामोदः (४३)

विजयानन्दसंज्ञे तु लघुद्वंद्वं गुरुत्रयम् ॥ २७९ ॥

।।ऽऽऽ इति विजयानन्दः (४४)

क्रीडा द्रुतौ विरामान्तौ चण्डनिःसारुकश्च सः ॥

०́ ०́ इति क्रीडातालश्चण्डनिःसारुकश्च (४५)

जयश्री रगणाल्लो गः

ऽ।ऽ।ऽ इति जयश्रीः (४६)

दौ लौ लो मकरन्दकः ॥२८०॥

० ० ।।। इति मकरन्दः (४७)

लपौ गलौ प्लुतः कीर्तिः

। ऽ ऽ । ऽ इति कीर्तितालः (४८)

श्रीकीर्तिर्द्वौ लघू गुरू ।

।। ऽ ऽ इति श्रीकीर्तिः (४९)

लो द्रुतौ प्रतितालः स्यात्

। ० ० इति प्रतितालः (५०)

विजयः पगपा लघुः ॥ २८१॥

ऽ ऽ ऽ इति विजयः (५१)

गुर्वोर्मध्ये तु चत्वारो बिन्दवो बिन्दुमालिनी(नि) ।

ऽ ० ० ० ० ऽ इति बिन्दुमाली ( ५२ )

समो लौ दौ विरामान्तौ

।। ०̍ ०̍ इति समः (५३)

लघुर्दौ पश्च नन्दनः ॥ २८२ ॥

। ० ० ऽ इति नन्दनः ( ५४ )

गुरुद्रुतप्लुताः प्रोक्ता मण्ठिका

ऽ ० ऽ इति मण्ठिका ( ५५ )

अन्यैस्तु लद्वयम् ।

विरामादिद्रुतौ द्वा च मण्ठिका परिकीर्तिता ॥ २८३ ॥

०̍ ० इति मण्ठिका ।

दीपको दलगा द्विर्द्विः

० ० ।। ऽ ऽ इति दीपकः ( ५६ )

लौ द्वौ गुरुरुदीक्षणः ।

।। ऽ इत्युदीक्षणः ( ५७ )

रगणो ढेङ्किका कैश्चिदेष प्रोक्तस्तु योजनः ॥ २८४ ॥

ऽ । ऽ इति ढेङ्की ( ५८ )

द्विश्चत्वारो विरामान्ता द्रुतास्तु विषमे मताः ।

० ० ० ०̍ ० ० ० ०̍ इति विषमः (५९)

द्वौ लौ द्वौ दौ लघुर्दौ द्वौ कीर्तिता वर्णमण्ठिका ॥२८५॥

॥ २८१ ॥ २८२ ॥ २८३ ॥ २८४ ॥ २८५ ॥

। । ० ० । ० ० इति वर्णमण्ठिका ( ६० )

अभिनन्दो लघुद्वंद्वं द्रुतयुग्मं गुरुस्तथा ।

। । ० ० ऽ इत्यभिनन्दः ( ६१ )

लप्लुतौ सगणोऽनङ्गः

। ऽ̀ । । ऽ इत्यनङ्गः ( ६२ )

नान्दी लो दौ लघू गुरू ॥२८६॥

। ० ० । । ऽ ऽ इति नान्दी ( ६३ )

मल्लतालो विरामान्तद्विबिन्दून्तं चतुर्लघु ।

। । । । ० ०̍ इति मल्लतालः ( ६४ )

उक्तश्चतुर्धा कङ्कालः पूर्णः खण्डः समोऽसमः ॥२८७॥

चतुर्द्रुती गलौ पूर्णः

० ० ० ० ऽ । इति पूर्णः ।

खण्डो दौ द्वौ गुरुद्वयम् ।

० ० ऽ ऽ इति खण्डः ।

समो गुरू द्वौ लघ्वन्तौ

ऽ ऽ । इति समः ।

विषमो लाद्गुरुद्वयम् ॥ २८८ ॥

। ऽ ऽ इति विषमः ।

इति चतुर्धा कङ्कालः*(६५)

कन्दुको लौ च सगणः

। । । । ऽ इति कन्दुकः ( ६६ )

द्रुतेन त्वेकतालिका ।

० इत्येकताली ( ६७ )

कुमुदो लाद्द्रुतौ लौ गश्च

। ० ० । । ऽ इति कुमुदः ( ६८ )

अन्येषां लश्चतुर्द्रुती ॥ २८९ ॥

अन्ते गुरुश्च कुमुदः

॥ २८६ ॥ २८७ ॥ २८८ ॥ २८९ ॥

---

* अस्मादग्रे ख. ग. संज्ञितपुस्तकयोः “ चतुर्लो गश्चतुर्लो गः षड्लला पो गो द्रुतौ लपौ । षड्द्रुता नव लाश्चेति प्रोक्ताः कनकमेरुके । । । । ऽ । । । । ऽ । । । । । । ऽ̀ ऽ ० ० । ऽ̀ ० ० ० ० ० ० । । । । । । । । । इति कनकमेरुः । ” इत्यधिकं वर्तते ।

। ० ० ० ० ऽ इति वा कुमुदः ।

चतुस्तालो गुरोः परे ।

त्रयो द्रुताः

ऽ ० ० ० इति चतुस्तालः ( ६९ )

डोम्बुली तु द्विर्लघु स्याद्विरामवत् ॥ २९० ॥

। । इति डोम्बुली ( ७० )

अभङ्गो लप्लुतौ

। ऽे इत्यभङ्गः ( ७१ )

रायवङ्कोलो रगणाद्द्रुतौ ।

ऽ । ऽ ० ० इति रायवङ्कोलः ( ७२ )

वसन्तो न्मौ

। । । ऽ ऽ ऽ इति वसन्तः ( ७३ )

विरामान्तलघुना लघुशेखरः ॥ २९१ ॥

। इति लघुशेखरः ( ७४ )

प्रतापशेखरो दीप्ताद्विरामान्तं द्रुतद्वयम् ॥

ऽे ० ० इति प्रतापशेखरः ( ७५ )

झम्पातालो विरामान्तं द्रुतद्वंद्वं लघुस्तथा ॥ २९२ ॥

० ० । झम्पातालः ( ७६ )

गजझम्पो गुरोरूर्ध्वं विरामान्तं द्रुतत्रयम् ।

ऽ ० ० ० इति गजझम्पः ( ७७ )

चतुर्मुखो जप्लुताभ्यां स एवोन्मातृको मतः ॥ २९३ ॥

। ऽ । ऽे इति चतुर्मुखः ( ७८ )+

दद्वयं गश्च मदनः

० ० ऽ इति मदनः ( ७९ )

सो भो वा प्रतिमण्ठकः ।

कोल्लकोऽन्यैरयं प्रोक्तः

। । ऽ ऽ । । इति प्रतिमण्ठकः ( ८० )

पार्वतीलोचने पुनः ॥ २९४ ॥

॥ २९० ॥ २९१ ॥ २९२ ॥ २९३ ॥ २९४ ॥

---

+ अत ऊर्ध्वं ख. ग. संज्ञितपुस्तकयोः " प्लुता यत्र त्रयोऽक्षीणि दशापि गुरवो भुजाः । गुरवः पञ्च वक्त्राणि तालो दशभुजस्ततः ॥ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ(?) " इत्यधिकं वर्तते ।

मलपा द्वौ गुरू दौ द्वौ

ऽ ऽ ऽ । ऽ ऽ ऽ ० ० इति पार्वतीलोचनः ( ८१ )

रतितालो लघुर्गुरुः ।

। ऽ इति रतितालः ( ८२ )

लीला द्लौ पः

० । ऽ इति लीलातालः ( ८३ )

करणयतौ द्रुतचतुष्टयम् ॥

० ० ० ० इति करणयतिः ( ८४ )

ललितो द्वौ द्रुतौ लो गः

० ० । ऽ इति ललितः ( ८५ )

गारुगिस्तु चतुर्द्रुती ॥ २९५ ॥

विरामान्ता बुधैरुक्ता

० ० ० ० इति गारुगिः ( ८६ )

राजनारायणः पुनः ।

द्रुतौ द्वौ जगणो वक्रः

० ० । ऽ । ऽ इति राजनारायणः ( ८७ )

लक्ष्मीशे तु द्रुतद्वयम् ॥ २९६ ॥

विरामान्तं लप्लुतौ च

० ० । ऽ इति लक्ष्मीशः ( ८८ )

तालस्तु ललितप्रियः ।

ऊर्ध्वं लघुभ्यां रगणः

। । ऽ । ऽ इति ललितप्रियः ( ८९ )

स्यातां श्रीनन्दने भपौ ॥ २९७ ॥

ऽ । । ऽ इति श्रीनन्दनः ( ९० )

जनको नयसा वक्रः

। । । । ऽ ऽ ऽ । । ऽ इति जनकः ( ९१ )

वर्धनो द्वौ द्रुतौ लपौ ।

० ० । ऽ इति वर्धनः ( ९२ )

विरामान्तौ द्रुतौ बिन्दुस्त्रिमात्रो रागवर्धनः ॥ २९८ ॥

॥ २९५ ॥ २९६ ॥ २९७ ॥ २९८ ॥

---

१ स. ग. °गिश्च च° ।

०ऺ० ऽ इति रागवर्धनः ( ९३ )

द्रुतैः षड्भिस्तु षट्तालः

०००००० इति षट्तालः ( ९४ )

अन्तरक्रीडा तु कथ्यते ।

द्रुतत्रयं विरामान्तम्

००ऺ इत्यन्तरक्रीडा ( ९५ )

हंसे सविरती लघू ॥ २९९ ॥

।।ऺ इति हंसः ( ९६ )

लघुप्लुतावुत्सवः स्यात्

। ऽ इत्युत्सवः ( ९७ )

गो दौ दीप्तो विलोकिते ॥

ऽ ० ० ऽ इति विलोकितः ( ९८ )

गजश्चतुर्ला धाराऽसौ

।।।। इति गजः ( ९९ )

लौ द्रौ वर्णयतिर्भवेत् ॥ ३०० ॥

।। ० ० इति वर्णयतिः ( १०० )

सिंहे लदौ लत्रयं च

। ० ।।। इति सिंहः ( १०१ )

गुरुणा करुणो मतः ।

ऽ इति करुणः ( १०२ )

लघुर्द्रुतानां त्रितयं लघू द्वौ सारसः स्मृतः ॥ ३०१ ॥

। ० ० ० इति सारसः ( १०३ ॥

द्रुतत्रयं लघुद्वंद्वं चण्डताले बभाषिरे ।

० ० ० ।। इति चण्डतालः ( १०४ )

मगणश्च त्रयो दीप्ता लघुश्चन्द्रकलाभिधे ॥ ३०२ ॥

ऽ ऽ ऽ ऽ ऽ ऽ । इति चन्द्रकला ( १०५ )

गलौ प्लुतत्रयं वक्रः प्लुतो बिन्दुत्रयं लये ।

ऽ । ऽ ऽ ऽ ऽ ऽ ० ० ० इति लयः ( १०६ )

रो द्रुतौ द्वौ गुरू स्कन्दः

॥ २९९ ॥ ३०० ॥ ३०१ ॥ ३०२ ॥

ऽ । ऽ ० ० ऽ ऽ इति स्कन्दः ( १०७ )

अड( ड्ड )ताली दो लघुद्वयम् ॥ ३०३ ॥

इममेवोचिरे तालं केचित्त्रिपुटसंज्ञया ।

० । । इत्यड( ड्ड )ताली ( १०८ )

द्वौ लौ द्वौ दौ लगौ धत्ता

। । ० ० । ऽ इति धत्ता ( १०९ )

द्वंद्वः सतगणौ प्लुतः ॥ ३०४ ॥

। । ऽ ऽ ऽ । ऽ॑ इति द्वंद्वः ( ११० )

मुकुन्दे तु लघोर्बिन्दुचतुष्टयमथो गुरुः ।

। ० ० ० ० ऽ इति मुकुन्दः ( १११ )

कुविन्दके लघुर्बिन्दुद्वयं गुरुरथ प्लुतः ॥ ३०५ ॥

। ० ० ऽ ऽ॑ इति कुविन्दकः ( ११२ )

कलध्वनिर्लघुद्वंद्वं गुरुर्लघुरथ प्लुतः ।

। । ऽ । ऽ॑ इति कलध्वनिः ( ११३ )

पञ्चभिर्लघुभिर्गौरी

। । । । । इति गौरी ( ११४ )

द्वौ गुरू द्वौ लघुद्रुतौ ॥ ३०६ ॥

ताले सरस्वतीकण्ठाभरणे शार्ङ्गिसंमतौ ।

ऽ ऽ । । ० ० इति सरस्वतीकण्ठाभरणः ( ११५ )

भग्नताले चतुर्बिन्दु नगणश्च विरामवान् ॥३०७॥

० ० ० ० । । ।ʼ इति भग्नतालः ( ११६ )

ताले राजमृगाङ्के तु द्रुतौ लघुरथो गुरुः ।

० ० । ऽ इति राजमृगाङ्कः ( ११७ )

गुरुर्लघुद्रुतस्ताले राजमार्तण्डसंज्ञके ॥ ३०८ ॥

ऽ । ० इति राजमार्तण्डः ( ११८ )

निःशङ्कसंज्ञके ताले लगुरू पगुरू गलौ ।

। ऽ ऽ ऽ॑ ऽ ऽ ऽ । इति निःशङ्कः ( ११९ )

शार्ङ्गदेवे द्रुतद्वंद्वं गप्लुतौ गद्वयं लघुः ॥ ३०९ ॥

० ० ऽ ऽ॑ ऽ ऽ । इति शार्ङ्गदेवः ( १२० )

इति विंशत्युत्तरशतं देशीतालाः ।

॥ ३०३ ॥ ३०४ ॥ ३०५ ॥ ३०६ ॥ ३०७ ॥ ३०८ ॥ ३०९ ॥

अन्येऽपि सन्ति भूयांसस्तालास्ते लक्ष्मवर्त्मनि ।
प्रसिद्धिविधुरत्वेन शास्त्रेऽस्मिन्न प्रदर्शिताः ३१० ॥

**अन्येऽपीत्यादि** । विंशत्यभ्यधिकाच्छतादन्येऽपि भूयांसस्तालाः सन्ति । तर्हि किमर्थं न प्रदर्श्यन्त इत्यत आह—**प्रसिद्धिविधुरत्वेनेति** ॥ ३१० ॥

तद्भेदप्रत्ययार्थं तु लघूपाया भवन्त्यमी ।
प्रस्तारसंख्ये नष्टं चोद्दिष्टं पातालकस्ततः ॥ ३११ ॥
द्रुतमेरुर्लघोर्मेरुर्गुरुमेरुः प्लुतस्य च ।
मेरुः संयोगमेरुश्च खण्डप्रस्तारकस्ततः ॥ ३१२ ॥
प्राचां चतुर्णां मेरूणां नष्टोद्दिष्टे पृथक्पृथक् ।
एकोनविंशतिरिति प्रत्ययास्तान्ब्रुवेऽधुना ॥ ३१३ ॥

**तद्भेदप्रत्ययार्थं त्विति** । तेषां प्रसिद्धानामप्रसिद्धानां च तालानां भेदस्य परिज्ञानायामी वक्ष्यमाणाः प्रस्तारादयः। **लघूपाया इति** । ज्ञेयस्यातिमहत्त्वेऽपि तज्ज्ञानसाधनानामेतेषामल्पत्वेन ते वक्तुं सुलभा इत्यर्थः। **प्रत्यया इति**। तद्भेदप्रत्ययार्थं त्वित्युक्तत्वात्प्रत्ययहेतुत्वेन प्रस्तारादयोऽपि प्रत्यया इत्युपचर्यन्ते । प्रतीयन्त एतैरर्थविशेषा इति वा प्रत्ययाः । क्रमेण ताल्ँलक्षयितुमाह—**तान्ब्रुवेऽधुनेति** ॥ ३११ ॥ ३१२ ॥ ३१३ ॥

तत्र प्रस्तारं लक्षयति—

न्यस्याल्पमाद्यान्महतोऽधस्ताच्छेषं यथोपरि ॥ ३१४ ॥

**न्यस्याल्पमित्यादि** । स्वाभिमतं यं कंचन तालं प्रकृतत्वेनाऽऽदौ लिखित्वा तदवयवेष्वाद्यान्महतः । अत्र महच्छब्देन लघुगुरुप्लुता उच्यन्ते । अयमर्थः । यत्राऽऽद्यो लघुर्महांस्ततोऽधस्तात्तदपेक्षयाऽल्पो द्रुतो लेखनीयः । यत्र त्वाद्यो गुरुर्महांस्ततोऽधस्तदपेक्षयाऽल्पो लघुर्लेखनीयः । यत्र पुनराद्यः प्लुतो महांस्ततोऽधस्तदपेक्षयाऽल्पो गुरुर्लेखनीयः । एवं नित्यमहान्प्लुतो नित्याल्पो द्रुतः । लघुगुर्वोस्त्वपेक्षया महत्वमल्पत्वं च द्रष्टव्यम् । **शेषं यथोपरीति** । लिखेदिति शेषः । यस्त्वनेकावयवस्तालस्तस्याऽऽद्यान्महतोऽवयवादधस्तादल्पं न्यस्य शेषं दक्षिणास्थितत्वेन लेखनीयम् । यथोपरिपङ्क्तौ तथैवाधो लिखेदित्यर्थः । यस्त्वेकावयवस्तालो यश्चैकमहान्त्यावयवस्तत्रोपरितनस्यावयवान्तरस्याभावादेवास्य लक्षणांशस्य(स्या) व्यापार एव ॥ ३१४ ॥

प्रागूने वामसंस्थांस्तु संभवे महतो लिखेत् ।
अल्पानसंभवे तालपूर्त्यै भूयोऽप्ययं विधिः ॥ ३१५ ॥

---

१ च. °दज्ञापनार्थं ।

**सर्वद्रुतावधिः कार्यः प्रस्तारोऽयं लघौ गुरौ ।**
**प्लुते व्यस्ते समस्ते च न तु व्यस्ते द्रुतेऽस्ति सः ॥३१६॥**

इति प्रस्तारः ।

**प्रागून इति** । प्रथमं न्यूने तालांशे तालपूर्त्यै प्रकृततालपरिपूर्तये संभवे सति । **महत इति**। प्लुतगुरुलघूनित्यर्थः। असंभवेऽल्पान्द्रुतानित्यर्थः । वामसंस्थाल्लिँखकापेक्षया पूर्वलिखितावयवसंनिहितत्वेन वामभागस्थिताल्लिँखेदित्यर्थः । भूयोऽप्ययं विधिः सर्वद्रुतावधिः कार्य इत्यनेन वीप्सा गम्यते । भूयो भूयोऽपीति । द्वितीयादिपङ्क्तिस्थांस्तालान्प्रकृतीकृत्याधोऽधः सर्वद्रुततालभेदान्तं लिखेदित्यर्थः । **प्रस्तारोऽयमित्यादि** । सोऽयमुक्तलक्षणः प्रस्तारः । व्यस्ते केवले लघौ यथा—एकलघुं लिखित्वा तदधस्ततोऽन्यद्द्रुतं न्यसेत् । उपरितालावयवाभावाच्छेषाभावः । प्रागूने तालपूर्त्यै महतोऽसंभवादल्पं द्रुतं वामसंस्थं लिखेत् । एवं द्वितीयस्य भेदस्य सर्वद्रुतत्वात्ततः प्रस्तारो नोत्पद्यते । अतो लघुप्रस्तारे भेदद्वयमेव । व्यस्ते गुरौ प्रस्तारो यथा—एकं गुरुं लिखित्वा तदधस्तदपेक्षयाऽल्पं लघुं न्यसेत् । अत्रापि पूर्ववच्छेषाभावः । प्रागूने तालपूर्त्यै लघोर्महतः संभवात्तं वामसंस्थं लिखेत् । एवं द्वितीयभेदे लघुद्वयमभूत् । तत आद्याल्लघोरधस्तादल्पं द्रुतं न्यसेत् । उपरि लघोः सद्भावात्तदधः शेषत्वे लघुं लिखेत् । प्रागूने तालपूर्त्यै द्रुतं लिखेत् । एवं द्रुतद्वयं लघुश्च तृतीयो भेदः । ततश्च लघोरधो द्रुतं लिखेत् । उपर्यभावाच्छेषाभावः । प्रागूने संभवाद्द्रुतसंनिहितत्वेन लघुं लिखेत् । ततस्तालपूर्त्यर्थमसंभवाल्लघुसंनिहितत्वेन द्रुतं लिखेत् । एवं द्रुतलघुद्रुतश्चतुर्थो भेदः । ततश्च लघोरधो द्रुतं लिखेत् । उपरिद्रुतस्य सद्भावाच्छेषत्वेन द्रुतं लिखेत् । प्रागूने संभवाल्लघुं लिखेत् । एवं लघुद्रुतद्वयं पञ्चमो भेदः । ततश्च लघोरधो द्रुतं लिखेत् । उपरि द्रुतद्वयस्य सद्भावाच्छेषत्वेन द्रुतद्वयं लिखेत् । प्रागूने त्वसंभवाद्द्रुतं लिखेत् । एवं द्रुतचतुष्टयं षष्ठो भेदः । तस्य सर्वद्रुतत्वात्ततः परं प्रस्ताराभाव एव । अतो गुरुप्रस्तारे षड्भेदाः । व्यस्तप्लुतप्रस्तारेऽप्युक्तरीत्या कृत एकोनविंशतिर्भेदा भवन्ति । व्यस्तेषु लघुषु लघ्वाद्यत्वमाद्यन्तवदेकस्मिन्निति न्यायेन द्रष्टव्यम् । **समस्ते चेति** । सजातीयैर्विजातीयैर्वा सहिते च लघ्वादौ प्रस्तारोऽस्ति । व्यस्ते द्रुते तु नास्ति । ततोऽप्यल्पस्य तालावयवस्याभावादिति भावः ॥ ३१५ ॥ ३१६ ॥

इति प्रस्तारः ।

अथ संख्यां लक्षयति—

**एकद्व्यङ्कौ क्रमान्न्यस्य युञ्जीतान्त्यं पुरातनैः ।**
**द्वितीयतुर्यषष्ठाङ्कैरभावे तुर्यषष्ठयोः ॥ ३१७ ॥**

तृतीयपञ्चमाङ्काभ्यां क्रमात्तं योगमग्रतः ।
लिखेद्दक्षिणसंस्थैवमङ्कश्रेणी विधीयते ॥ ३१८ ॥

**एकव्यङ्कावित्यादि । क्रमादिति** । एकाङ्कं प्रथमं न्यस्य तदनन्तरं व्यङ्कं तिर्यक्पङ्क्तिगतत्वेन दक्षिणसंस्थं न्यस्ये[ दि ]त्यर्थः । अन्त्यमङ्कं पुरातनैर्वामस्थैरन्त्यापेक्षया द्वितीयतुर्यषष्ठाङ्कैर्यथासंभवं योजयेत् । प्रथमं तावदन्त्यभूतं व्यङ्कम् । अत्र पुरातनेषु द्वितीयस्यैव सद्भावात्तेनैकाङ्केन सह योजयित्वा त्र्यङ्कं दक्षिणसंस्थं लिखेत् । ततस्तमन्त्यभूतं पुरातनेषु द्वितीयेन व्यङ्केन, 'अभावे तुर्यषष्ठयोः । तृतीयपञ्चमाङ्काभ्यां क्रमाद्युञ्जीत ' इति वचनादत्र तुर्याभावे तत्प्रतिनिधिना तृतीयेनैकेन योजयित्वा त्र्यङ्कानन्तरं षडङ्कं लिखेत् । तमन्त्यभूतं पुरातनेषु द्वितीयेन त्र्यङ्केन( ण ) तुर्येणैकाङ्केन च योजयित्वा षडङ्कादनन्तरं दशाङ्कं लिखेत् । ततस्तमन्त्यं पुरातनेषु द्वितीयतुर्याभ्यां षडङ्कव्यङ्काभ्यां षष्ठाभावे तत्प्रतिनिधिना पञ्चमेनैकाङ्केन च योजयित्वा दशाङ्कानन्तरमेकोनविंशत्यङ्कं लिखेत् । ततस्तमन्त्यं पुरातनैर्द्वितीयतुर्यषष्ठैर्दशाङ्कत्र्यङ्कैकाङ्कैर्योजयित्वा त्रयस्त्रिंशदङ्कं लिखेत् । **एवमङ्कश्रेणी दक्षिणसंस्था विधीयत इति** । लिखितुरपेक्षयेति द्रष्टव्यम् । ननू( तू )र्ध्वाधो वामसंस्थे( स्था ) वेत्यर्थः ॥ ३१७ ॥ ३१८ ॥

सा चाङ्कैरिष्टतालस्थद्रुतसंख्यैः समाप्यते ॥ ३१९ ॥

सा चाङ्कश्रेणी । **इष्टतालस्थद्रुतसंख्यैरिति** । ज्ञातुरिष्टो यस्तालस्तत्र स्थितानां द्रुतानां संख्या सा येषां तैरङ्कैः । **समाप्यत इति** । अयमर्थः । प्रस्तारादिपरीक्षां कर्तुर्य इष्टस्तालस्तस्मिन्सर्वद्रुते कृते सति यावन्तो द्रुता भवन्ति तावन्त एव संख्याङ्कांल्लिखेदिति ॥ ३१९ ॥

एवमेवार्थं विवृण्वन्संख्याया ज्ञेयमाह—

द्रुतो लघुः सार्धमात्रो गुरुः सार्धद्विमात्रिकः ।
प्लुतः सार्धत्रिमात्रश्चेत्येकैकद्रुतवर्धितैः ।
तालभेदाः क्रमादङ्कैः संख्यायन्ते स्थितैरिह ॥ ३२० ॥

**द्रुतो लघुरित्यादिना** । इहाङ्कश्रेण्यां स्थितैरेकेन द्रुतेनैकाङ्को लघुना व्यङ्कः सार्धमात्रेण त्र्यङ्कः । अत्र मात्राशब्देन लघुरुच्यते । अर्धशब्देन द्रुतः । गुरुणा षडङ्कः । सार्धद्विमात्रिकेण दशाङ्कः । प्लुतेनैकेन विंशत्यङ्कः । सार्धत्रिमात्रेण त्रयस्त्रिंशदङ्कः । इत्येकैकद्रुतवर्धितैरङ्कैरेकादिभिः क्रमात्तालभेदाः संख्यायन्ते ॥ ३२० ॥

ज्ञेयान्तरमप्याह—

यदङ्कयोगादन्त्योऽङ्को लब्धस्तैरन्ततः क्रमात् ।
भेदा द्रुतान्तलघ्वन्तगुर्वन्ताश्च प्लुतान्तकाः ॥
संख्यायन्त इति प्रोक्ताः संख्या निःशङ्कसूरिणा ॥ ३२१ ॥

इति संख्या ।

**यदङ्कयोगादित्यादि** । यदङ्कयोगाद्येषामङ्कानामन्त्यद्वितीयतुर्यषष्ठानां यथासंभवं स्थितानां तुर्यषष्ठयोरभावे तत्प्रतिनिध्योस्तृतीयपञ्चमयोर्वा योगादन्त्याङ्के लब्धैस्तैरन्त्याङ्कलाभहेतुभिरन्त्यादिभिः । अन्ततः **क्रमाद्द्रुतान्तलघ्वन्तगुर्वन्त( न्ताः ) प्लुतान्तकाश्च भेदाः संख्यायन्त इति** । अन्त्याङ्केन द्रुतान्ता भेदाः संख्यायन्ते । द्वितीयाङ्केन लघ्वन्ता भेदाः, तुर्येण तदभावे तत्प्रतिनिधिना तृतीयेन वा गुर्वन्ता भेदाः, षष्ठेन तदभावे तत्प्रतिनिधिना पञ्चमेन वा प्लुतान्ता भेदाः संख्यायन्त इति क्रमो द्रष्टव्यः । प्रतिनिधिस्थले बहुवचनमविवक्षितम् । तत्र बहूनामसंभवात् । उदाहरणार्थं प्लुतप्रस्तारे द्रुतान्तादयो भेदाः प्रदर्श्यन्ते । प्लुते प्रवृत्त एकोनविंशतिर्भेदा भवन्ति । एकोनविंशतिसंख्याकलापस्य बहवोऽङ्काः । अन्त्यो दशाङ्कस्तेन दश द्रुतान्ता भेदाः । द्वितीयः षडङ्कस्तेन लघ्वन्ताः षड्भेदाः । चतुर्थो द्व्यङ्कस्तेन गुर्वन्तौ भेदौ । षष्ठः प्रतिनिधित्वेन पञ्चमैकाङ्कः । तेन प्लुतान्त एको भेदः । एवमेतैरङ्कैरेकोनविंशतिर्भेदाः संख्यायन्ते । एवं सर्वत्र द्रष्टव्यम् ॥ ३२१ ॥

इति संख्या ।

अथ नष्टं लक्षयति—

**अत्रैतावतिथो भेदः किंरूप इति पृच्छति ।**
**यत्र तन्नष्टमाख्यातं तस्योत्तरमिहोच्यते ॥ ३२२ ॥**

**अत्रैतावतिथ इत्यादि** । अत्रैतावद्भेदवत्यमुकताल एतावतिथो भेद इति पूरणसंख्यामुद्दिश्य किंरूप इति भेदस्वरूपं यत्र पृच्छति तन्नष्टमित्याख्यातम् । **तस्योत्तरमिति** । तस्य नष्टस्योत्तरं भेदस्वरूपनिरूपणोपाय इत्यर्थः ॥ ३२२ ॥

तमुपायं दर्शयति—

**भेदानां यावतां मध्ये नष्टप्रश्नः कृतो भवेत् ।**
**तावत्संख्याङ्कपर्यन्तां लिखेत्संख्याङ्कसंततिम् ॥**
**अत्याङ्के तत्र नष्टाङ्कं पातयेदथ शेषतः ॥ ३२३ ॥**
**पातयेत्पूर्वपूर्वाङ्कं तत्र त्वपतितो द्रुतः ।**
**पूर्वश्चेत्पतितो न स्याल्लघुस्तु पतिताद्भवेत् ॥ ३२४ ॥**
**उत्तरेणाकृतार्थेन सहितात्तदसंभवे ।**
**अकृतार्थेन पूर्णेन (र्वेण) सान्तरे पतिते पृथक् ।**
**लघुर्निरन्तरे त्वास्मिल्लँघुरेव गुरुर्भवेत् ॥ ३२५ ॥**

**भेदानामित्यादिना** । सोदाहरणं दर्शयामः । **यावतां भेदानां मध्य इति** । प्लुतप्रस्तारे तावदेकोनविंशतिर्भेदा भवन्ति । तेषां मध्ये नष्टप्रश्नः ।

नष्टस्य भेदस्यात्र पञ्चदशो भेदः किंरूप इति प्रश्नः कृतो भवेत् । **तावत्संख्याङ्कपर्यन्तं संख्याङ्कसंततिं लिखेदिति** । अत्र प्रथममेकाङ्कं द्वितीयं व्द्यङ्कं तृतीयं त्र्यङ्कं चतुर्थं षडङ्कं पञ्चमं दशाङ्कं षष्ठमेकोनविंशत्यङ्कमेवमेकोनविंशतिसंख्यापर्यन्तां संख्याङ्कसंततिं लिखित्वा तत्रान्त्याङ्क एकोनविंशत्यङ्के नष्टभेदपूरणाङ्कमत्र पञ्चदशाङ्कं पातयेत् । अथ शेषतः शेषे । सार्वविभक्तिकस्तासिः । **शेषत इति** । एकोनविंशतौ पञ्चदशस्वपनीतेषु चत्वारः शेषस्तस्मिंश्चतुरङ्के । **पूर्वपूर्वाङ्कं पातयेदिति** । प्रथमं संनिहितं पूर्वं दशाङ्कं पातयेत् । अत्रावशिष्टे चतुरङ्के दशाङ्कोऽपतितो भवति । एवमपतितात [ङ्का]द्द्रुतो लब्धो भवति । चतुरङ्के दशाङ्कात्पूर्वस्य षडङ्कस्याप्यपातादपतितात्ततोऽपि द्वितीयो द्रुतो लब्धो भवति । अत्र लब्धान्द्वितीयादीन्वामसंस्थत्वेन लिखेत् । पूर्वं पतितो न स्याच्चेत्पातितादङ्कादकृतार्थेनोत्तरेण सहितात्तदसंभवेऽकृतार्थेन पूर्वेण सहिताद्वा लघुर्भवेदित्येकं वाक्यम् । अत्र चतुरङ्के त्र्यङ्कस्य पातसंभवात्तच्छेष एकस्मिन्पूर्वस्य व्द्यङ्कस्यापातादकृतार्थेनापतितेनोत्तरेण षडङ्केन सहिताच्चतुरङ्के पतितात्त्र्यङ्काल्लघुर्लब्धो भवति । अथैकमवशिष्टम् । **सान्तरे पतिते पृथग्लघुर्भवेदिति** । अत्रावशिष्ट एकस्मिन्नेकाङ्कस्य सान्तरपतितत्वादकृतार्थेन व्द्यङ्केन सह पृथग्लघुर्लब्धो भवति । **पृथगिति** । पूर्वलब्धेन लघुना सह गुरुरूपतां हित्वेत्यर्थः । अत्र शेषाङ्कपातनीयाङ्कयोरभावेऽपि त्रिमात्रिकस्य तालस्य लघुद्वयेन द्रुतद्वयेन च पूर्णत्वात्तालपूरणहेतवो द्रुता ग्राह्या न भवन्ति । **अस्मिन्निरन्तरे तु लघुरेव गुरुर्भवेदिति** । तत्रैव प्लुतप्रस्तारे दशमः किंरूप इति नष्टप्रश्ने कृते सत्यन्तभूत एकोनविंशत्यङ्के नष्टपूरके दशाङ्केऽपनीते सति शेषे नवाङ्के पूर्वस्य दशाङ्कस्यापातादपतितात्तस्माद्द्रुतो लब्धो भवति । अथ तत्पूर्वयोः षडङ्कत्र्यङ्कयोर्निरन्तरयोः पातादस्मिँल्लघुहेतावङ्के निरन्तरे लघुहेतुनाऽङ्कान्तरेणाव्यवहिते सति स लघुरेव लघ्वन्तरेण मिलितो गुरुर्भवति । तमत्र लब्धस्य द्रुतस्यानन्तरं लेखकापेक्षया वामसंस्थं लिखेत् । अत्र पातनीयस्यैकाङ्कस्य सद्भावेऽपि शेषाङ्काभावात्तालपूरणहेतुद्रुतोऽत्र ग्राह्यः । सोऽपि पूर्ववद्वामसंस्थो लेखनीयः ॥ ३२३ ॥ ३२४ ॥ ३२५ ॥

गुरुहेतोस्तृतीये तु पतिते गः प्लुती भवेत् ॥ ३२६ ॥

**गुरुहेतोस्तृतीये तु पतिते गः प्लुती भवेदिति** । अत्रैव प्लुतस्य प्रस्तारे प्रथमो भेदः किंरूप इति नष्टस्य प्रश्ने सति तत्रान्त्याङ्क एकोनविंशत्यङ्क एकाङ्केऽपनीते सत्यवशिष्टेऽष्टादशाङ्के पूर्ववत्पूर्वयोर्दशाङ्कषडङ्कयोर्निरन्तरयोः पाताद्गुरुर्लब्धो भवति । तत्रापि षडङ्के गुरुलाभहेतुर्भवति । तस्मात्तृतीयस्य व्द्यङ्कस्याप्यत्र पातात्तस्मिन्पतिते सति गो गुरुः प्लुती भवेत् । पूर्वमप्लुतस्तदा प्लुतो भवति । स एवात्र प्रथमभेदत्वेन लेखनीयः ॥ ३२६ ॥

अङ्काभावे द्रुता ग्राह्यास्तालपूरणहेतवः ।
इति नष्टस्य विज्ञेयमुत्तरं रूपनिर्णयात् ॥ ३२७ ॥

इति नष्टम् ।

**अङ्काभाव इति** । शेषाङ्कपातनीयाङ्कयोरेकतरस्याप्यभावे । द्रुता ग्राह्या इत्यत्र बहुवचनमविवक्षितं यथासंभवं द्रष्टव्यम् । किंच तत्रैव प्लुतप्रस्तारे सप्तमो भेदः क इति प्रश्न एकोनविंशतौ सप्तस्वपनीतेषु द्वादशावशिष्टा भवन्ति । तत्र पूर्वस्मिन्षडङ्के पतिते सत्यकृतार्थस्योत्तरस्याभावेऽप्यकृतार्थेन पूर्वेण सहिताद्दशाङ्काल्लघुर्लब्धो भवति । अथ द्वाववशिष्टौ । तत्रापतितात्त्र्यङ्काद्द्रुतो लब्धो भवति । ततः पतिताद्व्यङ्कादकृतार्थेन पूर्वेणैकाङ्के[ न ] सहिताल्लघुर्लब्धो भवति । ततोऽङ्काभावात्तालपूरणहेतुर्द्रुतो ग्राह्यः । अत्रायं संप्रदायो ज्ञेयः । यत्र प्रथमो लघुः पतितादङ्कादकृतार्थेनोत्तरेण तदसंभवे पूर्वेण वा तादृशेन सहिताल्लब्धो भवति तत्र लघ्वन्तरेऽपि स एव क्रमोऽनुसंधेय इति । एतत्सर्वं प्लुतप्रस्तारे दर्शितम् । एवं सर्वत्र प्रस्तारेषु द्रष्टव्यम् । इति नष्टस्य भेदस्वरूपनिर्णयान्नष्टप्रश्नस्योत्तरं विज्ञेयम् । इह नष्टस्वरूपनिरूपणोपायः प्रत्ययोऽप्युपचारान्नष्टमित्युक्तः । उत्तरपरत्वेन नपुंसको निर्देशः ॥ ३२७ ॥

इति नष्टम्

अथोद्दिष्टं लक्षयति–

ईदृग्रूपोऽत्र कथितो भेदः प्रश्न इतीदृशः ।
उद्दिष्टं तत्र संख्याङ्कसंततिं नष्टवल्लिखेत् ॥ ३२८ ॥
यैरङ्कैः पतितैर्नष्टे लभ्यन्ते ये द्रुतादयः ।
तानेवाङ्काल्लँभन्ते ते भेदमुद्दिष्टमाश्रिताः ॥ ३२९ ॥
यद्वा षट्प्लुतहेत्वङ्कमध्येऽन्त्यात्प्राचि सप्तमे ।
तदभावे तु षष्ठाङ्के पातितेऽन्त्याङ्कमध्यतः ॥ ३३० ॥
यः शेषः स प्लुताल्लभ्यो लब्धहीनान्त्यशेषतः ।
ज्ञानं पूरणसंख्याया उद्दिष्टोत्तरमिष्यते ॥ ३३१ ॥

इत्युद्दिष्टम् ।

**ईदृग्रूप इत्यादि** । अत्र प्रकृते तालप्रस्तार ईदृग्रूप इति भेदस्वरूपमुद्दिश्य कतिथो भेद इति तस्य पूरणसंख्यां पृच्छति चेदीदृशः प्रश्न उद्दिष्टमित्युच्यते । तत्रोद्दिष्टे । **नष्टवत्संख्याङ्कसंततिं लिखेदिति** । अत्रापि सोदाहरणं वक्ष्यामः । प्लुतप्रस्तारे एकोनविंशत्यङ्कानां संततिं लिखित्वा तत्र लघुद्वयेन

[द्]रुतद्वयेन च युक्ते भेद उद्दिष्टे सति नष्टे यैः पतितैरङ्कैर्यै प्लुतादयो लभ्यन्त उद्दिष्टं भेदमाश्रितास्ते प्लुतादयस्तानङ्कानेव लभन्त इति । नष्टेऽन्त्यावयवस्य [पू]र्ववल्लब्धत्वादुद्दिष्टेऽप्यन्त्यावयवादि द्रष्टव्यम् । नष्टे हि द्रुतानामपतितादङ्काद्वा [का]लपूरणत्वेन वा लब्धत्वादुद्दिष्टभेदास्थिताद्द्रुतान्न कोऽप्यङ्को लभ्यते । अत्रा[न्]त्योपान्त्यद्रुताभ्यामपतितावन्त्याद्वितीयौ दशाङ्कषडङ्कौ विहाय तृतीयेन लघुना [प]तितश्त्र्यङ्को लभ्यते । ततोऽपि चतुर्थावयवेन लघुना सान्तरपतित एकाङ्को लभ्यते । तेनात्र लब्धेनाङ्कद्वयेन चत्वारो लब्धाः । **लब्धहीनान्त्यशेषत इति** । एवं लब्धेन चतुरङ्केन(ण) हीनोऽन्त्य एकोनविंशत्यङ्कः । तस्य शेषतः पञ्चदशाङ्के । **पूरणसंख्याया इति** । अयं भेदः पञ्चदश इति पूरणसंख्या तस्या ज्ञानमित्युद्दिष्टस्योत्तरमिष्यते । तथा द्रुतगुरुद्रुत इत्युक्तं भेदमुद्दिश्यायं कतिथ इति संख्याप्रश्ने कृते तत्रान्त्येन द्रुतेनापतितमन्त्यं दशाङ्कं विहायान्त्योपान्त्येन गुरुणा निरन्तरपतितौ द्वितीयतृतीयौ षडङ्कत्र्यङ्कौ लभ्येते। ताभ्यां नव लब्धाः । तैर्हीनेऽन्त्य एकोनविंशत्यङ्केऽवशिष्टेषु दशस्वयं दशम इति पूरणसंख्याया ज्ञानमित्युद्दिष्टोत्तरम् । एवं सर्वत्र प्रस्तारेषु द्रष्टव्यम् । एतदेव व्यापकमुद्दिष्टोत्तरमवगन्तव्यम् । क्वचिल्लाघवार्थमव्यापकमप्युत्तरं दर्शयति—**यद्वेत्यादि** । **षट्प्लुतहेत्वङ्कमध्य इति**। अत्र षट्शब्देन पूरणप्रत्ययान्तः षष्ठशब्दो लक्ष्यते। प्लुतहेत्वङ्केत्यनेन षष्ठादीनां दक्षिणसंस्थानां सर्वेषां प्लुतहेतुत्वसामर्थ्यादादिशब्दोऽध्याह्रियते, षष्ठादिप्लुतहेत्वङ्कमध्य इति । षष्ठ एकोनविंशत्यङ्कः सप्तमस्त्रयस्त्रिंशदङ्कोऽष्टमः षष्ठाङ्को नवमः षडुत्तरशताङ्कः । एवं दशमादयोऽपि द्रष्टव्याः । एवमेकोनविंशत्यादयो दक्षिणसंस्थाः । षष्ठादयस्ते सर्वेऽपि प्लुतहेतवस्तेषां मध्ये यः कश्चन प्रकृततालवशादन्त्यत्वेन कल्पितः । तस्मात्प्राचि पुरातनं(ने) वामस्थ( स्थे ) सप्तमे । तदभावे तु षष्ठाङ्केऽन्त्यापेक्षया षष्ठाङ्के । अन्त्याङ्कमध्यतोऽन्त्याङ्कमध्ये पातिते सति यः शेषोऽन्त्याङ्कशेषः सः । **प्लुताल्लभ्यत इति** । अयमर्थः । अत्रोद्दिष्टभेदे प्लुतो दृश्यते । अन्त्ये वा मध्ये वाऽष्टौ (?) वा तत्रैवं विज्ञेयम् । प्लुतप्रस्तारे तावत्प्रथमभेद एव प्लुतो नान्यस्मिन्भेदे । तस्मिन्नेवोद्दिष्टे तत्रान्त्यस्य प्लुतहेतोरेकोनविंशत्यङ्कस्य मध्ये तदपेक्षया सप्तमस्य प्राचोऽङ्कस्याभावात्षष्ठ एकाङ्के पातिते सत्यष्टादशावशिष्टाः । ते प्लुताल्लभ्या भवन्ति । तैर्हीनोऽन्त्यशेष एकः । तस्मिन्पूरणसंख्याया ज्ञानमयं प्रथमो भेद इत्येतदुद्दिष्टोत्तरम् । लब्धहीनान्त्यशेषत इत्यादिपक्षद्वयस्य साधारणमित्यवगन्तव्यम् । यथा द्रुतवर्धितप्लुतप्रस्तारो(रे?) द्रुतात्मके भेद उद्दिष्टे तत्र प्लुतहेतुषु मध्येऽन्त्यस्य त्रयस्त्रिंशदङ्कस्य मध्ये । ततः प्राचि सप्तम एकाङ्के पातिते सति द्वात्रिंशदङ्कोऽवशिष्टः प्लुताल्लभ्यः। तेन हीनेऽन्त्यशेष एकस्मिन्पूरणसंख्याया ज्ञानमयं प्रथम इत्येतदुद्दिष्टोत्तरम् । तस्मिन्नेव प्रस्तारे प्लुतद्रुतात्मके भेद उद्दिष्टे तत्र द्रुतस्यान्त्यत्वादन्त्यं त्रयस्त्रिंशदङ्कं मुक्त्वा प्लुतस्योपा-

न्त्यत्वादुपान्त्य एकोनविंशत्यङ्के तदपेक्षाया प्राचि षष्ठ एकाङ्क(ङ्के) पातिते सति येऽवशिष्टा दश ते प्लुताल्लभ्या भवन्ति । तैर्हीनस्यान्त्यस्य त्रयस्त्रिंशदङ्कस्य शेषे पञ्चदशाङ्के पूरणसंख्याया ज्ञानमयं पञ्चदशो भेद इत्येतदुद्दिष्टोत्तरम् । तथा लघुप्लुतप्रस्तारे प्लुतलघ्वात्मके भेद उद्दिष्टे तत्र लघ्वोरन्त्यत्वात्तेनान्त्ये प्लुतहेतौ षष्ठाङ्के पातितस्तत्पूर्वं(?) त्रयस्त्रिंशदङ्को लब्धः । अथोपान्त्येन प्लुतेन प्लुतहेतावेकोनविंशत्यङ्के ततः प्राचि षष्ठ एकाङ्के पातिते सत्यष्टादशावशिष्टा लब्धाः । एवं लघुप्लुताभ्यां लब्ध एकपञ्चाशदङ्के तेन हीनस्यान्त्यस्य षष्ठाङ्कस्य शेषे न चाङ्के (?) पूरणसंख्याया ज्ञानमयं नवमो भेद इत्येतदुद्दिष्टोत्तरम् । तथाऽत्रैव प्रस्तारे द्रुतप्लुतद्रुतात्मके भेद उद्दिष्टे तत्र द्रुतस्यान्त्यत्वादन्त्यं षष्ठाङ्कं मुक्त्वा प्लुतस्योपान्त्यत्वेनोपान्त्ये त्रयस्त्रिंशदङ्के ततः प्राचि सप्तम एकाङ्के पातिते सति द्वात्रिंशदङ्कोऽवशिष्टः प्लुताल्लभ्यते । तेन हीनस्यान्त्यस्य षष्ठाङ्कस्य शेषेऽष्टाविंशत्यङ्के पूरणसंख्याया ज्ञानमयमष्टाविंशतितम इत्येतदुद्दिष्टोत्तरम् । तथा तत्रैव प्रस्तारे प्लुतद्रुतद्वयात्मके भेद उद्दिष्टे द्रुतद्वयस्यान्त्यत्वादन्त्योपान्त्यौ षष्ठाङ्कत्रयस्त्रिंशदङ्कौ विहायैकोनविंशत्यङ्के मध्ये ततः प्राचि षष्ठ एकाङ्के पातिते सत्यवशिष्टोऽष्टादशाङ्कः प्लुताल्लब्धः । तेन हीनस्यान्त्यषष्ठाङ्कस्य शेषे द्विचत्वारिंशदङ्के पूरणसंख्याया ज्ञानमयं द्विचत्वारिंशत्तम इत्येतदुद्दिष्टोत्तरम् । तत्रैव प्रस्तारे द्रुतद्वयप्लुतात्मक उद्दिष्टे भेदे प्लुतस्यान्त्यत्वादन्त्ये षष्ट्यङ्के ततः प्राचि सप्तमेऽङ्के पातिते सत्यवशिष्टोऽष्टपञ्चाशदङ्कः प्लुताल्लब्धः । तेन हीनस्यान्त्यस्य षष्ट्यङ्कस्य शेषे द्व्यङ्के पूरणसंख्याया ज्ञानमयं द्वितीय इत्येतदुद्दिष्टोत्तरम् । तत्रैव प्रस्तारे लघुप्लुतात्मके भेद उद्दिष्टे पूर्ववद्द्व्यङ्कोऽवशिष्टः । अत्रोद्दिष्टस्थितेनोपान्त्येन लघुना नष्टवल्लघुलाभहेतावेकाङ्के पातिते सति पुनरेकस्मिन्नवशिष्टे प्रथमोऽयं भेद इत्युत्तरम् । एवमुत्तरोत्तरेष्वप्यङ्केषु प्लुतयुक्तभेदो द्रष्टव्यः । प्लुतयुक्तविषयत्वादस्याप्युत्तरस्याव्यापकत्वम् ।

ननु चानन्तरोदाहृतलघुप्लुतात्मके भेदे प्लुतस्यान्त्यत्वाद्द्रुति पक्षान्तराश्रयणेनान्त्यषष्ट्यङ्कमध्ये तदादिप्राचि सप्तमे द्व्यङ्के पातिते सति शेषत्वेनाष्टपञ्चाशदङ्कः प्लुताल्लब्धः । अथ लघुना पतितोऽङ्को लभ्यः । तत्रान्त्यशेषद्वये गुरुहेतोस्तृतीयत्वेन पतितात्षडङ्कात्पूर्वस्य त्र्यङ्कस्यापतितत्वेन नष्टे द्रुतः कथं न लब्धः । अत्र द्व्यङ्कैकाङ्कयोरेकतरस्य पातसंभवाल्लघुना को लभ्यत इति संदेहः । तत्रैकाङ्के पातित एकस्यावशिष्टत्वात्प्रथमोऽयं भेद इत्युद्दिष्टोत्तरमिष्टं सिध्यति । द्व्यङ्केषु पातितेषु यावन्तोऽपतितास्तेभ्यस्तावन्तो द्रुता लभ्याः । एकद्रुतलाभानन्तरं वाऽऽदित एव वाऽसहायपतिताल्लघुः । सान्तरपतितात्पृथग्लघुः । निरन्तरपतिताद्गुरुः । गुरुहेतोस्तृतीयात्पतितात्प्लुतो लभ्य इत्युक्तमेव । अत्रायं विशेषो विज्ञेयः । प्रथमपतिताद्द्रुतो लभ्यत एव । पतितादनन्तरमपतितात्तु सर्वत्र द्रुतो न लभ्यते । किंतु द्रुतहेतुनाऽन्यथा वा यत्रोत्तरेणापतितेन सहितः पातितो

लघुहेतुर्भवति तत्र पतितानन्तरमपतितादपि पूर्वाङ्कादद्रुतो लभ्यते । एवं पतितादनन्तरमपतितात्तु सर्वत्र प्लुतो न लभ्यते । यत्र त्वपतितेन पूर्वेण सहितः पतितो लघुहेतुर्भवति तत्र तस्मादपतितादपि द्रुतो न लभ्यत एव । ततः पूर्वादपतितात्तु द्रुतो लभ्यत एव । तस्माद्यत्र लघुर्लभ्यते तत्राङ्कद्वयं निवर्तते यत्र गुरुर्लभ्यते तत्राङ्कचतुष्टयं निवर्तते । यत्र प्लुतो लभ्यते तत्राङ्कषट्कं निवर्तत इति न्यायस्य व्यापकत्वमुत्तरेणाकृतार्थेन सहितात्तदसंभवेऽकृतार्थेन पूर्वेणेति वदता ग्रन्थकारेणैव सूचितम् । तस्मात्प्रकृते त्र्यङ्कादपतितादपि द्रुतलाभो नास्त्येव । पतितादपि त्र्यङ्काल्लघुलाभोऽपि नास्त्येव । द्वयोरपि प्लुतप्रापकाङ्कषट्कान्तर्भूतत्वेन निवृत्तत्वात् । इति प्रकृतभेदस्थो लघुनष्टेऽप्येकाङ्केन लब्ध इत्युद्दिष्टेऽप्यनेन लघुनैकाङ्क एव पतितो लभ्यत इति सर्वमवदातम् ॥ ३२८ ॥ ३२९ ॥ ३३० ॥ ३३१ ॥

इत्युद्दिष्टम् ।

अथ पातालं लक्षयति—

**आदौ रूपमथैकैकमङ्कसंख्याङ्कसंततेः ।**
**क्रमादधोऽधो विन्यस्येदन्त्यादींश्चतुरस्तथा ॥ ३३२ ॥**

**आदौ रूपमित्यादि** । संख्याङ्कसंततेः पूर्वविलिखिताया अधोऽध आदौ प्रथमकोष्ठ एकाङ्कस्याधः । **रूपमिति** । गणकप्रसिद्ध्या रूपमित्येकमुच्यते । अथवाऽऽदौ रूपं संख्याङ्कसंततेरादौ स्थितं स्वरूपमेकाङ्कमित्यर्थः । तमादावधः पङ्क्त्यादौ न्यस्य । अत्राऽऽदावित्यावृत्त्या योजनीयम् । अथानन्तरं त्र्यङ्कादीनामधोऽधः क्रमादेकैकमङ्कं न्यसेदिति सामान्यवचनम् । **अन्त्यादीनित्यादि** । विशेषवचनम् ॥ ३३२ ॥

**स्वपङ्क्तिस्थाल्लिँखेदङ्कानग्रे( ग्र )संख्याङ्कवद्युतान् ।**
**किंतु प्रतिनिधिर्नात्र विद्यते तुर्यषष्ठयोः ॥ ३३३ ॥**
**इष्टतालद्रुतमितेष्वङ्केषु लिखितेष्विति ।**
**क्रमादन्त्योपान्त्यतुर्यषष्ठैर्यत्र द्रुतादयः ।**
**मीयन्ते सर्वभेदस्थाः पातालः सोऽभिधीयते+ ॥ ३३४ ॥**

इति पातालः ।

**स्वपङ्क्तिस्थानिति** । अधस्ताधोख्य(अधस्थ?)पङ्क्तिस्थितान् । अन्त्यादींश्चतुरः । अन्त्योपान्त्यतुर्यषष्ठान् । **तथेति** । यथा संख्याङ्कपङ्क्तौ तद्वदित्यर्थः । अग्रे(ग्र)संख्याङ्कवद्युतानिति तुर्यषष्ठयोः प्रतिनिधिर्न विद्यत इति चात्र विशेषः । अग्र उपरिपङ्क्तिस्थः संख्याङ्कोऽस्यास्तीत्यग्रे(ग्र)संख्याङ्कवानन्त्य एव गृह्यते । तस्यैव सर्वत्र संभवात् । अग्रे(ग्र) संख्याङ्कवता युतानित्यनेन यथासंभवं युता-

+एतदग्रे घ. ङ. पुस्तके विहाय सर्वपुस्तकेषु ‘ अन्त्योपान्त्यतुर्यषष्ठमन्त्यादूर्ध्वस्थितं तथा । पञ्चाङ्कयोगादन्त्योऽङ्को भवेत्पातालसंज्ञके ’ इति श्लोकोऽधिकः ।

-नामुपान्त्यादीनां केवलानामेव ग्रहणमिष्यते । अन्यथाऽग्रे(ग्र)संख्याङ्कगत इत्येव ब्रूयात् । युतानन्त्यादीनित्यत्रोपान्त्यादय एव ग्राह्या नान्त्यः[1]। तस्य स्वस्यैव स्वेन युतत्वाभावात् । अत्रायमङ्कलेखनप्रकारः—आदौ लिखितस्यैकाङ्कस्यान्त्यस्यैव संभवात्तमग्रसंख्याङ्केनैकाङ्केन युतं कृत्वा द्व्यङ्कं द्व्यङ्काधो लिखेत् । तेनान्त्येन व्यङ्केनाग्रेस्थितद्विसंख्याङ्कवता युतमुपान्त्यमेकाङ्कं मिलित्वा पञ्चाङ्कं त्र्यङ्कादधो लिखेत् । तेन पञ्चाङ्केनान्त्येनाग्रेस्थितसंख्याङ्कवता युतमुपान्त्यं पञ्चाङ्कं मिलित्वा दशाङ्कं षडङ्कादधो लिखेत् । ततस्तेनान्त्येन दशाङ्केनाग्रे षट्कसंख्याङ्कवता युतमुपान्त्यं पञ्चाङ्कं तुर्यमेकाङ्कं च मिलित्वा द्वाविंशत्यङ्कं दशाङ्कादधो लिखेत् । तेनान्त्येन द्वाविंशत्यङ्केनाग्रे दशसंख्याङ्कवता युतमुपान्त्यं दशाङ्कं तुर्यं द्व्यङ्कं च मिलित्वा चतुश्चत्वारिंशदङ्कमेकोनविंशत्यङ्कादधो लिखेत् । तेनान्त्येन चतुश्चत्वारिंशदङ्केनाग्र एकोनविंशतिसंख्याङ्कवता युतमुपान्त्यं द्वाविंशत्यङ्कं तुर्यं पञ्चाङ्कं षष्ठमेकाङ्कं च मिलित्वैकनवत्यङ्कं त्रयस्त्रिंशदङ्कादधो लिखेत्। एवमुत्तरत्रापीष्टतालद्रुतमितानङ्कांल्लिँखेत् । इतीष्टतालद्रुतमितेष्वङ्केषु लिखितेषु सत्सु यत्राधःपङ्क्तौ । अन्त्योपान्त्यतुर्यषष्ठैः क्रमाज्ज्ञेयमाह—**सर्वभेदस्था द्रुतादयो मीयन्त** इति । प्लुतप्रस्तारे तावदन्त्येन चतुश्चत्वारिंशदङ्केन सर्वभेदस्था द्रुता मीयन्ते । उपान्त्येन द्वाविंशत्यङ्केन सर्वभेदस्था लघवो मीयन्त इति । तुर्येण पञ्चाङ्केन सर्वभेदस्था गुरवो मीयन्ते । षष्ठेनैकाङ्केन द्रुता मीयन्ते । एवं सर्वत्र द्रष्टव्यम् ॥ ३३३ ॥ ३३४ ॥

इति पातालः ।

अथ द्रुतमेरुं लक्षयति—

**पङ्क्तिं कृत्वेष्टतालस्थद्रुतसंमितकोष्ठिकाम् ।**
**तिरश्चीं तत्परामूनां कोष्ठेनाथ ततः पराः ।**
**द्विद्विकोष्ठोनिताः स्वस्वपूर्वतोऽथाङ्कयोजना ॥ ३३५ ॥**

**पङ्क्तिं कृत्वेत्यादि । इष्टतालस्थद्रुतसंमितकोष्ठिकामिति** । अत्रास्माकं द्रुतप्लुतात्मकस्तालो द(ल इ)ष्टः । तत्रस्था द्रुताः सप्त । तैः संमिताः कोष्ठा यस्यां सा तथोक्ता । **तिरश्चीमिति** । नोर्ध्वगां नाप्यधोगतामपि तु तिरश्चीं त्वे(श्चीमे)व । दक्षिणगतां प्रथमं तावत्सप्तकोष्ठिकां तिरश्चीमधः पङ्क्तिं कृत्वाऽथानन्तरं तत्परां पङ्क्तिं कोष्ठेन न्यूनां वामस्थप्रथमकोष्ठेन हीनां द्वितीयां परां षट्कोष्ठिकां कुर्यादित्यर्थः । ततो द्वितीयस्याः पङ्क्तेः स्तृतीयादयः पङ्क्तयः ।

---

१ ग. नान्यः ।

**स्वस्वपूर्वतो द्विद्विकोष्ठोनिता इति** । तृतीया परपङ्क्तिर्द्वितीयापेक्षया वामस्थप्रथमकोष्ठद्वयहीना सती चतुष्कोष्ठिकाऽत्र कार्या । ततोऽपि परा चतुर्थी पङ्क्तिः पूर्ववद्द्विकोष्ठोनिता सती द्विकोष्ठिकाऽत्र कार्या । उदाहरणार्थमेतावदेवोक्तम् । अतः परमपि यावदिष्टं तावदुपरि दक्षिणतश्च मेरोर्वर्धयेत् । **अथाङ्कयोजनेति** । क्रियत इति शेषः ॥ ३३५ ॥

**द्वौ द्वौ तासामाद्यकोष्ठौ स्यातामेकाङ्कसंयुतौ ॥३३६॥**
**अधस्तन्यास्तृतीयादौ विषमे कोष्ठके लिखेत् ।**
**अन्त्याद्यङ्कचतुष्कस्य योगं संख्याङ्कसंघवत् ॥३३७॥**

तासां पङ्क्तीनां द्वौ द्वौ चाऽऽद्यकोष्ठावेकाङ्कसंयुतौ स्याताम् । अधस्तन्याः पङ्क्तेस्तृतीयादौ विषमकोष्ठके संख्याङ्कसंघवत् । **अन्त्याद्यङ्कचतुष्कस्य योगं लिखेदिति** । तुर्यषष्ठयोरभावे तृतीयपञ्चमौ प्रतिनिधी कुर्यादित्यतिदेशार्थः । एवमधस्तन्यास्तृतीयकोष्ठेऽन्त्योपान्त्ययोरेकाङ्कयोर्योगं लिखेत् ॥३३६॥३३७॥

**समे त्वन्त्यं विनैतेषां योगं न्यस्याथ पङ्क्तिषु ।**
**परासु शेषकोष्ठेषु चतुर्योगोऽयमिष्यते ।**
**नास्ति प्रतिनिधिस्त्वासामङ्कयोस्तुर्यषष्ठयोः ॥ ३३८ ॥**

**समे त्विति** । चतुर्थादौ समसंख्ये कोष्ठे त्वन्त्यं विनैतेषामुपान्त्यतुर्यषष्ठानाम् । **योगं न्यस्येति** । अत्रान्त्याभाव एव विशेषः । एवमधस्तन्याः समचतुर्थकोष्ठेऽन्त्यं द्व्यङ्कं विनोपान्त्यस्यैकाङ्कस्य तुर्याभावात्तृतीयस्यैकाङ्कस्य योगं द्व्यङ्कं लिखेत् । तस्या विषमे पञ्चमे कोष्ठेऽन्त्योपान्त्ययोर्द्व्यङ्कयोस्तुर्यस्यैकाङ्कस्य च योगं पञ्चाङ्कं लिखेत् । तस्याः समे षष्ठे कोष्ठेऽन्त्यं पञ्चाङ्कं विनोपान्त्यतुर्ययोर्द्व्यङ्कैकाङ्कयोः षष्ठाभावात्पञ्चमस्यैकाङ्कस्य च योगं चतुरङ्कं लिखेत् । तस्या विषमे सप्तमे कोष्ठे सोपान्त्यतुर्यषष्ठानां चतुष्पञ्चद्व्येकाङ्कानां योगं द्वादशाङ्कं लिखेत् । **परास्वित्यादि** । द्वितीयादिपरपङ्क्तिषु । **शेषकोष्ठेष्विति** । तन्मध्ये तु समकोष्ठ इति वक्ष्यति । तदितरेषु विषमकोष्ठेष्वित्यर्थः । **अयं चतुर्योग इष्यत इति** । अन्त्यादीनां योग इत्यर्थः । आसां परपङ्क्तीनां संबन्धिनोस्तुर्यषष्ठयोः प्रतिनिधिर्नास्ति ॥ ३३८ ॥

**तासु स्वभावतो यास्तु निष्पन्ना ऊर्ध्वपङ्क्तयः ॥३३९॥**

**तास्वित्यादि** । तासु तिरश्चीषु पङ्क्तिषु याः स्वभावतो निष्पन्नाः । **ऊर्ध्वपङ्क्तय इति** । प्रथमामधःपङ्क्तिं प्रकृतिं कृत्वा तदूर्ध्वपङ्क्तिकल्पनायां कृतायां प्रथमपङ्क्तिरेककोष्ठा द्वितीया द्विकोष्ठा । तृतीयाऽपि द्विकोष्ठिका । चतुर्थी त्रिकोष्ठिका । पञ्चम्यपि त्रिकोष्ठिका । षष्ठी चतुष्कोष्ठिका । सप्तम्यपि चतुष्कोष्ठिका । एवमुदाहृते द्रुतमेरावूर्ध्वपङ्क्तयः सप्त भवन्ति ॥ ३३९ ॥

तन्मध्ये तु समे(मा) कोष्ठेऽन्त्यस्थानेऽन्त्यादधस्तनः ।
अङ्कः कार्योऽथ तैरङ्कैर्भेदसंख्याऽभिधीयते ॥३४०॥

**तन्मध्य इति ।** तासामूर्ध्वपङ्क्तीनां मध्ये । **समे(मा) कोष्ठ इति ।** समायाः समसंख्यायाः पङ्क्तेः कोष्ठेऽङ्कितव्येऽन्त्यस्थाने पूर्वपङ्क्तिस्थस्यान्त्याङ्कस्य स्थाने प्रसङ्गे सति । **अन्त्यादधस्तनाङ्कः कार्य इति ।** प्रकृते द्रुतमेरौ तिसृषूर्ध्वपङ्क्तिष्वङ्काङ्कितासु सतीषु त्रिकोष्ठिकायां चतुर्थ्यामङ्कितव्ये मध्यमकोष्ठेऽन्त्यस्यैकाङ्कस्याधस्तनव्यङ्कमादायोपान्त्यमेकाङ्कं च योजयित्वा त्र्यङ्कं लिखेत् । ततो विषमायाः पञ्चम्यामधःकोष्ठेऽन्त्योपान्त्ययोर(स्त्र्य)ङ्कैकाङ्कयोर्योगं चतुरङ्कं लिखेत् । ततः समायाः षष्ठ्या द्वितीयकोष्ठेऽन्त्यादधस्तनस्य पञ्चाङ्कस्योपान्त्यतुर्ययोस्त्र्यङ्कैकाङ्कयोश्च योगं नवाङ्कं लिखेत् । ततो विषमायाः सप्तम्यां द्वितीयकोष्ठेऽन्त्योपान्त्यतुर्याणां नवचतुरङ्क(रेका)ङ्कानां योगं चतुर्दशाङ्कं लिखेत् । तस्या एव तृतीयकोष्ठेऽन्त्यादधस्तनोपान्त्ययोश्चतुरङ्कैकाङ्कयोर्योगं पञ्चाङ्कं लिखेत् । तस्या एव तृतीये(?) कोष्ठेऽन्त्योपान्त्ययोः पञ्चैकाङ्कयोर्योगं षडङ्कं लिखेत् । अथानन्तरैरङ्कैर्ज्ञेयमाह–**भेदसंख्याभिधीयत इति ।** भेदानां प्रस्तारगतानां तालभेदानां संख्येयत्ता ॥ ३४० ॥

तदेव विषयव्यवस्थया विवृणोति–

विषमायामूर्ध्वपङ्क्तौ स्थितैरङ्कैरधः क्रमात् ।
एकद्रुताद्या विषमत्र्यादिसंख्या द्रुता भिदाः ॥
सर्वद्रुतान्ता मीयन्ते समपङ्क्तिस्थितैः पुनः ॥ ३४१ ॥
द्रुतहीनादयो व्यादिसमसंख्या द्रुता भिदाः ।
सर्वद्रुतान्ता ज्ञायन्ते द्रुतमेरुरयं मतः ॥ ३४२ ॥

**विषमायामित्यादिना ।** अत्र विषमायां सप्तम्यामूर्ध्वपङ्क्तौ । अधः क्रमादधस्तादारभ्य । **एकद्रुताद्या विषमत्र्यादिसंख्या द्रुताः सर्वद्रुतान्ता भिदा मीयन्त इति ।** अत्राऽऽद्यस्थितेन द्वादशाङ्केन द्रुतप्लुतप्रस्तार एव द्रुता भेदा मीयन्ते । द्वितीयकोष्ठस्थेन चतुर्दशाङ्केन त्रिद्रुता भेदा मीयन्ते । तृतीयकोष्ठस्थेन षडङ्केन पञ्चद्रुता भेदा मीयन्ते । अन्त्यकोष्ठस्थेनैकाङ्केन सर्वद्रुता भेदा मीयन्ते । **समपङ्क्तिस्थितैः पुनरिति ।** अत्र समायां षष्ठ्यामूर्ध्वपङ्क्तौ स्थितैरङ्कैस्तु । **द्रुतहीनादयो व्यादिसमसंख्या द्रुता सर्वद्रुतान्ता भिदा ज्ञायन्त इति ।** षड्द्रुतात्मके प्लुतप्रस्तारे द्रुतहीना भेदा अधःकोष्ठस्थेन चतुरङ्केण ज्ञायन्ते । द्वितीयकोष्ठस्थेन नवाङ्केन द्विद्रुता भेदा

---

१ च. °तादधः । स° । २ च. मीयन्ते ।

ायन्ते । तृतीयकोष्ठस्थेन पञ्चाङ्केन चतुर्द्रुता भेदा ज्ञायन्ते । अन्त्यकोष्ठस्थे-
ाकाङ्केन सर्वद्रुतो भेदो ज्ञायते । एवं सर्वत्र द्रष्टव्यम् ॥ ३४१॥ ॥३४२॥

**ऊर्ध्वपङ्क्तिस्थसर्वाङ्कयोगात्संख्याऽपि गम्यते ॥३४३॥**

**इति द्रुतमेरुः ।**

| | | | | | | | १ | १ |
|---|---|---|---|---|---|---|---|---|
| | | | | | १ | १ | ७ | ८ |
| | | | १ | १ | ५ | ६ | २० | २८ |
| | १ | १ | ३ | ४ | ९ | १४ | २५ | ४४ |
| १ | १ | २ | २ | ५ | ४ | १२ | ७ | २६ |
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |

इति द्रुतमेरुकोष्ठकम् ।

ज्ञेयान्तरमप्याह—ऊर्ध्वपङ्क्तिस्थेति ॥ ३४३ ॥

इति द्रुतमेरुः ।

अथ लघुमेरुं लक्षयति—

**लघुमेरौ कोष्ठपङ्क्तीः प्राग्वन्न्यसेत्तदादिमः ।**
**एकैककोष्ठ एकाङ्कयुक्तोऽधःपङ्क्तिकेषु तु ॥**
**शेषकोष्ठेष्वन्त्यतुर्यषष्ठयोगं निवेशयेत् ॥ ३४४ ॥**

**लघुमेरावित्यादि** । प्राग्वद्द्रुतमेराविव कोष्ठपङ्क्तीर्न्यसेत् । तदादिमस्तासां तिरश्चीनां पङ्क्तीनामादिम एकैककोष्ठ एकाङ्कयुक्तः कर्तव्यः । अधःपङ्क्तिकेषु शेषकोष्ठेषु तु । अत्र तुशब्दः परपङ्क्तिशेषकोष्ठेभ्यो वैलक्षण्यं द्योतयति । **अन्त्यतुर्यषष्ठयोगं निवेशयेदिति** । उपान्त्यं त्यक्त्वेत्यर्थः । अत्राऽऽद्यपङ्क्ते-र्द्वितीयकोष्ठे प्रथमकोष्ठगतमन्त्यमेकाङ्कं लिखेत् । तृतीयकोष्ठेऽपि द्वितीयकोष्ठग-तमन्त्यमेकाङ्कमेव लिखेत् । चतुर्थकोष्ठे त्वत्र प्रतिनिधेः सदसत्त्वे च द्रुतमे-रुवदिति वक्ष्यमाणत्वात्प्रतिनिधेः सद्भावादन्त्यमेकाङ्कं तुर्याभावे तृतीयमेका-ङ्कं च योजयित्वा द्व्यङ्कं लिखेत् । पञ्चमकोष्ठेऽन्त्यतुर्ययोर्द्व्यङ्कैकाङ्कयो-र्योगं त्र्यङ्कं लिखेत् । षष्ठकोष्ठेऽप्यन्त्यतुर्ययोस्त्र्यङ्कैकाङ्कयोः षष्ठाभावे पञ्चम-स्यैकाङ्कस्य च योगं पञ्चाङ्कं लिखेत् । सप्तमे कोष्ठेऽप्यन्त्यतुर्यषष्ठानां पञ्चैकै-काङ्कानां योगं सप्ताङ्कं लिखेत् ॥ ३४४ ॥

**परासां शेषकोष्ठेषूपान्त्याधस्तनसंयुतम् ।**
**त्रियोगमेवमादध्यादत्र च द्रुतमेरुवत् ॥ ३४५ ॥**

**सदसत्त्वे प्रतिनिधिः(धेः)कोष्ठाङ्कैरूर्ध्वपङ्क्तिगैः॥३४६॥**
**लघुहीनादुपक्रम्यैकाद्येकोत्तरवृद्धलाः।**
**सर्वलान्ताः क्रमाज्ज्ञेयाः संख्या सर्वाङ्गसंगतेः ॥३४७॥**
**इति लघुमेरुः।**

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| | | | | | | | | | १ |
| | | | | | | | १ | ५ | १५ |
| | | | | | १ | ४ | १० | २० | २९ |
| | | | १ | ३ | ६ | १० | १८ | ३३ | ६१ |
| | १ | २ | ३ | ४ | ७ | १२ | २१ | ३४ | ५५ |
| १ | १ | १ | २ | ३ | ५ | ७ | १० | १४ | २१ |
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० |

इति लघुमेरुकोष्ठकम्।

परासां पङ्क्तीनां शेषकोष्ठेषु द्वितीयादिकोष्ठेषु । **उपान्त्याधस्तनसंयुत-मेवं त्रियोगमादध्यादिति** । द्वितीयस्याः परपङ्क्तेर्द्वितीयकोष्ठेऽन्त्यमेकाङ्क-मुपान्त्याभावेऽपि तदधःकोष्ठस्य सद्भावात्तत्र स्थितमेकाङ्कं च योजयित्वा द्व्यङ्कं लिखेत् । तृतीयकोष्ठे द्व्यङ्कमन्त्यमुपान्त्याधस्तनमेकाङ्कं च योज-यित्वा त्र्यङ्कं लिखेत् । चतुर्थकोष्ठे त्र्यङ्कमन्त्यमुपान्त्याधस्तनमेकाङ्कं च योजयित्वा चतुरङ्कं लिखेत् । अत्र प्रतिनिधिरसत्त्वात्तुर्याभावे तृतीयो न गृह्यते। पञ्चमकोष्ठेऽन्त्योपान्त्याधस्तनतुर्याणां चतुर्द्व्येकाङ्कानां योगं सप्ताङ्कं लिखेत्। षष्ठकोष्ठेऽन्त्योपान्त्याधस्तनतुर्याणां सप्तत्रिद्व्यङ्कानां योगं द्वादशाङ्कं लिखेत्। ततस्तृतीयस्यां द्वितीयकोष्ठेऽन्त्योपान्त्याधस्तनयोरेकद्व्यङ्कयोर्योगं त्र्यङ्कं लिखेत्। तृतीयकोष्ठेऽन्त्योपान्त्याधस्तनयोस्त्र्यङ्कयोर्योगं षडङ्कं लिखेत्। चतुर्थे कोष्ठेऽ-न्त्यं षडङ्कमुपान्त्याधस्तनं चतुरङ्कं च योजयित्वा दशाङ्कं लिखेत् । तत-श्चतुर्थ्यां द्वितीयकोष्ठेऽन्त्यमेकाङ्कमुपान्त्याधस्तनं त्र्यङ्कं च योजयित्वा चतु-रङ्कं लिखेत् । एवमुत्तरत्रापि यथेष्टं वर्धयेत् । अत्र ज्ञेयमाह—**कोष्ठाङ्कैरि-त्यादि** । **ऊर्ध्वपङ्क्तिगैरिति** । द्रुतमेरावुक्तप्रकारेण द्रष्टव्यम् । **लघुहीना-दुपक्रम्येति** । अधःक्रमादित्येतदत्राप्यनुसंधेयम् । अधःपङ्क्तिकोष्ठाङ्केन द्रुत-हीना भेदा ज्ञेयाः । **एकाद्येकोत्तरवृद्धला इति** । द्वितीयकोष्ठाङ्केनैकलघवो भेदाः । तृतीयकोष्ठाङ्केन द्विलघवः । एवमेकोत्तरवृद्धलाः सन्तो ज्ञेयाः । **सर्वलान्ता इति** । अन्त्यकोष्ठाङ्केन सर्वलघवो भेदा ज्ञेया इति । प्रकृते द्रुत-प्लुतप्रस्तारे सप्तम्या ऊर्ध्वपङ्क्तेरधःकोष्ठस्थेन सप्ताङ्केन लघुहीना भेदा ज्ञेयाः। द्वितीयकोष्ठस्थेन द्वादशाङ्केनैकलघवो भेदा ज्ञेयाः । तृतीयकोष्ठस्थेन दशा-

ङ्केन द्विलघवो भेदा ज्ञेयाः । अन्त्यकोष्ठस्थेन चतुरङ्केन सर्वलघवो भेदा ज्ञेयाः । इति सर्वत्र द्रष्टव्यम् । ज्ञेयान्तरमप्याह—**संख्या सर्वाङ्कसंगतेरिति** ॥ ३४५ ॥ ३४६ ॥ ३४७ ॥

इति लघुमेरुः ।

अथ गुरुमेरुं लक्षयति—

**गुरुमेरावधःपङ्क्तेः परा कोष्ठत्रयोनिता ।**
**चतुश्चतुष्कोष्ठहीनाः स्वस्वपूर्वावलेः पराः ॥ ३४८ ॥**

**गुरुमेरावित्यादि** । अधःपङ्क्तेः परा द्वितीयपङ्क्तिरधःपङ्क्त्यपेक्षया कोष्ठत्रयोनिता कर्तव्या । परास्तृतीयादयः । **स्वस्वपूर्वावलेश्चतुष्कोष्ठहीनाः कर्तव्या इति** । अत्रोदाहरणार्थमधःपङ्क्तिः समकोष्ठिका कार्या । तत्परा द्वितीयाऽधःपङ्क्तेः कोष्ठत्रयं हित्वा ततश्चतुर्थ्यादिकोष्ठैः समानकोष्ठा लेखनीया । तदा स्वयं चतुष्कोष्ठा भवति ॥ ३४८ ॥

**एकाङ्कवन्त आद्याद्यकोष्ठाः प्रथमपङ्क्तिगः ।**
**द्वितीयो व्यङ्कवानन्त्योपान्त्यषष्ठाङ्कयोगिनः ॥३४९॥**

**आद्याद्यकोष्ठा इति** । सर्वासां पङ्क्तीनामाद्यकोष्ठा एकाङ्कवन्तः कार्याः । प्रथमपङ्क्तिगो द्वितीयः कोष्ठो व्यङ्कवान्कार्यः ॥ ३४९ ॥

**शेषकोष्ठाः परासां तु द्वितीयादिषु लिख्यते ।**
**योगोऽन्त्योपान्त्यषष्ठानामधस्तुर्याङ्कसंयुतः ॥ ३५० ॥**

**शेषकोष्ठा इति** । अधःपङ्क्तेस्तृतीयादयः कोष्ठाः । **अन्त्योपान्त्यषष्ठाङ्कयोगिन इति** । तुर्यं मुक्त्वेत्यर्थः । एवमधःपङ्क्तेस्तृतीयकोष्ठेऽन्त्योपान्त्ययोर्व्यङ्कैकाङ्कयोर्योगं त्र्यङ्कं लिखेत् । चतुर्थकोष्ठेऽन्त्योपान्त्ययोस्त्र्यङ्कव्यङ्कयोर्योगं पञ्चाङ्कं लिखेत् । अत्र तुर्यस्यानुपादेयत्वात्प्रतिनिर्दिष्टेनैकाङ्को न गृह्यते । ततः पञ्चमे कोष्ठेऽन्त्योपान्त्ययोः पञ्चत्र्यङ्कयोर्योगमष्टाङ्कं लिखेत् । षष्ठे कोष्ठेऽन्त्योपान्त्ययोरष्टाङ्कपञ्चाङ्कयोः षष्ठाभावे पञ्चमस्यकाङ्कस्यै च योगं चतुर्दशाङ्कं लिखेत् । सप्तमे कोष्ठेऽन्त्योपान्त्यषष्ठानां चतुर्दशाष्टैकाङ्कानां योगं त्रयोविंशत्यङ्कं लिखेत् । **परासां त्विति** । परासां द्वितीयादीनां पङ्क्तीनां द्वितीयादिषु कोष्ठेष्वधस्तुर्याङ्कसंयुत इत्यर्थः । **अन्त्योपान्त्यषष्ठानां योगो लिख्यत इति** । द्वितीयस्याः परपङ्क्तेर्द्वितीयकोष्ठेऽन्त्यमेकाङ्कं तुर्याधस्तनमेकाङ्कं च योजयित्वा व्यङ्कं लिखेत् । तृतीयकोष्ठेऽन्त्योपान्त्यतुर्याधस्तनानां द्विद्व्येकाङ्कानां योगं पञ्चाङ्कं लिखेत् । चतुर्थकोष्ठेऽन्त्योपान्त्यतुर्याधस्तनानां पञ्चद्वित्र्यङ्काणां योगं दशाङ्कं लिखेत् । ततोऽप्येवं वर्धयेत् ॥ ३५० ॥

अत्र ज्ञेयमाह—

**लघुस्थाने गुरुर्ज्ञेयः शेषं तु लघुमेरुवत् ॥ ३५१ ॥**

**इति गुरुमेरुः ।**

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| | | | | | | | ८ | ३ | १ |
| | | | १ | २ | ५ | १० | २० | ३८ | ७३ |
| १ | २ | ३ | ५ | ८ | १४ | २३ | २९ | ६५ | १०८ |
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० |

इति गुरुमेरुकोष्ठकम् ।

**लघुस्थाने गुरुर्ज्ञेय इति** । गुरुहीनादुपक्रम्यैकाद्येकोत्तरवृद्धगाः सर्वगान्ता इत्यूहनीयम् । यथा द्रुतप्लुतप्रस्तारे तावद्गुरुमेरौ सप्तम्या ऊर्ध्वपङ्क्तेरधः क्रमात्प्रथमकोष्ठस्थेन त्रयोविंशत्यङ्केन गुरुहीना भेदा ज्ञेयाः । द्वितीयकोष्ठस्थेन दशाङ्केनैकगुरवो भेदा ज्ञेयाः । एवं सर्वत्र द्रष्टव्यम् । **शेषं तु लघुमेरुवदिति** । अधःपङ्क्तौ प्रतिनिधेः सत्त्वं परपङ्क्तिषु प्रतिनिधेरसत्त्वं सर्वाङ्कसंगतेः संख्या च ज्ञेयमित्यतिदेशार्थः ॥ ३५१ ॥

**इति गुरुमेरुः ।**

अथ प्लुतमेरुं लक्षयति—

**प्लुतमेरावधःपङ्क्तेः पञ्चकोष्ठोनिता परा ।**

**तत्पराः स्वस्वपूर्वान्ताः(तः) षट्षट्कोष्ठोनिता मताः ॥ ३५२ ॥**

**प्लुतमेरावित्यादि** । अधःपङ्क्तेः परा तदपेक्षया पञ्चकोष्ठोनिता कार्या । अत्राप्यधःपङ्क्तिं सप्तकोष्ठिकां कृत्वा तत्परां पङ्क्तिं तस्याः षष्ठयादिकोष्ठैः समानकोष्ठां लिखेत् । साऽत्र द्विकोष्ठा भवति । तत्परास्तृतीयादयः पङ्क्तयः स्वस्वपूर्वातो द्वितीयादेः पङ्क्तेः। **षट्षट्कोष्ठोनिता मता इति** । तृतीया पङ्क्तिर्द्वितीयपङ्क्तेः षट्कोष्ठोनिता कार्या । तथा चतुर्थी पङ्क्तिस्तृतीयपङ्क्तेः षट्कोष्ठोनिता कार्या । एवं पञ्चम्यादीर्यथेष्टं लिखेत् ॥ ३५२ ॥

अथाङ्कलेखनमाह—

**अधःपङ्क्तौ तु षष्ठाङ्कस्थाने ×तुर्यं नियोजयेत् ।**

**त्रियोगोऽयमधः षष्ठयुक्तः स्यात्परपाङ्क्तिषु ॥ ३५३ ॥**

**अधःपङ्क्तौ त्वित्यादि । षष्ठाङ्कस्थाने तुर्यं नियोजयेदिति** । अधःपङ्क्तौ षष्ठं त्यजेदित्यर्थः । शेषं तु गुरुमेरुवदित्यतिदेशेनैकाङ्कवन्त आद्याद्यकोष्ठा इति, प्रथमपाङ्क्तिगो द्वितीयो द्व्यङ्कवानिति, अधःपङ्क्तौ प्रतिनिधेः

×तुर्योऽत्र योज्यत इति पाठ एवोपलभ्यत आदर्शपुस्तकेषु ।

सत्त्वम्, परपङ्क्तिषु तदभाव[वः?]संख्या सर्वाङ्कसंगतेरित्येतत्सर्वमनुसंधेयम् । तेनाधःपङ्क्तौ प्रथमकोष्ठ एकाङ्कं लिखेत् । द्वितीये द्व्यङ्कं लिखेत् । तृतीयोपान्त्ययोर्द्व्यङ्कैकाङ्कयोर्योगं त्र्यङ्कं लिखेत् । चतुर्थेऽन्त्योपान्त्ययोर्द्व्यङ्कयोस्तुर्याभावे तृतीयस्यैकाङ्कस्य च संयोगं षडङ्कं लिखेत् । पञ्चमेऽन्त्योपान्त्यतुर्याणां षट्त्र्येकाङ्कानां योगं दशाङ्कं लिखेत् । षष्ठकोष्ठेऽन्त्योपान्त्यतुर्याणां दशषड्द्व्यङ्कानां योगमष्टादशाङ्कं लिखेत् । सप्तमेऽप्यन्त्योपान्त्यतुर्याणामष्टादशत्र्यङ्काणां योगमेकत्रिंशदङ्कं(?) लिखेत् । द्वितीयस्यां पङ्क्तौ द्वितीयकोष्ठेऽन्त्यस्यैकाङ्कस्य षष्ठाधस्तनस्यैकाङ्कस्यैव योगं द्व्यङ्कं लिखेत् ॥ ३५३ ॥

अत्र ज्ञेयमाह—

**प्लुतो ज्ञेयो गुरुस्थाने शेषं तु गुरुमेरुवत् ॥ ३५४ ॥**

**इति प्लुतमेरुः ।**

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| | | | | | १ | २ | ५ | १० | २२ | ४४ |
| १ | २ | ३ | ६ | १० | १८ | ३१ | ५५ | ९६ | १६८ | २९६ |

इति प्लुतमेरुकोष्ठकम् ।

**प्लुतो ज्ञेयो गुरुस्थान** इति । प्लुतहीनादुपक्रम्येत्याद्यूहनयिम् । तेनात्र द्रुतप्लुतप्रस्तारे तावत्प्लुतमेरौ सप्तम्यामूर्ध्वपङ्क्तेरधःक्रमात्प्रथमकोष्ठस्थेनैकोत्तरत्रयस्त्रिंशदङ्केन प्लुतहीना भेदा ज्ञेयाः(?) । द्वितीयकोष्ठस्थेन व्यङ्केनैकप्लुतौ भेदौ ज्ञेयौ । एवं सर्वत्र प्रस्तारेषु द्रष्टव्यम् ॥ ३५४ ॥

इति प्लुतमेरुः ।

**संयोगमेरावूर्ध्वाः स्युश्चतस्रः कोष्ठपङ्क्तयः ।**
**इष्टतालद्रुतमितैः कोष्ठैर्युक्तास्ततः परे ॥ ३५५ ॥**
**द्वे पङ्क्ती स्वस्वपूर्वातो द्विद्विकोष्ठोनिते ततः ।**
**द्वे षष्ठ्या एककोष्ठोने ततस्तिस्रोऽष्टमावलेः ॥३५६॥**
**एककोष्ठोनिताः पश्चाद्द्विद्विकोष्ठोनिते परे ।**
**पङ्क्तिभ्यां स्वस्वपूर्वाभ्यां तथैकैकोनिते परे ॥ ३५७ ॥**

**संयोगमेरावित्यादि** । ऊर्ध्वाश्चतस्रः कोष्ठपङ्क्तयः । **इष्टतालद्रुतमितैः कोष्ठैर्युक्ताः स्युरिति** । प्रथमं तावन्मेरुस्वरूपनिष्पत्तिप्रदर्शनार्थं प्रत्येकं त्रयोदशकोष्ठयुक्ताश्चतस्रः कोष्ठपङ्क्तीरूर्ध्वत आरभ्य लिखेत् । ततः परं दक्षिणभागे । **स्वस्वपूर्वातो द्विद्विकोष्ठोनिते द्वे पङ्क्ती** इति । अत्र प्रथमेन स्वशब्देन लेखनीया पङ्क्तिरुच्यते । तस्याः पूर्वा चतुर्थी पङ्क्तिस्तदपेक्षया पञ्चमी

द्विकोष्ठोनिता कार्या। तदाऽसौ पङ्क्तिरेकादशकोष्ठिका भवति । द्वितीयस्वश-ब्देन षष्ठी पङ्क्तिरुच्यते । तस्याः पूर्वा पङ्क्तिः पञ्चमी तदपेक्षया षष्ठी द्विकोष्ठोनिता कार्या । तदाऽसौ नवकोष्ठिका भवति । अत्र न्यूनत्वमूर्ध्वोर्ध्व-कोष्ठपरित्यागेन द्रष्टव्यम् । ततोऽनन्तरं द्वे पङ्क्ती सप्तम्यष्टम्यौ षष्ठ्याः षष्ठ-पङ्क्त्यपेक्षयैककोष्ठोने कार्ये । तदा ते प्रत्येकमष्टकोष्ठके भवतः । ततोऽनन्तरं तिस्रो नवमीदशम्येकादश्यः पङ्क्तयोऽष्टमावल्यपेक्षयैककोष्ठोनिताः कार्याः । तदा ताः प्रत्येकं सप्त कोष्ठिका भवन्ति । पश्चादनन्तरं परे द्वादशीत्रयोदश्यौ पङ्क्ती स्वस्वपूर्वाभ्यां पङ्क्तिभ्यामेकादशीद्वादश्यपेक्षयेत्यर्थः । **द्विद्विकोष्ठोनिते इति** । एकादश्यपेक्षया द्वादशी द्विकोष्ठोनिता कार्या । तदाऽसौ पञ्चकोष्ठिका भवति । तथा त्रयो( द्वा )दश्यपेक्षया [ त्रयोदशी ] द्विकोष्ठोनिता कार्या । तदाऽसौ त्रिकोष्ठिका भवति । परे चतुर्दशीपञ्चदश्यौ पङ्क्ती । **तथेति** । स्वस्वपूर्वाभ्यामित्यर्थः । **एकैकोनिते इति** । त्रयोदश्यपेक्षया चतुर्दश्येककोष्ठो-निता कार्या । तदाऽसौ द्विकोष्ठिका भवति । तदपेक्षया पञ्चदश्यप्येककोष्ठो-निता कार्या । तदाऽसावेककोष्ठा भवति । एवं पञ्चदश पङ्क्तयो भवन्ति । अतः परमेता एव यथेष्टमधो वर्धनीयाः ॥ ३५५ ॥ ३५६ ॥ ३५७ ॥

अथोर्ध्वपङ्क्तीनां द्रुतादिनियमं तत्तत्कोष्ठेषु लेखनीयाङ्कनियमं च तत्र वक्तुमारभते—

**आद्यासु चतसृष्वासां क्रमेण सकलद्रुताः ।**
**समस्तलघवः सर्वगुरवः सकलप्लुताः ॥ ३५८ ॥**

**आद्यास्वित्यादिना** । आसां पञ्चदशा( शी )नां मध्य आद्यासु चतसृषूर्ध्वपङ्क्तिषु क्रमेण प्रथमादिक्रमेण सकलद्रुताः । प्रथमपङ्क्तौ सकलद्रुता भेदा ज्ञेयाः । द्वितीयपङ्क्तौ समस्तलघवो भेदाः । तृतीयपङ्क्तौ सर्वगुरवो भेदाः । चतुर्थपङ्क्तौ सकलप्लुता भेदाः । अत्र प्रथमं तावत्सुखेन द्रुतादिपङ्क्तिभेदपरिज्ञानाय पञ्च-दशोर्ध्वपङ्क्तिषूर्ध्वसु[र्ध्व]प्रथमादिक्रमेण द्रुतादींस्त[द्]द्वियोगं त्रियोगं चतुर्योगं च लिखेत् । प्रथमायां द्रुतम्, द्वितीयायां लघुम्, तृतीयायां गुरुम्, चतुर्थ्यां द्रुतम्( ? ), पञ्चम्यां द्लौ, षष्ठ्यां द्गौ, सप्तम्यां द्पौ, अष्टम्यां लगौ, नव-म्यां लपौ, दशम्यां गपौ, एकादश्यां द्लगान्, द्वादश्यां त्रयोदश्यां द्गपान्, चतुर्दश्यां लगपान्, पञ्चदश्यां द्लगपांश्च दक्षिणसंस्थाल्लिँखेत् । आस्वेवोर्ध्वप-ङ्क्तिषु त्रयोदशतिर्यक्पङ्क्तयः संभवन्ति । तावद्द्रुतोऽत्र तालः स्यात्पङ्क्तिर्यावथीति वक्ष्यमाणत्वात्तिर्यक्पङ्क्तिषु तालभेदपरिज्ञानाय तत्पङ्क्तिवामभागे तूपरिष्टा-दारभ्यैककद्रुतवर्धितान्द्रुतादींस्तालभेदाल्लिँखेत् । प्रथमतिर्यक्पङ्क्तौ द्रुतम्, द्वितीयस्यां लघुम्, तृतीयस्यां लघुद्रुतौ, चतुर्थ्यां गुरुम्, पञ्चम्यां गुरुद्रुतौ, षष्ठ्यां प्लुतम्, सप्तम्यां प्लुतद्रुतौ, अष्टम्यां प्लुतलघू, नवम्यां प्लुतलघुद्रु-

१ ख. ग. °सु कोष्ठ( ष्ठेषु ) प्र° ।

तान्, दशम्यां प्लुतगुरू, एकादश्यां प्लुतगुरुद्रुतान्, द्वादश्यां प्लुतौ, त्रयोदश्यां प्लुतौ द्रुतं च वामसंस्थाल्लिँखेत् । तत्रोर्ध्वपङ्क्तिष्वाद्या पङ्क्तिः ॥३५८॥

एकाङ्कयुक्तनिःशेषकोष्ठाऽऽद्या स्यात्परा पुनः ।
खयुक्तैर्विषमैः कोष्ठैः समैस्त्वेकाङ्कसंयुतैः ॥ ३५९ ॥
कर्तव्या गुरुपङ्क्तेस्तु त्रयः कोष्ठा नभोन्विताः ।
तुर्य एकाङ्कवानेवं चतुष्कोष्ठ्यो(ष्ठाः) परा अपि ॥३६०॥

एकाङ्कयुक्तनिःशेषकोष्ठाऽऽद्या स्यादिति । तस्यास्त्रयोदशसु कोष्ठेष्वेकाङ्कानेव लिखेत् । परा पुनरिति । द्वितीया तु विषमैः प्रथमतृतीयपञ्चम्यादिभिः कोष्ठैः खयुक्तैर्बिन्दुयुक्तैः समैस्तु द्वितीयचतुर्थषष्ठादिभिः कोष्ठैस्त्वेकाङ्कसंयुतैरुपलक्षिता कर्तव्येति । द्वितीयपङ्क्तौ प्रथमकोष्ठे बिन्दुम् । द्वितीयकोष्ठ एकाङ्कम् । तृतीयकोष्ठे बिन्दुं चतुर्थकोष्ठेऽप्येकाङ्कमित्येवमेकान्तरितत्वेन लिखेत् । गुरुपङ्क्तेस्त्विति । तृतीयपङ्क्तेस्त्वाद्यास्त्रयः कोष्ठा नभोन्विता बिन्दुयुक्ताः कर्तव्याः । तुर्यश्चतुर्थः कोष्ठ एकाङ्कत्वात् (वान्) । एवं परा अपि । चतुष्कोष्ठा इत्यत्र वीप्सा द्रष्टव्या । तेन तुर्याष्टमद्वादशषोडशादीन्बिन्दुकोष्ठान्तरितत्वेनैकाङ्कयुक्ताल्लिँखेदित्यर्थः ॥ ३५९ ॥ ३६० ॥

प्लुतपङ्क्तौ सशून्याः स्युः पञ्च षष्ठस्तु रूपवान् ।
षट् कोष्ठ्य(ष्ठा)स्तद्वदन्याः(न्ये) स्युः षट्सु पङ्क्तिष्वनन्तरम्॥३६१॥
द्वियोगजाः क्रमाद्भेदादलघू दगुरू दपौ ।
लगौ लपौ गपौ चेति तदङ्कप्रक्रिया त्वियम् ॥ ३६२ ॥

प्लुतपङ्क्ताविति । चतुर्थपङ्क्तावाद्याः पञ्च कोष्ठाः सशून्याः सबिन्दवः स्युः । षष्ठः कोष्ठस्तु रूपवान् । रूपमिति गणकपरिभाषयैकमुच्यते । यथा रूपाग्रसप्तविंशतिरिति तेषां वाक्येऽभिधानात् । तेनैकाङ्कवानित्यर्थः । अन्ये षट् कोष्ठास्तद्वत्स्युरिति । षष्ठद्वादशाष्टादशादीनेकाङ्कवतो लिखेत् । इतरान्बिन्दुयुक्ताल्लिँखेदित्यर्थः । षट्सु पङ्क्तिष्वनन्तरमिति ग्रन्थो व्याख्यातचरः । तासु षट्पङ्क्तिष्वङ्कलेखनप्रकारं वक्तुमाह—तदङ्कप्रक्रियेति ॥ ३६१ ॥ ३६२ ॥

अत्राङ्कलेखने पूर्वमेरुभ्यः प्रकारभेदं दर्शयति—

अत्रोपरिष्टादारभ्य स्यादधोऽधोऽङ्कलेखनम् ।
अन्त्यपूर्वद्वितीयाङ्कतुर्यषष्ठास्तथा क्रमात् ॥ ३६३ ॥
योज्या दलगपेषु स्युस्तेषु य(त)द्योगजा भिदाः ॥
पङ्क्तौ तदङ्कयोगाङ्कं तत्कोष्ठे संभवाल्लिँखेत् ॥ ३६४ ॥

**अत्रोपरिष्टादारभ्येति** । **अन्त्यपूर्वेत्यादि** । अन्त्यपूर्वद्वितीयायां( द्याः ) क्रमाद्योज्या इति । अयमर्थः । अत्र पञ्चम्यां पूर्वपङ्क्तावन्त्यपूर्वद्वितीयो योज्यः। षष्ठ्यामूर्ध्वपङ्क्तावन्त्यपूर्वस्तुर्यो योज्यः। सप्तम्यामन्त्यपूर्वः षष्ठः। अष्टम्यां द्वितीयपूर्वस्तुर्यः । नवम्यां तृतीयपूर्वः षष्ठः । दशम्यां तुर्यपूर्वः षष्ठः । तथा तद्योगजा भिदाः । अन्त्यादियोगजा भेदाः । तेषु दलगपेषु दलगपङ्क्तिकोष्ठाङ्केषु । **क्रमाद्योज्याः स्युरिति** । यथायोगं योजनीया इत्यर्थः । **पङ्क्ताविति** । पञ्चम्यादिपङ्क्तौ तदङ्कयोगाङ्कं पूर्वोक्तं तत्तदङ्कयोगनिष्पन्नमङ्कम् । **तत्कोष्ठ इति** । तत्तत्पङ्क्तिकोष्ठे । **संभवाल्लिखेदिति** । संभवशब्दार्थस्तूत्तरत्र प्रपञ्चयिष्यते । सोऽपि तत्रैवावगन्तव्यः ॥ ३६३ ॥ ३६४ ॥

**लेख्यपङ्क्त्युपरिश्रेणी या तिरश्वी तदाश्रिताः ॥३६५॥**
**अङ्का दलगपानां स्युराद्यपङ्क्तिचतुष्टये ।**
**तेषु प्रस्तुतभेदस्थद्रुतादिव्यक्तिसंश्रितान् ॥ ३६६ ॥**
**अङ्कान्गृह्णीत तेऽप्यन्त्यद्वितीयाद्या द्रुतादिषु ।**
**प्रस्तुतेषु विपर्यस्ताः स्युरङ्कासंभवे तु खम् ॥ ३६७ ॥**

**लेख्यपङ्क्तीत्यादि** । आद्यपङ्क्तिचतुष्टय ऊर्ध्वभूते दलग[प]पङ्क्तिचतुष्टये तिरश्वी या लेख्यपङ्क्त्युपरिश्रेणीत्यनेन लेख्यपङ्क्तेरपि तिरश्चीत्वं मन्तव्यम् । तदाश्रिता उपरिश्रेणीमाश्रिता ये दलगपानामङ्काः स्युस्तेष्वङ्केषु । **प्रस्तुतभेदस्थद्रुतादिव्यक्तिसंश्रितानिति** । प्रस्तुतभेदा दलादिद्वियोगजास्तत्रस्थां द्रुतादयस्तेषां व्यक्तीः संश्रिता इति तथोक्तास्तानङ्कान्गृह्णीत । तेऽपीत्याद्यपङ्क्तिचतुष्टयगतद्रुतादिव्यक्तिसंश्रिता अङ्काः प्रत्यवमृश्यन्ते । तच्छब्देनापिशब्दः समुच्चयार्थो भिन्नक्रमश्च । **अन्त्यद्वितीयाद्या इति** । द्रुतादिषु द्वियोगभवेषूपक्रान्तेषु सत्सु । **विपर्यस्ता इति** । परस्परं व्यवहितपङ्क्तिकोष्ठस्था इत्यर्थः । लेख्यपङ्क्त्युपरिश्रेणीत्यत्र संनिहिताया एव पङ्क्तेर्विवक्षितत्वात्तद्विपर्यासोऽत्र व्यवहितत्वम् । तेन यथाभूता अप्यङ्काः क्वचिद्व्यवधानासंभवेऽपि योज्याः स्युः । **अङ्कासंभवे त्विति** । संनिहितोपरिपङ्क्तिगतानां विपर्यस्तानां वा प्रस्तुतद्रुताद्यङ्कानामसंभवे सति तु खं लिखेत् । उक्तप्रकारेण द्वियोगपङ्क्तिकोष्ठेष्वङ्कलेखनमुच्यते । तत्र दलपङ्क्तावाद्यकोष्ठे तदूर्ध्वतिर्यक्पङ्क्तिगतदलाङ्कौ संयोज्य द्व्यङ्कं लिखेत् । **द्वितीयकोष्ठे**ऽन्त्यं द्व्यङ्कमुपरिपङ्क्तिगतद्रुताङ्कस्यैव संभवात्तेन संयोज्य त्र्यङ्कं लिखेत् । **तृतीयकोष्ठे**ऽन्त्योपान्त्यौ त्रिद्व्यङ्कावुपरिपङ्क्तौ दलाङ्कयोः संभवात्ताभ्यां संयोज्य सप्ताङ्कं लिखेत् । एवं सर्वत्र संभवशब्दार्थो द्रष्टव्यः । चतुर्थादिकोष्ठेष्वन्त्योपान्त्यौ यथासंभवं दलाङ्काभ्यां संयोज्य तत्तदङ्कं लिखेत् । एवं **चतुर्थकोष्ठ** एकादशाङ्कम् । **पञ्चमकोष्ठे** विंशत्यङ्कम् । **षष्ठकोष्ठे** द्वात्रिंशदङ्कम् । **सप्तमकोष्ठे** चतुष्पञ्चाशदङ्कम् ।

अष्टमकोष्ठे सप्ताशीत्यङ्कम् । **नवम**कोष्ठे त्रिचत्वारिंशदुत्तरशताङ्कम् । **दशम**-कोष्ठ एकत्रिंशदुत्तरद्विशताङ्कम् । **एकादशे** कोष्ठे षट्सप्तत्युत्तरत्रिशत्यङ्कं च लिखेत् । अथ दगपङ्क्तौ **प्रथम**कोष्ठे तदूर्ध्वतिर्यक्पङ्क्तिगतदशाङ्कावादाय व्यङ्कं लिखेत् । **द्वितीय**कोष्ठेऽन्त्यं व्यङ्कमुपरिपङ्क्तिगतद्रुताङ्केन संयोज्य त्र्यङ्कं लिखेत् । **तृतीयादि**कोष्ठेषु यथासंभवमन्त्यतुर्याङ्कौ यथासंभवमुपरिपङ्क्तिगतदगाङ्काभ्यां संयोज्य तत्तदङ्कं लिखेत् । एवं **तृतीय**कोष्ठे चतुरङ्कम् । **चतुर्थ**कोष्ठे पञ्चाङ्कम् । **पञ्चम**कोष्ठे नवाङ्कम् । **षष्ठ**कोष्ठे त्रयोदशाङ्कम् । **सप्तम**कोष्ठेऽष्टादशाङ्कम् । **अष्टम**कोष्ठे चतुर्विंशत्यङ्कम् । **नवम**कोष्ठे पञ्चत्रिंशदङ्कं च लिखेत् । अथ द्रुतप्लुतपङ्क्तौ **प्रथम**कोष्ठे लेख्यपङ्क्त्युपरिश्रेणीषु संनिहितायां वा व्यवहितास्तु(सु) वा व्यस्तेषु दलगपाङ्केषु द्रुताङ्कस्य सद्भावेऽपि क्वचिदपि प्लुताङ्काभावेन दपाङ्कयोगासंभवेनाङ्कासंभवे तु खमितिवचनाद्बिन्दुमेव लिखेत् । **द्वितीय**कोष्ठे तूपरिपङ्क्तिगतदपाङ्कौ संयोज्य व्यङ्कं लिखेत् । तृतीयादिकोष्ठेषु यथासंभवमन्त्यषष्ठौ । यथासंभवमुपरिपङ्क्तिगताभ्यां दपाङ्काभ्यां संयोज्य तत्तदङ्कं लिखेत् । एवं **तृतीय**कोष्ठे त्र्यङ्कम् । **चतुर्थ**कोष्ठे चतुरङ्कम् । **पञ्चम**कोष्ठे पञ्चाङ्कम् । **षष्ठ**कोष्ठे षडङ्कम् । **सप्तम**कोष्ठे सप्ताङ्कम् । **अष्टम**कोष्ठ एकादशाङ्कं च लिखेत् । अथ लगपङ्क्तौ **प्रथम**कोष्ठे संनिहितायामुपरिपङ्क्तौ लगाङ्कयोरभावात्तदुपरिव्यवहितपङ्क्तिगतलगाङ्कावादाय व्यङ्कं लिखेत् । अयमेव विपर्यस्तशब्दार्थो वेदितव्यः । **द्वितीय**कोष्ठे त्वन्त्यस्य व्यङ्कः स्यात्सं( ङ्कस्य सं?,)निहितोपरिपङ्क्तौ लघ्वङ्कसद्भावेऽपि गुर्वङ्काभावाव्द्यवहितोपरिपङ्क्तिगतगुर्वङ्कस्यास्यां[?] लगपङ्क्तौ प्रथमकोष्ठोपयुक्तत्वेन पुनर्ग्राह्यत्वाभावात्प्रस्तुतलगाङ्कयोगासंभवेन पूर्ववद्बिन्दुमेव लिखेत् । **तृतीय**कोष्ठे तूपान्त्यं व्यङ्कं व्यवहितोपरिपङ्क्तिगतलघ्वङ्केन संयोज्य त्र्यङ्कं लिखेत् । **चतुर्थादि**सप्तकोष्ठेषु क्वचिदुपरिपङ्क्तौ लगाङ्कयोगसंभवेऽपि पङ्क्तावुपक्रान्तोपान्त्यतुर्याभावात्तत्तिर्यक्पङ्क्तिवामभागपादलिखितद्रुतलघुप्लुतात्मकादिविषमद्रुततालप्रस्तारेषु केवललगयुक्भेदासंभवाच्च बिन्दूनेव लिखेत् + । अथ लपपङ्क्तौ **प्रथम**कोष्ठे तदुपरिपङ्क्तौ लपाङ्कसंभवेऽपि तत्तिर्यक्पङ्क्तिवामभागलिखिततत्तद्द्रुतप्लुतात्मकतालस्य प्रस्तारे लघुप्लुतभेदासंभवाद्बिन्दुं लिखेत् । **द्वितीय**कोष्ठे तादृशतालभेदसंभवाद्विपर्यस्तौ लपाङ्कावादाय व्यङ्कं लिखेत् । एवं संभवासंभवशब्दयोरर्थप्रपञ्चो वेदितव्यः । **तृतीयादि**विषमकोष्ठेषूपान्त्यषष्ठयोरभावात्तत्तालप्रस्तारेषु तादृशभेदासंभवाच्च बिन्दूनेव लिखेत् । **चतुर्थादि**-

+ एतदग्रे किंचित्त्रुटितं स्यात् ।

१ छ. लेख्यम् । प॰ । २ ख. ॰तदङ्क॰ ।

सप्तकोष्ठेषु यथासंभवमुपान्त्यषष्ठौ यथासंभवं लपाङ्काभ्यां संयोज्य तत्तदङ्कं लिखेदिति। तृतीयकोष्ठे बिन्दुम्। **चतुर्थ**कोष्ठे त्र्यङ्कं **पञ्चम**कोष्ठे बिन्दुं **षष्ठ**कोष्ठे चतुरङ्कं **सप्तम**कोष्ठे बिन्दुं च लिखेत्। अथ गपपङ्क्तौ **प्रथमा**दित्रिषु कोष्ठेषु पूर्ववत्तत्तत्तालेषु तादृशभेदासंभवाद्बिन्दूनेव लिखेत्। **चतुर्थ**कोष्ठे तादृशतालभेदसंभवादुपरिपाङ्क्तिषु विपर्यस्तौ गपाङ्कावादाय त्र्य(द्व्य)ङ्कं लिखेत्। **पञ्चमा**दिषु त्रिषु कोष्ठेषु पूर्ववत्तालभेदासंभवाद्बिन्दूंल्लिखेत्। **अष्टमद्वादशा**दिषु त्र्यन्तरितेषु कोष्ठेषु यथासंभवं तुर्यषष्ठौ यथासंभवं विपर्यस्ताभ्यामपि गपाङ्काभ्यां संयोज्य तत्तदङ्कं लिखेत्। **इत्यष्टम**कोष्ठे चतुरङ्कं लिखेत्। अथ संभवासंभवौ(?) ॥ ३६५ ॥ ३६६ ॥ ३६७ ॥

अथ दलगपङ्क्त्यादित्रियोगपङ्क्तिषु चतसृष्वेकस्यां चतुर्योगपङ्क्तौ चाङ्कलेखनमतिदिशति—

**त्रियोगजाश्च ये भेदाश्चतुर्योगभवश्च यः।**
**तत्पङ्क्तीनामपि ज्ञेयमेवमेवाङ्कपूरणम् ॥ ३६८ ॥**

**त्रियोगजाश्चेत्यादिना**। अत्र संभवासंभवौ विपर्यासश्चातिदेशार्थः॥३६८॥

पृथगभिधाने विशेषं दर्शयति—

**किंतु त्रियोगजे भेदे ये त्रयः स्युर्द्वियोगजाः।**
**तेषां संनिहिताद्यानां प्रागुक्तोऽङ्कविपर्ययः ॥ ३६९ ॥**

**किंत्वित्यादिना**। त्रियोगजभेदे प्रत्येकं ये द्वियोगजास्त्रयो भेदाः संभवन्ति। **संनिहिताद्यानां तेषामिति**। संनिहित आद्यो येषां ते तथोक्ताः। अत्र संनिहितशब्दे प्रतियोग्यनुपादानेऽपि प्रकरणादङ्क एव प्रतियोगी गम्यते, अङ्कसंनिहित इति। अयमर्थः। द्वियोगपङ्क्तिषु ये त्रयः प्रथमकोष्ठ एको वाऽनेके वा सशून्याः संभवन्ति तत्र तान्विहायानन्तरम(रा)ङ्कवानेव कोष्ठः प्रथमत्वेन ग्राह्यः। ततः परमशून्या अपि द्वितीयत्वादिना गणनीया इति किंचिद्वि(द्वि)योगजा एव योज्या न त्वेकैकजा इत्यपि विशेषः। अङ्कविपर्ययस्तु प्रागुक्त एव। एतदुक्तं भवति। त्रियोगपङ्क्तिष्वङ्कनीयकोष्ठसमानसंख्यकोष्ठगतान्संभवत्तत्तद्द्वियोगपङ्क्तिष्वङ्कानादाय तैः सहान्त्यादीन्यथोचितं संयोज्य तत्तदङ्कं लिखेत्। एवमुक्तरीत्या दलगपङ्क्तौ प्रथमकोष्ठे दलदगलगपङ्क्तिषु परिक्रमेण प्रथमकोष्ठगतांस्त्रीन्व्यङ्कानादाय षडङ्कं लिखेत्। द्वितीयकोष्ठेऽन्त्यं षडङ्कं दलदप(ग) पङ्क्तिद्वितीयकोष्ठगताभ्यां त्र्यङ्काभ्यां संयोज्य द्वादशाङ्कं लिखेत्। लपपङ्क्तौ द्वितीयकोष्ठस्य सशून्यत्वादङ्काभावः। तृतीयादिकोष्ठेष्वन्त्योपान्त्यतुर्यानङ्कनीयकोष्ठसमानसंख्यकोष्ठगतैः संभवद्भिर्दलगदगपङ्क्त्यङ्कैः संयोज्य तत्तदङ्कं लिखेत्। एवं **तृतीय**कोष्ठे द्वात्रिंशदङ्कं

---

१ ख. स्वङ्कं। २ ख. °लगप°। ३ ख. लगप°। ४ ख. °लदगलगप°।

लिखेत्। **चतुर्थकोष्ठे** षष्टयङ्कम्। **पञ्चम**कोष्ठे चतुस्त्रिंशदुत्तरशताङ्कम्। **षष्ठ**कोष्ठ एकपञ्चाशदुत्तरद्विशताङ्कम्। **सप्तम**कोष्ठे पञ्चशत्यङ्कं च लिखेत्। अथ दलपपङ्क्तौ **प्रथम**कोष्ठे दलपाङ्क्तिप्रथमकोष्ठगतं त्र्यङ्कं दलपपङ्क्तिप्रथमकोष्ठयोः सशून्यत्वात्तत्तद्द्वितीयकोष्ठगतौ त्र्यङ्कौ चाऽऽदाय खण्डकं लिखेत्। संनिहिता[ग्रा]नामिति वचनेनात्राङ्कवानेव कोष्ठः प्रथमत्वेन गृह्यत इत्युक्तत्वाद्द्वितीयकोष्ठेऽन्त्यं षडङ्कं दलपपङ्क्तिद्वितीयकोष्ठगताभ्यां त्र्यङ्काभ्यां संयोज्य द्वादशाङ्कं लिखेत्। लपपङ्क्तौ द्वितीयस्य सशून्यत्वादङ्कासंभवः। एवं तृतीयादिषु कोष्ठेषु यथासंभवमन्त्योपान्त्यषष्ठान्यथासंभवं तत्तद्द्वियोगपङ्क्तिष्वङ्कनीयकोष्ठसमानसंख्यकोष्ठगतैरङ्कैः संयोज्य तत्तदङ्कं लिखेत्। एवं **तृतीयकोष्ठे** द्वात्रिंशदङ्कम्। **चतुर्थ**कोष्ठे षष्टयङ्कम्। **पञ्चमकोष्ठे** द्वाविंशत्युत्तरशताङ्कं लिखेत्। अथ द्रगपपङ्क्तौ **प्रथम**कोष्ठे पूर्वोक्तप्रकारेण षडङ्कम्। **द्वितीयादि**कोष्ठेषु यथासंभवमन्त्यतुर्यषष्ठान्यथासंख्यं तत्तद्द्वियोगपङ्क्तिगतकोष्ठाङ्कैर्यथासंभवं संयोज्य तत्तदङ्कं लिखेत्। एवं **द्वितीय**कोष्ठे द्वादशाङ्कम्। **तृतीय**कोष्ठे विंशत्यङ्कं लिखेत्। अथ लगपपङ्क्तौ **प्रथम**कोष्ठे लगपङ्क्तिप्रथमकोष्ठलपपङ्क्तिद्वितीयकोष्ठगपपङ्क्तिचतुर्थकोष्ठस्थितान्व्यङ्कानादाय षडङ्कं लिखेत्। द्वितीयादिसमकोष्ठेष्वन्त्यस्य सद्भावेऽपि तस्यात्रानुपादेयत्वादुपान्त्यतुर्यषष्ठानामुपादेयत्वेऽप्यसंभवात्तत्तद्द्वियोगपङ्क्तिष्वेतत्कोष्ठसमसंख्यकोष्ठेष्वङ्कसंभवात्तत्तिर्यक्पङ्क्तिवामभागलिखिततालप्रस्तारेषु केवललगपयुक्ततालभेदासंभवाच्च बिन्दूनेव लिखेत्। एवं **द्वितीय**कोष्ठे बिन्दुं **तृतीया**दिविषमकोष्ठेषु यथासंभवमुपान्त्यतुर्यषष्ठान्यथासंख्यं तत्तद्द्वियोगविषमकोष्ठाङ्कैर्यथासंभवं संयोज्य तत्तदङ्कं लिखेत्॥ ३६९॥

अथ दलगपपङ्क्तौ विशेषं दर्शयति—

> **चतुर्योगे तु चत्वारो ये स्युर्भेदास्त्रियोगजाः।**
> **तदङ्केष्वेव पूर्वोक्तं स्याद्विपर्यासयोजनम्॥ ३७०॥**

**चतुर्योगे त्वित्यादि**। चतुर्योगे भेदे त्रियोगजा ये चत्वारोऽपि भेदाः स्युस्तदङ्केष्वेव त्रियोगजाङ्केष्वेव पूर्वोक्तविपर्यासयोजनं स्यादिति नियमेन द्वियोगजैकैकाङ्कानामनुपादानमत्र विशेषो दर्शितः। एवं +द्लगपपङ्क्तौ प्रथमकोष्ठे चतसृणां त्रियोगपङ्क्तीनां प्रथमकोष्ठेषु स्थितांश्चतुरः षडङ्कानादाय चतुर्विंशत्यङ्कं लिखेत्। द्वितीयादिकोष्ठेषु यथासंभवमन्त्योपान्त्यतुर्यषष्ठान्यथासंख्यं त्रियोगपङ्क्तिकोष्ठगतैरङ्कैर्यथासंभवं संयोज्य तत्तदङ्कं लिखेत्॥ ३७०॥

+लकारोऽधिक इव भाति।

**ये चत्वारस्त्रियोगोत्थाश्चतुर्योगोत्थपञ्चमाः ।**
**भेदास्ते पङ्क्तिषु ज्ञेयाः क्रमादन्त्यासु पङ्क्तिषु ॥ ३७१ ॥**
**दलगा दलपाश्चैव दगपा लगपाः क्रमात् ।**
**त्रियोगजाश्चतुर्योगोद्भवा दलगपा इति ॥ ३७२ ॥**

ये चत्वार इत्यादेर्ग्रन्थस्यार्थः पङ्क्तिपरिज्ञानाय प्रथमत एव दर्शितः ॥ ३७१ ॥ ३७२ ॥

**एष संयोगमेरुः स्यादतो ज्ञेयमथोच्यते ॥ ३७३ ॥**

एष संयोगमेरुः स्यादिति संयोगमेरोः स्वरूपनिरूपणस्य निगमनम् । एष द्रुतादिसंयोगजविविधभेदकत्वा( वत्त्वा )दन्वर्थो द्रष्टव्यः । अनिष्टार्थप्रदत्वादेतेषां मेरुवन्मेरुत्वमवगन्तव्यम् । अतो ज्ञेयं वक्तुमाह—**अतो ज्ञेयमित्यादिना** ॥ ३७३ ॥

**तिर्यक्पङ्क्तिस्थकोष्ठाङ्कैस्तैस्तैः सर्वद्रुतादयः ।**
**ऊर्ध्वपङ्क्तिगता मेयास्तदभावस्तु शून्यतः ॥ ३७४ ॥**

**तिर्यक्पङ्क्तिस्थेत्यादि** । तैस्तैस्तिर्यक्पङ्क्तिस्थैः कोष्ठाङ्कैरूर्ध्वपङ्क्तिगता ऊर्ध्वपङ्क्तिकोष्ठस्थिताः सर्वद्रुताद्यो भेदाः । **मेया इति** । तत्तत्कोष्ठगतसंख्याङ्कपरिमिता विज्ञेया इत्यर्थः । **तदभावस्तु शून्यत इति** । तत्तत्कोष्ठस्थशून्यात्तत्तद्भेदाभावो ज्ञेय इत्यर्थः । यथा त्रयोदश्यां तिर्यक्पङ्क्तौ तावत्प्रथमकोष्ठस्थेनैकाङ्केन सर्वद्रुतो भेदो मेयः । अनन्तरं कोष्ठत्रयस्थितेभ्यो बिन्दुभ्यो लगपात्मकस्य तत्पङ्क्तितालस्य प्रस्तारे सर्वलघुसर्वगुरुसर्वप्लुतानां भेदानामभावो ज्ञेयः । पञ्चमकोष्ठस्थेन षट्सप्तत्युत्तरत्रिं( त्रि )शत्यङ्केन तस्मिन्काले दलयुक्ता भेदाः संख्येयाः । षष्ठकोष्ठस्थेन पञ्चत्रिंशदङ्केन द्रुतगुरुयुक्ता भेदाः । सप्तमकोष्ठस्थेनैकादशाङ्केन द्रुतप्लुतयुक्ताः । अष्टमादिकोष्ठत्रयस्थितेभ्यः शून्येभ्यः क्रमाल्लगलपगपयुक्तभेदाभावो ज्ञेयः । एकादशाङ्ककोष्ठस्थेन पञ्चशत्यङ्केन दलगयुक्तभेदाः । द्वादशकोष्ठस्थेन द्वाविंशत्युत्तरशताङ्केन दलपयुक्ता भेदाः । चतुर्दशकोष्ठस्थेन बिन्दुना लगपयुक्तभेदाभावः । पञ्चदशकोष्ठस्थेन चतुर्विंशत्यङ्केन दगपयुक्ता भेदा मेया इति । एवं यथेष्टमधोवर्धितासु पञ्चदशकोष्ठात्मिकासु विपर्ययपङ्क्तिषु कोष्ठकैर्द्रष्टव्यम् । एवमेव प्राचीष्वप्युत्तरोत्तरं न्यूनकोष्ठासु तिर्यक्पङ्क्तिषु कोष्ठाङ्कैर्यथासंभवं भेदा ज्ञेयाः ॥ ३७४ ॥

**तावद्द्रुतोऽत्र तालः स्यात्पङ्क्तिर्यावतिथी तिरः ।**
**उपरिष्ठा(ष्टा)त्समारभ्य संख्या पङ्क्त्यङ्कसंगतेः ॥ ३७५ ॥**

**इति संयोगमेरुः ।**

---

१ ख. ग. °संयुतेः ।

## संयोगमेरुकोष्ठकम् ।

| ० | ० | । | ऽ | ऽ | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | १ | ० | ० | ० | | | | | | | | | | | | |
| २ | १ | १ | ० | ० | ० । | | | | | | | | | | | |
| ३ | १ | ० | ० | ० | २ | | | | | | | | | | | |
| ४ | १ | १ | १ | ० | ३ | ०ऽ | | | | | | | | | | |
| ५ | १ | ० | ० | ० | ७ | २ | ०ऽ | ।ऽ | | | | | | | | |
| ६ | १ | १ | ० | १ | ११ | ३ | ० | २ | ।ऽ | ऽऽ | ०।ऽ | | | | | |
| ७ | १ | ० | ० | ० | २० | ४ | २ | ० | ० | ० | ६ | | | | | |
| ८ | १ | १ | १ | ० | ३२ | ५ | ३ | ३ | २ | ० | १२ | ०।ऽ | | | | |
| ९ | १ | ० | ० | ० | ५४ | ९ | ४ | ० | ० | ० | ३२ | ६ | | | | |
| १० | १ | १ | ० | ० | ८७ | १३ | ५ | ३ | ३ | २ | ६० | १२ | ०ऽऽ | | | |
| ११ | १ | ० | ० | ० | १४३ | १८ | ६ | ० | ० | ० | १३४ | ३२ | ६ | ।ऽऽ | | |
| १२ | १ | १ | १ | १ | २३१ | २४ | ७ | १९ | ४ | ० | २५१ | ६० | १२ | ६ | ०ऽऽ | ऽऽ * |
| १३ | १ | ० | ० | ० | ३७६ | ३५ | ११ | ० | ० | ० | ५०० | १२२ | २० | ० | २४ | |

* एतदन्त्यकोष्ठद्वयमधिकमिव भाति ।

तावद्द्रुतोऽत्रेत्यस्य वाक्यस्यार्थः प्रागेव दर्शितः । उपरिष्टात्समारभ्य संख्या-पङ्क्त्यङ्कसंगतेरित्यस्यायमर्थः । उपरितनतिर्यक्पङ्क्तिमारभ्याधोऽधस्तिर्यक्पङ्-क्त्यङ्कसंगतेर्हेतोः पूर्वोक्ता संख्या परिज्ञायत इति । तद्यथा—प्रथमायां तिर्यक्प-ङ्क्तिकः । द्वितीयायां द्वौ । तृतीयस्यां त्रयः । चतुर्थ्यां तिर्यक्पङ्क्तौ षट् । पञ्चम्यां दश । षष्ठ्यामेकोनविंशतिः । सप्तम्यां त्रयस्त्रिंशत् । अष्टम्यां षष्टिः । नवम्यां षडुत्तरं शतम् । दशम्यामेकनवत्युत्तरं शतम् । एकादश्यां चत्वारिंशदुत्तरा त्रिं(त्रि)शती । द्वादश्यां दशोत्तरा षट्शती । त्रयोदश्यां नव(वा)शीत्युत्तरं सहस्रम् । एवमधोधःपङ्क्तिष्वपि पङ्क्त्यङ्कसंयु(ग)तेः संख्या ज्ञेया ॥ ३७५ ॥

इति संयोगमेरुः ।

अथ खण्डप्रस्तारं लक्षयति—

**द्रुतहीनादयो भेदोद्धारा ये मेरुबोधिताः ।**
**सर्वप्रस्तारवत्तेषां प्रस्तारः किंतु तेषु यः ।**
**द्रुतादिनियमः सोऽत्र न भङ्क्तव्यः प्रयत्नतः ॥ ३७६ ॥**

इति खण्डप्रस्तारः ।

**द्रुतहीनादय इत्यादिना । मेरुबोधिता इति ।** मेरुषु द्रुतलघुगुरुप्लुत-मेरुषु चतुर्षु बोधिता ज्ञापिताः । **द्रुतहीनादयो भेदोद्धारा इति ।** द्रुतहीना-दयो व्यादिसमसंख्यद्रुता भिदाः । सर्वद्रुतान्ता इति लघुहीनादुपक्रम्यैकाद्येको-त्तरवृद्धला इति च। शेषं तु लघुमेरुगुरुमेरुवदिति च। ये भेदोद्धाराः प्रदर्शितास्तेषां भेदानाम् । **प्रस्तारवदिति ।** न्यस्यालपमाद्यानित्यादिनोक्तरीत्येत्यर्थः । अत्र विशेषमाह—**किंत्विति ।** तेषु भेदेषु यो द्रुतानियमो द्विद्रुतश्चतुर्द्रुत एकल-घुर्द्विलघुर्भेद इत्यादिद्रुतादिसंख्यादिसंख्यानियमो विद्यते सोऽत्र न मन्तव्यः[1] । **प्रयत्नत इति ।** अयमर्थः । खण्डप्रस्तारे सर्वप्रस्तारोक्तरीत्या द्रुतादिसंख्या-नियमभङ्गे प्राप्तेऽपि द्रुतादिसंख्यानियममपरित्यज्यैव प्रस्तारः कर्तव्य इति । अत्रोदाहरणार्थं प्लुतभेदेषु खण्डः प्रस्तारः प्रदर्श्यते । प्रथमं प्लुतं लिखित्वा तद-धस्ततोऽल्पं गुरुं न्यस्य प्रागूने लघुं लिखेत् । अनन्तरमाद्याल्लघोरधस्तादल्पे द्रुते लिखितव्ये द्रुतहीनभेदानां प्रस्तुतत्वाद्द्रुतादिनियमो न भङ्क्तव्य इति वचनेन तत्र द्रुतमलिखित्वा गुरोरधो लघुं न्यस्य प्रागूने गुरुं लिखेत् । तदनन्तरमाद्याद्गुरो-रधो लघुं न्यस्य शेषं यथोपरीति शेषं लघुं लिखित्वा प्रागूनेऽपि लघुं लिखेत् । एवं द्रुतहीनाश्चत्वारो भेदा द्रुतमेरोः षष्ठोर्ध्वपङ्क्तावधः क्रमात्प्रथमकोष्ठस्थेन चतु-

---

१ च. मन्तव्यः ।

रङ्केण बोधिता भवन्ति । अथ द्वितीयकोष्ठस्थेन नवाङ्केन द्विद्रुतानां भेदानां बोध्यत्वादादौ द्रुतद्वयं गुरुं च लिखित्वा सर्वप्रस्तारवद्गुरोरधो लघुं न्यस्य प्रागूने गुरोः संभवेऽपि द्रुतनियमभङ्गो मा भूदिति लघुद्रुतौ च वामसंस्थत्वेन लिखेत् । एवमन्यानपि सप्त भेदान्सर्वप्रस्तारवदुपक्रम्य खण्डप्रस्ताराविरोधेन लिखेत् । अथ तृतीयकोष्ठस्थेन पञ्चाङ्केन बोध्येषु चतुर्द्रुतभेदेष्वादौ चतुरो द्रुतानेकं लघुं च लिखित्वा पूर्वोक्तप्रकारेणाधोऽधो लिखेत् । अथ चतुर्थकोष्ठगतैकाङ्केन सर्वद्रुत-भेदो बोध्यः । अस्मिन्नेव प्लुतप्रस्तारे लघुमेरौ षष्ठोर्ध्वपङ्क्त्यधःकोष्ठगतेन पञ्चा-ङ्केन लघुहीना भेदा ज्ञेयाः । द्वितीयकोष्ठगतेन सप्ताङ्केनैकलघवो भेदा ज्ञेयाः । तृतीयकोष्ठस्थेन षडङ्केन द्विलघवो भेदाः । चतुर्थकोष्ठगतेनैकाङ्केन सर्वलघुभेदो ज्ञेयः । गुरुमेरावपि षष्ठोर्ध्वपङ्क्त्यधःकोष्ठस्थेन चतुर्दशाङ्केन गुरुहीना भेदा ज्ञेयाः । द्वितीयकोष्ठस्थेन पञ्चाङ्केनैकगुरवो भेदाः । तथा प्लुतमेरावपि षष्ठोर्ध्व-पङ्क्त्यधःकोष्ठस्थेनाष्टादशाङ्केन प्लुतहीना भेदा ज्ञेयाः । द्वितीयकोष्ठस्थेनैका-ङ्केन सर्वप्लुतो भेदः । एवं सर्वत्र खण्डप्रस्तार उन्नेयः ॥ ३७६ ॥

इति खण्डप्रस्तारः ।

अत्र द्रुतमेरोः प्रथमपङ्क्तिसमकोष्ठे नष्टं लक्षयति—

**संख्यैषा मेरुकोष्ठाङ्काद्यस्मात्पूर्वोक्तरीतितः ॥ ३७७ ॥**
**लभ्यते तत्र नष्टाङ्कं पातयेदथ शेषतः ।**
**तृतीयपञ्चमोपान्त्यावपाते लभ्यते लघुः ॥ ३७८ ॥**

**संख्यैषेत्यादि । पूर्वोक्तरीतित इति ।** समे त्वन्त्यं विनैतेषां योगं न्यस्ये-[ती]त्यर्थः । यस्मान्मेरुकोष्ठाङ्कादेषा संख्या लभ्यते तत्र संख्याङ्के नष्टाङ्कं पातयेत् । अथानन्तरं शेषतः शेषे । **तृतीयपञ्चमोपान्त्याविति ।** समे त्वन्त्यं विनेत्युक्तत्वात्तयोरेव प्रथमं तत्कोष्ठे द्रुतहीनसंख्याहेतुत्वेन क्रमेणोपान्त्यत्वमित्यर्थः । **अपाते लभ्यते लघुरिति ।** अपाते तृतीयस्य वा पञ्चमस्य वा शेषाङ्कान-न्तर्भावे सतीत्यर्थः ॥ ३७७ ॥ ३७८ ॥

**परो यद्यकृतार्थः स्यात्सह तेनाथ चेद्गुभौ ।**
**अकृतार्थौ ततस्ताभ्यां स्वं विनैवैष लभ्यते ।**
**परे कृतार्थे ग्राह्यः स्यादकृतार्थः पुरातनः ॥ ३७९ ॥**

**परो यद्यकृतार्थः स्यादिति ।** तृतीयात्परस्य विषमकोष्ठस्थस्याकृतार्थत्वे । यदीति संभावना । तस्य क्वचित्कृतार्थत्वमपि संभवतीत्यर्थः । **सह तेनेति ।**

---
१ ग. घ. चेद्द्रुतौ ।

अकृतार्थेन सह पाते लघुर्लभ्यते । **अथ चेदिति** । अथ परावुभावकृतार्थौ चेत्ततस्ताभ्यां विनैवैष लभ्यत इत्यर्थः । ततस्तर्हि ताभ्यामकृतार्थाभ्यां पराभ्यामेव स्वं विना । स्वशब्देनात्र तृतीयपञ्चमावुच्येते । तृतीयं वा पञ्चमं वा विनेत्यर्थः । एवं लघुर्लभ्यते । **परे कृतार्थ इति** । परस्मिन्कृतार्थे सत्यकृतार्थः पुरातनो ग्राह्यः स्यात् ॥ ३७९ ॥

**पतिताद्गुरुलाभः स्यात्सह प्राचा तदा परा ।**
**चतुरङ्की निवर्तेत पतिते पञ्चमेऽप्यथ ।**
**गुरुः प्लुती भवेत्प्राचा सह चैषा निवर्तते ॥ ३८० ॥**

**पतिताद्गुरुलाभ इति** । तृतीयात्पञ्चमाद्वा पतिताद्गुरुलाभः स्यात् । **सह प्राचेति** । तदा गुरुलाभकाले प्राचा सह पतिताङ्कपूर्वेणाङ्केन सहिता परा चतुरङ्की । चतुर्णामङ्कानां समाहारः । निवर्तेत गुरुलाभहेतुत्वेन कृतार्थत्वादित्यर्थः । **पतिते पञ्चमेऽप्यथेति** । अथ तृतीयपातानन्तरं पञ्चमेऽपि पतिते सति गुरुः प्लुती भवेत् । **प्राचा सह चैषा निवर्तत इति** । प्राचा षष्ठाङ्केन सहैषा च परा षडङ्कीत्यर्थः । निर्वतते प्लुतहेतुत्वेन कृतार्थो भवतीत्यर्थः ॥ ३८० ॥

**रूपाप्तौ प्रापकाङ्केभ्यः शेषेष्वेष पुनर्विधिः ।**
**गुरुलाभे त्वपातार्हः पञ्चमः शेषतां व्रजेत् ॥ ३८१ ॥**

**रूपाप्ताविति** । प्रापकाङ्केभ्यो लघ्वादिस्वरूपलाभे सति शेषाङ्काः संभवेयुः। शेषेषु तेष्वङ्केष्वेष विधिः पुनः कार्यः । गुरुलाभे सत्यपातार्हः पञ्चमः शेषतां व्रजेत् । पञ्चममारभ्य प्राक्तनाः शेषा भवन्तीत्यर्थः । एवं प्लुतलाभे सप्तमः शेषतां व्रजेदिति द्रष्टव्यम् ॥ ३८१ ॥

**अङ्काभावे तु गृह्यन्ते लघवस्तालपूर्तये ॥ ३८२ ॥**
**इति नष्टम् ।**

**अङ्काभावे त्विति** । शेषाङ्काभावे तु तालपूर्तये लघवो गृह्यन्ते ग्राह्या इत्यर्थः ॥ ३८२ ॥

**इति मेरोरधःपङ्क्तिसमकोष्ठनष्टम् ।**

अथ तत्कोष्ठोद्दिष्टमाह—

**उद्दिष्टे तु गुरोर्लभ्यस्तृतीयोऽन्त्यात्पुरातनः ।**
**प्राग्वच्चतुर्निवृत्तिः स्यात्तृतीयः पञ्चमस्तथा ॥ ३८३ ॥**
**प्लुतालाप्यो निवृत्तिस्तु षण्णामथ पुनर्विधिः ।**
**लघोरङ्को न लभ्येत निवृत्तिस्त्वङ्कयोर्द्वयोः ।**

---
१ घ. °रङ्कं न ।

लब्धाङ्कयोगहीनेऽन्त्ये शेषादुद्दिष्टबोधनम् ॥ ३८४ ॥

इत्युद्दिष्टम् ।

इति द्रुतमेरुप्रथमपङ्क्तिसमकोष्ठनष्टोद्दिष्टे ।

**उद्दिष्टे त्वित्यादि** । उद्दिष्टे भेदेऽन्त्यत्वेन यदि गुरुर्दृश्यते तस्माद्गुरोरन्त्यादङ्कात्पुरातनस्तृतीयोऽङ्को भवतीत्यर्थः । [ ÷एवं प्लुतलाभे सप्तमः शेषतां व्रजेदिति द्रष्टव्यम् । **अङ्काभावे त्विति** । शेषाङ्काभावे तु तालपूर्तये लघुयुताङ्को लभ्यः ] । प्रागयन्नष्टोक्तप्रकारेण चतुर्निवृत्तिश्चतुर्णामङ्कानां निवृत्तिर्भवेत् । उद्दिष्टे यदि प्लुतो दृश्यते तस्मात्प्लुतात्तृतीयस्तथा पञ्चमश्च प्राप्यते । तृतीयपञ्चमौ प्लुताल्लभ्यौ भवतः । **निवृत्तिस्तु षण्णामिति** । षडङ्का निवर्तन्त इत्यर्थः । **अथ पुनर्विधिरिति** । निवृत्तव्यतिरेकाङ्कसद्भावे पुनर्विधिः कार्यः । उद्दिष्टभेदे यदि लघुर्दृश्यते तस्माल्लघोरङ्को न लभ्यते । **निवृत्तिस्त्वङ्कयोर्द्वयोरिति**। लघुदर्शनादङ्कद्वयं निवर्तनीयमित्यर्थः । लब्धङ्कयोगेृहीतेऽन्त्ये(लब्धाङ्कयोगहीनान्त्य)शेषादुद्दिष्टबोधनमिति सर्वोद्दिष्टवद्द्रष्टव्यम् ॥ ३८३ ॥ ३८४ ॥

इति द्रुतमेर्वधःपङ्क्तिसमकोष्ठोद्दिष्टम् ।

अथ द्रुतमेरुविषमकोष्ठे नष्टं लक्षयति—

समस्तनष्टवन्नष्टं विषमे कोष्ठके भवत् ।
द्रुते लब्धे ततः पूर्वैरङ्कैः स्यात्समकोष्ठवत् ॥ ३८५ ॥

इत्याद्यपङ्क्तिविषमकोष्ठनष्टम् ।

**समस्तनष्टवदिति** । पातयेत्पूर्वपूर्वाङ्कं तत्र त्वपातिता द्रुता इत्यादि सर्वमनुसंधेयम् । विशेषमाह—**द्रुते लब्ध इति** । **समकोष्ठवदिति** । द्रुतलाभानन्तरं तृतीयपञ्चमोपान्त्यावपाते लभ्यते लघुरित्यादि सर्वमनुसंधेयमित्यर्थः ॥३८५॥

इति द्रुतमेर्वधःपङ्क्तिविषमकोष्ठनष्टम् ।

अथ तत्कोष्ठोद्दिष्टं लक्षयति—

समस्तोद्दिष्टवत्प्रोक्तमुद्दिष्टमिह सूरिभिः ।
द्रुताङ्कानन्तरं कार्यं विधानं समकोष्ठवत् ॥ ३८६ ॥

इति विषमकोष्ठोद्दिष्टे ।

इत्यधस्तिर्यक्पङ्क्तिनष्टोद्दिष्टे ।

---

÷धनुश्चिह्नान्तर्गतमधिकमिव भाति ।

---

१ ख. घ. ङ. °हीनान्त्यशे° ।

**समस्तोद्दिष्टवदिति** । यैरङ्कैः पतितैर्नष्ट इत्याद्यनुसंधेयम् । विशेषमाह— **द्रुताङ्कानन्तरमिति** । द्रुताङ्कपरिज्ञानानन्तरम् । **सतम(सम)कोष्ठवदिति** । उद्दिष्टे तु गुरोर्लभ्यस्तृतीयोऽन्त्यात्पुरातन इत्याद्यनुसंधेयम् ॥ ३८६ ॥

**इति द्रुतमेर्वधःपङ्क्तिविषमकोष्ठोद्दिष्टम् ।**

इति द्रुतमेर्वधःपङ्क्तिकनष्टोद्दिष्टम् ।

अथ द्रुतमेरोः परपङ्क्तिकनष्टं लक्षयति—

**कोष्ठे समोर्ध्वपङ्क्तिस्थे परासामाधिको भवेत् ।**
**द्वितीयाधस्तनः पात्यस्तत्र त्वपतिता द्रुताः(द्द्रुतः) ॥**
**पतिताल्लः पात्यपातानन्तर्येऽ(र्येऽ)ल्पो महान्भवेत् ॥ ३८७ ॥**

**कोष्ठ इत्यादिना** । परासां पङ्क्तीनां समोर्ध्वपङ्क्तिकोष्ठे द्वितीयाधस्तनाङ्कः पातो(त्यो) भवेत् । तत्र तेष्वङ्केषु मध्येऽपतितादङ्कात्तद्द्रुतो लभ्यो भवेत् । पतितात्लो लघुर्लभ्यो भवेत् । **पात्यपातानन्तर्य इति** । पात्ययोरङ्कयोः पातस्याऽऽनन्तर्ये निरन्तरयोः पाते सतीत्यर्थः । अल्पो लघुर्महान्गुरुर्भवेदित्यर्थः ॥ ३८७ ॥

**रूपपूर्तौ निवर्तन्ते पूर्ववत्स्वीयपङ्क्तिगाः ॥ ३८८ ॥**

रूपपूर्तौ लघ्वादिस्वरूपप्राप्तौ सत्यां स्वीयपङ्क्तिगा अङ्काः पूर्ववदधःपङ्क्ताविव । **निवर्तन्त इति** । लघुप्राप्तावङ्कद्वयं गुरुप्राप्तावङ्कचतुष्टयं प्लुतप्राप्तावङ्कषट्कं च निवर्तते । पुनर्विधौ न गण्यत इति यावत् ॥ ३८८ ॥

**अधःसमवदन्यत्स्यान्निवृत्तौ तु पुनर्विधिः ।**
**यस्मात्स यस्यामूर्ध्वायां पङ्क्तौ सा विषमा यदि ॥ ३८९ ॥**
**विधिर्विषमकोष्ठोक्तः समा चेत्तद(र्द्व)यं मतः ।**
**विषमोर्ध्वश्रेणिसंस्थे कोष्ठेऽधोविषमोदितः ॥ ३९० ॥**

**इति परपङ्क्तिनष्टम् ।**

अन्यदवशिष्टम् । अधःसमवत्, अधःपङ्क्तौ समकोष्ठवद्द्रष्टव्यम् । निवृत्तौ तु, रूपहेत्वङ्कनिवृत्तौ तु रूपान्तरप्राप्तये पुनर्विधिः कार्यः । यस्यामूर्ध्वायां पङ्क्तौ, यस्मादङ्कात्स विधिर्भवेत्साऽधःपङ्क्तिर्विषमा विषमसंख्याका भवति चेद्विषमकोष्ठोक्तोऽधःपङ्क्तिविषमकोष्ठोक्तो विधिः कार्यः । समा चेत्समसंख्याका चेत्तत्द्वयमिदानीमुक्तो विधिः संमतः । विषमोर्ध्वश्रेणिसंस्थे कोष्ठेऽधोविषमोदितोऽधःपङ्क्तिविषमकोष्ठोक्तो विधिः कार्यः ॥ ३८९ ॥ ३९० ॥

**इति द्रुतमेरुपरपङ्क्तिनष्टम् ।**

---

१ ख. ग. °दन्या स्यान्नि° । घ. ङ. °दन्यः स्यान्नि° ।

अथ द्रुतमेरुपरपङ्क्त्युद्दिष्टं लक्षयति—

**यैरङ्कैः पतितैर्नष्टं(ष्टे) लभ्यन्ते ये प्लुतादयः ।**
**तेभ्य उद्दिष्टसंस्थेभ्यस्तदङ्कावाप्तिरिष्यते ॥ ३९१ ॥**
**द्रुतहीनाद्यकोष्ठासु पङ्क्तिषूर्ध्वासु यो लघुः ।**
**तस्मादुद्दिष्टरूपस्थान्नाङ्कः कश्चिदवाप्यते ।**
**लब्धाङ्कन्यूनितान्त्याङ्कशेषादुद्दिष्टवेदनम् ॥ ३९२ ॥**

**इति परपङ्क्त्युद्दिष्टम् ।**

इति द्रुतमेरुनष्टोद्दिष्टे ।

---

**यैरङ्कैरित्यादिना । द्रुतहीनाद्यकोष्ठास्विति** । द्रुतेन हीना द्रुतहीना आद्यकोष्ठा यासां तास्तथोक्तास्तासूर्ध्वासु पङ्क्तिषु **। यो लघुरिति ।** उद्दिष्टभेदस्थ इत्यर्थः । उद्दिष्टरूपस्थानस्माल्लघोः कश्चिदङ्कः । न प्राप्यत इति । नष्टे तस्य लघोरपतिताङ्कलब्धत्वादिति भावः । सुगममन्यत् ॥ ३९१ ॥ ३९२ ॥

**इति द्रुतमेरुपरपङ्क्त्युद्दिष्टम् ।**

इति द्रुतमेरुनष्टोद्दिष्टे ।

---

अथ लघुमेर्वधःपङ्क्तिनष्टं लक्षयति—

**लघुमेरावधःपङ्क्तेर्नष्टाङ्केनान्त्यशेषतः ।**
**पूर्वेषां पात्यमानानामपाते पूर्ववद्द्रुतः ॥ ३९३ ॥**

**लघुमेरावित्यादिना । पूर्वेषामिति** । नष्टाङ्केनादन्त्यात्पूर्वेषां द्वितीयादीनामित्यर्थः । पात्यमानानां तेषां मध्येऽपात एकव्यादीनामङ्कानामपाते । पूर्ववत्पूर्वनष्टवद्द्रुतः । तत्र त्वपतिताद्द्रुत इति । न(अ)पतिताद्द्रुतो लभ्यत इत्यर्थः । द्वाभ्यामपतिताभ्यां द्वौ द्रुतौ त्रिभ्यस्त्रयो द्रुता इत्यादि द्रष्टव्यम् ॥ ३९३ ॥

**पतितात्सह पूर्वाभ्यां परेण च गुरुर्भवेत् ।**
**पतिते वृत्तगुर्वङ्कानन्तरे गः प्लुती भवेत् ।**
**एवं नष्टस्य बोधः स्यादित्युक्तं सूरिशार्ङ्गिणा ॥ ३९४ ॥**

**पतितात्सह पूर्वाभ्यां परेण च गुरुर्भवेदिति** । अत्र तु पतितादङ्काद्गुरुर्लभ्यो भवति । किंविधात्पूर्वात्पूर्वा+भ्यां परेण च सहितात् । एतेन च गुरुलाभे चतुरङ्की निवर्तत इत्युक्तं भवति । अस्यां पङ्क्तौ लघुहीनानामेवोपक्रा-

---

+ पूर्वेत्यधिकम् ।

---

१ च. °र्नष्टैर्लभ्य° । २ च. °ष्टबोधनम् ।

न्तत्वात्पतितादपि[ न ]लघुर्लभ्यते । किंतु गुरुरेव लभ्यत इत्यत्र विशेषः । **वृत्त-गुर्वङ्कानन्तर इति** । वृत्तो निष्पन्न( न्नो ) गुरुर्येभ्यस्तैर्वृ( स्ते वृ )त्तगुरवस्ते [ च तेऽ ]ङ्कास्तेभ्योऽनन्तरे संनिहिते गुरुहेतुभ्यश्चतुर्भ्योऽङ्केभ्यः पूर्वस्मिन्नित्यर्थः । तस्मिन्पतिते सति गो गुरुः प्लुती भवेत् । स एव गुरुः प्लुतः कर्तव्य इत्यर्थः ॥ ३९४ ॥

**इति लघुमेर्वधःपङ्क्तिनष्टम् ।**

अथ लघुमेरु[ पर ]पङ्क्तीनां नष्टमाह–

**नष्टे तु परपङ्क्तीनां पातयेत्प्रातिलोम्यतः ।**
**द्वितीयं च तृतीयाधस्तनमङ्कं च पञ्चमम् ॥ ३९५ ॥**
**परेषु च निवृत्तेषु शेषेष्वेव पुनर्विधिः ।**
**समस्तनष्टवच्चात्र द्रुतादेः प्राप्तिरिष्यते ॥ ३९६ ॥**
**किंतु लब्धे लघौ शेषेष्वाद्याधस्तनतः क्रिया ।**
**सोऽधस्तनः स्वपङ्क्तिस्थविधिमेवं प्रवर्तयेत् ॥ ३९७ ॥**
**शेषा(षेऽ)ङ्काश्रितपङ्क्त्यङ्काभावे तु लघवो मताः**
**अधस्तनश्रेणिसंख्या नष्टस्यैष विधिः स्मृतः ॥ ३९८ ॥**

**इति लघुमेरुनष्टम् ।**

**नष्टे त्वित्यादिना** । **प्रातिलोम्यतः पातयेदिति** । अत्र प्रातिलोम्यशब्देन द्वितीयतृतीयाधस्तनपञ्चमाङ्केषु पात्येषु क्वचिदनुपपत्त्या तृतीयाङ्कपातनम् । किंच समस्तनष्टवच्चात्र द्रुतादेः प्राप्तिरिष्यत इति शेषेष्वाद्याधस्तनतः क्रियेति । सोऽधस्तनः स्वपङ्क्तिस्थविधिमेवं प्रवर्तयेदिति चातिदेक्ष्यमाणेष्वर्थेषु क्वचिदनुपपत्त्याऽन्यथाकरणं च विवक्षितम् । तत्र काऽनुपपत्तिरिति चेदुच्यते । प्रस्तुतैकलघ्वादिभेदनियमभङ्ग एवानुपपत्तिः। सा मा भूदिति प्रातिलोम्याश्रयणं कर्तव्यमित्यर्थः । **आद्याधस्तनत इति** । आद्यायां तिर्यक्पङ्क्तौ स्थिताल्लघुहेतोरधस्तन इत्यर्थः । अत्राऽऽद्यग्रहणाभावे तृतीयादितिर्यक्पङ्क्तिषु द्वितीयादितिर्यक्पङ्क्तिस्थोऽप्यधस्तनया न प्राप्नोति । अतः कर्तव्यमाद्यग्रहणम् । **शेषेऽङ्काश्रितपङ्क्त्यङ्काभावे तु लघवो मता इति** । अङ्काश्रितपङ्क्त्यङ्काभावे पातयोग्यैरङ्कैराश्रितश्चासौ पङ्क्त्यङ्कश्च तत्तन्नष्टभेदोचितपङ्क्तौ तत्तालापेक्षयाऽन्त्याङ्क इति यावत् । तस्याङ्कस्याभावे तु शेषः( षे ) । तत्तन्नष्टभेदस्वरूपलेखने वामसंस्थत्वेन प्रवृत्ते सति चरमभाग इत्यर्थः । **लघवो मता इति** । तत्तद्भेदानुगुण्येनैकव्यादयो लघवो ग्राह्या इत्यर्थः । इममेवार्थं स्पष्टीकर्तुमुक्तम-

१ च. क्रियाः । २ च. °स्तनस्थप° । ३ घ. °ङ्क्तिस्थं वि° । ४ ख. °ङ्क्तिस्थं वि° । ५ ख. °मेव प्र°

ाऽस्तनश्रेणिसंख्या इति न* लघव इत्यस्य विशेषणम् । नष्टाङ्काश्रिताङ्केऽध-
तनी श्रेणिरेका चेदेको लघुर्ग्राह्यः । द्वे चेद्द्वौ । तिस्रश्चेत्त्रयः । इत्यादि द्रष्टव्यम्
। ३९५ ॥ ३९६ ॥ ३९७ ॥ ३९८ ॥

**इति लघुमेरुपरपङ्क्तिनष्टम् ।**

अथ गुरुमेर्वधःपङ्क्तिनष्टमाह—

**गुरुमेरोरधःपङ्क्तौ नष्टं सकलनष्टवत् ।**

**प्लुतलाभस्तु गुरुवत् ।**

**गुरुमेरोरित्यादिना** । प्लुतताल(लाभ)स्तु गुरुवदिति । यथा लघु-
रोरधःपङ्क्तौ पतिताद्गुरुर्लब्धस्तथा गुरुमेरोरधःपङ्क्तौ निरन्तरपतिताभ्यां प्लुतो
लभ्यत इत्यर्थः ।

**इति गुरुमेर्वधःपङ्क्तिनष्टम् ।**

अथ [ गुरुमेरु ]परपङ्क्तिषु नष्टमाह—

**परपङ्क्तिष्वथोच्यते ॥ ३९९ ॥**

**तृतीयाधस्तनस्थाने तृतीयोऽङ्कोऽत्र पात्यते ।**

**स्थाने तु पञ्चमस्याधः पञ्चमो लघुवद्गुरौ ।**

**लब्धेऽधोव्रजनं शेषाल्लघुवद्गुरुलम्भनम् ॥ ४०० ॥**

**परपङ्क्तिष्विति** । **लघुवद्गुरौ लब्ध इति** । लघुमेरौ परपङ्क्तिषु लघौ
लब्धे यथाऽऽद्याधस्तनतः कृता ( क्रिया ) तथाऽत्र गुरौ लब्धे सति । **शेषाद-
धोव्रजनमिति** । शेषादिति ल्यब्लोपे पञ्चमी । शेषमधिष्ठायाऽऽद्याधस्तनतः
क्रिया कर्तव्येत्यर्थः । **लघुवद्गुरुलम्भनमिति** । लघुमेरोरपरपङ्क्तिषु पतिता-
द्यथा लघुप्राप्तिस्तथाऽत्र पतिताद्गुरुप्राप्तिरित्यर्थः ॥ ३९९ ॥ ४०० ॥

**लघुमेरुवदन्यत्तु नष्टे स्यात्परपङ्क्तिषु ॥ ४०१ ॥**

**इति गुरुमेरुनष्टम् ।**

शिष्टं लघुमेरुवद्द्रष्टव्यमित्याह—**लघुमेरुवदिति** ॥ ४०१ ॥

**इति गुरुमेरुपरपङ्क्तिनष्टम् ।**

अथ प्लुतमेरुनष्टं लक्षयति—

**समस्तनष्टवन्नष्टं प्लुतमेरावुदाहृतम् ।**

**विशेषः कथ्यते त्वेष द्वितीयादिषु पङ्क्तिषु ॥ ४०२ ॥**

**समस्तनष्टवदित्यादिना** । प्लुतमेरोरधःपङ्क्तौ नष्टं सर्वनष्टवद्द्रष्टव्यमि-
त्यर्थः ॥ ४०२ ॥

---

* नेत्यधिकम् । नास्ति च क्वचित् ।

१ च. °धोगमनं शे° ।

द्वितीयादिषु पङ्क्तिषु विशेषं दर्शयति—

अधो गच्छेत्प्लुते पूर्णे गुरुमेरौ गुराविव ।
द्रुतो लघुर्गुरुर्वाऽन्त्यैरङ्कैर्लब्धः प्लुती भवेत् ॥ ४०३ ॥
तदङ्काधस्तनैः सार्धमङ्कषट्कमतीत्य च ।
अधःपङ्क्तौ स्थितैरङ्कैः शेषैरेष पुनर्विधिः ।
पङ्क्तौ तु प्लुतहीनायां नान्तिमः प्लुततां व्रजेत् ॥४०४

इति प्लुतमेरुनष्टम् ।

अधो गच्छेदित्यादिना । गुरुमेरौ गुराविवेति । गुरुमेरौ गुरौ +लब्धे यथाऽधोगमनमुक्तं तथाऽत्र प्लुते पूर्णे लब्धे सतीत्यर्थः । अधो गच्छेदिति आद्याधस्तनतः क्रियां कुर्यादित्यर्थः । अथ प्लुते पूर्णे इत्येतदावर्त्यापूर्णे इति पदं विभज्य व्याख्येयम् । प्लुतेऽपूर्णेऽलब्धे सत्यन्त्याङ्केन लब्धो द्रुतो लघुर्गुरुर्वा प्लुती भवेदिति । प्लुतः कर्तव्य इत्यर्थः । अथवा प्लुतो भवेदित्यनेनैव पूर्वं प्लुतेन लब्ध इति गम्यते । पङ्क्तौ तु प्लुतहीनायामिति । आद्याधस्तनपङ्क्ताविर्त्यर्थः । नान्तिमः प्लुततां व्रजेदिति । अन्तिमोऽङ्कलब्धो द्रुतादिः प्लुतो न भवतीत्यर्थः ॥ ४०३ ॥ ४०४ ॥

इति प्लुतमेरु(र्व)[धःपङ्क्ति]परपङ्क्तिनष्टम् ।

लघुमेर्वादिमेरुत्रयोद्दिष्टमाह—

सर्वोद्दिष्टवदुद्दिष्टं लघुमेर्वादिषु त्रिषु ॥ ४०५ ॥

इति लघुमेर्वादिमेरुत्रयोद्दिष्टम् ।

इति श्रीमदनवद्यविद्याविनोदश्रीकरणाधिपतिश्रीसोढलदेवनन्दननिःशङ्कश्रीशार्ङ्गदेवविरचिते संगीतरत्नाकरे पञ्चमस्तालाध्यायः समाप्तः ॥ ५ ॥

सर्वोद्दिष्टवदिति । यैरङ्कैः पतितैर्नष्ट इत्यत्र यदुक्तं तदेव सर्वत्रानुसंधेयमित्यर्थः ॥ ४०५ ॥

इति लघुमेर्वादिमेरुत्रयोद्दिष्टम् ।

एवं व्याकुर्वता सम्यङ्मार्गदेशीविभागतः ।
सता (यस्ता?)ऽे मत्येयः कल्लिनाथेन निरणायि सः ॥

इति श्रीमदभिनवभरताचार्यरायवयकारतोडरमल्लश्रीलक्ष्मणाचार्यनन्दनचतुरकल्लिनाथविरचिते संगीतरत्नाकरकलानिधौ पञ्चमोऽध्यायः ॥ ५ ॥



+ लघावित्यधिकम् ।

१ क ॰ल्मगो रेनराधेाा नि॰ ।